स्तोकादपिच दातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किंचिदकार्पण्यं हि तत् स्मृतम् ॥
यथोत्पन्नेन संतोषः कर्त्तव्यो ह्यर्थवस्तुना ।
परस्याचिन्तयित्वाऽर्थं सा ऽस्पृहा परिकीर्तिता ॥

सत्यादीनां स्वरूपमुक्तं

महाभारते,

सत्यं भूतहितं प्रोक्तं मनसा दमनं दमः ।
तपः स्वधर्मवर्त्तित्वं शौचं संकरवर्ज्जनम् ॥
संतोषो विषयत्यागो ह्रीरकार्यनिवर्त्तनम् ।
क्षमा द्वंद्वसहिष्णुत्वमार्जवं समचित्तता ॥
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।
दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ॥

भूतहितं प्राण्यनुकूलम् । प्रोक्तं यथार्थवचनम् । अप्राणिपीडाकरं यथार्थवचनं सत्यमिति मिताक्षराऽपि । दमनं वशीकरणम् । द्वंद्वं कलहः तस्मिन्सत्यपि सहिष्णुता । अपकारेऽपि चित्तस्याविकारः क्षमेति मिताक्षरा । प्रशान्तता विरक्तिः ।

देवलः,

व्रतोपवासनियमैः शरीरोत्तापनं तपः ।

तथा,

प्रत्ययो धर्मकार्येषु सदा श्रद्धेत्युदाहृता ।
नास्ति ह्यश्रद्दधानस्य धर्मकृत्यप्रयोजनम् ॥

देवीपुराणे,

कायक्लेशैर्न बहुभिर्नचैवार्थस्य राशिभिः ।
धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ॥

देवलः,

विगर्हातिक्रमक्षेपहिंसाबन्धवधात्मना ।

अन्यमन्युसमुत्थाने दोषाणां मर्षणं क्षमा ॥

क्षेपो गलहस्तादिना प्रेरणम् । वधोऽत्र ताडनमात्रं, हिंसायाः पृथगुपादानात् । साऽपि शोणितोत्पादादिमात्रपरा, न प्राणवियोगपर्यन्ता । अन्यथा मर्षणासंभवात् ।

तथा,

स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् ।

दयेति मुनयः प्राहुरनुक्रोशं च जन्तुषु ॥

यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः ।

धारणा सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥

विनयं द्विविधं प्राहुः शश्वद्दमशमाविति ।

शरीरोपरतिः शान्तिर्ज्ञानं प्रज्ञाप्रमादजम् ॥

शरीरोपरतिः शरीरस्य वृथाचेष्टाराहित्यम् ।

देवलः,

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।

आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

दक्षः,

यथैवात्मा परस्तद्वत् द्रष्टव्यः सुखमिच्छता ।

सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥

अत्र सामान्यनिर्देशात्साधारणधर्मपरत्वं द्वयोर्वाक्ययोः प्रतीयते ।

याज्ञवल्क्यः,

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।

दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥

वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् ।
आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ इति ।

एतदर्थः शूलपाणिधृतजाबालस्मृतौ स्पष्टः । शिशुः पांसुक्रीडाम् । युवा गन्धादिकम् । वृद्धो धर्मानुसरणम् । बुद्धिमान्महाभाष्यादिग्रहणम् । अर्थवान्दानम् । वाग्मी दूत्यम् । सुवेषो राजसन्निधिम् । श्रुतशास्त्रो वेदार्थनिर्वचनम् । विशुद्धाभिजनः कुलीनकन्यावरणम् । यागकर्मवृत्तः पशुहिंसनम् । एवं वयःप्रभृतीनामुचितां चेष्टामाचरेत् । अजिह्मामकुटिलाम् । अशठां दम्भादिरहिताम् ।

मनुः,

वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥

बृहस्पतिः,

यथा विद्या यथा कर्म यथा वित्तं यथा वयः ।
जानंस्तथैव वर्त्तेत वेषादिभिरनुद्धतः ॥

याज्ञवल्क्यः,

इज्याऽऽचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥

योगो बाह्यविषयकचित्तवृत्तिनिरोधः । परमः देशकालजात्याद्यनपेक्षः सन्परमपुरुषार्थसाधनम् ।

ननु नावेदविन्मनुते तं बृहन्तमिति श्रुत्या ऽवेदविदः आत्मसाक्षात्कारप्रतिषेधात्तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतिभिश्च वेदैकजन्यत्वविधानाद्वेदानधिकारिणां शूद्रादीनां कथमात्मसाक्षात्कार इति चेत्, पुराणश्रवणादिनेति ब्रूमः । अन्यथा पुराणादावात्मनिरूपणवैयर्थ्यापत्तेः । तथा च

भागवते,

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानं मुनिना कृपया कृतम् ॥ इति ।

अत्र त्रयीं प्रतिषिध्य तत्स्थाने भारतं विधीयते। स्थानापत्त्या च 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेय,मित्यत्रैरापदस्य गिरापदकार्यकारित्ववत् वेदकार्यकारित्वावगमाद्भारतस्य वेदकार्यात्मज्ञानकारित्वसिद्धिः। किंच

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।

इत्यत्र णिजर्थस्य रागतः प्राप्तत्वेनाविधेयत्वात् एतया निषादस्थपतिं याजयेदितिवत् प्रयोज्यव्यापार एव पुराणश्रवणं विधीयते । तस्य च प्रयोजनाकाङ्क्षायां श्रुतेन पुराणेन यच्छक्यते तत्कुर्यादित्युपबन्धादात्मप्रतिपादकपुराणश्रवणेनात्मज्ञानं भावयेदितिविधानात्सिध्यति शूद्रस्याप्यात्मज्ञानाधिकारः। नावेदविन्मनुते इति श्रुतिस्तु वेदाधिकारिणो [1]वेदातिरिक्तप्रमा-

---

१ वेदातिरिक्तेति। वेदाधिकारी वेदातिरिक्तप्रमाणेन आत्मज्ञानाय न यतेतेत्यर्थः। ननु तन्त्रप्रामाण्यनिरूपणावसरे श्रुतिभ्रष्टातिरिक्तानां वैदिकानामपि तन्त्रेऽधिकारः प्रदर्शितः, तथा शूद्राद्युद्देशेन रचितेष्वपि पुराणेषु त्रैवर्णिकानामधिकारः प्रदर्शितः। एवंच तत्त्वज्ञानायापि पुराणश्रवणादिकं त्रैवर्णिकानां नानुचितम्। किंच शूद्रादीनां तत्त्वज्ञानसाधनस्य पुराणादिश्रवणस्य त्रैवर्णिकानां तत्त्वज्ञानसाधने कः प्रतिबन्धः। विवेकवैराग्यसंपादनद्वारा मुमुक्षुत्वोत्पादनस्य उभयत्र तुल्यत्वात्। अतो नावेदविन्मनुते तं बृहन्तमिति श्रुतेः वेदाधिकारिणो वेदातिरिक्तप्रमाणनिषेधपरत्वं न समञ्जसम् इत्यत आह ।

णनिषेधपरा [1]वेदविरुद्धतर्कादिनिषेधपरा वा व्याख्येया । तं त्वौपनिषदमित्येषाऽपि उपनिषदतिरिक्ततार्किकादिसंमतानुमा-

---

१ वेदविरुद्धेति । वेदाविरुद्धतर्कादिभिः आत्मज्ञानाय कोटिजन्मपर्यन्तमपि यत्ने कृते वैफल्यमेव स्यात् अतो ज्ञानार्थिभिः वेद एव श्रद्धेयः तदनुकूला एव तर्का आश्रयणीयाः न विरुद्धा इति मुहुर्मुहुर्वेदः नावेदविदिति वक्तीति भावः ।

२ अनुमानादीति । आत्मस्वरूपस्य गुणातीतत्वेन अनुमानादिप्रमाणागोचरत्वात् तत्सिद्धात्मज्ञानेन न मोक्षसिद्धिरिति मुमुक्षुभिरुपनिषदेवाश्रयणीयेति बोधनार्थं तं त्वौपनिषदम् इति श्रुतिरिति भावः । उपनिषच्छब्दार्थश्च मुख्यया वृत्त्या ब्रह्मविद्यैव । मुमुक्षूणामविद्याविनाशकत्वात् ब्रह्मप्रापकत्वाद्वा । तत्साधनत्वाद् ग्रन्थोऽपि लक्षणया उपनिषद् । तं त्वौपनिषदमित्यत्र उपनिषच्छब्देन आत्मविद्यैव, आत्मस्वरूपस्यैव विद्यामात्रगम्यत्वात् । ज्ञानं ज्ञेयं ज्ञानगम्यमिति स्मृतेः । सा च गुरुगम्यैव । स गुरुमेवाभिगच्छेत् श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः ।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥

इति भागवताच्च । ब्रह्मनिष्ठगुरुश्च मुमुक्षुकम्य एव । अन्यस्य

इदं ते नातपस्काय नाभक्ताय कदाचन ।
नचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥

इत्यनेन उपदेशनिषेधश्रवणात् । तपोऽत्र कामत्यागस्तपः स्मृतमितिनिर्वासनत्वमेव । तच्च वैराग्यमेव । विवेकं विनाच विषयेषु मिथ्यात्वामहादृढतरं तदनुपपन्नमेवति विवेक आक्षिप्यते । तथाच विवेकज्ञानपूर्वकवैराग्यवान् तपस्वी तद्रहितश्च अतपस्कः । भक्तिश्च गुरुवेदान्तवाक्येषु श्रद्धापूर्विका चेतसः भगवत्प्रवणता । सा च शमादिपूर्विकैवेति शमादिषट्कस-

नादिमूलप्रमाणनिवृत्त्यर्था । नचाननुगतकारणजन्यत्वान्मोक्षे वैजात्यापत्तिरिति वाच्यम् । उभयविधस्यापि साक्षात्कारस्य साक्षात्कारत्वेनैकेनैव रूपेण मोक्षजनकत्वाङ्गीकारात् । स्पष्टं च पुराणेन शूद्रस्य तत्त्वज्ञानं

---

म्पत्तिरेव भक्तिः तद्रहितश्च अभक्तः। अभ्यसूया च अन्यत्र दोषदृष्टिः । सा च स्थूलसूक्ष्मे अभिमानवतो भवति । स्थूलसूक्ष्मेऽभिमानवांश्च अन्यदेहादौ असूयां करोति । सा च भगवत एव असूया भवति ।

मनसैतानि भूतानि प्रणमेद्बहु मानयन् ।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥

विनाऽच्युताद्वस्तु तरां न वाच्यमित्यादौ सर्वस्य भगवद्रूपत्वश्रवणात् । तस्मात्स्थूलसूक्ष्मदेहयोरात्मबुद्धिं परित्यज्य सर्वत्र भगवद्बुद्धिं कुर्वत आत्मैकशरणस्यैव मुमुक्षुत्वम् । तादृशस्यैव मुमुक्षोः जिज्ञासोः सच्चिदानन्दविग्रहगुरुप्रसादात् प्रमाणागम्योऽप्यात्मा मुमुक्षुणा आत्मत्वेन गम्यते इति गुरुपुत्राणामतिरोहितम् । अत्र सद्गुरोर्महावाक्यवदनं मुमुक्षोः शिष्यस्य श्रवणमात्मदर्शनं च आश्चर्यवदेव । स्पष्टं चेदम् आश्चर्यवत्पश्यति इति श्लोकव्याख्याने मधुसूदनटीकायाम् । अत्र अविद्यानिवर्त्तिका विद्यारूपा उपनिषद् एकरूपा । सा च परवाग्रूपा । तत्साधनभूता वैखरीरूपा तु नानारूपा । तत्त्वमसि, प्रज्ञानमानन्दं ब्रह्म, अयमात्मा ब्रह्म, इति विधिरूपाणां नेति नेति इति निषेधरूपाणां च वाक्यानां श्रुतिषु दर्शनात् । सर्वेषामेव च सद्गुरुमुखाच्छ्रुतानामविद्यानिवर्त्तकविद्योत्पादकत्वम् । अविशेषात्पुराणादिवाक्यानामपि सद्गुरुमुखाच्छ्रुतानां विद्योत्पादकत्वे न विरोधः । तथा सत्यपि आत्मस्वरूपस्य परवाग्रूपोपनिषन्मात्रगम्यत्वस्य सुस्थत्वात् । ग्रन्थरूपोपनिषदः वैखरीरूपायाः साक्षात् आत्मस्वरूपगमकत्वस्य असंभवात् । स्पष्टं चेदमुपक्रमे एव कठवल्लीभाष्ये । परवाग्रूपोपनिषादि च वेदात् पुराणात् अन्यस्माद्वा कस्माच्चित् परोक्षेण आत्मानं देहादिभ्यो भिन्नत्वेन ज्ञातवतामैहिकामुष्मिकवि-

पुराणान्तरे,

अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् ।
वदन्ति केचिन्मुनयः स्त्रीणां शूद्रसमाननाम् ॥ इति ।

---

षयेषु अत्यन्तविरक्तानां बुद्धेः भगवन्निष्ठतया अहं ब्राह्मणः शूद्रः स्त्री वेति मूर्छिताभिमानानां मुमुक्षूणामधिकारः । अत एव मां हि पार्थ व्यपाश्रित्य, अपिचेत्सुदुराचार इति स्मर्यते । विवेकज्ञानं च वेदादिभ्य उत्पद्यते । तच्च द्विजैः अविशेषात् यस्मात्कस्माच्चित्संपादनीयम् । स्त्रीशूद्रैस्तु वेदानधिकारात् पुराणादिश्रवणादेव संपादनीयम् । विवेकज्ञानोत्तरं विरक्तानां स्त्रीशूद्राणां ज्ञानाभ्यासेऽधिकारित्वं सूतसंहितायां स्मर्यते । वक्ष्यते चाग्रे मूले एव,

अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् ।
वदन्ति केचिन्मुनयः स्त्रीणां शूद्रसमाननाम् ॥ इति ।

अत्रेदं तत्त्वम् । पञ्चमहाभूतारभ्यत्वं मनुष्याद्याकृतिमत्त्वं च यद्यपि ब्राह्मणादिदेहानां समानं तथापि संस्कारविशेषवत्त्वाद्यभिव्यङ्ग्यम् ब्राह्मणत्वादिकमधिकारविशेषप्रयोजकं भिन्नं भिन्नम् । प्रायः स्थूलदेहानुसारेणैव सूक्ष्मे संस्काराः प्रादुर्भवन्ति । अत एव पञ्चमहाभूतारभ्यत्वेन समानेष्वपि मनुष्यपशुपक्ष्यादिस्थूलदेहेषु प्रविष्टानां साभासानां सूक्ष्मदेहानां स्थूलानुरूपा एव संस्कारा दृश्यन्ते नतु विपरीताः । एवं प्रायो मनुष्येष्वपि ब्राह्मणत्वादिव्याप्यजातिमतां विजातीया एव वासना उपलभ्यन्ते । नहि लोहकारादीनां ब्राह्मणाद्यनुरूपाः ब्राह्मणादीनां वा लोहकाराद्यनुरूपा वासनाः उत्सर्गत उद्भवन्ति । तस्मात् जन्मान्तरानुष्ठितकर्मजन्यसंस्कारा एव साभासलिङ्गदेहस्य तत्तत्स्थूलप्राप्तौ नियामकाः । ततश्च मनुष्यदेहारम्भककर्मसंस्कारसत्त्वे एव मनुष्यदेहप्राप्तिः । एवं ब्राह्मणादिदेहारम्भककर्मसंस्कारसत्त्वे एव ब्राह्मणादिदेहप्राप्तिः । तथा पुरुषदेहारम्भककर्मसंस्कारसत्त्वे एव पुरुषदेहप्राप्तिः नान्यथा । अत्र क्वचित् वैपरीत्यदर्शनेऽपि न तावन्मात्रेण व्यभिचारः शङ्कनीयः । संस्कारविशेषान्तरस्य ब्राह्मणादिदेहाद्यनुरूपाकिंचित्-

स च साक्षात्कारो योगाभ्यासादिव काशीमरणादितोऽपि भवतीत्यन्यदेतत्। विस्तरस्तु मोक्षप्रकाशे वक्ष्यते। इति साधारणो धर्मः। अथासाधारणः। धर्म इत्यनुवृत्तौ

---

संस्कारोद्बोधप्रतिबन्धकत्वेन केषां चित्संस्काराणामनुद्बुद्धत्वेऽपि विपरीतानां च अन्यदेहानुरूपाणां केषांचित् संस्कारविशेषादेव उद्बुद्धत्वेऽपि औत्सर्गिकाणां केषांचित् ब्राह्मणादिदेहानुरूपाणां सत्त्वेन व्यभिचाराभावात्। नहि मण्यादिसमवधानदशायां वह्नेर्दाहानुत्पत्त्या उत्सर्गतः वह्नेर्दाहं प्रति कारणता निरसितुं शक्यते। ब्राह्मणादिस्थूलदेहानुरूपाः औत्सर्गिकाः संस्काराश्च निवृत्तदेहाभिमानिभिर्मन्वादिभिः तदनुगृहीतैश्च निर्णेयाः न तु देहाभिमानिभिः। स्वाभाविकी प्रवृत्तिश्च जन्मान्तरसंस्कारानुरूपदेहप्राप्त्यनुरूपैव दृश्यते। अत एव शास्त्रेण चतुर्णां वर्णानां तदितरेषां च देहप्राप्त्यनुरूप एव अधिकारः स्थापितः। एतदेवाभिप्रेत्य

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।

इति भगवद्गीतासु अभिहितम्। शास्त्राज्ञानुरूपकर्मकरणे एव अन्तःकरणशुद्धिरूपा सिद्धिः तत एवच सम्यक् ज्ञानम्। तदप्युक्तं गीतासु,

स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। इति।

भागवते च,

स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः। इति।

अन्यथा आचरणे दोषश्चोक्तो गीतायां परधर्मो भयावह इति। एतेन जन्मान्तरसंस्कारेण हीनदेहं प्रवेशिताः अनुपासितगुरवः पण्डितंमन्याः स्वबुद्ध्यैव शास्त्रार्थं परिकल्प्य शास्त्रोक्ताधिकारमर्यादां च परित्यज्य आचरन्तः प्रत्यवयन्ति इति सूचितम्। तस्मात्स्वहितेच्छुभिः शास्त्रोक्तमर्यादा अवश्यं पालनीया। ततश्च त्रैवर्णिकैरेव वेदादिभ्यः आत्मा श्रोतव्यः अन्यैस्तु पुराणादिभ्य एवेति सिद्धम्। पुराणादिश्रवणेन सच्चिदानन्दरूपे आत्मनि देहादिभ्यो विविक्तत्वेन परोक्षं ज्ञाते देहादिषु च तत्रैव कल्पितत्वेन ज्ञातेषु

भविष्यपुराणे,

स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः।
वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम्॥

---

जन्मान्तरसंस्कारविशेषवशात् हीनदेहं प्रविष्टोऽपि जन्मान्तरसंस्कारविशेषादेव गुर्वादिवाक्येषु विश्वासाद्विषयमात्रे विरक्तः स्वाधिकारानुरूपमेव कर्माचरन् गुरूक्तमार्गेण भगवतो नामस्मरणादिषु रतः तत्प्रसादेन शमादिसाधनसम्पन्नः भगवत्कृपया मननेन आत्मानं देहादिभ्यो विविच्य त्यक्तदेहाद्यभिमानः अज्ञाननिरासं कथमपि कर्तुमसमर्थः जन्ममरणप्रवाहलक्षणात् संसारात् मुमुक्षुः श्रोत्रियं ब्रह्मनिष्ठं गुरुमन्वेषयन् भगवदनुग्रहेण उपलभते। ततश्च गुरुरपि लक्षणैस्तं मुमुक्षुं ज्ञात्वा महावाक्यमुपदिश्य कृतार्थं करोति। तीव्रतरमुमुक्षोत्पत्तौ निवृत्तस्थूलसूक्ष्माभिमानस्य प्राज्ञस्य ज्ञानोपदेशे च न स्थूलधर्माणां ब्राह्मणत्वादीनं प्रयोजकता। धर्मिणस्तादात्म्ये निवृत्ते तद्धर्माणां तत्र प्रतिभासासंभवात्। अज्ञानसत्त्वेऽपि न तत्र स्थूलादिधर्मसंभवः। कार्यधर्माणां कारणे असत्त्वात्। कारणे कार्यस्य अनुत्पादात्। केवलं कार्यैः कल्पनया कारणे कार्यभानात्। एतदेवाभिप्रेत्य

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥

इति गीतासु उक्तम्। अत्र स्त्रीत्वशूद्रत्वादिकं न विशेषणं किं तु काकवत्त्वादिकमिवोपलक्षणम्। अत एव भगवत्प्रसादात् विभीषणसुग्रीवादीनां विदुरादीनां च ज्ञानं पुराणादिषु श्रूयते। शंकरभगवत्पादैरपि त्रैवर्णिकानामेव ज्ञानाधिकार इत्युक्त्वा येषां तु विदुरादीनां भगवत्प्रसादात् ज्ञानं जातमिति श्रूयते न तेषां ज्ञानं वार्यते मर्यादाया औत्सर्गिकत्वात् इत्युक्तम्। तस्याप्युक्त एव अभिप्रायो बोध्यः। पापयोनीनां स्त्रीशूद्रादीनां मलिनसंस्कारवत्त्वेन देहाभिमाननिवृत्तिः प्रायो दुष्करा द्विजानां तु संस्कारादिमनां सा सुलभा इत्यभिप्रायेण शास्त्रकारेण मर्यादा कृता। जन्मान्तरे च ब्राह्म-

वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ।
वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्त्तते ॥
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ।
यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते ।
स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ॥
वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्त्तते ।
स वर्णाश्रमधर्मस्तु मौञ्ज्याद्या मेखला यथा ॥
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते ।
यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्त्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

वर्णत्वं ब्राह्मणत्वादि । एकपदं मात्रार्थकम् । तथाच ब्राह्मणत्वादिकमात्रमुद्दिश्य यो धर्मो विधीयते स वर्णधर्मः । यथा-ऽष्टवर्षं ब्राह्मणमुपनयीतेत्यत्राष्टवर्षं ब्राह्मणवर्णमात्रमुद्दिश्योपनय-

---

णादिदेहं प्राप्य संपन्नकतिपयसाधनः पूर्णतामप्राप्यैव अदृष्टवशात् मध्ये एव मृतः ज्ञानार्थी केनचित्पापेन हीनदेहं प्रविष्टोऽपि पूर्वसंस्कारवशात् ज्ञानमार्गे एव प्रवर्त्तते। तस्यैव च पूर्वोक्तप्रकारेण साधनचतुष्टयसंपत्तौ भगवत्प्रसादात् ब्रह्मनिष्ठगुरुलाभेन कृतार्थता भवति । नत्वेतावता दृढदेहाभिमानानाम् आत्मानमधिकारिणं मन्यमानानां त्यक्तमर्यादानामधिकार इति भ्रमितव्यम् । भगवदवतारभूतानां केषांचित् ब्रह्मनिष्ठसाधूनां हीनदेहधारणं तु भगवत्प्राप्तौ अनन्यभक्तिरेव प्रधानं साधनं नत्वन्यदपि किंचित् तस्मात्सर्वैरेव भगवतो-ऽनन्यभक्तिरेव कर्त्तव्या इति सूचयितुम् । अत एव

भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥

इति भगवद्गीतासु उक्तम् । एवंच न कश्चिद्विरोध इति दिक् ।

नम् । यस्त्वाश्रमं समाश्रित्येत्यत्राधिकारपदं धर्मपरम् ।

हारीतेन तु आश्रमधर्माणां चातुर्विध्यमुक्तम् । यथा,

अथाश्रमाणां पृथग्धर्मो विशेषधर्मः समानधर्मः कृत्स्नधर्मश्चेति । पृथगाश्रमानुष्ठानात् पृथग्धर्मो, यथा चतुर्वर्णाश्रमधर्मः । स्वाश्रमविशेषानुष्ठानाद्विशेषधर्मो, यथा नैष्ठिकयायावरानुज्ञायिकचातुराश्रम्यसिद्धानाम् । सर्वेषां यस्समानो धर्मः स समानधर्मः । नैष्ठिकः कृत्स्नधर्म इति । स्वोक्तं पृथग्धर्मादिपदं स्वयमेव व्याचष्टे, पृथगाश्रमानुष्ठानादित्यादि । पृथगाश्रममेकैकाश्रममनुष्ठानात्पृथग्धर्मः, यथा समिदाधानपुत्रोत्पादनादिः । स्वाश्रमेषु ब्रह्मचर्यादिषु विशेषोऽवान्तरभेदः । नैष्ठिको यावज्जीवं ब्रह्मचारी । इदमुपकुर्वाणब्रह्मचारिणोऽप्युपलक्षणम् । तत्र नैष्ठिकधर्म आमरणं गुरुकुलवासादिः । उपकुर्वाणधर्मस्तु गुरुदक्षिणादानपूर्वकस्नानादिः । यायावरो वृत्त्यर्थाध्यापनादिशून्यो गृहस्थविशेषः । इदं च वृत्त्यर्थाध्यापनादियुक्तशालीनाख्यगृहस्थविशेषस्याप्युपलक्षणम् । तत्र यायावरधर्मः शिलोञ्छादिः । शालीनधर्मो वृत्त्यर्थयाजनादिः । अनुज्ञायिको वानप्रस्थविशेषः । चातुराश्रम्यसिद्धोऽयमिति विशेषः । समानधर्मोऽहिंसादिः । नैष्ठिकः कृत्स्नधर्म इति । निष्ठा संसारसमाप्तिः तत्प्रयोजकः, विविदिषोः प्रत्यवायपरिहाराय नित्यनैमित्तिकानुष्ठानं कृत्स्नधर्म इत्यर्थः । क्वचिद् द्वैविध्यं, यथा

कालिकापुराणे,

इष्टापूर्तौ स्मृतौ धर्मौ श्रुतौ तौ शिष्टसंमतौ ।
प्रतिष्ठाद्यं तयोः पूर्तमिष्टं यज्ञादिलक्षणम् ॥
भुक्तिमुक्तिप्रदं पूर्तमिष्टं भोगार्थसाधनम् ।

स्मृतौ स्मृत्या बोधितौ । श्रुतौ श्रुत्या बोधितौ । शिष्टसंमतौ

सदाचारसिद्धौ । प्रतिष्ठाद्यं देवताप्रतिष्ठाजलाशयोत्सर्गादि । तयोः इष्टापूर्त्तयोर्मध्ये ।

एकाग्निकर्म हवनं त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥
वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तमार्याः प्रचक्षते ॥

एकाग्निकर्म हवनम् एकस्मिन्नग्नौ आवसथ्यादौ यत्क्रियते होमरूपं कर्म । त्रेतायाम् आहवनीयाद्यग्नित्रये ।

नारदः,

आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ।
ग्रहोपरागे यद्दानं सूर्यसंक्रमणे तथा ॥
द्वादश्यादौ च यद्दानं तदेतत्पूर्त्तमुच्यते ।
इष्टापूर्त्ते द्विजातीनां धर्मः सामान्य उच्यते ॥
अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके ।

वैदिके ज्योतिष्टोमादौ ।

मनुः,

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेवच ।
विषयेष्वप्रसक्तिं च क्षत्रियस्य समासतः ॥
पशूनां रक्षणं दानमिज्याध्ययनमेवच ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेवच ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥

विषयेष्वप्रसक्तिम् इन्द्रियजयम् । वणिक्पथं वाणिज्यम् ।

कुसीदं वृद्ध्यर्थं धनप्रयोगः। शुश्रूषया जीवनासंभवे आह

याज्ञवल्क्यः,

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेत् द्विजातिहितमाचरन्॥

अत्र अजीवन्निति छेदः। तत्र विशेषमाह

मनुः,

विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते।
यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम्॥

विशिष्टमुत्कृष्टं, धर्मस्यत्युभयहेतुत्वात्। निष्फलं विशिष्टफलाजनकं, वृत्तिमात्रहेतुत्वात्।

विष्णुपुराणे,

दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत च।

मन्त्रमाह,

याज्ञवल्क्यः,

नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्।

नृसिंहपुराणे,

अयाचितप्रदाता स्यात् कृपिं वृत्त्यर्थमाश्रयेत्।
पुराणं शृणुयान्नित्यं नृसिंहस्य च पूजनम्॥

कुर्यादिति शेषः।

महाभारते,

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेवच।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।

दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥
स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।

ज्ञानं शास्त्रीयम् । विज्ञानमात्मसाक्षात्कारः ।

तत्रैव सर्वानुद्दिश्य,

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

स्वधर्मः यस्य यदा यत्र यथा विहितः स तस्य । अन्ये विशेषास्तत्रतत्र प्रकरणे वक्ष्यन्ते ।

अथ युगधर्माः । तत्र

पराशरः,

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगरूपानुसारतः ॥

अत्र युगह्रासानुरूपत इति चतुर्थचरणपाठो मनौ । अत्रान्यशब्दो न धर्मस्य युगभेदेन स्वरूपान्यत्वमाचष्टे किं तु प्रकारान्यत्वम् । अन्यथा धर्मप्रमाणचोदनानामपि युगभेदेन भेदापत्तेः । नहीयं चोदना कृतेऽध्येतव्या इयं तु त्रेतायामित्यादिव्यवस्थापकं किंचिदस्ति। प्रकारान्यत्वे त्वास्ति दृष्टान्तः । एकस्याप्यग्निहोत्रस्य सायंप्रातःकालभेदेन मन्त्रादिभेदश्रवणात् । प्रकृते प्रकारभेदमुपपादयति । युगरूपेति । युगानां रूपमनुष्ठातृपुरुषतारतम्योपेतं तदनुसारेणानुष्ठानतारतम्यं संभवति । यथा शक्नुयात्तथा कुर्यादिति नित्यकर्मणि निर्णीतत्वात् । तथाच

बौधायनः,

यथाकथंचिन्नित्यानि शक्यवस्त्वनुरूपतः ।

येन केनापि कार्याणि नैव नित्यानि लोपयेत् ॥

**मनुरपि,**

वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥

**कूर्मपुराणे,**

यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् ।

अत्र मनुबौधायनवचनैकवाक्यतया कर्मपदं नित्यकर्मपरम्। चतुर्षु युगेषु यथायथं प्राधान्येनानुष्ठातुं सुशकान् धर्मानाहतुः,

**मनुपराशरौ,**

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥

तपः कृच्छ्रचान्द्रायणादि । तथाचोक्तं

**स्कान्दे,**

वेदोक्तेन प्रकारेण तथा चान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ॥ इति ।

परं युगान्तरापेक्षया मनुष्यसामर्थ्याधिक्यात्सुशकतया अन्यधर्मापेक्षया प्रचुरतरम् । तत्र सामर्थ्याधिक्यमाह

**स एव,**

कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः ।
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः ॥ इति ।

ज्ञानमात्मज्ञानम् । अत्रापि पूर्वोक्तार्थकं परपदमनुषज्यते । एवमग्रेऽपि ।

**बृहस्पतिरपि,**

तपो धर्मः कृतयुगे दानं त्रेतायुगे स्थितम् ।

द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः ॥

एवंच पूर्ववाक्ये दानपदं दयादमयोरप्युपलक्षकम् ।

पराशरः,

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

अत्र अन्ये कृतयुगे धर्मा इत्यनेन तत्तद्युगीयपुरुषसामर्थ्यानुरूपानुष्ठानका विभिन्ना एव धर्मा इत्युक्तम्। तेषु च कलियुगपुरुषीयसामर्थ्यानुरूपानुष्ठानधर्मकाणां प्राचुर्येण मन्वादिस्मृत्यप्रतिपाद्यत्वं कृते तु मानवा धर्मा इत्यादिना सूचयन् तद्धर्मजिज्ञासूनां स्वधर्मगोचरप्रवृत्त्यर्थं कलौ पाराशराः स्मृता इत्यनेन स्वग्रन्थस्य प्राचुर्येण तद्धर्मप्रतिपादकत्वरूपमुत्कर्षं ज्ञापयति। न तु मन्वादिस्मृतीनां परस्परविरोधे युगभेदेन व्यवस्थम्। स्मृत्यन्तरविरोधे श्रौतस्य मनुस्मृतिबलीयस्त्वस्य स्मृत्यन्तराणां च परस्परविरोधे विकल्पस्यावाधेनैवोपपत्तौ बाधकल्पनाया अन्याय्यत्वात् ।

तथा,

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥

अत्र युगान्तरे पतिताधिष्ठितदेशादिसंसर्गो निषिध्यते, कलौ तु पातकिसंसर्गमात्रम् ।

तथा,

कृते संभाषणादेव त्रेतायां स्पर्शनेन तु ।
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥

अत्र कृतादौ युगत्रये ब्रह्मवधादिकर्मकर्तृसंभाषणमात्रादिभ्य एव पातित्यं, कलौ तु ब्रह्मवधादिरूपेण ब्रह्मवधादिकर्तृ-

याजनयौनादिगुरुसंसर्गरूपेणैव कर्मणा पातित्यं न तु कृतयुगादिष्विव ब्रह्मवधादिकर्मकारिसंभाषणमात्रादिभ्य इत्यर्थः। ननु संसर्गदोषः पापेष्वितिवक्ष्यमाणकलिवर्ज्याभिधायकवाक्येन कलौ संसर्गदोषस्य व्युदासात्कर्मणेत्यनेन कथं ब्रह्मवधादिकर्तृयाजनयौनादिगुरुसंसर्गोऽपि लभ्यते इति चेत्। सत्यम्। संसर्गदोषः पापेष्विति वाक्यस्य कृते संभाषणादेवेत्यनेन त्यजेद्देशं कृतयुगे इत्यनेन च पराशरवाक्येनैकवाक्यतया संभाषणमात्रादिरूपसंसर्गदोषस्यैकदेशवासादिरूपसंसर्गस्य च दोषत्वाभावलाभात्प्रकृतवाक्ये कर्मणेत्यनेनास्मदभिमतसंसर्गस्यापि लाभे बाधकाभावात्। तयोर्वाक्ययोरेकवाक्यत्वाभावे च विधिद्वयकल्पनागौरवप्रसङ्गात्। अपिच, संसर्गदोषः पापेष्विति वाक्यस्य यथाश्रुतार्थकत्वे पातकिनमुपक्रम्य

एतैः सह समायोगं यः करोति दिनेदिने।
तुल्यतां याति विप्रेन्द्र कलौ संवत्सरे गते॥

इति स्कन्दपुराणवाक्यं कर्त्तारं तु कलौ त्यजेदिति पराशरवाक्यं च कलौ कर्तृसंसर्गस्य दोषत्वाभिधायकं विरुध्येत।

विष्णुपुराणे,

यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत्।
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ॥
तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः।
प्राप्नोति पुरुषस्तेन कलिः साधुरिहोच्यते॥

तपःप्रभृतीनां यत्फलं दशभिर्वर्षैः पुरुषः प्राप्नोति तत्फलं त्रेतायां हायनेन प्राप्नोतीत्यन्वयः। एवमग्रेऽपि।

मनुः,

चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे।

नाधर्मेणागमः कश्चिन्मनुष्यान्प्रति वर्त्तते ॥
इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः।
चौरिकानृतमायाभिर्धर्मश्चापैति पादशः ॥

वृषो हि भगवान् धर्म इत्यागमे धर्मस्य वृषत्वेन निरूपणात् तपः परं कृतयुगे इत्यादिपूर्वोदाहृतमनुवाक्योक्ताः तपोज्ञानयज्ञदानरूपाश्चत्वारोऽत्र पादत्वेन निरूपिताः। सकलः सर्वाङ्गसंपन्नः। सकलधर्मेषु श्रेष्ठत्वप्रतिपादनाय सत्यस्य पृथग्ग्रहणम्। अधर्मेण शास्त्रातिक्रमेण। आगमो धनविद्यादेरुत्पत्तिः। इतरेषु सत्ययुगादन्येषु। आगमात् अधर्मेण धनविद्यादेरर्जनात्। तस्यैवागमस्य प्रक्रान्तत्वात्। धर्मस्तद्धनादिसाध्यो धर्मः यथाक्रमं प्रतियुगं पादशः पादंपादम् अवरोपितो हीनः कृतः। तथा न्यायागतधनाद्यर्जितोऽपि यो धर्मः सोऽपि चौर्यासत्यच्छद्मभिः प्रतियुगं पादशः ह्रसति। पूर्वार्धे कारणापकर्षाद्धर्मापकर्षः, उत्तरार्धेऽसत्यपि कारणापकर्षे प्रकृष्टधर्मप्रतिबन्धकवशाद्धर्मापकर्ष उक्त इति भेदः। अत्र चौरिकानृतमायानां प्रतियुगं समुच्चयेनान्वयो न तु यथासंख्यम्। इदानीं तत्समुच्चयदर्शनात्। अत्र तपःप्रभृतीनां धर्मपादानां मध्ये त्रेतादौ क्रमेणैकैकः पादः सर्वात्मना नश्यतीति नार्थः। इदानीमपि तेषां क्वचिद्दर्शनात्। किंतु सर्वेषामेव धर्मपादानामेकैकस्य पादस्य प्रतियुगं क्रमेण तुर्यस्तुर्योंऽशो नश्यतीत्यर्थः। तदुक्तं

भागवते,

कृते प्रवर्त्तते धर्मश्चतुष्पात्तज्जनैर्धृतः।
सत्यं दया तपो दानमिति पादा विभोर्नृप ॥
तज्जनैस्तत्कालीनैर्जनैः।
त्रेतायां धर्मपादानां तुर्योंऽशो हीयते शनैः।

अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥
तपःसत्यदयादानेष्वर्द्धं ह्रसति द्वापरे ।
हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥
कलौ तु धर्महेतूनां तुर्यांऽशो ऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ इति ।

बृहस्पतिः,

कृते ऽभूत्सकलो धर्मस्त्रेतायां त्रिपदः स्थितः ।
पादः प्रविष्टो ऽधर्मस्य मत्सरद्वेषसंभवः ॥
धर्माधर्मौ समौ भूत्वा द्वौ पादौ द्वापरे स्थितौ ।
तिष्ये ऽधर्मस्त्रिपादस्तु धर्मः पादेन संस्थितः ॥

अत्र सर्वेषां धर्माणां चतुर्धा विभक्तानामेकैकांशरूपपादापगमात् त्रिपदत्वादिकमवगन्तव्यम् ।

स्मृतिचन्द्रिकायामादिपुराणे,

यस्तु कार्त्तयुगो धर्मो न कर्त्तव्यः कलौ युगे ।
पापप्रसक्ताश्च यतः कलौ नार्यो नरास्तथा ॥
न विद्वत्ता न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ ।
यतोऽतः सत्यमेवैकं नराणामुपकारकम् ॥

पराशरः,

युगेयुगे च ये धर्मास्तत्रतत्र च ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥

अयं च निन्दानिषेधोऽसमर्थविषयः । अत एवाह युगरूपा हि ते द्विजा इति । इति धर्मस्वरूपविभागः ।

अथ धर्महेतुनिरूपणम् ।

स द्विविधः। आरादुपकारकसन्निपत्योपकारकभेदात्। आद्यो यथा प्रयाजादिः। द्वितीयः द्रव्यदेवतादेशकालकर्त्रादिः तत्संस्का-

रश्च। द्रव्यं व्रीहिभिर्यजेतेत्यादिवाक्ये विहितम्। देवता यदाग्नेयोऽष्टाकपाल इत्यादावग्न्यादिः। कालाद्याहतुः

**शङ्खलिखितौ,**

तत्र धर्मलक्षणानि देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति। समस्तेषु धर्मोदयः साधारणोऽन्यथा विपरीतः। श्रद्धापात्रसंपन्नो धर्मः कालापेक्षः। श्रद्धाद्रव्योत्पत्तिरिति कालस्तन्मूलो देश इति। अस्यार्थः। धर्मलक्षणानि धर्मनिमित्तानि। देशो ब्रह्मावर्त्तादिः। कालः संक्रान्त्यादिः। उपाय इतिकर्त्तव्यता। द्रव्यं गवादि। श्रद्धा शास्त्रार्थे दृढप्रत्ययः। पात्रं विद्यातपोवृत्तसंपन्नम्। त्यागः स्वस्वत्वनिवृत्तिपूर्वकः परस्वत्वोत्पत्तिफलको व्यापारविशेषः। समस्तेषु सत्सु धर्मोदयः विशिष्टदानधर्मफलोदयः। उपलक्षणमिदम्। अन्येष्वपि सर्वाङ्गसंपन्नेष्वेव यागादिषु विशिष्टफलोदय इत्याह, साधारण इति। सर्वधर्मसाधारणोऽयं न्याय इत्यर्थः। अपरार्के तु साधारण इत्यस्यानन्तरं न्याय इत्यपि पाठो दृश्यते।

**याज्ञवल्क्योऽपि,**

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।<br>
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥ इति।

अन्यथोक्तदेशाद्यभावे विपरीतः तादृशधर्मफलाजनकः। विशेषविहितदेशादिकं विनाऽपि श्रद्धापात्रविशेषसंपत्तिमात्रेण पूर्वोक्तात् न्यूनां धर्मसिद्धिमाह, श्रद्धापात्रसंपन्नो धर्मः कालापेक्ष इति। श्रद्धापात्राभ्यामेव पूर्वोक्तकालातिरिक्तानिषिद्धकालसापेक्षाभ्यां धर्मः संपद्यते इति वाक्यार्थः। कालमेवाह, श्रद्धाद्रव्योत्पत्तिरिति काल इति। यस्मिन्नेव काले श्रद्धा द्रव्यं च स एव कालोऽपेक्षणीय इत्यर्थः। एवंभूतकालसंपन्नो यः कश्चनानिषिद्धो

देशो धर्मस्य कारणमित्याह, तन्मूलो देश इति । स प्रागुक्तः कालो मूलं धर्मजनने सहकारी यस्येत्यर्थः । श्रद्धापात्रद्रव्यसंपत्तिरप्रतिषिद्धौ देशकालौ धर्मसंपत्तिरिति समुदायार्थः । तत्र देशो

मार्कण्डेयपुराणे,

भगवन्कथितस्त्वेष जम्बूद्वीपः समासतः ।
यदेतद्भवता प्रोक्तं कर्म नान्यत्र पुण्यदम् ॥
पापदं वा महाभाग वर्जयित्वा तु भारतम् ।
इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते ॥
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।
योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् ॥
पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः ।
दक्षिणे मलयो यस्य हिमवानुत्तरे तथा ॥
तदेतद्भारतं वर्षं सर्वबीजं द्विजोत्तम ।
ब्रह्मत्वममरेशत्वं देवत्वमपि दुर्लभम् ॥
मृगपश्वोषधिवरा योनीस्तद्वदतोऽश्नुते ।
स्थावराणां च सर्वेषामतो ब्रह्मन् शुभाशुभे ॥
प्रयान्ति कर्मभूर्ब्रह्मन्नान्यलोकेषु विद्यते ।
स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च वै तथा ॥
देवानामपि विप्रर्षे सदैवैष मनोरथः ।
अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ ॥
मनुष्यः कुरुते तत्तु यन्न शक्यं सुरासुरैः ।

विष्णुपुराणे,

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र संततिः ॥

तथा,

अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ॥
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्।

गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्माण्यसंकल्पिततत्फलानि
सत्यस्य विष्णोः परमात्मरूपे।
अवाप्य तां कर्ममहीमनन्ते
तस्मिँल्लयं ये त्वमलाः प्रयान्ति ॥

भविष्यपुराणे,

ब्रह्मावर्तः परो देश ऋषिदेशस्त्वनन्तरः।
मध्यदेशस्ततो न्यून आर्यावर्तस्त्वनन्तरः ॥

अनन्तर इत्यत्र नञ् ईषदर्थे, अनुदरा कन्येतिवत्। अन्तरशब्दो भेदवचनः। भेदश्च वैलक्षण्यम्। तच्च न्यूनतया। उत्तरोत्तरं न्यूनदेशस्यैवाभिधानात्। यथा मध्यदेशस्ततो न्यून इति। तथाचेषन्न्यून इत्यर्थः।

मनुः,

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
अत्र देवपदं स्तुत्यर्थम्। अन्तरं मध्यम्।
अस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
वर्णानां सान्तरालानां सदाचारः स उच्यते ॥

परम्परैव पारम्पर्यम्। परम्पराक्रमेणानिदमथमतयाऽऽगतः। तेनाधुनिकाचारो वारितः। अन्तरालाः संकरजातयः। यद्यपि देशान्तरेऽपि सदाचाराः सन्ति, तस्मिन्नपि च देशेऽनुपनीतसह-भोजनादयोऽनाचाराः परम्परागता बहवो दृश्यन्ते, तथाऽपि सदाचारलक्षणे नैतद्वाक्यस्य तात्पर्यं किं तु तद्देशप्रशंसामात्रे इति नान्यदेशाचारस्याप्रामाण्यमिति मेधातिथिः।

कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वंस्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्त्तं प्रचक्षते॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः॥
एतान् द्विजातयो देशान् संश्रयेरन्प्रयत्नतः।
शूद्रस्तु यस्मिंस्तस्मिन्वा निवसेद् वृत्तिकर्षितः॥

मत्स्या विराटदेशः। पञ्चालाः कान्यकुब्जादिदेशः। शूर-सेनकाः मथुरादिदेशः। अनन्तर ईषत् न्यूनः। अग्रजन्मनो ब्राह्मणस्य। एतद्देशप्रसूतस्येति वचनं देशप्रशंसापरं तत्प्रकर-णपाठात्, न तु तद्देशप्रसूतेभ्य एव धर्मशिक्षणनियमार्थम्। विनशनं सरस्वत्यन्तर्धानदेशः कुरुक्षेत्रदेशे प्रसिद्धः। यज्ञियो यज्ञार्हः। म्लेच्छदेशो यज्ञाद्यनर्हः। वृत्तिर्जीविका तया कर्षितः पीडितः, वृत्त्या जीवनाभाववानित्यर्थः।

वसिष्ठः,

धर्मे आर्यावर्त्ते प्रागदर्शनात्प्रत्यक्कालकावनादुदक् पारिपात्राद्दक्षिणेन हिमवत उत्तरेण विन्ध्यस्य धर्मा ये चाचारास्ते सर्वे प्रत्येतव्या न ह्यन्ये प्रतिलोमकल्पधर्माणः एतमार्यावर्त्तमित्याचक्षते गङ्गायमुनयोरन्तराऽप्येके यावद्वा कृष्णमृगो विचरति तावद् ब्रह्मवर्चसम् । अथापि भाल्लविनो निदाने गाथामुदाहरन्ति । पश्चात्सिन्धुर्वितरणी सूर्यस्योदयनी पुनः । यावद्वा कृष्णमृगो विचरति तावद् ब्रह्मवर्चसमिति । अस्मिंस्तु अदर्शनादयः शब्दाः पश्चात्सिन्धुरित्याद्युदाहृतश्रुत्युक्ततत्तद्देशपराः नह्यन्ये । यतस्ते धर्माः प्रतिलोमकक्षधर्माणो विपरीताः अप्रकृतस्वभावाः । कक्षशब्देन घनतृणावृतदेशवचनेनाप्रकृटना लक्ष्यते । पुनरार्यावर्त्तानुवादोऽन्वर्थसंज्ञाप्रदर्शनार्थः, आर्यास्त्रयो वर्णा आवर्त्तन्ते यस्मिन्निति । ततश्चार्यैरत्रैव वस्तव्यम् । ब्रह्मवर्चसं वृत्तस्वाध्यायसंपत्तिः । भाल्लविनः छन्दोगाः । निदानं छन्दोगसूत्रम् । सिन्धुः प्रसिद्धः । वितरणी जनकपर्वतसमीपे मालवदेशे परशुरामेण धनुष्कोट्या कुण्डं भित्त्वा निर्मितेति जनप्रसिद्धा ।

आदिपुराणे,

कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा ।
समृद्धो धर्मदेशस्तमाश्रयेरन्विपश्चितः ॥

शङ्खलिखितौ,

देश आर्यो गुणवान् प्रागस्तादर्वागुदयाद्यावदुत्ता गिरयो यावत्पुण्याः सरितः प्राक्सिद्धत्वाद्देशः सनातनः पुण्यः । कृष्णमृगो वा यावद्विचरति तावदाचारः स्यात् प्राक् सिन्धुसौवीराद्दक्षिणेन हिमवतः पश्चात् काम्पिल्या उदक् पारियात्रादनवद्यं ब्रह्मवर्चसं सर्वेषामतोऽन्यदेशजातिकुलधर्माणामन्वया इति ।

अनवद्यमविकलम् । धर्माणामेतद्देशधर्माणाम् । अन्वयाः सन्तानाः, प्रत्येतव्या इति शेषः ।

**पैठीनसिः,**

आहिमवत आच कुमार्याः सिन्धुर्वैतरणी नदी सूर्यस्योदयनं पुरः यावद्वा कृष्णमृगो विचरति तत्र धर्मश्चतुष्पादो भवतीति ।

**विष्णुः,**

चातुर्वर्ण्यव्यवस्थानं यत्र देशे न विद्यते ।
तं म्लेच्छदेशं जानीयादार्यावर्त्तमतः परम् ॥

अन्ये तत्तत्कर्मणि पुण्यदेशास्तत्तत्प्रकाशे निरूपणीयाः । अथ निषिद्धदेशाः ।

**बौधायनः,**

आनर्त्तकाङ्गमगधाः सुराष्ट्रा दक्षिणापथः ।
उपावृत्तिसिन्धुसौवीरा एते सङ्कीर्णयोनयः ॥

अवाङ्क् कारस्करान्पाण्ड्यान् पुण्ड्रान्सौवीरान्वङ्गकलिङ्गप्राणूनानिति च गत्वा पुनःस्तोमेन यजेत सर्वपृष्ठया वा । अथाप्युदाहरन्ति ।

पद्भ्यां स कुरुते पापं यः कलिङ्गान्प्रपद्यते ।
ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ॥

आनर्त्तका द्वारका यस्मिन् देशे । अङ्गश्चम्पाप्रदेशः । अयं च निषेधस्तीर्थयात्रां विना ।

**तदुक्तं,**

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गच्छन्पुनः संस्कारमर्हति ॥

आदिपुराणे,

आर्यावर्त्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः ।
कर्मदां सिन्धुपारं च करतोयां न लङ्घयेत् ॥
आर्यावर्त्तमतिक्रम्य विना तीर्थक्रियां द्विजः ।
आज्ञां चैव तथा पित्रोरैन्दवेन विशुद्धयति ॥

कर्म द्यतीति व्युत्पत्त्या कर्मदा कर्मनाशा । मगधे विशेषमाह,

कीकटेषु गया पुण्या नदी पुण्या पुनःपुनः ।
च्यवनस्याश्रमः पुण्यः पुण्यं राजगृहं वनम् ॥

कीकटो मगधदेशः ।

वायुपुराणे,

त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन च कीकटान् ॥
देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः ।

आदिपुराणे,

काञ्चिकोसलसौराष्ट्रदेशाः कर्णाटकच्छजाः ।
कावेरीकोल्वणोद्भूतास्ते देशा निन्दिता भृशम् ॥

कोल्वणः । त्र्यम्बकगिरिमध्यदेशः कोलवण इति प्रसिद्धः ।

पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ।
आरट्टा नाम ते देशा न तेष्वार्योऽन्वहं वसेत् ॥

पञ्चनद्यस्तु शतद्रुविपाशैरावतीचन्द्रभागावितस्ताख्याः ।

नर्मदासिन्धुकौशीनां पारं पद्मस्य पश्चिमम् ।
गत्वा नरकमाप्नोति तीर्थकालाधिकं वसन् ॥

पारं मध्यभागात्परभागः । पद्मस्य पुष्करस्य ।

अङ्गवङ्गकलिङ्गान्ध्रमद्रमालविकास्तथा ।
नर्मदादक्षिणे यच्च सिन्धोरुत्तर एवच ॥

पौण्ड्राश्चैव सुराष्ट्राश्च वैन्ध्यमागधकाः खशाः ।
न विवाहं तथा श्राद्धं यज्ञं तेषु समाचरेत् ॥
पापदेशाश्च ये केचिद्व्याधैरध्युषिता जनैः ।
गत्वा देशानपुण्यांस्तु कृच्छ्रं पापं समश्नुते ॥

कृष्णसारादिरहितदेशाभिप्रायमिदमिति स्मृतिचन्द्रिकाकारः ।

व्यासः,

देशान् शूद्रजनाक्रान्तानधार्मिकजनावृतान् ।
म्लेच्छावृतान्प्रयत्नेन वर्जयेद्धार्मिको द्विजः ॥

श्रुतिरपि,

तस्मान्न जनमियात्नान्तमियादिति । जनमन्त्यजनम् ।

क्वचित्प्रतिप्रसवः स्कान्दे,

अङ्गवङ्गकलिङ्गांश्च पर्वतांश्च खशांस्तथा ।
सिन्धुसौवीरसौराष्ट्रान्पारदानन्ध्रमालवान् ॥
विवाहने द्विजो नित्यमनापदि विवर्जयेत् ।
एतानप्यापदि गृही संश्रयेद्वृत्तिकर्षितः ॥

पितामहः,

शूद्रराज्येऽपि निवसेद्यत्र मध्ये तु जाह्नवी ।
सोऽपि पुण्यतमो देशोऽनार्यैरपि समाश्रितः ॥
कुरुक्षेत्रनिवासेन वाराणस्यां च मानवः ।
अहिंसकः स्नानरतः पापं हित्वा दिवं व्रजेत् ॥
न गङ्गया विना वासः सर्वक्षत्रक्षयादृते ।
काश्यां तु मरणं श्रेष्ठं विना क्षेत्रं प्रजापतेः ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ।
निवासो न विना पुण्यैर्नराणामिह जायते ॥

सर्वक्षत्रक्षयो नाम कुरुक्षेत्रम्। कुरुक्षेत्रादन्यत्र गङ्गया विना न वासः श्रेष्ठः। प्रयागादन्यत्र मरणं काश्यामेव श्रेष्ठम्।

व्यासः,

ते देशास्ते जनपदास्ते शैलास्ते तथाऽऽश्रमाः।
पुण्या त्रिपथगा येषां मध्ये याति सरिद्वरा॥

विष्णुधर्मोत्तरे,

प्रभासे पुष्करे काश्यां नैमिषेऽमरकण्टके।
गङ्गायां सरयूतीरे निवसेद्धार्मिको जनः॥

कालादयो धर्महेतवस्तत्तत्प्रकाशे निरूपयिष्यन्ते। इति निमित्तनिरूपणम्।

अथ फलम्।

तत्र श्रुतिः,

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्तीति।

मनुः,

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥

अनुत्तमं सुखमिति तत्तत्फलोपलक्षणम्।

गौतमः,

वर्णाश्चाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते, विष्वञ्चो विपरीता नश्यन्ति।

वर्णा ब्राह्मणादयः। आश्रमा ब्रह्मचार्यादयः। ते स्वधर्मनिष्ठा वर्णाश्रमोभयप्रयुक्तधर्माननुतिष्ठन्तः प्रेत्य मृत्वा

लोकान्तरं गत्वा तत्तत्कर्मफलमनुभूयानन्तरं शेषेण भुक्ताव-शिष्टेन पुण्यकर्मणा प्राप्तविशिष्टदेशादिका भूत्वा जन्म प्रतिपद्यन्ते। अत्र विशिष्टशब्दः सर्वैर्देशादिभिः संबध्यते। तत्र देश आर्यावर्त्तादिः। जातिर्ब्राह्मणत्वादिः। कुलमध्ययनादि-संपन्नम्। रूपं कान्तिमत्। आयू रोगरहितं शतवर्षादि। श्रुतं वेदवेदाङ्गादिवेदनम्। वृत्तमनुपाधिचरित्रम्। वित्तं धर्मार्जितं धर्मोपयोगि च। मेधा ग्रन्थार्थयोर्ग्रहणशक्तिः। अत्र मेधाशब्दे सकारान्तत्वमार्षम्। सुमेधसो दुर्मेधस इत्यादौ तद्दर्शनात्। कल्प-तरुस्तु सकारान्तं शब्दान्तरं वीर्यवाचीति व्याख्यातवान्। विष्व-ञ्चः सर्वतोगामिनः यथेष्टचेष्टा इति यावत्। अनेन निषिद्धका-रिण उक्ताः। विपरीता वर्णाश्रमधर्मत्यागिनः। अनेन विहिताका-रिण उक्ताः। नश्यन्ति नरकादौ पापफलमनुभूय भुक्तावशि-ष्टेन पापकर्मणि विरुद्धदेशादौ जन्म प्रतिपद्य पापरता भवन्ती-त्यर्थः।

आपस्तम्बः,

सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं ततः परिवृत्तौ कर्मफलशेषेण जातिं वर्णं रूपं बलं मेधां प्रज्ञां द्रव्याणि धर्मानु-ष्ठानमिति प्रपद्यते। तच्चक्रवदुभयोर्लोकयोः सुखे एव वर्त्तते यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेवम्, ए-तेन दोषफलपरिवृद्धिरुक्ता। स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिन् लोकेऽपरिमिते निरये वृत्ते जायते चण्डालो ब्राह्मणः, पौल्कसो राजन्यो, वैणवो वैश्य इति। अस्यार्थः। परं श्रेष्ठम्। अपरिमितं चिरकालानुवृत्ति। परिवृत्तिः पुनरावृत्तिः। कर्मफलशेषेण कर्मफलसाधनशेषेणेति कल्पतरुः। कर्मफलमपूर्वं तच्छेषेणेति रत्नाकरादयः। जात्यादि व्याख्यातम्। तत्स्वधर्मा-

नुष्ठानम् । उभयोर्लोकयोरिहामुष्मिंश्च । ओषधीनां व्रीह्यादीनाम् । वनस्पतीनां वृक्षाणां, वनस्पतिर्वृक्षमात्र इति कोशात् । बीजस्य क्षेत्रकर्मविशेषे क्षेत्रस्य कर्षणादिना संस्कारविशेषे सति फलपरिवृद्धिः, एवं स्वधर्मानुष्ठानादपि । एतेनोक्तन्यायेन दोषफलपरिवृद्धिः दुष्कर्मफलपरिवृद्धिः । अत्रोदाहरणं स्तेन इत्यादि । स्तेनो ब्राह्मणसुवर्णापहर्त्ता । अभिशस्तो महापातकान्तरवान् । स्मृत्यन्तरे महापातकिन एव पापभोगानन्तरं चण्डालादिजन्मस्मरणात् । पातक्यन्तरस्याप्युपलक्षणमेतत् । परस्मिन् लोकेऽपरिमिते बहुतरे निरये नरके वृत्ते भोगेन क्षीणे सति ब्राह्मणश्चाण्डालो जायते । राजन्यः पौल्कसः हीनजातिविशेषः । वैश्यो वैणवः वंशविदलजीवी हीनजातिः । इदमपि हीनजात्यन्तरोपलक्षणम् । अत्र स्वकर्मनिष्ठा इति गौतमीये स्वकर्मानुष्ठाने इत्यापस्तम्बीये च दर्शनात्स्वस्वाश्रमादिविहितानां नित्यानामेव कर्मणामानुषङ्गिकमकाम्यमानमपि जात्यादिकं वाचनिकं फलमिदम् । तदुक्तं

भविष्यपुराणे,

नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम् । इति ।

न तु काम्यानां, तेषां काम्यमानमात्रफलजनकत्वादिति कपर्दिभाष्याभिप्रायः ।

इदं तु प्रतिभाति । गौतमीयापस्तम्बस्मृत्योर्नित्यकर्मपरत्वे तेषां निष्फलत्वात्स्वर्गादिफलमनुभूय शेषेण जात्यादि लभते इति न सङ्गच्छतइति ।

अथ अस्तु काम्यमात्रपरत्वं तत्र च स्वर्गादिफलं जात्यादि च फलान्तरं जन्यतइत्युच्यते, तदा*योगसिद्ध्यधिकरणविरोधः ।

---

* पू. मी. अ. ४ । पा. ३ । अ.धि. ११ ।

अथ जात्यादिविशिष्टस्य स्वर्गादेः फलत्वमस्तु न कोऽपि विरोध इति चेन्न। ज्योतिष्टोमेनेत्यादिवाक्यैः स्वर्गादिमात्रार्थत्वावगमात्। तस्मात् न विशिष्टं फलम्। का तर्हि गौतमापस्तम्बवाक्ययोर्गतिः।

केचिदाहुः ज्योतिष्टोमादिजन्ये स्वर्गफले भुक्ते सति ततः शेषेण तेभ्योऽवशिष्टेन भिन्नेन जात्यादिफलकेन कर्मान्तरेण गौतमादिवचनसिद्धतत्तत्फलभोगावसानकालरूपसहकारिसम्पन्नेन जात्यादि जन्यतइति।

वस्तुतस्तु स्वर्गादिजनककर्मशेषेणैवाकामितमपि जात्यादि जन्यते वचनप्रामाण्यात्। परं तु न तज्जात्यादिप्रयुक्तम्। अत एव न योगसिद्ध्यधिकरणविरोधः। यत्र हि परस्परपरिहारेणानेकमनुष्ठाननिमित्तं यथा पशुपुत्रादि स एव योगसिद्धिविषयः। नित्यकाम्यप्रयोगयोस्तु न परराहित्यं नित्यप्रयोगस्य ततश्चाविरोधः। एवं खादिरतादिष्वपि द्रष्टव्यम्।

मनुः,

धर्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः।
परलोकसहायार्थं सर्वभूतान्यपीडयन्॥
पुत्तिका पिपिलिकाभेदः।
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः।
न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः॥
एकः प्रजायते जन्तुरेक एव विलीयते।
एकोऽनुभुङ्क्ते सुकृतमेक एव तु दुष्कृतम्॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति॥
तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः।

धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥
तमः पापम्। इत्यादिस्तु फलार्थवादो धर्मप्रशंसार्थः।

**वाराहपुराणे,**

प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयो मतम्।
निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम् ॥

प्रवृत्तिसंज्ञके कामनया क्रियमाणे। निवृत्तिसंज्ञके निष्कामे।
तदुक्तं

**हारीतेन,**

काम्यैः केचिद्यज्ञदानैस्तपोभिः
लब्ध्वा लोकान्पुनरायान्ति जन्म।
कामैर्मुक्ताः सत्ययज्ञाः सुदानाः
तपोनिष्ठा अक्षयान्यान्ति लोकान् ॥

अत्र कामनासदसद्भावनिबन्धनः फलभेदो दर्शितः।

**भविष्ये,**

फलं विनाऽप्यनुष्ठानं नित्यानामिष्यते स्फुटम्।
काम्यानां स्वफलार्थं तु दोषघातार्थमेवच ॥
नैमित्तिकानां करणं त्रिविधं कर्मणां, फलम्।
क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ॥
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते।
नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम्।

इयं तावत् स्थितिः। सुखदुःखाभावतदन्यतरसाधनानिष्टविरोधिषु तत्त्वेन ज्ञातेषु पुरुषस्येच्छा भवति। यथा सुखदुःखाभावयोस्तत्त्वेन ज्ञातयोरिच्छा तथा सुखसाधने ज्योतिष्टोमादौ दुःखाभावसाधने भारावतरणादौ अनिष्टसाधनविरोधिनि पादिकण्टकादिनिवृत्तौ तत्त्वेन ज्ञाते पुरुषेच्छाया अनुभवसिद्धत्वात्।

एवंच फलं विनेत्यत्र फलपदेन सुखदुःखाभावतत्साधनान्यतरद्विवक्षितम् । तथाच संध्यावन्दनादावनिष्टसाधनतद्वन्दनादिविरोधिनि तत्त्वेन ज्ञाते इच्छा तया तदनुष्ठानम् । तेन तत्फलं विना नित्यानामनुष्ठानम् । काम्यानां स्वफलार्थमनुष्ठानम् । नैमित्तिकानां प्रायश्चित्तानां यथाशास्त्रं दोषप्रधानार्थं तत्तत्पापक्षयार्थमनुष्ठानम् । एवं कर्मणां नित्यकाम्यनैमित्तिकानां त्रिविधं करणम् ।

फलमिति मतान्तरप्रतिपादकेनाग्रिमश्लोकेन क्षयं केचिदित्यादिनाऽन्वीयते । केचित्पापक्षयं केचिदकरणजन्यदुरितानुत्पत्तिं नित्यकर्मणां फलं वदन्ति । काम्यनैमित्तिकयोस्तत्तद्विधिबोधितफलसत्त्वात् । एतन्मतद्वये च फलत्वेनोक्तयोः पापक्षयदुरितानुत्पादयोः कामनाऽप्यङ्गमिति फलं विनेत्युक्तकल्पात्फलं क्षयं केचिदुपात्तस्येति मतस्य भेदः । नित्यक्रियां नित्यक्रियाप्रतिपादिकाम् । अनुषङ्गफलामानुषङ्गिकफलप्रतिपादिकाम् । यद्वा श्रुतिं श्रूयमाणाम् ।

ये तु नित्यकर्मणामार्थवादिकं फलमनङ्गीकृत्य फलश्रुतिं प्रशंसार्थामाहुस्तदभिप्रायेणान्ये इत्युक्तम् । तथाच मतद्वयेऽप्यार्थवादिकं संध्यावन्दनादेर्ब्रह्मलोकावाप्त्यादिफलमानुषङ्गिकमेवेति केषांचिन्मतम् ।

तदिदं पर्यवसितम् । नित्यक्रियायामानुषङ्गिकमपि फलं नास्तीत्यङ्गीकृत्याफलत्वमेव । फलश्रुतिस्त्वर्थवाद इत्येकं मतम् । पापक्षय एव फलं न त्वानुषङ्गिकमपीत्यपरम् । दुरितानुत्पाद एव फलं न त्वानुषङ्गिकमपीत्यपरम् । एतन्मतद्वयान्यतराङ्गीकारेणानुषङ्गिकमपि फलमङ्गीकृत्य मतद्वयमेवं पञ्च मतानीति ।

कर्मणि च क्वचिद्विध्युद्देशगतं फलं यथा ज्योतिष्टोमादौ स्वर्गादि । क्वचिदार्थवादिकं यथा जातेष्ट्यादौ पूतत्वादि । क्वचि-

त्कल्प्यं यथा विश्वजिदादौ स्वर्गः । यत्र विध्युद्देशार्थवादयोः फलश्रवणं तत्र फलार्थवादः प्रशंसार्थः । विध्युद्देशोक्तफलेनैव निराकाङ्क्षत्वात् । एवमङ्गेष्वपि फलश्रवणमर्थवादः । यथा यस्य पर्णमयी जुहूर्भवतीत्यादौ अपापश्लोकश्रवणादिः । वस्तुतस्तु अर्थवादस्य स्वार्थे बाधकाभावात्प्राशस्त्यपरत्वे लक्षणाप्रसङ्गादार्थवादिकमपि कर्मणः फलम् । परं तु तदकाम्यमानमेव जायते इत्यानुषङ्गिकमुच्यते । ननु वैधेनैव फलेन निराकाङ्क्षत्वादर्थवादस्य प्राशस्त्यपरत्वमेव स्यात् । सत्यम् । वचनावगतानुषङ्गिकफलान्तरवत्त्वरूपप्राशस्त्यमपहाय न शुष्कं प्राशस्त्यान्तरं कल्पनीयं गौरवात् । न चानुद्देश्यं कथं फलं स्यादिति वाच्यम् ।

यथेक्षुहेतोरपि सेचितं पय-
स्तृणानि वल्लीरपि च प्रसिञ्चति ।
तथा नरो धर्मपथेन संचरन्
सुखं च कामांश्च वसूनि चाश्नुते ॥

इति, तद्यथाऽऽम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते इति व्यासापस्तम्बवचनात्तदवगतेः । निर्मिते आरोपिते । न चैतानि नित्यमात्रपराणि, सामान्ये बाधकाभावात् । नित्यानां फलानुद्देश्यकत्वेन फलोद्देश्यकाम्रारोपणजलसेकादिदृष्टान्तानामफलत्वप्रसङ्गाच्च । एवं

मधुना पयसा चैव स देवांस्तर्पयेद् द्विजः ।
पितॄन्मधुघृताभ्यां च ऋचोऽधीते च योऽन्वहम् ॥

इत्यादियाज्ञवल्क्यादिवचनं फलपरमेव । यत्र त्वन्यानर्थक्यं तत्र विध्युद्देशगतमपि फलपदमर्थवाद एव । यथा,

यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम् ।

पूर्णाहुत्या सर्वान्कामानवाप्नोतीत्यादि । अथवा ज्योतिष्टो-

माग्निहोत्रादाविव तत्रापि फलतारतम्यम् इति न काऽप्यनुपपत्तिः। यत्र तु विष्णुनामग्रहणद्वादशवार्षिकप्रायश्चित्तनाश्ये महापातके तारतम्यं कल्पयितुं न शक्यते तत्र विश्वस्ताविश्वस्ताधिकारिभेदेन व्यवस्था कल्पनीयेति प्रायश्चित्तप्रकाशे भक्तिप्रकाशे च विस्तरेण वक्ष्यामः । धर्माधर्मफलोत्पत्तेरावश्यकत्वमाह

मनुः,

सीदन्नपि न धर्मेण मनो ऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम् ॥

धर्मेण धनव्ययायासादिनाऽनुष्ठितेन सीदन्नपि धनस्य व्ययितत्वात्तदभावेन दुःखमनुभवन्नपि अधर्मे परस्वहरणादौ। अधार्मिकाणां विहितमकुर्वताम् । पापानां निषिद्धकारिणाम् । विपर्ययं धनादिनाशम् । आश्विति निन्दातिशयार्थम्, विलम्बेनापि तद्दर्शनात् । यदाह

स एव,

नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्त्तमानस्तु कर्तुर्मूलानि कृन्तति ॥

अत्र साधर्म्यदृष्टान्ते गौर्भूमिः । वैधर्म्यदृष्टान्ते गौः पशुः । यथा भूमिरुप्तबीजमात्रा न फलति कालाद्यपेक्षते तथा । गोपक्षे यथा गौः सद्यो दुग्धादि प्रयच्छति नैवमधर्मः, किं तु क्रमेणावर्त्तमान इत्यर्थः ।

तथा,

यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।
नत्वेव तु कृतो ऽधर्मः कर्त्तुर्भवति निष्फलः ॥

अधर्म इति छेदस्तत्प्रकरणपाठात् । न निष्फलः । अकृतप्रायश्चित्त इति शेषः ।

मार्कण्डेयपुराणे,

द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च ।
भार्यायां च ग्रहे दुष्टे भयं पुण्यवतां नृणाम् ॥
आत्मन्यथाल्पपुण्यानां सर्वत्रैवातिपापिनाम् ।
नैकत्रापि ह्यपापानां नराणां जायते भयम् ॥

अकृतप्रायश्चित्तं पापं कर्त्तुः पापभोगप्रतिबन्धके पुण्यविशेषे सति तत्पुत्रादौ फलति । तेषामपि तादृशपुण्यविशेषश्चेत्स्वयमेव नश्यति नष्टेन्धनाग्निवत् । एवं धर्मेऽपि द्रष्टव्यं समानन्यायत्वात् । भवन्ति चात्र वक्तारो निषिद्धाचारोऽप्ययं पितुः पुण्येन वर्धते इति । एवंच यच्छास्त्रफलं प्रयोक्तरीति जैमिनिनोक्तं तदमति अपवादे द्रष्टव्यम् । तस्मात्सर्वात्मना धर्मः सेव्यो नाधर्मः । तदाह

व्यासः,

सुदुर्लभमिदं प्राप्य मानुष्यमिह यो नरः ।
धर्मावमन्ता कामात्मा स भवेत् खलु वञ्चकः ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुंधराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधनिबन्धे परिभाषाप्रकाशे धर्माधर्मनिरूपणम् ।

———:o:———

## अथ परिभाषा ।

तत्र भविष्यपुराणे,

सम्यक् ससाधनं कर्म कर्त्तव्यमधिकारिणा ।
निष्कामेन सदा वीर काम्यं कामान्वितेन तु ॥
आचारयुक्तः श्रद्धावान् वेदज्ञोऽध्यात्मवित्तमः ।
कर्मणां फलमाप्नोति न्यायार्जितधनश्च यः ॥

ससाधनं यथाविहितेतिकर्त्तव्यताकम् । अधिकारिणेति यद्धर्मविशिष्टं प्रति यत्कर्म विधीयते तद्धर्मवान् तत्राधिकारी । ते च धर्मा अननुगतास्तत्तच्छास्त्रेभ्योऽवगन्तव्याः । सम्यक् यथासामर्थ्यं प्रथमकल्पादिना कर्म कर्त्तव्यमित्यर्थः । नित्यं कर्माभिप्रेत्याह, निष्कामेनेति । यद्यपि कामनां विना कर्मानुष्ठानमेव न संभवति, प्रवृत्तिमात्रस्य कामनाऽधीनत्वात् । नित्येऽपि अनिष्टसाधनविरोधिनि अहिकण्टकनाशादाविव कामना संभवत्येव । अत एव मनुनाऽपि कर्ममात्रस्य कामनामूलकत्वमुक्तम् । यथा,

यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् । इति ।

तथाऽपि नित्ये फलकामनाया अधिकारनियामकत्वाभावप्रतिपादनार्थमिदम् । एवंच फलकामनां विनाऽपि अनुष्ठितानित्यकर्मणः फलसिद्धिः । काम्ये तु शास्त्रोक्तफलकामना फलनियामिकेति तत्कामनावतैव तत्कर्त्तव्यमित्याह, काम्यमित्यादिना । आचारः शौचस्नानाचमनादिः । आचारो मन्त्राद्युक्तातिथिपूजादिरिति कल्पतरुः । श्रद्धा फलावश्यंभावनिश्चयः । यथाह देवलः,

प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता ।
नास्ति ह्यश्रद्दधानस्य कर्मकृत्यप्रयोजनम् ॥ इति ।

वेदज्ञः वेदजन्यानुष्ठेयार्थज्ञानवान् । इदं च उत्तमधर्माभिप्रायकम् । तदुक्तं

व्यासेन,

अतः स परमो धर्मो यो वेदादवगम्यते। इति।

अत एवात्र फलं संपूर्णमिति शेष इति कल्पतरौ व्याख्यातम्। अध्यात्मवित्तमः परलोकफलभागिन्यात्मनि दृढमत्ययवान्। न्यायार्ज्जितधनः। स्ववृत्त्याऽर्जितकर्मोपयुक्तधनः। इदं च फलोत्कर्षार्थम्, अन्यवृत्त्यर्जितधनेनापि फलश्रवणात्। व्यापारोत्कर्षेणापि फलोत्कर्षमाह

आपस्तम्बः,

प्रयोजयिताऽनुमन्ता कर्त्तेति स्वर्गनरकफलेषु भागिनः। यो भूय आरभते तस्मिन् फलविशेषः।

योगियाज्ञवल्क्यः,

विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः।
फलं न किं चिदाप्नोति क्लेशमात्रं हि तस्य तत्॥
विधिदृष्टं यथाविहितम्। अविधिना विध्यतिक्रमेण।

मनुः,

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्॥
प्रभुः समर्थः। सांपरायिकं पारलौकिकम्।

छन्दोगपरिशिष्टे कात्यायनः,

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य यत्कृतम्॥
यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥

अक्रियापदवाच्या वक्ष्यमाणप्रकारेण त्रिविधा। अक्रिया अकरणम्। परोक्ता स्वशाखोक्तप्रकारं त्यक्त्वाऽपरशाखोक्तप्रकारेणानुष्ठानम्। अयथाक्रिया विहितेतरप्रकारेणानुष्ठानम्। कर्त्तुमिच्छति करोति। दुर्मेधाः शास्त्रविरुद्धार्थज्ञानवान्। यत्स्वशाखायां नोक्तं परशाखायां चोक्तं सामान्यशास्त्रेण च प्राप्तं, यथा छन्दोगानां याजुर्वैदिकमग्निहोत्रं, यच्च स्वशाखोक्तस्याकाङ्क्षापूरकत्वेन स्वरूपतो ऽविरोधि, यथा मनुनोक्तस्य

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥

इत्यस्य मन्त्राकाङ्क्षापूरणं गृह्यान्तरादौ मन्त्राभिधानं, तद्धर्मैः कर्त्तव्यमेवेति छन्दोगपरिशिष्टटीकायां नारायणः।

शूलपाणिना तु श्राद्धविवेके अविरोधि चेति पठित्वा चकारादाकाङ्क्षितमिति व्याख्यातम्। एवंच स्वशाखायामनुक्तं परशाखोक्तं प्रधानं न ग्राह्यम्। अङ्गं तु स्वशाखायामनुक्तं परशाखायामुक्तमविरोधि आकाङ्क्षितं च ग्राह्यमिति पर्यवसितोऽर्थः। शाखान्तराधिकरणन्यायेन प्रसक्तं सर्वोपसंहारमपवदति

गृह्यपरिशिष्टकारः,

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥

यज्ञपार्श्वपरिशिष्टे कात्यायनः,

ऊनो वा ऽप्यतिरिक्तो वा यः स्वशाखास्थितो विधिः।
तेन संतनुयाद्यज्ञं न कुर्यात्पारशाखिकम्॥
परशाखोऽपि कर्त्तव्यः स्वशाखायां न नोदितः।
सर्वशाखासु यत्कर्म एकं प्रख्यवशिष्यते।
यद् यतः प्रत्यवशिष्यते प्रतीयते।

छन्दोगपरिशिष्टे कात्यायनः,

प्रवृत्तमन्यथा कुर्याद्यदि मोहात् कथंचन ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥
समाप्ते यदि जानीयान्मयैतदयथाकृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥
प्रधानस्याक्रियायां तु साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्नच तत्क्रिया ॥

प्रवृत्तम् आरब्धम् । अन्यथा विपरीतम् । नञ करणं सत्येव क्रमाद्यन्यत्वेन । यतो यस्मात् पदार्थादारभ्य तत्कर्म अन्यथा जातं तत एवारभ्य पुनर्यथोक्तप्रकारेण कुर्यादित्यर्थः । समाप्ते कर्मणि अन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं ज्ञातं तमेव पदार्थं पुनः कुर्यात् न पुनस्तदुत्तरानपि पदार्थान् ।

एतदन्यथाकरणविषयम् । प्रधानस्येत्यादि त्वकरणविषयम् । प्रधानस्य कर्मणो यत्राकरणं भवति तत्साङ्गमेव पुनः कर्त्तव्यम् । तदङ्गस्याकरणे न साङ्गप्रधानावृत्तिर्नापि तावन्मात्रस्याङ्गस्य करणं किं तु प्रायश्चित्तमेव कार्यमिति कल्पतरुः । कात्यायनपरिशिष्टटीकानारायणहेमाद्रिप्रभृतीनां सर्वेषामपि स्मार्त्तानां संमतोऽयमर्थः ।

अयं त्वत्र विशेषः । पूर्ववचनद्वयं विशेषानुपादानादङ्गप्रधानोभयविषयकम् । तत्र प्रयोगमध्येऽन्यथाकरणज्ञाने सत्याद्यवचनात् व्यवस्था । समाप्ते सत्यन्यथाकरणज्ञाने द्वितीयवचनाद्व्यवस्था । विशेषानुपादानात्प्रयोगमध्ये समाप्तौ च अङ्गप्रधानयोरकरणज्ञाने तृतीयवचनाद्व्यवस्था । एवं चान्यथा कृतानामङ्गानां पुनरनुष्ठानमकृतानां तु तेषां नानुष्ठानमिति वचनात्सिद्धम् ।

अन्ये तु वैषम्यमेतदाकलय्य तृतीयश्लोके तदङ्गस्य तत्समवायिनोऽङ्गस्य प्रधानावृत्तिं विना अनुपयोगिनोऽङ्गस्येत्यर्थः । यथा प्राङ्मुखत्वबद्धशिखत्वादेः तथा तिष्ठद्धोमसूर्योपस्थानादौ ऊर्ध्वस्थितत्वादेः तथा होमाचमनादौ दीक्षितत्वादेः होमादौ स्रुवादिसंस्कारादेराचमने ब्राह्मतीर्थत्वादेरित्याहुः ।

समाप्ते इत्यादिश्लोकव्यवस्था तु कर्मणः सुकरत्वे अविलम्बे च बोध्या । असुकरत्वे विलम्बे च प्रायश्चित्तमेव कार्यम् । प्रायश्चित्तं तु अनुपदेशे विष्णुस्मरणमेव । यथाऽऽह

**योगियाज्ञवल्क्यः,**

अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

अत्राध्वरपदं श्रौतस्मार्त्तकर्मपरम् । अस्मिन् श्लोके पितामहस्मृतौ प्रमादात्कुर्वतां कर्मेति प्रथमचरणपाठः । प्रधानस्याकरणे पुनस्तत्करणासामर्थ्ये तु तदनुकल्पादिकं विहितकर्माकरणनिमित्तकं वा प्रायश्चित्तं कार्यमिति ।

एवमेकस्मिन्कर्मणि प्रवृत्ते कर्मान्तरं न प्रवर्त्तयेत् ।
नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः ।

इति छन्दोगपरिशिष्टवचनात् । अत्र वचने नैरन्तर्यप्राशुभावयोर्विधितात्पर्यविषययोरपचारात्पूर्वकर्मणो वैगुण्यप्रसङ्गो मूलम् । नैरन्तर्यं च यथाविहितं पौर्वापर्यम् । प्राशुभावो नामाविलम्बः । अत्र पूर्वस्यैव कर्मणो वैगुण्यं न तूत्तरस्य । तस्य नैरन्तर्याद्यलोपात् । अन्यथा एतद्वचनस्यादृष्टार्थतापत्तेः ।

अत एव प्रारब्धदर्शपूर्णमासादेः पक्षादिसमाप्यत्वेऽपि अन्तरा क्रियमाणं नित्यं काम्यं वा न दोषमावहति । एवं प्रारब्धलक्षादिजपहोमादौ जपहोमादिनिवृत्तिकाले कर्मान्तरमविरु-

द्धम्। तथा प्रतायमानेऽप्युपवासे चरुपाकादौ वा जपादिकमदुष्टम्। एवं हविराद्यपचारे हविरन्तराद्युपादानं यावत्क्रियते तावत्कालसमाप्यं कर्मान्तरमविरुद्धमित्यादि। तेषु नैरन्तर्याद्यनपायात्। यत्र तु प्रतायमाने कर्मणि नित्यं नैमित्तिकं वा कर्मान्तरमेतत्कर्मसमाप्त्युत्तरानवस्थायि मुख्यकालकमापतति तत्र नैरन्तर्यादिकं बाधित्वाऽपि मध्ये तत्कर्म कर्त्तव्यमेव। नैरन्तर्यादेः कर्मधर्मत्वेन तदपेक्षया कर्मलोपानौचित्यात्। यथा सांतपनीयेष्टेर्दैवात्सायंकालव्यापित्वे मध्ये सायंहोमः क्रियते एवेति पञ्चमे* स्थितम्। प्रारब्धश्रौतकर्मक्रमापेक्षया स्मार्त्तस्यापि कर्मणो बलवत्त्वम्। श्रुतिस्मृतिरूपप्रमाणद्वयविचारे स्मृतेर्दुर्बलत्वेऽपि कर्मधर्मापेक्षया कर्मणो बलवत्त्वेन स्मृतिप्रमेयस्यापि कर्मणो बलवत्त्वादिति स्थितं † शिष्टाकोपे।

एवं यथाविधि साङ्गप्रधानं कार्यं न न्यूनं नाधिकमिति शास्त्रव्यवस्थितिः। यतो न्यूनत्वे कर्महानिः। आधिक्ये कर्मधर्माणां प्राशुभावनैरन्तर्यसंख्यापरिमाणादीनां हानिः। एवंच यद्यपि तेषु कर्तव्येषु कुत्र चित्कृताकृतत्वसंदेहे सति करणे आधिक्यसंदेहः अकरणे च न्यूनत्वसंदेहः तथाऽपि न्यूनत्वे कर्महानिराधिक्ये कर्मधर्महानिरिति कर्मधर्महानिं सोढ्वा कुर्वन्त्येव शिष्टा इति।

**हारीतः,**

अङ्गुष्ठस्योत्तरतो रेखा ब्राह्मं तीर्थं कनिष्ठिकायाः पश्चात्प्राजापत्यमग्रेऽङ्गुलीनां दैवमङ्गुष्ठप्रदेशिन्योरन्तरा पित्र्यं, मध्य आग्नेयम्।

मध्ये करमध्ये।

---

* पू.मी.अ.६।पा.१।अधि.१७। † पू.मी.अ.१।पा.३।अधि.४।

**वसिष्ठः,**

अङ्गुलिकनिष्ठिकामूले दैवं तीर्थम् अङ्गुल्यग्रे ऋषीणाम् अङ्गुल्यग्रेषु मानुषं पाणिमध्यआग्नेयम् ।

**शङ्खः,**

कायं कनीनिकामूले तीर्थमुक्तं द्विजस्य तु ।
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्त्तितम् ॥

कायं, को ब्रह्मा साऽस्य देवतेत्यर्थे कस्येदित्वण् इत्वं च । ततश्च वृद्धिरायादेशश्च ।

**योगियाज्ञवल्क्यः,**

अङ्गुष्ठमूले ब्राह्मं स्याद्दैवं त्वङ्गुलिमूर्द्धनि ।
प्राजापत्यं तु मूले स्यान्मध्ये सौम्यं प्रतिष्ठितम् ॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्त्तितम् ।

मूले कनिष्ठिकामूले । मध्ये पाणिमध्ये ।

**ब्रह्मपुराणे,**

हस्तमध्ये ब्रह्मतीर्थम् ।

**बौधायनः,** अङ्गुलिमूलं दैवमङ्गुल्यग्रमार्षम् ।

**याज्ञवल्क्यः,**

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

**शङ्खलिखितौ,**

अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां रेखायां ब्राह्मं तीर्थं, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं, कनिष्ठिकातलयोरन्तरं प्राजापत्यम्, पूर्वेणाङ्गुलिपर्वाणि दैवम् ।

एवंच कनीनिकामूलस्य तीर्थस्य प्राजापत्यकायदैवसंज्ञाः, आग्नेयसौम्यब्राह्मतीर्थसंज्ञा हस्तमध्यस्य, अङ्गुल्यग्रस्य दैवमानु-

पार्षतीर्थसंज्ञाः, अङ्गुष्ठमूलस्य प्राजापत्यब्राह्मतीर्थसंज्ञे, तदुत्तररेखाया ब्रह्मतीर्थसंज्ञा, तर्जन्यङ्गुष्ठमध्यस्य पितृतीर्थसंज्ञेत्युक्तं भवति ।

**मनुः,**

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशकाभ्यां वा न पित्र्येण कदाचन ॥

त्रैदशकं दैवम् । त्रिदशशब्दाद्देवतार्थेऽणि कृते स्वार्थिकः क इति मेधातिथिः ।

**हारीतः,**

उपस्पर्शनं ब्राह्मेण, आत्रपनहोमतर्पणानि प्राजापत्येन कुर्यात् । मार्जनार्चनबलिकर्मभोजनानि दैवेन । पित्र्यर्थानि पित्र्येण, प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात् ।

**भविष्यपुराणे,**

कमण्डलूपस्पर्शनं दधिस्पर्शनमेवच ।
सोमतीर्थेन राजेन्द्र सदा कुर्याद्विचक्षणः ॥

**मार्कण्डेयपुराणे,**

नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् ।
प्राजापत्येन तीर्थेन यच्च किंचित्प्रजापतेः ॥

**ब्रह्मपुराणे,**

मूलरेखामुखाङ्गुष्ठमणिबन्धेषु मध्यगम् ।
प्राजापत्यं महातीर्थं विप्रस्तेनाचमेत्सदा ॥
धनायुर्दाररेखासु सोमतीर्थं तु मध्यगम् ।
लाजादिहवनं तेन कर्त्तव्यं वपनं तथा ॥

वपनं व्रीह्यादिनिर्वापः ।

छागलेयः,

हस्तमध्ये ब्रह्मतीर्थं दक्षिणाग्रहणे च तत्र ।

ओंकार इत्यनुवृत्तौ

आपस्तम्बः,

यज्ञेषु चैतदादयः प्रसवाः प्रणयन्त्याद्यनुज्ञानवचनानि । तथा लोकेषु भूतिकर्मसु चैतदादीन्येव वाक्यानि स्युः, यथा पुण्याहं स्वस्तिस्मृद्धिमिति । भूतिकर्मसु पाणिग्रहणादिषु । एतदादीनि प्रणवादीनि । वाक्यानि पुण्याहं भवन्तो ब्रुवन्तु एवमादीनि । तदेव दृष्टान्तेन स्पष्टयति यथेत्यादौ ।

महाभारते,

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥

तथा,

त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।
तिस्रः सार्द्धास्तु कर्तव्या मात्रास्तत्त्वार्थचिन्तकैः ॥
देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ।
तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् ॥

यमः,

पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं ब्रूयात् क्षत्रियवैश्ययोः ॥
दैवे यज्ञादिकर्मणि ।

विष्णुधर्मोत्तरे

मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ।
स्वाहाऽवसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम् ॥

मनुः,

क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः।
अक्षरं त्वक्षरश्रेष्ठं ब्रह्म चैव प्रजापतिः॥

अक्षरश्रेष्ठं ब्रह्मप्रणवः।

योगियाज्ञवल्क्यः,

सर्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति हि॥
सर्वमन्त्राधियज्ञेन ॐकारेण न संशयः।
यन्न्यूनमतिरिक्तं च यच्छिद्रं यच्च यज्ञियम्॥
यदि मेध्यमशुद्धं च यातयामं च यद्भवेत्।
तत्तदोंकारयुक्तेन मन्त्रेणाविकलं भवेत्॥

छन्दोगपरिशिष्टे,

यदोंकारमकृत्वा किंचिदारभ्यते तद्वज्रीभवति तद्वज्रभयाद्वीत ओंकारं पूर्वमारभेत्।

व्यासः,

ओंकारः स्वर्गद्वारं तस्मात्सर्वेष्वेव कर्मस्वादौ प्रयुञ्जीत।

यत्रानेकमन्त्रसाध्यका होमादिव्यक्तिस्तत्र द्वितीयादिमन्त्रादिषु प्रणवो नास्ति। यत्र तु मध्ये आचमनादिना व्यवधानं तत्र द्वितीयादिव्यक्तिषु प्रणवमुच्चारयेत्। तथाच

छन्दोगपरिशिष्टे,

नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्र चित्।
अन्येषां विप्रकृष्टानां कालेनाचमनादिना॥

विप्रकृष्टानामिति पञ्चम्यर्थे षष्ठी। आचमनादिकालेन विप्रकृष्टेभ्यो मन्त्रेभ्योऽन्येषां मन्त्राणाम् आदिषु पृथक् प्रणवोच्चारणं न कार्यम्। अनेकमन्त्रसाध्यो होमश्चात्र सूक्तादिसाध्य एक एव

बोध्यः । एवंच अनेकमन्त्रके एकमन्त्रके वा अनेकहोमे प्रतिहोमं प्रणवः कार्यो व्यक्तिभेदात् । अत्र होमपदं क्रियामात्रोपलक्षणं, तेन पुरुषसूक्तादिनाऽभिषेकादिषु आदावेव प्रणवः कार्यः । यत्र च एकस्यैव मन्त्रस्य पादादिभेदेन क्रियाभेदस्तत्र प्रणवभेदः ।

**श्रुतिः,**

उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना उच्चैर्निगदेनेति । अत्र ऋग्वेदेन सामवेदेन वा विहिते कर्मणि मन्त्रा उच्चैः कार्याः । यजुर्वेदेन विहिते उपांशु । परसम्बोधनार्थास्तु मन्त्रा निगदाः । ते सर्वत्रैवोच्चैः । स्मार्त्ते तु कर्मणि ऋग्वेदादिविहितत्वानिर्णयान्न तन्नियमः । एवंच यत्र मन्त्रे उच्चैस्त्वादिविशेषविधिर्नास्ति तत्र वाचिकोपांशुमानसभेदात् त्रिधैव मन्त्रः प्रयुज्यते।

स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः ।

इति कूर्मपुराणवाक्यात् । जपस्तु परश्रवणयोग्यो निषिद्ध इति वक्ष्यते ।

**विष्णुः,**

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥

पवित्राणां मन्त्राणाम् । पावमान्यादीनां मन्त्रः पवित्रम् इत्युच्यते इति निरुक्तकारवचनात् । तत्र

शिरःस्नातस्तु कुर्वीत दैवं पित्र्यमथापि वा ।

इति मार्कण्डेयपुराणवचनाच्छिरःस्नानमेव मुख्यः कल्पः । तदसामर्थ्ये तु

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।

इति जाबालवचनात्,

असामर्थ्याच्छरीरस्य कालशक्त्यपेक्षया।
मन्त्रस्नानादयः सप्त एकइच्छन्ति सूरयः॥

इति याज्ञवल्क्यवचनादशिरस्कस्नानादयोऽनुकल्पाः। प्रातःस्नानेनापिच सर्वकर्माधिकारः।

सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम्।

इति दक्षवचनात्। आदिपदेन सर्ववैदिककर्मणामसंकोचेन ग्रहणम्।

अथ तदहःकृत्येषु तदहःकृतस्नानस्यैवाधिकारसंपादकत्वम्। अहस्त्वं च

उदयादोदयं भानोर्भौमसावनवासराः।

इति सूर्यसिद्धान्तवाक्यात्सूर्योदयानन्तरकालस्यैवेति कथं सूर्योदयात् पूर्वं क्रियमाणस्य प्रातःस्नानस्य तदहःक्रियमाणक्रियाऽङ्गत्वमिति चेत् न।

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते।

इत्युपक्रम्य

उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत्।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्॥

इत्यादिना दक्षवचनेन उषःकालमारभ्यैव तदहःकृत्याभिधानेन उषःकालस्यापि तदहरन्तःपातित्वात्। स्पष्टं चेदं कालमाधवीयधृतब्रह्मवैवर्त्तवाक्ये। यथा

त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टयम्।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते॥

नाडीनामाद्यन्तचतुष्टयं त्यक्त्वेत्यन्वयः। मध्याह्नस्नानस्यापिच तदुत्तरकृत्येऽधिकारसंपादकत्वमाह्निकप्रकाशे वक्ष्यते।

क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥

वसिष्ठः,

जपहोमोपचारेषु धौतवस्त्रधरो भवेत् ।
अलंकृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

बौधायनः,

काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येष्वथो हविः ॥

काषायवासाः वृक्षकाथादिरक्तवासाः ।

आर्द्रवासास्तु यः कुर्याज्जपं होमं प्रतिग्रहम् ।
सर्वं तद्राक्षसं विद्याद् बहिर्जानु च यत्कृतम् ॥

बहिर्जानु जानुभ्यां बहिः करौ कृत्वेत्यर्थः । अत्र विशेषमाह

वसिष्ठः,

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥

योगियाज्ञवल्क्यः,

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।
धर्म्ये कर्मणि विद्वद्भिर्वर्ज्जनीया प्रयत्नतः ॥

बहिः बहिर्निर्गता । कक्षा पश्चादञ्चलम् । कक्षा परिधानग्रन्थिः, सा च परिधानवस्त्रादुपरिवेष्टनादिना बहिः न कार्येति केचित् । कक्षा वस्त्रोभयप्रान्त इत्यन्ये ।

वामे पृष्ठे तथा नाभौ कक्षात्रयमुदाहृतम् ।
एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः ॥

इति शिष्टपरिगृहीतवाक्यात्तु त्रितयमपि कक्षापदवाच्यमिति

प्रतीयते । अत्र धर्म्ये कर्मणीत्युपादानादन्यत्र यथारुचीत्यवगम्यते । तथाच

श्लोकगौतमः,

स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नासुरीं कक्षां शेषकाले यथारुचि ॥

विष्णुपुराणे,

होमे चैवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ॥
द्विजवाचनके पुण्याहादिवाचने ।
सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरः ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

अत्राम्बरपदमुत्तरीयपरम् । तथाच सव्यादंसात्परिभ्रष्टं कटिदेशधृतं चाम्बरं यस्येत्यर्थः ।

शाट्यायनः,

दानमध्ययनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादस्तु जानुनोर्वाऽथ जङ्घयोः ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥

आसनं पीठादि । अत्रारूढपदस्वरसादाचाराच्च संपूर्णपादतलभागस्यैवासनसम्बन्धो निषिद्धो न तु पादपार्श्वादिभागस्येति वदन्ति । यत्र संध्योपासनादौ आसनोपवेशनं विहितं तत्रासनमङ्गम्, आचमनादौ च निषिद्धम्, इतरकर्मस्वविरुद्धम् । आचारादार्द्रासनादौ न निविशन्ति । असंभवे तत्र श्रीकारं लिखित्वोपविशन्ति के चित् । जानुनोर्जङ्घयोर्वा, आरूढपाद

इत्यनुषज्यते । कृतावसक्थिको वस्त्रादिना कृतपृष्ठजानुजङ्घा-बन्धः । अत्र तुशब्दद्वयवाशब्दाथशब्दैर्भेदः प्रतीयते । अत्र चाने-कोद्वाक्ये दारुशिले भूमिसमे इष्टकाश्च संकीर्णीभूता इतिबौधाय-नस्वरसात्तथाविधे आरूढपादोऽपि कुर्यादिति वदन्ति ।

मार्कण्डेयपुराणे,

सूर्योदयं विना नैव स्नानदानादिकक्रमः ।
अग्नेर्विहरणं चैव कृत्वभावश्च लक्ष्यते ॥

सूर्योदयं विनेति सूर्योदयशब्देनात्र उषःकालो लक्ष्यते । अग्निविहरणादेः सूर्योदयात्प्रागेव विधानात् । तं विना रात्रौ न कार्यं स्नानादीति तात्पर्यार्थः ।

दक्षः,

देवकार्याणि पूर्वाह्णे मनुष्याणां तु मध्यमे ।
पितॄणामपराह्णे च कार्याणीति विनिश्चयः ॥

श्रुतिश्च,

पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणामिति।

छन्दोगपरिशिष्टे कात्यायनः,

यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ।

यत्र स्रुवादौ हस्तसाध्यं कर्मोपदिश्यते कर्तुरङ्गं च विशिष्य नोच्यते तत्रेत्यर्थः। कर्मणां पारग इति स्तुतिमात्रम् । यत्र चाक्र-मणादौ पादादिकं विशिष्य नोच्यते तत्रापि दक्षिणमेव पादा-दिकं ग्राह्यम् । यथाह

आश्वलायनः,

एकाङ्गवचने दक्षिणं प्रतीयादनादेशे ।

छन्दोगपरिशिष्टे कात्यायनः,

यत्र दिङ्नियमो नास्ति जपयज्ञादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥
आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता ॥

नास्ति नोक्तः । ऐन्द्री पूर्वा । सौम्या उत्तरा । देवानामपराजयहेतुत्वादपराजिता ऐशानी । तथाच

श्रुतिः,

तउदीच्यां प्राच्यां दिश्ययतन्त ते ततो न पराजयन्त सैषा दिगपराजितेति ।

ते देवाः । उदीच्यां प्राच्यां तदुभयसम्बन्धिन्यामीशान्यामित्यर्थः । प्रह्वो नम्रः । न प्रह्वेण न तिष्ठतेति, आपद्यपि न प्रह्वेण न तिष्ठता कर्त्तव्यमित्येवंपरमिति नारायणः ।

बौधायनः,

तिष्ठन्नासीनः प्रह्वो वा यथान्यायम् ।

न्यायः सामर्थ्यम् । यत्कर्म ऊर्ध्वत्वादिव्यतिरेकेण कर्त्तुं न शक्यते तत्रानुक्तमपि ऊर्ध्वत्वादिकं ग्राह्यमित्यर्थः ।

योगियाज्ञवल्क्यः,

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैवच ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्याद्याजनाध्यापनादिकम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

अन्तर्जलादीनि जलमध्ये क्रियमाणान्यघमर्षणादीनि ।

तथा,

यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्म च ॥

ज्ञानकर्म ज्ञानार्था क्रिया । अनुष्ठेयार्थस्मारकत्वमिति यावत् ।

एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥

एकैकस्य ऋषेरेकैकस्य मन्त्रस्य आर्षादिकं यस्तत्त्वेन जानातीति पूर्वेणान्वय इति मदनरत्नप्रदीपव्याख्या ।

अत्र सामब्राह्मणम् ,

ऋषिदैवतच्छन्दोब्राह्मणान्युपक्रम्य अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवत्ययातयामान्यस्य छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यादृषीणां सस्थानो भवति ब्रह्मणः स्वर्गे लोके महीयते । सस्थानः समानस्थानः । सायुज्यं सहयोगित्वम् ।

पूर्वोक्तेन प्रकारेण ऋष्यादीन्वेत्ति यो द्विजः ।
अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु ॥

रहस्यादिषु रहस्यजपादिषु ।

तथा,

येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ।
मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदार्षकम् ॥

यत् मन्त्रस्वरूपम् । तस्य ऋषेः । तत् मन्त्रस्वरूपम् । स मन्त्रस्तस्य ऋषेर्भवतीत्यर्थः । भावः संबन्धः । तदार्षकम्, तस्मिन्मन्त्रे तस्य ऋषेः पूर्वोक्तः संबन्ध एवार्षमित्यर्थः ।

तथा,

छादनाच्छन्द उद्दिष्टं वाससी इव चाकृतेः।
आत्मा संछादितो देवैर्मृत्योर्भीतैस्तु वै पुरा॥
आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै।

आकृतेः शरीरसंस्थानस्य।

यस्ययस्य तु मन्त्रस्य उद्दिष्टा देवता तु या।
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते॥

यस्ययस्य मन्त्रस्य या येनयेनेन्द्रमहेन्द्राद्याकारेण विशिष्टा देवता उद्दिष्टा प्राधान्येन प्रतिपादिता तदाकारमुद्दिष्टाकारमेव तस्य मन्त्रस्य देवत्वम्। तस्येत्यनेन व्यवहितस्यापि मन्त्रस्य परामर्शः। तेन तस्य तस्य मन्त्रस्य सा सा देवता भवतीत्यर्थः।

योगियाज्ञवल्क्यः,

पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेवच।
अनेनेदं तु कर्त्तव्यं विनियोगः स उच्यते॥

कर्मान्तरविनियोगस्मरणविधायकाभावे प्रकृतकर्मविनियोग एव स्मर्त्तव्यः।

निरुक्तं यत्र मन्त्रस्य विनियोगः प्रयोजनम्।
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते॥

निरुक्तं निर्वचनम्। यत्र वेदभागे। विनियोगः विनियोगविधिः। प्रयोजनम् अधिकारविधिः। प्रतिष्ठानम् आश्रयः। यथा

तैत्तिरीयब्राह्मणे श्रूयते,

अग्नीषोमप्रणयिनीनामृचामसावादित्य एकविꣳशः उत्तमा प्रतिष्ठेति,

केचित्। प्रतिष्ठानं विनियोग इति कल्पतरुः। तन्मते

विनियोग इत्यत्र समुत्पत्तिरिति पाठः। समुत्पत्तिः उत्पत्तिविधिः। स्तुतिः अर्थवादः ।

एवं पञ्चविधं योगं जप्यकाले ह्यनुस्मरेत् ।
होमे चान्तर्जले योगे स्वाध्याये याजने तथा ॥

योगम् ऋष्यादिसम्बन्धम् । अन्तर्जले अन्तर्जलकार्ये स्नानादौ । योगे योगाङ्गप्रणवजपादौ ।

**सामब्राह्मणं च,**

यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पद्यति प्रवामीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति ।

स्थाणुं स्थाणुत्वम् । ऋच्छति प्राप्नोति ।

**ऋग्वेदानुक्रमणीये,**

अथ ऋग्वेदाम्नाये शाकले सूक्तप्रतीकऋक्सङ्ख्यऋषिदैवतच्छन्दांसि अनुक्रमिष्यामो यथोपदेशं, न ह्येतज्ज्ञानमृते श्रौतस्मार्त्तकर्मप्रसिद्धिर्मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छत्यनेवंविदो यातयामानि छन्दांसि भवन्ति स्थाणुं वर्च्छति गर्त्तं वा पात्यते प्रमीयते पापीयान् भवतीति विज्ञायते ।

**यजुर्वेदानुक्रमणीयेऽपि,**

ऋषिदैवतच्छन्दांस्यनुक्रामिष्याम इति प्रतिज्ञाय तानि लक्षयित्वोक्तम्। एतान्यविदित्वा योऽधीते ऽनुब्रूते जपति जुहोति यजते याजयति वा तस्य ब्रह्म निर्वीर्यं यातयामं भवति । तथाऽन्तरा श्वगर्त्तं वा पद्यते। स्थाणुं वर्च्छति प्रमीयते पापीयान् भवति । अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य

वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते । शिष्यमनु लक्षीकृत्य ब्रूते अध्यापयनीत्यर्थः। ब्रह्म वेदः । निर्वीर्यं स्वकार्यसाधने शक्तिरहितम् । यातयामं जीर्णम् । सत्येतेषां ज्ञानेऽध्ययने फलमप्याह । अथेत्यादिना । अधीते इति अध्ययनं पाठमात्रं न त्वर्थज्ञानमपि । अर्थज्ञाने वीर्यवत्तरत्वस्यानुपदं वक्ष्यमाणत्वात्। सत्येवमध्ययने जपादिषु संपूर्णफलावाप्तिर्भवतीत्याह । जपित्वेत्यादिना ।

अत्र अविदित्वेति स्वरमादेनैषां तत्तत्प्रयोगात्पूर्वं ज्ञानमात्रं शास्त्रार्थः न तु तत्प्रतिपादकशब्दोच्चारणं मानाभावात् । प्रत्युत तत्पाठे न्यायप्राप्तानन्तर्यबाधात्कर्मवैगुण्यम् । अत्र सामब्राह्मणे योगियाज्ञवल्क्यवाक्ये च दैवतमन्ते उक्तम् । ऋग्वेदानुक्रमणीये तु ऋषिदैवतच्छन्दांस्यनुक्रमिष्याम इत्यत्र दैवतं मध्ये उक्त्वा तदनु च मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविदित्यत्र दैवतमन्तेउक्तम् । एवं यजुर्वेदानुक्रमणिकायां छन्दः अन्त उक्तम् । तस्मादत्र क्रमो न विवक्षितः । न वा समूहालम्बनेऽपि ज्ञाने संभवति क्रमोऽपेक्षितः । यत्र हि क्रमोऽपेक्षितस्तत्रैव पाठादिक्रमस्तन्नियामक इति । ऋषिदैवतच्छन्दसां त्रयाणां ज्ञानं श्रौतस्मार्त्तकर्ममात्राङ्गम् ।न ह्येतज्ज्ञानमृते श्रौतस्मार्त्तकर्मप्रसिद्धिरिति ऋग्वेदानुक्रमणीयवाक्यात् ।

**छन्दोगपरिशिष्टे कात्यायनः,**

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

**आपस्तम्बः,**

उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात् ।

निगमपरिशिष्टे,

वामस्कन्धे यज्ञोपवीतं दैवे, प्राचीनावीतमितरथा पितृयज्ञे, नाभ्यां द्विकण्ठावसक्तमभिचारे, निवीतम् आपृष्ठदेशावलम्बि ग्राम्यधर्मेषु ।

दैवे पितृमनुष्याद्यतिरिक्ते कर्मणि। इतरथा वामेतरस्कन्धे। नाभ्याम्, अवसक्तमिति शेषः । द्विकण्ठावसक्तं कण्ठपार्श्वद्वया-वलम्बितम् ।

गोभिलः,

दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति । दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति । सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्ष-मन्ववलम्बं भवत्येवं प्राचीनावीती भवति ।

बौधायनः,

यज्ञोपवीतमानाभेर्दक्षिणं बाहुमवधाय शिरोऽवदध्यात् । विपरीतं पितृभ्यः । कण्ठावसक्तं निवीतमधोऽवसक्तमधोवीतम् ।

मनुबौधायनपैठीनसयः,

अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च सन्निधौ ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥

गवां गोष्ठे गोविशिष्टे गोष्ठे । दक्षिणमिति । सव्येंऽसे वस्त्रं निधाय दक्षिणमुत्तरीयाद्बहिः कुर्यादित्यर्थः ।

आपस्तम्बः,

देवागारे तथा श्राद्धे गवां गोष्ठे तथाऽध्वरे ।
सन्निधौ ब्राह्मणानां च संध्ययोः साधुसंगमे ॥
अग्न्यगारे विवाहे च स्वाध्याये भोजने तथा ।
उद्धरेद्दक्षिणं पाणिं ब्राह्मणानां यथायथम् ॥

गृह्यासंग्रहे,

यज्ञोपवीतमुपक्रम्य,

ब्रह्मचारिण एकं स्यात् स्नातकस्य द्वे बहूनि वा।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते॥

बौधायनः,

कर्मयुक्तो नाभेरधः स्पर्शं वर्जयेत्।

योगियाज्ञवल्क्यः,

रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाभिचारिकान्।
व्याहृत्याऽऽलभ्य चात्मानमपः स्पृष्ट्वाऽन्यदाचरेत्॥

रौद्रपित्र्यासुरान् रुद्रपितृसुरदेवताकान्। अभिचारिकान् अभिचारसंबन्धिनः। आलभ्य स्पृष्ट्वा। आत्मानम् आत्माधिष्ठानं हृदयम्। अन्यत् जलस्पर्शनिमित्तजातीयादन्यत्।

छन्दोगपरिशिष्टे कात्यायनः,

पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे॥
मार्जारमूषिकास्पर्शे आक्रुष्टे क्रोधसंभवे।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत्॥

पित्र्यमन्त्रानुद्रवणे पित्र्यमन्त्रोच्चारणे। आत्मालम्भे हृदयस्पर्शे। अवेक्षणे हृदयस्यैव। एतदुभयमपि यज्ञादौ विहितमेव निमित्तमिति कल्पतरुप्रभृतयः। प्रहासे महति हास्ये। आक्रुष्टे परुषभाषणे। भावे क्तः। क्रोधसंभवे क्रोधोत्पत्तौ।

कात्यायनः,

रौद्रं राक्षसमासुरमाभिचारिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्य अप उपस्पृशेत्। पित्र्यमित्यस्यापि उक्त्वेत्यनेनान्वयः। चकारात् रौद्रादिकर्म कृत्वाऽपि।

योगियाज्ञवल्क्यः,

यदि वाग्यमलोपः स्यात् जपादिषु कथंचन ।
व्याहरेद्वैष्णवं मन्त्रं जपेद्वा विष्णुमव्ययम् ॥

तथा,

अज्ञानाद्यदिवा मोहात् प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
अध्वरेष्विति विहितकर्ममात्रोपलक्षणम् ।

शतपथश्रुतिः,

अथ यद्वाचं यमो व्याहरति तस्मादुहैष विसृष्टो यज्ञः पराङावर्त्तते ततो वैष्णवीमृचं यजुर्वा जपेदित्यादि । उ इति पदच्छेदः ।

योगियाज्ञवल्क्यः,

न कुर्यात्कस्य चित्पीडां कर्मणा मनसा गिरा ।
आचरन्नभिषेकं तु कर्माण्यन्यानि चाचरन् ॥

स्कन्दपुराणे,

पाखण्डिनश्च पतिता ये च वै नास्तिका जनाः ।
पुण्यकर्मणि तेषां तु सन्निधिर्नेष्यते क चित् ॥
पाखण्ड्यादिकमधिकृत्य

विष्णुपुराणे,

तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ।
संस्पर्शे तु बुधः स्नात्वा शुचिरादित्यदर्शनात् ॥
संभाष्य ताञ्छुचिषदं चिन्तयेदच्युतं बुधः ।

यमः,

मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयम् ।

**अङ्गिराः,**

संध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥
गुरूणां सन्निधौ दाने योगे चैव विशेषतः ।
एषु मौनं समातिष्ठन् स्वर्गमाप्नोति मानवः ॥

संध्ययोरुभयोरिति संध्याकाले निमित्ते मौनं विधीयते । मूत्रपुरीषयोरित्यत्र साहित्यमविवक्षितम् । उद्देश्यगतत्वात् ।

**वायुपुराणे,**

दानं प्रतिग्रहो होमो भोजनं बलिरेवच ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥

साङ्गुष्ठेन अङ्गुलीसहिताङ्गुष्ठेन ।

एतान्येव तु कर्माणि दानादीनि विशेषतः ।
अन्तर्ज्जानु विशेषेण तद्वदाचमनं नृप ॥

अन्तर्ज्जानु जानुनोर्मध्ये यथा बाहू भवतस्तथा कार्याणीत्यर्थः ।

**बौधायनः,**

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥

उपहारः देवतार्थमन्नाद्युपढौकनम् ।

**छन्दोगपरिशिष्टे कात्यायनः,**

हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥

सन्ध्योपासनप्रकरणे

**स एव,**

सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम् ।

ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः ॥
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मसु ।
सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥

यज्ञियाः दर्शादियज्ञार्थाः हरिताः। पीतकाः पीतवर्णाः। पञ्चयज्ञियाः पञ्चयज्ञार्थाः। पञ्चयज्ञिया इत्यत्र पाकयज्ञिया इति क्वचित्पाठः। तत्र पाकयज्ञा हुतादयो वक्ष्यमाणाः। कल्माषाः चित्राः

चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।

इति कोषात्। ह्रस्वाः पिण्डस्तरणार्थोक्तरत्निप्रमाणन्यूनाः गोकर्णादिप्रमाणाः। प्रचरणीयाः प्रचरणमनुष्ठानं तदर्हाः। दीर्घाः रत्नितो दीर्घाः। यज्ञादौ स्तरणाद्यर्था बर्हिषः। दर्भाः पवित्रमित्यादि। यतो यज्ञादावेव हरितादिवर्णविशेषविधिरतो यज्ञाद्यतिरिक्ते वर्णविशेषविध्यभावादनुष्ठानमात्रविहितं ह्रस्वदर्भमात्रं पवित्रं शुचीत्युक्तं मुनिभिरित्यर्थः। न तु पवित्रलक्षणमेतत्। वक्ष्यमाणपवित्रलक्षणविरोधात्, अत इत्यनन्वयाच्चेति कल्पतरुपारिजाताद्यनुसारिणी व्याख्या।

छन्दोगपरिशिष्टटीकायां तु यतो ह्रस्वाः कुशाः पार्वणपञ्चमहायज्ञादिकर्मानुष्ठानार्हाः, दीर्घाः स्तरणार्थं बर्हिषो भवन्ति दर्भा एव, अनन्तर्गर्भिणमित्यादिलक्षणं पवित्रमित्युक्तम्, अतस्तत्तदवस्थापन्नानां तत्तत्कर्मसूपयोगेन सर्वकर्मसूपयोगात् संध्यादिकर्मसु वामः करो बहुतरकुशसहितः, दक्षिणश्च कुशपत्रद्वयात्मकपवित्रसहितः कार्य इति व्याख्यातम्।

आचारादर्शे तु यतः प्रचरणादौ ह्रस्वादिविशेषविधिरतः संध्यादौ तादृशविशेषाभावाद्दर्भमात्रमेवाङ्गमिति व्याख्यातम्। अत्र ह्रस्वाः प्रचरणीया इत्यस्य लोहितोष्णीषा ऋत्विजः प्रचर-

न्तीत्यादिप्रचरतिनोदनानोदितकर्मविशेषार्हा इत्यर्थोऽभिमेतः । सव्यः सोपग्रह इति उपग्रहो बहवः कुशा इति कल्पतरुः । ते च सव्ये पाणौ कुशान् कृत्वेतिपूर्ववचनविहितकुशसमीपे धार्याः । उप समीपे गृह्यन्ते इति योगार्थबोधात् । पवित्रमाह

स एव,

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥
एतदेवतु पिञ्जूलया लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेवतु ॥
एतत्प्रमाणामेवैके कौशीमेवार्द्रमञ्जरीम् ।
शुष्कां च शीर्णकुसुमां पिञ्जूलीं परिचक्षते ॥

अनन्तर्गर्भिणमिति । अत्रान्तःशब्दगर्भशब्दयोः कर्मधारये तदुत्तरं मत्वर्थीयेनप्रत्यये च सति निष्पन्नस्यान्तर्गर्भिनशब्दस्य नञ्समासे सति सर्वान्तर्वर्त्तिगर्भवद्भिन्नमित्यर्थः पर्यवस्यति । विद्यमानत्वाद्यधिकार्थविवक्षायाम्

ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्ज्जयेत् ।

इतिवत्कर्मधारयादपि मत्वर्थीयप्रत्ययो नानुपपन्नः । तेन गर्भिणोऽपि गर्भत्यागे ग्रहणं सिध्यति । अत्र गर्भवर्जनं कैमुतिकन्यायेन । यद्वा गर्भवाच्यन्तःपदगर्भिपदयोर्द्वन्द्वसमासे सति नञ्समासः । तथाच गर्भवर्जनं शब्दत एव ।

मैथिलास्तु अन्तर्गर्भो यस्य तत् अन्तर्गर्भं द्वितीयं दलं तद्विद्यते यस्य तदन्तर्गर्भिणं तृतीयं तद्भिन्नं चतुर्थादि इत्यर्थः इत्याहुः । कुशपत्रद्वयमन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं सर्वत्र पवित्रं विज्ञेयम् इति परिशिष्टप्रकाशः । द्विदलमिति दलग्रहणा-

द्यावत्पर्यन्तदलव्यवहारस्तावदेव ग्राह्यम् । प्रादेशमात्रमिति । प्रादेशादिलक्षणमाह

कोषः,

प्रादेशतालगोकर्णाः तर्जन्यादियुते तते ।
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुला ॥

एतदेवेति । यत्र सीमन्तोन्नयनचूडाकरणादौ पिञ्जूली विहिता तस्या अपि इदमेव लक्षणमित्यर्थः । आज्यस्येति । यत्र तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते इतिसूत्रोक्तमाज्योत्पवनार्थं पवित्रं तदप्येतावत्संख्यमेव न तु द्विवचननिर्देशाद् द्विदलद्वयरूपम् । सूत्रे हि पवित्रपदं कुशपत्रपरं न तु पारिभाषिकपवित्रपरम् । तेन न द्विवचनानुपपत्तिः । एतत्प्रमाणामिति । प्रादेशप्रमाणामेव कुशमयीमार्द्रां मञ्जरीं शुष्कां वा भ्रष्टकुसुमां पिञ्जुलीमेके मुख्या आचक्षते । पवित्राभ्यामाज्यस्योत्पवनमिति पूर्वसूत्रोक्तपवित्रलक्षणाकाङ्क्षायाम्

आश्वलायनगृह्यम्,

अप्रच्छिन्नाग्रावन्तर्गर्भौ प्रादेशमात्रौ कुशौ । अत्र प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्त्यर्थ इति नारायणवृत्तिः । धारणपवित्रे विशेषमाह

स्मृतिः,

सव्यापसव्यवलितं ब्रह्मग्रन्थिसमन्वितम् ।
लङ्घयेत्पर्व्व चैकं तु द्विपर्वी नैव लङ्घयेत् ॥

पवित्रकरणे प्रकारान्तरमुक्तं हेमाद्र्यादिधृतगरुडपुराणादौ । तत्र

गरुडपुराणे,

सप्तभिर्दर्भपिञ्जूलैः कुर्याद्ब्राह्मं पवित्रकम् ।

पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः ॥
द्वाभ्यां शूद्रस्य विहितमान्तराणां तथैवच ।

पिञ्जूलमुक्तरूपदर्भदलम् । आन्तराणां संकरजातानाम् ।

मार्कण्डेयपुराणे तु,

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णवर्णे यथाक्रमम् ॥
सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रन्थितं नवा ।
त्रिभिस्तु शान्तिके कार्ये पौष्टिके पञ्चभिस्तथा ॥
चतुर्भिश्चाभिचाराख्यं कुर्वन् कुर्यात्पवित्रकम् ।

ग्रन्थितं ग्रन्थियुक्तं, नवा तद्रहितं वा । ग्रन्थिप्रकारो

गरुडपुराणे,

अर्धं प्रदक्षिणीकृत्य शिखापाशं प्रवेशयेत् ।
वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥

वैष्णवो मार्गः पश्चाद्भागः,

तथा,

संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम् ।
सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥
तद् ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ।

पवित्रकर्त्तुरभिमुखः प्रदेशो ब्रह्ममार्ग इति हेमाद्रिः । दर्भादिलक्षणमाह

कौशिकः,

सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
ते प्रशस्ता द्विजातीनां दैवे पित्र्ये च कर्मणि ॥
अप्रसूताः स्मृता दर्भाः पुष्पितास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥

अप्रसूताः असंजातप्रसवाः अपुष्पिता इति यावत् ।

हारीतः,

अच्छिन्नाग्रान्सपत्रांश्च समूलान् कोमलान् शुभान् ।
पितृदेवजपार्थे च समादद्यात्कुशान्द्विजः ॥

छन्दोगपरिशिष्टे,

हरिता वै सपिञ्जूलाः पुष्टाः स्निग्धाः समाहिताः ।
रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्कृताः ॥

सपिञ्जूलाः प्रादेशमात्रार्द्रशुष्कान्यतरशीर्णपुष्पमञ्जरीमहिताः । पुष्टाः स्थूलपत्राः । स्निग्धाःकोमलाः । समाहिताः समन्तादविक्षिप्तपत्राः । रत्निमात्राः कृतमुष्टिहस्तप्रमाणाः ।

प्रकोष्ठो विस्तृतकरो हस्तो मुष्ट्या तु बद्धया ।
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥

इति अमरकोषात् । पितृतीर्थेति । पितृतीर्थसंयोगसंस्कृता इत्यर्थः । पितृकर्मण्युपादेया इति शेषः । रत्निप्रमाणता च पिण्डस्तरणार्थानामेव । आसनोत्सर्गाद्यर्थं तु गोकर्णप्रमाणता । तथाच

वायुपुराणम्,

रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः ।
उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तराः ॥

ब्रह्मपुराणे,

हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समाहिताः ।
गोकर्णदीर्घास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥
पितृतीर्थेन देयाः स्युर्दूर्वा श्यामाक एवच ।
काशाः कुशा बल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः ॥

मौञ्जं च शाद्वलं चैव षड् दर्भाः परिकीर्त्तिताः।
श्राद्धे वर्ज्याः प्रयत्नेन वुलपाश्च गवेधुकाः॥

बल्वजास्तृणविशेषा मध्यदेशे बगई इति प्रसिद्धाः। तीक्ष्णरोमशा इति बल्वजविशेषणम्। तदन्यबल्वजानां विशेषो वक्ष्यते। मौञ्जं शरपत्रम्। शाद्वलं हरितम्। इदं तु दूर्वादीनां सर्वेषां विशेषणम्। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिसनेनैकशेषो नपुंसकैकवचनत्वं च। अत्र दूर्वादिषु दर्भशब्दो गौणस्तत्कार्यकारित्वज्ञापनार्थः। दर्भकार्यकारित्वादेव तद्धर्मप्राप्तौ शाद्वलग्रहणं तत्समूलत्वादिधर्मानियमार्थमिति शूलपाणिः। उलपस्तृणविशेषः। प्रतिनिधिन्यायप्राप्तस्य निषेधोऽयम्।

विष्णुः,

कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यात्।

मैत्रायणीयगृह्यपरिशिष्टं,

दर्भास्तरणार्थे काशः प्रतिनिधिः। तदभावे पर्ववतीभिः काण्डवतीभिरोषधीभिः स्तरणार्थान् कुर्वन्तीति कटोशीरतृणस्वबल्वजपलालोलपवर्जम्। कटादयस्तृणविशेषाः।

यज्ञपार्श्वः,

कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः।
काशाभावे ग्रहीतव्याः अन्ये दर्भा यथाक्रमम्।

दर्भा दर्भकार्यकराः।

कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दुराः।
गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः॥

उशीरो वीरणमूलम्। वीरणस्य पत्रादेर्निषेधो वक्ष्यते। कुन्दुरो रक्तकन्द इति नाम्ना प्रसिद्धस्तृणविशेषः।

गोभिलः,

बर्हिरुपमूलल्लूनाः पितृभ्यस्तदभावे शूकतृणशरशीर्यबल्वजयुतवनलशुण्ठवर्जं सर्वतृणानि । मूलसमीपे लूनाः कुशा बर्हिःसंज्ञाः । ते च पितृभ्यः पितृकार्यार्हाः । छिन्नश्च मूलस्य नोर्ध्वदेशे किं त्वधोभागे । यत्समूलं नात्पतृणामिति श्रुतेः ।

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।

इत्यादिस्मृतेश्च । शूकतृणं शूकयुक्तं तृणं धान्यादि । शरोऽत्र शाद्वलो विवक्षितः । शाद्वलस्य मौञ्जस्य विधानात् । बल्वजश्च तीक्ष्णरोमशोऽत्र विवक्षितः । तीक्ष्णरोमशस्य बल्वजस्य विधानात् । शीर्ययुतवनलशुण्ठास्तृणजातिविशेषाः तत्तद्देशप्रसिद्धाः ।

वायुपुराणे,

गुन्द्राः श्राद्धे क्षीरकुशा बल्वजा गन्धकी तथा ।
वीरणाश्चोपलाश्चैव लम्बा वर्ज्याश्च नित्यशः ॥

*संस्कृता इति । पितृतीर्थसंयोग एवात्र संस्कारः । प्रस्तरोऽत्र पिण्डप्रस्तरः । गुन्द्राः मुस्तकाः । क्षीरकुशाः प्रत्यग्रजाताः कुशाः क्षीरस्राविकुशविशेषा वा । गन्धकी गन्धतृणम् । लम्बा विहितप्रमाणाधिकप्रमाणाः ।

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

यातयामं जीर्णं तद्भिन्नं नवं तेन कर्मार्हता लक्ष्यते । दर्भे विशेषमाह

मरीचिः,

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

* संस्कृता इति पदस्य पूर्वश्लोकेऽभावात् अत्र किंचिद् ग्रन्थस्त्रुटितो भाति ।

नभसि श्रावणे। श्रावणश्चात्र मुख्यश्चान्द्रः। तथैव सर्वदेशे शिष्टाचारात्। एते संवत्सरपर्यन्तमयातयामा इति वदन्ति। पठन्ति च

संग्रहाद्वत्सरं यावच्छुद्धिः स्यादिध्मबर्हिषाम्।
ततः परं न गृह्णीयाज्जपादौ यज्ञकर्मणि॥ इति।

अन्ये तु

चतुरो वार्षिकान् मासान्नाहरेत् कुशमृत्तिकाः।
असंभवे त्वाददीत सद्यो यस्योपयोजनम्॥

इति हलायुधधृतवाक्यात् श्रावणादिवर्षाकालसंबन्धिमासचतुष्टयातिरिक्तकाले कुशाहरणं प्रतीयते। तेन वार्षिकमासचतुष्टयमध्ये मरीचिवचनाच्छ्रावणामावास्योत्पाटितकुशानां वर्षाकालातिरिक्तकालोत्पाटितकुशानां चायातयामत्वम्। तादृशकुशाभावे तद्दिवसोत्पाटितकुशानां तद्दिवसीयकर्ममात्रार्हतेति वदन्ति।

मदनरत्नप्रदीपे षट्त्रिंशन्मतकात्यायनस्मृत्योः,

मासेन स्यादमावास्यां दर्भो ग्राह्यो नवः स्मृतः।
अयातयामस्तेनासौ नियोज्यश्च पुनःपुनः॥

अमावास्यायां गृहीतो दर्भो मासपर्यन्तं ग्राह्य इत्यर्थः।

त्याज्यानाह

छन्दोगपरिशिष्टे,

पिण्डार्थं ये स्थिता दर्भास्तर्पणार्थं तथैवच।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते॥

धृतैः कुशैरुपलक्षितेन विण्मूत्रे कृते सतीत्यर्थः।

लघुहारीतः,

चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु।

स्तरणासनपिण्डेषु षट् कुशान् परिवर्ज्जयेत् ॥
पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टधृता ये च तेषां त्यागो विधीयते ॥
नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे तु ये धृताः ।
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥

चितौ श्मशाने । पिण्डार्थस्तरणकुशानामग्रिमश्लोके निषेध्यत्वादत्र स्तरणपदं तदतिरिक्तस्तरणपरम् । आसनं यत्रोपविश्यते। पिण्डेष्वित्यनेन पिण्डोपर्यास्तृतानां पिण्डोत्सर्गादिषु विनियुक्तानां च त्यागः । यैः कृतमिति। अत्र पितृपदं प्रमीतपरं, यैः कुशैः प्रमीततर्पणं कृतं तेषां तत्तर्पणप्रयोगातिरिक्ते कर्मणि त्यागः । प्रयोगश्च यावत्तर्पणीयतर्पणमेकः । तृतीयार्थश्च करणत्वम्। तच्चासाधारणकारणत्वं, तेन हस्तादिधृतकुशानां न त्यागः। मूत्रोच्छिष्टधृता ये चेत्यस्यापवादमाह नीवीमध्ये चेति ।

गृह्यपरिशिष्टे,

ये च पिण्डाश्रिता दर्भा यैः कृतं पितृतर्पणम् ।
अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते ॥

आपस्तम्बः,

ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
धृता मूत्रपुरीषे तु तेषां त्यागो विधीयते ॥

तथा,

अपूता गर्भिता दर्भा ये चाग्रे छिन्दिता नखैः ।
क्वथितांश्चाग्निदग्धांश्च कुशान् यत्नेन वर्जयेत् ॥

कौशिकः,

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ॐकारेणैव मन्त्रेण कुशाः स्पृश्या द्विजोत्तमैः ॥

कुशग्रहणमन्त्रः,

विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद पापानि सर्वाणि कुश स्वस्तिकरो भव ॥
एतं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत् ॥

लघुहारीतः,

आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टस्तु भवेत्तत्र भुक्तशेषं तु वर्जयेत् ॥

यत्पवित्रं धृत्वाऽऽचमनं कृतं तत्रोच्छिष्टाचमनोदकसंबन्धेऽपि तत्पवित्रमुच्छिष्टं न भवतीत्यर्थः । भुक्तशेषं, यत्पवित्रं धृत्वा भोजनं कृतं, तत् त्याज्यमित्यर्थः ।

तथा,

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥
दर्भहीना तु या संध्या यच्च दानं विनोदकम् ।
असंख्यातं तु यज्जप्तं तत्सर्वं निष्प्रयोजनम् ॥

हारीतः,

ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत् ।

छन्दोगपरिशिष्टे कात्यायनः,

नाङ्गुष्ठादधिका कार्या समित् स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिकाऽन्यूना न तथा स्याद्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥

विशाखिका विविधशाखायुक्ता । सपर्णा सपत्रा । निर्वीर्या अतिजीर्णा । समिदित्यनुवृत्तौ

ब्रह्मपुराणे,

पलाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरो बिल्वश्चन्दनः सरलस्तथा ।
शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः ॥

पलाशेत्याद्यर्धश्लोकेन समिध उक्ताः । अश्वत्थेत्यादिश्लोकेन याज्ञियवृक्षा उक्ताः ।

वायुपुराणे,

पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ ॥

मरीचिः,

प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः ।
शान्त्यर्थे तु ससल्कार्द्रा विपरीता जिघांसतः ॥
विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कार्यसिद्धिविनाशिकाः ॥

ससल्काः सत्वचः । जिघांसतः अभिचारयतः ।

स्मृत्यर्थसारे,

पलाशखदिराश्वत्थशम्युदुम्बरजा समित् ।
अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥
सत्वचः समिधः कार्या ऋज्व्यः श्लक्ष्णाः स्मृतास्तथा ।
शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलकास्तथा ॥
अर्कपक्वाः समच्छेदास्तर्जन्यङ्गुलिवर्त्तुलाः ।
अपाटिता आर्द्रशिखाः कृमिदोषविवर्जिताः ॥
दग्धाः कृशास्तथा स्थूला ह्रस्वा दीर्घास्तु वर्जयेत् ।
समित् पवित्रं वेदश्च त्रयः प्रादेशसम्मिताः ॥

इध्मस्तद्द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः।
स्मार्त्ते प्रादेश इध्मो वा द्विगुणः परिधिः स्मृतः॥

**आपस्तम्बः,**

समिदेकप्रादेशा द्विप्रादेश इध्मः त्रिप्रादेशः परिधिः।

**छन्दोगपरिशिष्टे,**

प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम्।

**तथा,**

बाहुमात्राः परिधयः ऋजवः सत्वचोऽव्रणाः।
त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम्॥

**स्मृत्यर्थसारे,**

पालाशः खादिरो वेध्मो मुख्यः स्यात्तदलाभतः।
शमीवटोदुम्बरजा आश्वत्थस्तदलाभतः॥
वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः।
तत्रैतान् वर्जयेद् वृक्षान् कोविदारविभीतकान्॥
कपित्थामलकं राजवृक्षं शाकद्रुमं तथा।
नीपं निम्बं करञ्जं च तिलकं शाल्मलीमपि॥
श्लेष्मातकमपि त्यक्त्वा ग्राह्योऽन्यः सकलो द्रुमः।

**छन्दोगपरिशिष्टे कात्यायनः,**

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥

अनादेशे अविधाने, होमद्रव्यस्येति शेषः। मन्त्रस्य देवतायाश्च, अनादेशे इत्यनुषङ्गः। मन्त्रस्यानादेशे प्रजापतिदेवताको मन्त्रो ग्राह्यः। स च समस्ता व्याहृतयः। देवतायाश्च अविधाने प्रजापतिदेवतेत्यर्थः इति पारिजातप्रभृतयः। अत्र देवतान्तरादेशे मन्त्रानादेशे च प्राजापत्यमन्त्रविधाने मन्त्रवर्णविरोधः। अन्यदे-

त्वमन्त्रादेशे देवतायाश्चानादेशे प्रजापतिर्देवताविधानेऽपि मन्त्रवर्णविरोधः । न चैन्द्रया गार्हपत्यमुपतिष्ठते इतिविनियुक्तकदाचनस्तरीरसीत्येतन्मन्त्रगतेन्द्रपदस्य गार्हपत्ये इव लक्षणया मन्त्रवर्णानामविरोध इति वाच्यम् । तत्रान्यथानुपपद्यमानश्रुत्यनुरोधेन लक्षणाऽङ्गीकारेऽपि प्रकृतवाक्यस्य वक्ष्यमाणरीत्याऽन्यथोपपद्यमानार्थकत्वेन तदनुरोधेन मन्त्रे लक्षणाऽनौचित्यात् । एकैकानादेशे दोषस्योक्तत्वान्मन्त्रस्य देवतायाश्चेत्यस्य मन्त्रदेवतयोरुभयोरनादेशे इत्यर्थः । परिशिष्टप्रकाशेऽप्येवम् । तत्रायं विशेषः, प्रजापतिर्देवता मन्त्रोऽपि प्रजापतिः प्रजापतये स्वाहेति । मदभाष्येऽप्येवमेव । समस्ता व्याहृतयः प्राजापत्यो मन्त्र इति तु कल्पतरुः ।

तथा,

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।
पाणिनैवेतरस्मिंश्च स्रुचा चात्र न हूयते ॥

अनादेशे होमपात्रानादेशे । इतरस्मिन् द्रवद्रव्येतरस्मिन् । जुहूरितिसमाख्याबलाज्जुह्वा अपि स्रुवाभावे होमसाधनत्वशङ्कानिरासायाह । स्रुचा चेत्यादि ।

तथा,

खादिरो वाऽथ पार्णो वा द्विवितस्तिः स्रुवः स्मृतः ।
स्रुग्बाहुमात्री विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥

पार्णः पलाशमयः । वृत्तो वर्तुलः । प्रग्रहो दण्डः । तयोः स्रुवस्रुचोः ।

तथा,

स्रुवाग्रे घ्राणवत्खातं द्व्यङ्गुष्ठपरिमण्डलम् ।
स्थानं शरावत्खातं सनिर्वाहं षडङ्गुलम् ॥

घ्राणवत् नासारन्ध्रवत् । मध्यस्थितमर्यादमिति फलितम् । द्व्यङ्गुष्ठेति । अङ्गुष्ठद्वयमितं वर्त्तुलं चेत्यर्थः । जुहूस्तु खातं शरावत् शरावाकृति मनिर्वाहं निःशेषवहनसाधनतया निर्वाहपदवाच्यप्रणालीसहितं षडङ्गुलं विजानीयात् । तदेव स्थानं हविःस्थानम् ।

तथा,

इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं वार्क्षं च पृथ्वग्रमवदानक्रियाक्षमम् ॥

इध्मजातीयं खादिरं पालाशं वा । तदभावे विभीतकादिवर्जसर्ववनस्पतिमयम् । इध्मार्धप्रमाणम् प्रादेशप्रमाणम् । वृत्तं वर्त्तुलदण्डम् । वार्क्षं वृक्षप्रकाण्डनिर्मितं न तु शाखाभवम् । पृथ्वग्रं स्थूलाग्रम् ।

तथा,

एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे ।
दर्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनं तु मेक्षणम् ॥

द्व्यङ्गुलपृथ्वग्रा परिमण्डलेन अङ्गुष्ठद्वयपृथ्वग्रा । तुरीयोनं चतुर्थभागोनं स्थूलाग्रमित्यर्थः ।

तथा,

मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा ।
इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च ॥

वार्क्षे वरणवृक्षमये । वारणान्यहोमसंयुक्तानीति कात्यायनवचनात् । अहोमसंयुक्तानि होमासाधनानि । तदभावे खदिरविकङ्कतादियज्ञियवृक्षमये इति भट्टभाष्यसंमतोऽर्थः ।

स्मृत्यर्थसारे तु,

खादिरो मुसलः कार्यः पालाशं स्यादुलूखलम् ।

यद्वोभौ वारुणौ कार्यौ तदलाभेऽन्यवृक्षजौ ॥

स्थापने सुदीर्घे। वैणवं वंशभवम्। अयं च भट्टभाष्यसंमतः पाठः। परिशिष्टप्रकाशे तु वैणवीमित्यत्रैषीकामिति पठित्वा ऐषीकं काशमयमिति व्याख्यातम्।

तथा,

आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसंभवा।
माहेयी वाऽपि कर्त्तव्या नित्यं सर्वाग्निकर्मसु ॥
आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत्।
सुदृढामव्रणां भद्रां स्थालीमादाय मङ्गलाम् ॥

तैजसं ताम्रादि। माहेयी मृन्मयी। नित्यं सर्वदा। न तु तदलाभेऽपि चक्रनिष्पन्नः शरावादिः। चक्रनिष्पन्नस्यासुरत्वात्। यदाह

स एव,

कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत्।
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥

सुदृढाम्। आज्यपाकक्षमाम्। अव्रणाम् अक्षताम्। भद्रां सौम्यदर्शनाम्। मङ्गलां कालिमादिरहिताम्। एतादृशीं स्थालीमादाय, कर्म कुर्यादिति शेषः।

तथा,

तिर्यगूर्ध्वं समित्मात्रा दृढा नातिबृहन्मुखी।
मृन्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते ॥

तिर्यगूर्ध्वं गर्भप्रस्तारदैर्घ्याभ्यां समित्मात्रा प्रादेशमात्रा। औदुम्बरी ताम्रमयी। पिण्डचरुस्थाल्यधिकारे

ब्रह्मपुराणम्,

नेमिस्तस्यायता कार्या चतुरङ्गुलमुच्छ्रिता।

नेमिः कण्ठदेशः।

छन्दोगपरिशिष्टम्.

स्वशाखोक्तश्चरुः स्विन्नो ह्यदग्धोऽकठिनः शुभः।
न चातिशिथिलः पाच्यो न च वीतरसो भवेत् ॥

स्वशाखोक्तः स्वशाखोक्तेतिकर्तव्यताकः। स्विन्नो विक्लिन्नः। अकठिनः कोमलः। एतादृशश्चरुः शुभः कर्मार्हः। अतिशिथिलः अतिविश्लिष्टावयवः। वीतरसः स्रावितमण्डः।

छन्दोगपरिशिष्टे कात्यायनः.

यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः॥

तदनुकारि तत्सदृशम्। व्रीहीणां शरदि पक्वधान्यानां षष्टिकादीनाम्। प्रतिनिध्यधिकरणन्यायमूलमिदं वचनम्। अत्र यवपर्यन्तत्वाच्छास्त्रार्थस्य। यवावयवेषु गोधूमावयवानां प्रत्यभिज्ञानात्।

पैठीनसिः,

काण्डमूलपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्यात् सर्वालाभे यवः प्रतिनिधिर्भवति। काण्डं नालम्। प्ररोहः अङ्कुरः। सर्वालाभे पूर्वोक्तानां सर्वेषां काण्डादिसदृशानामलाभे।

मैत्रायणीयपरिशिष्टं,

दक्षिणाऽलाभे मूलानां सर्वेषां फलानां भक्ष्याणां वा दक्षिणां दद्यान्न त्वेवं यजेत। न त्वेवं यजेत दक्षिणां विना न यजेतेत्यर्थः। तथा दर्भास्तरणाभावे काशाः प्रतिनिधिः तदलाभे पर्ववतीभिः काण्डवतीभिरोषधीभिः स्तरणार्थान् कुर्वन्ति कटोशीरशुण्ठनलबल्वजपलालोलपवर्जम्। अथेध्मार्थे पलाशाश्वत्थखदिररोहितकोदुम्बराणां तदलाभे सर्ववनस्पतीनां तिल्वकधवनीय-

निम्बराजवृक्षशाल्मलकपिच्छकोविदारविभीतकश्लेष्मातकमर्वकण्टकिवर्जम् । व्रीहियवौ पुरोडाशस्यार्थे तदलाभे तुषवतीभिस्तण्डुलवतीभिरोषधीभिः पुरोडाशान् कुर्वन्ति अणुचीनकल्माषमसूरवरककोद्रवकोरदूषकवर्जम् । घृतमाज्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा तण्डुलपिष्टानि वाऽद्भिः संसृष्टानि आज्यार्थान् कुर्वन्ति । पर्ववतीभिः ग्रन्थिमतीभिः । कटादयस्तृणविशेषाः । तिल्वको लोध्रः । नीपः कदम्बः । राजवृक्षः आरग्वधः, मध्यदेशे धनवहेरा इति प्रसिद्धः । आरलुः श्योनाकः । श्लेष्मातकः बहुवारकः । पुरोडाशान् पुरोडाशार्थान् । अणवो मर्कटकाः । वरकः पीतकुलत्थः । कोद्रवो ग्रामकोद्रवः । कोरदूषको वनकोद्रवः । तेन न पौनरुक्त्यम् । आज्यार्थे इति ।

घृतं वा यदि वा तैलं पयो दधि च यावकम् ।
संस्कारयोगादेतेषु आज्यशब्दो विधीयते ॥

इति परिशिष्टधृतवचनोक्तानाम्, आज्यं संस्कुरुते सर्पिस्तैलं दधि पयो यवागूं वेति गोभिलसूत्रोक्तानां च चतुर्णामाज्यानामर्थे घृतं मुख्यम् । तत्रापि गव्यं मुख्यम् । तदभावे माहिषादि । तथाच

बौधायनः,

घृतमाज्यार्थे गव्यमिति प्रसयः तस्यालाभे माहिषमाजं वा आज्यार्थे प्रयुञ्जीत । तथा तयोरभावे तैलं प्रतिनिधिः । तस्याभावे जार्त्तिलमतसीकुसुम्भसर्षपवार्क्षीयाः स्नेहा इति शिष्टप्रामाण्यात् । अत ऊर्ध्वमलाभे यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाऽद्भिः संसृज्याज्यार्थे प्रयुञ्जीत । तयोः माहिषाजघृतयोरलाभे तैलं तिलप्रभवः स्नेहः । जार्त्तिलं जर्तिला अरण्यतिलाः तत्प्रभवं तैलम् ।

रत्नाकरधृतबौधायनस्मृतिश्च,

आज्यहोमेषु सर्वेषु गव्यमेव भवेद् घृतम् ।
तदभावे महिष्यास्तदाजमाविकमेवच ॥
तदभावे तु तैलं स्यात्तदभावे तु जार्तिलम् ।
तदभावे तु कौसुम्भं तदभावे तु सार्षपम् ॥

अत्राविकदुग्धस्याभोज्यत्वेन

क्षीराणि यान्यभोज्यानि तद्विकाराशने बुधः ।

सप्तरात्रं व्रतं कुर्यादितिप्रायश्चित्तविधानात् तद्विकारस्याविकघृतस्याभक्ष्यत्वेन यदार्याणामभोजनीयं स्यान्न तेन यजेतेत्यापस्तम्बवचनेन यागे निषिद्धत्वेऽपि वचनबलात्प्रतिनिधित्वेनोपादानम्। केचित्तु निषिद्धक्षीरस्य साक्षाद्विकाराशने एव प्रायश्चित्तमिति वदन्तः परम्पराविकारस्याविकघृतस्य नाभक्ष्यत्वमिति वदन्ति । दधि पयो वेति । अनयोरपि गौणमुख्यभावो बोध्यः । अत्र दधनि द्रव्यनाशापत्त्या अधिश्रयणरूपसंस्कारबाधः । अथवा यथा दधिनाशो न भवति तथा संस्कारार्थमधिश्रयणं कर्त्तव्यम् । यथाऽऽह

आश्वलायनः ।

न दध्यधिश्रयेदधिश्रयेदित्येके । दधि पयो वेत्यनन्तरं तदभावे इति पारिजातरत्नाकरादौ पाठः ।

वायुपुराणे,

कण्डनं पेषणं चैव तथैवोल्लेखनं सदा ।
सकृदेव पितॄणां स्याद्देवानां तु त्रिरुच्यते ॥
पित्रर्थं निर्वपेद् भूमौ शूर्पे वा दर्भसंयुते ।

उल्लेखनं स्वात्मपराङ्मुखत्वेन रेखाकरणमिति कल्पतरुः ।

यज्ञपार्श्वः,

गर्भाधानादिमन्त्रेषु ब्राह्मणान् भोजयेद्दश ।
आवसथ्ये त्रयोविंशत्यग्न्याधेये शतात्परम् ॥
आग्रयणे प्रायश्चित्ते ब्राह्मणान् दश पञ्च च ।
सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ ॥
चातुर्मास्ये तु चत्वारि तथा पञ्च सुराग्रहे ।
अयुतं वाजपेये तु अश्वमेधे चतुर्गुणम् ॥

त्रयोविंशतीति द्वितीयान्तमार्षम् । आग्रयणं नवसस्येष्टिः, तत्र प्रायश्चित्ते च पञ्चदशेत्यर्थः । चत्वारि पञ्चेत्यत्र शतानीति विभक्तिविपरिणामेनान्वयः । सुराग्रहे सौत्रामण्याम् । चतुर्गुणमयुतमिति संबन्धः ।

छन्दोगपरिशिष्टे कात्यायनः,

पाण्याहुतिर्द्वादशपर्वपूरिका
कंसादिना चेत् स्रुवपूरमात्रिका ।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥

अङ्गुलीनां द्वादशपर्वाणि यया पूर्यन्ते तावत्परिमाणा पाण्याहुतिः कार्या । कंसं कांस्यपात्रम् । हविष्याभावे दधिपयोयवागूभिर्यदा होमः तदा केन जुहुयादित्याकाङ्क्षायां गोभिलसूत्रम् । कंसेन चरुस्थाल्या स्रुवेण वेति । तत्र कंसादिना यदा होमः तदा सा आहुतिः स्रुवपूरमात्रप्रमाणा कार्या । अत्र कंसादिना चेदत्र रसादिना चेत्यपपाठः । हविराधारपाणित्वाहचर्यविरोधात् इति परिशिष्टप्रकाशे नारायणः । यच्च

गद्यव्यासवचनम्,

उत्तानकरपञ्चाङ्गुल्यग्रैर्बलिं हरेद्वृषवक्त्राकारेणोत्तानेनाङ्गुलिद्वयपर्वमात्रं प्रपूर्य जुहुयादिति । यदपि च

छन्दोगपरिशिष्टटीकाधृतम्,

आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन्।
प्राणाहुतिबलिं चैव मृदं गात्रविशोधनीम्॥

इति वचनं, तदसमर्थविषयम्।

तथा,

योऽनर्चिष्यपि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
मन्दाग्निरामयावी च दरिद्रश्च स जायते॥

व्यङ्गारिणि विगताङ्गारे। आमयावी दीर्घरोगी।

तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन।
आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा॥
जुहूषंश्च हुते चैव पाणिशूर्पस्फ्यदारुभिः।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना॥
मुखेनैव धमेदग्निं मुखाद्ध्येषोऽध्यजायत।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्॥

जुहूषन् होतुमिच्छन्। स्फ्यः खड्गाकारो यज्ञपात्रविशेषः। आदिपदं वस्त्रादिपरिग्रहार्थम्।

भविष्यपुराणे,

अनुक्तद्रव्यसंख्याना देवताप्रतिमा नृप।
सौवर्णी राजती ताम्री वृक्षजा मार्त्तिका तथा॥
पिष्टजा लेपचित्रोत्था कार्या वित्तानुरूपतः।
आमासात्पलपर्यन्ता कर्त्तव्या शाठ्यवर्ज्जितैः॥

चित्रोत्था चित्रलिखिता।

गृह्यपरिशिष्टे,

पृषदाज्यमिति प्रोक्तं दधि सर्पिरिति द्वयम्।
क्षीरे शृतोष्णे दधियुग्यामिक्षेति द्विसंभवात्॥

अत्र पय एव प्रधानं दधि तु संस्कारकमित्याहुः।

लिङ्गपुराणे,

आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते ।

स्कान्दे,

त्वक्कमरलवङ्गैस्तु त्रिसमं मुनिभिः स्मृतम् ।
त्वक्पत्रकलवङ्गानि केसरं च चतुःसमम् ॥

गरुडपुराणे,

कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च ।
कुङ्कुमस्य त्रयश्चैकः शशिनः स्याच्चतुःसमम् ॥
कर्प्पूरं चन्दनं दर्प्पः कुङ्कुमं च चतुःसमम् ।
सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥

वृद्धगर्गः,

कुङ्कुमं चन्दनोशीरं मुस्ता लामज्जकेसरम् ।
कर्पूरं त्रिसुगन्धं च सर्वगन्धाः प्रकीर्त्तिताः ॥
त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धं प्रकीर्त्तितम् ।
कर्पूरमगरुश्चैव कस्तूरी चन्दनं तथा ।
कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥

शिवधर्मे,

पञ्चामृतं दधि क्षीरं सितामधुघृतं नृप ।
सिता शर्करा ।

स्कान्दे,

ताम्रारुणश्वेतकृष्णनीलानामाहरेद्गवाम् ।
गोमूत्रगोमयक्षीरदधिसर्पींषि च क्रमात् ॥
पञ्चगव्यमिति शेषः ।

तत्रैव,

विष्णुवह्नीन्द्रवाय्वर्कदैवत्यानि यथाक्रमम् ।
विद्ध्येतानि कुशोदं च पितृराजाधिदैवतम् ॥

प्रोक्ताभावे त्वथैतानि कपिलायाः प्रकल्पयेत् ।
गोमूत्रभागस्तस्यार्धं शकृत् क्षीरस्य च त्रयम् ॥
द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिणः ।
एभिस्तु पञ्चभिर्युक्तैः पञ्चगव्यं प्रचक्षते ॥

**ब्रह्माण्डपुराणे,**

अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ॥
पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ।

**आदित्यपुराणे,**

सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम् ।
रत्नपञ्चकमाख्यातं शेषं वस्तु ब्रवीम्यहम् ॥

**विष्णुधर्मोत्तरे,**

मुक्ताफलं हिरण्यं च वैडूर्यं पद्मरागकम् ।
पुष्परागं च गोमेदं नीलं गारुत्मतं तथा ॥
प्रवालयुक्तान्युक्तानि महारत्नानि वै नव ।
यवगोधूमधान्यानि तिलाः कङ्गुस्तथैवच ॥
श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ॥

**भविष्यत्पुराणे,**

सुवर्णं रजतं ताम्रमारकूटं तथैवच ।
लोहं त्रपु तथा सीसं धातवः सप्त कीर्त्तिताः ॥

**तथा,**

आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा
यवाः सिद्धार्थकाश्चैवमर्घोऽष्टाङ्गः प्रकीर्त्तितः ॥

**छन्दोगपरिशिष्टे,**

कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।
वचा चम्पकमुस्ता च सर्वौषध्यो दश स्मृताः ॥

मार्कण्डेयपुराणे,

ओषध्यः फलपाकान्ताः शणसप्तदशाः स्मृताः ।
व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः ॥
प्रियङ्गवः कोविदाराः कोरदूषाः सचीनकाः ।
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥
आढक्यश्चणकाश्चैव ग्राम्यारण्याश्च षोडश ।
व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः ॥
माषा मुद्गाः सप्तमाश्च अष्टमाश्च कुलत्थकाः ।
श्यामाकाश्चैव नीवारा जर्तिलाः सगवेधुकाः ॥
कोविदारसमायुक्तास्तथा वेणुयवाश्च ये ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश ॥
कुण्डमण्डपसुवर्णादिमानादिकं तत्रतत्र वक्ष्यते ।
प्रत्यर्थिपार्थिवदर्पविदलनचतुरेण निजदोर्दण्डप्रचण्डेन
श्रीमद्वीरमृगेन्द्रदानजलधिप्रोद्भूतचन्द्रोदये ।
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
ग्रन्थेऽस्मिन् खलु पारिभाषिक इति ह्याद्यः प्रकाशोऽगमत् ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुंधराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहोद्योजित-

श्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-

श्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयनिबन्धे परिभाषाप्रकाशः संपूर्णः ॥

श्रीगणेशाय नमः ।

सरस्वत्यै नमः ।

# वीरमित्रोदयस्य संस्कारप्रकाशः ।

कोपाटोपनटत्सटोद्भटमटद्भ्रूभीषणभ्रूकुटि-
भ्राम्यद्भैरवदृष्टिनिर्भरनमद्दर्वीकरोर्वीधरम् ।
गीर्वाणारिवपुर्विपाटविकटाभोगत्रुटद्धाटक-
ब्रह्माण्डोरुकटाहकोटिनृहरेरव्यादपूर्वं वपुः ॥ १ ॥

सटाग्रव्यग्रेन्दुस्रवदमृतबिन्दुप्रतिवल-
न्महाहिंसारम्भस्फुरितगुरुसंरम्भरभसः ।
लिहन्नाशाचक्रं हुतवहशिखावद्रसनया
नृसिंहो दंष्ट्राभिर्दमयतु मदंहो मदकलम् ॥ २ ॥

संसारध्वंसिकंसप्रमुखसुररिपुप्रांशुवंशावतंस-
ध्वंसी वंशीधरो वः प्रचुरयतु चिरं शं स राधारिरंसी ।
यश्चूडारूढगूढस्मितमधुरमुखाम्भोजशोभां दिदृक्षु-
गुञ्जाभिः सानुरागालिकनिकटनटच्चन्द्रकव्यक्तचक्षुः ॥ ३ ॥

लीलाभ्रान्तिविसर्पदम्बरतया व्यग्रार्द्धकान्तं पद-
न्यासन्यञ्चदुदञ्चदद्रिवसुधाभोगीन्द्रकूर्माधिपम् ।
फूत्कारस्फुरदुत्पतत्फणिकुलं रिङ्गज्जटाताडन-
ध्मातव्योमगभीरदुन्दुभिनटन्नव्यात्स वो धूर्जटिः ॥ ४ ॥

कुम्भोद्भ्रान्तमधुव्रतावलिवलज्झङ्कारकोलाहलैः
शुण्डास्फालनविह्वलैः स्तुत इव व्यालैर्वियत्प्लाविभिः ।

मज्जत्कुम्भमहावगाहनकृतारम्भो महाम्भोनिधौ
हेरम्बः कुरुतां कृताम्बरकराल म्बाश्चिरं वः शिवम् ॥ ५ ॥

समन्तात्पश्यन्ती सममसममेव त्रिभुवनं
त्रिभिर्नेत्रैर्दोर्भिर्दशभिरपि पान्ती दश दिशः ।
दधाना पारीन्द्रोपरि चरणमेकं परपदा
हतारिर्वो हन्यान्महिषमथनी मोहमहितम् ॥ ६ ॥

वामान् भिन्दन्नवामान् भुवमनु मुखयन् पुण्यवन्नर्थिकामान्
श्रीमान् भीमानुकारी बहलबलभरैर्मेदिनीमल्लनामा ।
आसीदाशीविषेन्द्रद्युतिधवलयशा भूपचक्रावतंसः
श्रीकाशीराजवंशे विधुरिव जलधौ सर्वभूमार्वभौमः ॥७॥

संग्रामग्रामकामो निरुपममहिमा मत्त्वविश्रामधाम
क्रामन्नेवारिचक्रं मिहिर इव तमो विक्रमोरुक्रमेण ।
सारैर्मेरोरुदारैरपर इव गिरिर्मेदिनीमल्लनेन
प्रख्यातः क्षोणिचक्रे समजनि नृपतिर्मेदिनीमल्लनामा ॥ ८ ॥

निर्य्यद्भिस्तर्ज्जयद्भिर्विधुमिव जगतीमर्ज्जुनाभैर्यशोभिः
सम्पूर्यावार्यवीर्यो विशिखवितरणैरर्ज्जुनो दुर्ज्जनानाम् ।
साम्राज्योपार्ज्जनश्रीरगणितगुणभूरर्ज्जुनप्रांशुबाहु-
र्नाम्नाऽभूदर्ज्जुनोऽस्मान्नरपतिरतुलो मेदिनीमल्लभूपात् ॥९॥

बुद्धिः शुद्धिमती क्षमा निरुपमा विद्याऽनवद्या मनो
गाम्भीर्यैकनिकेतनं वितरणं दीनार्त्तिनिर्दारणम् ।
आसीदर्ज्जुनभूपतेर्विदधतो विद्रावणं विद्विषां
भूमीनामवनं च कारणगुणात्कार्यं यशोऽप्यर्ज्जुनम् ॥१०॥

तस्मादाविरभूत्प्रभूतमहिमा भूमीपतेरर्ज्जुना-
त्सौजन्यैकनिधिर्गुणैरनवधिर्लावण्यवारांनिधिः ।

भिन्दन् दुर्जनमर्जयन् बहु यशः प्रौढप्रतापोदयै-
र्दुर्जेयो मलखाननामनिखिलक्ष्मामण्डलाखण्डलः ॥ ११ ॥

यस्मिन् शासति नीतिभिः क्षितिमिमां निर्वैरमासीज्जग-
त्पारीन्द्रेण समं करीन्द्ररभसारम्भोऽपि सम्भावितः ।
*श्येनः क्रीडति कौतुकी स्म विहगैश्चिक्रीड नक्रैर्झषः
किं वाऽन्यद्गहनेऽभवत्सह मृगैः शार्दूलविक्रीडितम् ॥१२॥

हिमविशदयशःसुशोभिताशो महिमतिरोहितवारिधिप्रभावः ।
समजनि मलखानतः प्रतापैस्त्रिजगति रुद्र इव प्रतापरुद्रः ॥१३॥

शुचि पतमर्थिनि सहसा यशसा सममानने गुणो जगतः ।
पुत्रे भूरभिदध्रे चेतो रुद्रे प्रतापरुद्रेण ॥ १४ ॥

जातः प्रतापरुद्रात्ससमुद्रां पालयन्नवनीम् ।
कृतरिपुकाननदाहो मधुकरसाहो महीपतिः शुशुभे ॥१५॥

पृथुः पुण्याभोगैर्विहितहितयोगैरनुदय-
त्खलायोगैर्योगैः कृतमुक्तियोगैरपि गुरुः ।
भुजस्तम्भालम्बालसशयितविश्वम्भरतया
बभौ प्रौढोत्साहः स मधुकरसाहः क्षितिपतिः ॥ १६ ॥

प्रजागणरुजाऽपहो द्युतिमहोदयाविष्कृतः
सुधांशुरिव मांसलो रसभरैः सभारञ्जनः ।
प्रदीप्तकुमुदावलिर्द्विजपतिश्च नक्षत्रपो
नृपो जयति सत्कृपो मधुकरः कृतारित्रपः ॥ १७ ॥

विन्यस्य वीरसिंहे भूपतिसिंहे महीभारम् ।
ज्ञानानलमलदाहो मधुकरसाहो दिवं भेजे ॥ १८ ॥

---

* श्येनः क्रीडतिस्मेति संबन्धः ।

अन्तर्गम्भीरताऽन्धूकृतसलिलनिधिर्लालिताशेषबन्धु-
र्बुन्देलानन्दसिन्धुः सुललितललनालोचनेन्दीवरेन्दुः ।
भ्रूभङ्गीलेशभङ्गीकृतरिपुनिवहो नृत्यमङ्गीनरङ्गी
सन्मातङ्गी तुरङ्गी धरणिपतिरभूद्वीरसिंहो नृसिंहः ॥१९॥

अमुष्य प्रस्थाने सति सपदि नानेभनिवहै-
रिहैकोऽपि द्वेषी न खलु रणशेषी समजनि ।
परं तस्थौ दुःस्थो गहनकुहरस्थोऽपि भयतः
क्षिपन्नुच्चैर्दिक्षु भ्रमितचकितं चक्षुरभितः ॥ २० ॥

दानं कल्पमहीरुहोपरि यशः क्षीरोदनीरोपरि
प्रज्ञा शक्रपुरोहितोपरि महासारोऽपि मेरूपरि ।
दात्रात्रेरुपरि प्रतापगरिमा कामोपरि श्रीरभू-
त्सिहातिक्रमवीरसिंहनृपतेः किंकि न कस्योपरि ॥२१॥

दानैरर्थिनमर्थनाविरहिणं प्रत्यर्थिनं च क्षणा-
त्कुर्वाणे सति वीरसिंहनिखिलक्ष्मामण्डलाखण्डले ।
कामं चेतसि कामधेनुरतनोत्कल्पद्रुमः कल्पितं
मोघीभूतजनिः समाश्रितखनिश्चिन्तां च चिन्तामणिः॥२२॥

भ्रामंभ्राममसंभ्रमं त्रिजगतीचक्राणि चक्रेऽचिरा-
च्चारं शीलितविष्णुपादपदवीब्रह्माण्डभाण्डोपरि ।
ब्रह्माण्डं निजमण्डमण्डलमिवाच्छाद्यैव सैवाधुना
विश्वेषामपि यस्य भास्वरयशो हंसी वतंसीयति ॥२३॥

जलकणिकामिव जलधिं कणमिव कनकाचलं मनुते ।
नृपसिंहवीरसिंहो वितरणरंहो यदा तनुते ॥ २४ ॥

यदा भवति कुण्डलीकृतमहाधनुर्मण्डल-
स्तदा नयनताण्डवत्रुटितखाण्डवः पाण्डवः ।

मनो वितरणोत्सुकं वहति वीरसिंहो यदा
तदा पुनरुदारधीरयमर्वाण्पि कर्णो जनैः ॥ २५ ॥

शौर्यौदार्यगभीरताधृतिदयादानादिनानागुणा-
नुर्वीदुर्वहभारवत्यहिपतिस्पर्द्धालदोःशालिनि ।
संयोज्यैव जुझारसिंहधरणीधौरेयचूडामणौ
मज्जन् ब्रह्मणि वीरसिंहसुकृती तस्थौ स्वयं निर्गुणः ॥२६॥

नद्यः स्वादुजला द्रुमाश्च सुफला भूरुर्वरा भूसुराः
वेदध्वानविधूयमानदुरिता लोका विशोका बभुः ।
राजनीतिनिरीतिरीति पितरीवोर्वीमिमां शासति
श्रीमद्वीरजुझारसिंहनृपतौ भ्रूभङ्गभग्नद्विषि ॥ २७ ॥

संग्रामोत्कटताण्डवोद्भटभटैरारब्धहेलाहठै-
श्चण्डाडम्बरपूरिताम्बरतटक्षीराब्धिगोत्राऽवटैः ।
भूभृत्सिंहजुझारसिंहधरणीजानेः प्रयाणे रणे
शौर्यौदार्यधनोऽपि को नु धरणीचक्रे न चक्रे भयम् ॥२८॥

तावद्वीरगभीरहुंकृतिरवस्तावद्गजाडम्बर-
स्तावत्तुङ्गतुरङ्गरिङ्गणचमत्कारश्चमूनामपि ।
तावच्चोयमहामहीभृदटवीदुर्गग्रहो विद्विषां
यावन्नैव जुझारसिंहनृपतिर्युद्धाय बद्धोत्सवः ॥ २९ ॥

अयं यदि महामना वितरणाय धत्ते धियं
भियं कनकभूधरोऽञ्चति ह्रियं च कर्णोऽटति ।
दधीचिरपचीयते बलिरलीकरूपायते
तदाऽतिमलिनायते स किल कल्पभूमीरुहः ॥ ३० ॥

प्रासादागतडागनागमणिभूदानादिनानातपः-
प्रागल्भ्येन महेन्द्रचन्द्रवरुणब्रह्मेशविष्णुस्थली ।

प्राचण्ड्येन जिता ऽमिता वसुमती कोदण्डदोर्दण्डयो-
र्जागर्त्तीति जुझारसिंहनृपतेः कुत्र प्रतापो न वा ॥ ३१ ॥

ब्रह्मा ऽभूच्चतुराननः स्मरहरः पञ्चाननः षण्मुखः
स्कन्दो भूपजुझारसिंहयशसो गानोत्सवेऽप्युत्सुकः ।
तस्याभोगमुदीक्ष्य भूधरनभोनद्यस्त्रिलोकीदिशः
सप्तद्वीपमयी मही च विधिना विघ्नेन निर्वाहिताः ॥ ३२ ॥

तुङ्गत्वादनवाप्य दैवततरोः पुष्पाणि सर्वाः समं
श्रीमद्वीरजुझारसिंहनृपतेर्दानं समानं जगुः ।
व्रीडादुर्वहभारनिर्भरनमद्ग्रीवे तु देवद्रुमे
श्लाघन्ते सुलभायमानकुसुमास्तं भूरि देवस्त्रियः ॥ ३३ ॥

भीमो ऽयं सहदेवरातपृतनादुर्द्धर्षपार्श्वो लसन्
श्रीभूमीनकुलः सदा ऽर्ज्जुनमहाख्यातिः क्षमामण्डले ।
कर्णः श्रीः कृतवर्मभीष्मघटनाशौटीर्यदुर्योधनो
रोषादेष युधि स्थिरो यदि भवेत्कः स्यादमुष्यागतः ॥ ३४ ॥

सत्कीर्त्तिग्रामदामाभरणभृतजगद्विक्रमादित्यनामा
धाम्नो भूम्ना महिम्ना विघटितरिपुणा विक्रमोपक्रमेण ।
सुप्रांशुः पीवरांसः पृथुभुजपरिघस्तस्य वंशावतंसो
विश्वोद्भवत्प्रशंसो गुणिगणहृदयानन्दनो नन्दनोऽभूत् ॥ ३५ ॥

आशापूर्त्तिं प्रकुर्वन् करवितरणतः पद्मिनीप्राणबन्धुः
प्रोद्यद्दिव्याम्बरश्रीः स्फुटमहिमरुचिः सर्वदा ध्वस्तदोषः ।
जम्भारातेरिहोच्चैरचलसमुदयात्सुप्रभातप्रकाशी
पुत्रो राज्ञः पवित्रो रचयति सुदिनं विक्रमादित्य एव ॥ ३६ ॥

सार्थीकुर्वन्निरर्थीकृतसुरविटपी चार्थिसार्थं निजार्थैः
व्यर्थीभूतारिपृथ्वीपतिरमरगुरुस्पर्द्धिवर्धिष्णुबुद्धिः ।

मानैर्योनादिदानैर्बहुविधगुणिभिर्गीयते यः सभायां
आतज्ज्ञातः स भूयः सुकविकुलमुदे विक्रमादित्य एव ॥ ३७ ॥

दानं दीनमनोरथावधि रणारम्भोऽरिनाशावधि
क्रोधो वागवधि प्रतापयशसोः पन्था दिगन्तावधि ।
दाक्षिण्यं क्षितिरक्षणावधि हरौ भक्तिश्च जीवावधि
व्यालुप्तावधि वीरविक्रमरवेः श्रेयः परं वर्द्धते ॥ ३८ ॥

हेमाद्रेः श्रियमन्यथैव कुरुते चक्रे च गौरीं तनुं
कैलासोपरि शोभते पटयति स्पष्टं च दिङ्मण्डलम् ।
भोगीन्द्रं न दधे श्रुतौ बत जटाचूडां च गङ्गां व्यधा-
ल्लोकानामयमीश्वरोऽस्य यशसस्त्वैश्वर्यमुज्जृम्भते ॥ ३९ ॥

श्रीगोपाचलमौलिमण्डलमणिः श्रीदूरवारान्वये
श्रीहंसोदयहंसपण्डित इति ख्यातो द्विजाधीश्वरः ।
यं लक्ष्मीश्च सरस्वती च विगतद्वन्द्वं चिरं भेजतुः
भोक्तारं रभसात्समानमुभयोः साम्ना ऽपमायं गुणैः ॥ ४० ॥

पटु दिक्षु विदिक्षु कुर्वतीनां नटलीलां स्फुटकीर्त्तिनर्त्तकीनाम् ।
स्फुरदध्वरधूमधोरणीह च्युतवेणीति जनैरमानि यस्य ॥ ४१ ॥

ततो ऽनल इवारणेरतुलधामभूर्भूभुजां
शिरोमणिरुरोमणिर्धरणिनामवामभ्रुवः ।
रणी बहुगुणी धनी भुवि वनीपकश्रीखनी
रमारमणमिश्रणी परशुराममिश्रोऽजनि ॥ ४२ ॥

येनागत्य पुरा पुरारिनगरे विद्या ऽनवद्या ऽर्ज्जिता
श्रीचण्डीश्वरमग्निहोत्रितिलकं लब्ध्वा गरीयोगुरुम् ।
शुद्धा सैव महोद्यमेन बहुधा भान्ती भवन्ती स्थिरा
तद्वंश्येषु कियन्न कल्पलतिकेवाद्यापि सूते फलम् ॥ ४३ ॥

आस्यारविन्दमनुपास्य गुरोरपास्य
लास्यं चतुर्मुखमुखेषु सरस्वतीह ।
सालंकृतिश्च सरसा च गुणान्विता च
यस्यातनोति रसनोपरि ताण्डवानि ॥ ४४ ॥

अङ्के लोमलतेव सीमनि दृशोरेखेव रेखाऽञ्जनी
कस्तूरीमकरीव भालफलके धारेव मूर्ध्न्यालकी ।
ऊर्ध्वं भृङ्गपरम्परेव कबरी सौरभ्यलोभाकुला
यस्यैवाध्वरधूमधोरणिरभूदाशाकुरङ्गीदृशः ॥ ४५ ॥

सुभासुरयशोनिधेः सुनिरवद्यविद्यानिधेः
सुचारुकवितानिधेः स्मृतिनिधेः श्रुतिश्रीनिधेः ।
अयं सुकृतगौरवात्परशुराममिश्राद् गुणै-
रनूनगरिमा पितुर्जगति मित्रमिश्रोऽजनि ॥ ४६ ॥

धर्मार्थैकनिकेतनं विधिमयं कर्मावनीदर्शनं
स्मृत्यम्भोजमहोदयं श्रुतिमयं श्रीवीरमित्रोदयम् ।
द्राक्सिद्धीकृतकार्यसिद्धिशतया श्रीवीरसिंहाज्ञया
तेने विश्वमुदे पुरे पुरभिदः श्रीमित्रमिश्रः कृती ॥ ४७ ॥

स्मारंस्मारं यशोदाकरकमलगलत्स्नेहसंवर्द्धिताङ्गं
गोपानां भूतधात्रीभरहरणकृते केशवं वेषवन्तम् ।
वीरश्रीवीरसिंहः स्फुरदमलदृशा ऽऽदेशितः शुद्धबुद्धिः
संस्काराख्यप्रकाशं कलयति सुकृती पण्डितो मित्रमिश्रः॥४८॥

संस्काराणामिहोद्देशो गर्भाधानमतः परम् ।
प्रथमर्तौ मासतिथिस्थानादिफलमीरितम् ॥ १ ॥
धर्मे विशेषाः संप्रोक्ताः प्रथमर्तौ प्रसङ्गतः ।
ऋतौ गमनकालाश्च गमनाकरणे पुनः ॥ २ ॥

अन्नप्राशनशेषे च जीविकायाः परीक्षणम् ।
बालेऽन्यदृष्टिदोषादौ प्रोक्तो रक्षाविधिक्रमः ॥ १५ ॥
बालस्य स्खलनादौ च रक्षाया विधयः स्मृताः ।
बालस्य पूर्वमेवोर्ध्वदन्तोत्पत्तिफलं पुनः ॥ १६ ॥
बालस्य दन्तकषणशमने विधिरीरितः ।
अब्दप्रपूर्त्तिकृत्यं च निषिद्धान्यथ तद्दिने ॥ १७ ॥
अथ तस्मिन् दिने कृत्यप्रयोगः परिकीर्त्तितः ।
प्रसङ्गाद्बालकस्याथ कर्म पुष्टिकरं स्मृतम् ॥ १८ ॥
अपमृत्युप्रशमनं चूडाकरणमेवच ।
कुलैक्ये मण्डनादूर्द्ध्वं निषेधो मुण्डनस्य च ॥ १९ ॥
शिखाविनिर्णयः स्त्रीणां चूडाकर्म ततः स्मृतम् ।
शूद्रचूडा ततः क्षौरं विद्यारम्भस्ततः परम् ॥ २० ॥
ततश्चानुपनीतस्य ये धर्मास्ते प्रकीर्तिताः ।
उक्तसंस्कारातिपाते प्रायश्चित्तमुदीरितम् ॥ २१ ॥
अथोपनयनं मुख्यगौणकालाश्च तस्य वै ।
काम्याः कालास्ततो व्रात्यास्तत्प्रायश्चित्तमप्यथ ॥ २२ ॥
व्रात्याङ्गजानां तदनु प्रायश्चित्तं निरूपितम् ।
अथ विस्तरशः प्रोक्तो मुहूर्त्तानां विनिर्णयः ॥ २३ ॥
बटुमातृरजोजन्मनिर्णयः सोदरस्य च ।
तथोपनयने प्रोक्त उपनेये च निर्णयः ॥ २४ ॥
मूकाद्युपनयः पश्चात्स्त्रीणामुपनयक्रिया ।
उक्ता अनुपनेयाश्च निर्णयश्चोपनेतृगः ॥ २५ ॥
बटूपनेत्रोरप्युक्तमधिकारकरं परम् ।
प्रायश्चित्तमथारम्भः सम्यक्संभारसंग्रहः ॥ २६ ॥

अध्यापकस्य कथनं तद्धर्माणां निरूपणम् ।
विद्यादानप्रशंसा च तथाऽध्येतृनिरूपणम् ॥ ३९ ॥
विद्यारम्भकालश्च प्रकारोऽध्ययनस्य च ।
अनध्यायास्ततस्तत्राध्ययने दूषणं स्मृतम् ॥ ४० ॥
तत्रापवादस्तदनु प्रदोषास्तदनन्तरम् ।
उत्सर्जनं ततः प्रोक्ता पुनश्चोपनयाक्रिया ॥ ४१ ॥
पुनस्तस्मिन्निमित्तानि, नैष्ठिकब्रह्मचारिणः ।
धर्माश्च व्रतलोपोक्तप्रायश्चित्तनिरूपणम् ॥ ४२ ॥
कालावधि ब्रह्मचर्यं गोदानव्रतमेवच ।
विकल्पः कथितस्तद्वदाश्रयाणां समुच्चयः ॥ ४३ ॥
समावर्त्तनसंभाराः स्नातकस्य व्रतानि च ।
अनाक्रम्यानधिष्ठेयानीक्षणीयानि च क्रमात् ॥ ४४ ॥
उक्तानि तेषां लोपे च प्रायश्चित्तमुदीरितम् ।
कच्छबन्धः क्षत्रियस्य छुरिकाबन्ध एवच ॥ ४५ ॥
विवाहश्च परीक्षा च कुलस्यात्र समीरिता ।
उत्तमानि कुलान्युक्तान्यधमानि कुलानिच ॥ ४६ ॥
हीनक्रियादिककुलपरित्यागे प्रयोजनम् ।
कुलापकर्षकारीणि निमित्तान्युदितानि च ॥ ४७ ॥
अथ गोत्रपरीक्षा च निषेधो मातृगोत्रगः ।
विस्तरेण पुनः प्रोक्तो गोत्रप्रवरनिर्णयः ॥ ४८ ॥
सापिण्ड्यनिर्णयश्चैव विस्तरेणेह कीर्त्तितः ।
अथ मातुलकन्याया विवाहे च विचारणा ॥ ४९ ॥
विरुद्धाश्चाथ संबन्धाः प्रत्युद्वाहनिवारणम् ।
सहोदरविवाहस्य निर्णयः समुदाहृतः ॥ ५० ॥

यमयोरथ पूर्वोक्तनिषेधे बाधनं स्मृतम् ।
शोभनद्वितये पश्चान्मुण्डनादिविनिर्णयः ॥ ५१ ॥

कन्यालक्षणमत्रान्यपूर्वायाश्च विचारणा ।
विशेषणानि कान्ताया मुख्यदारास्ततः परम् ॥ ५२ ॥

अथ दारानुकल्पश्च शूद्रापरिणये ततः ।
उक्ता विप्रतिपत्तिश्च लक्षणानि वरस्य च ॥ ५३ ॥

गुणदोषौ वरस्योक्तौ परिवेत्रादिनिर्णयः ।
अथाधाने विशेषश्च विवाहे काल ईरितः ॥ ५४ ॥

स्वयंवरस्ततः कूटविचारे वश्यकूटकम् ।
ताराकूटं योनिकूटं ग्रहमैत्री ततः परम् ॥ ५५ ॥

गणकूटं राशिकूटं फलं चैषामतः परम् ।
नाडीकूटं चतुर्नाडीपक्षः पश्चात्समीरितः ॥ ५६ ॥

अतः परं पुनः पञ्चनाडीपक्षोऽप्युदाहृतः ।
वरवध्वोरेकराश्ये नक्षत्रैक्ये च निर्णयः ॥ ५७ ॥

देशभेदेन कथिता व्यवस्था नाडिकासु च ।
अथ माहेन्द्रकूटं च रज्जुकूटं च तत्फलम् ॥ ५८ ॥

स्त्रीदीर्घं वर्णभेदेन कूटभेदव्यवस्थितिः ।
वरवध्वोश्च जन्मर्क्षफलं तदनु कीर्त्तितम् ॥ ५९ ॥

अज्ञाने जन्मऋक्षस्य नामर्क्षेणापि निर्णयः ।
उक्ताः कूटगुणाः पश्चात्तद्दोषप्रशमोद्यमः ॥ ६० ॥

संवत्सरायनर्तूनां मासस्य च विधिः स्मृतः ।
विवाहे जन्ममासादिनिषेधस्तदनन्तरम् ॥ ६१ ॥

ज्येष्ठापत्यस्य च ज्येष्ठे मासि पश्चान्निषेधनम् ।
पक्षास्तिथिस्तिथिफलं वारो वारफलानि च ॥ ६२ ॥

नक्षत्राणि ततो योगाः करणानि ततः परम् ।
लग्नान्यथ फलं तस्य नवांशकफलं ततः ॥ ६३ ॥
तथैकविंशतिर्दोषाः पञ्चाङ्गार्गशुद्धिलक्षणम् ।
अथोदयास्तशुद्ध्यन्ते दोषः संक्रान्तिसम्भवः ॥ ६४ ॥
षड्वर्गशुद्धिस्तदनु दोषो भौमाष्टमस्य च ।
गण्डान्तदोषो गण्डान्तः कर्त्तरीदोष एव च ॥ ६५ ॥
कर्तर्या अपवादश्च दोषश्चन्द्रादिशुद्धिजः ।
अथ संग्रहदोषान्तेऽष्टमलग्नेऽप्यदोषता ॥ ६६ ॥
दोषश्च त्रिपनाडीनां क्रमेणेह प्रकीर्त्तितः ।
मुहूर्त्तवारयोर्दोषो दोषः खार्जूरिकस्ततः ॥ ६७ ॥
ग्रहणोत्पातदोषश्च क्रूरविद्धर्क्षदूषणम् ।
अथ वेधफलान्युक्त्वा कुनवांशस्य दूषणम् ॥ ६८ ॥
महापाते वैधृतौ च दोषस्तदनु कीर्त्तितः ।
दश दोषास्ततो लत्ता ततः पातो निरूपितः ॥ ६९ ॥
अथात्र दशयोगाख्यचक्रं सम्परिकीर्त्तितम् ।
युतिस्तदनु जामित्रं ततश्चोपग्रहः स्मृतः ॥ ७० ॥
एकविंशतिदोषाणां मध्ये कस्याप्यदोषता ।
पापांशस्थितचन्द्रस्य ततः कुत्राप्यदोषता ॥ ७१ ॥
मुहूर्त्तवारकुलिकयमकण्टकदूषणे ।
अपवादः क चित् प्रोक्तः सर्वदोषेऽथ भञ्जनम् ॥ ७२ ॥
घटीयन्त्रस्य च ततो निर्माणस्थापने क्रमात् ।
निमन्त्रणे तस्य मन्त्रः फलं तद्भ्रमणे ततः ॥ ७३ ॥
ततश्च रविगुर्वादिबलं सम्परिकीर्त्तितम् ।
गुरोः शान्ती रवेः शान्तिस्ततः सिंहस्थनिर्णयः ॥ ७४ ॥

कुम्भप्रार्थनमश्वत्थाविवाहस्तदनन्तरम् ।
अथाधिवेदनं तत्र निमित्तं नियमस्ततः ॥ ८७ ॥

तत्र नान्दीमुखश्राद्धनिर्णयोऽथ प्रकीर्त्तितः ।
तृतीये च विवाहेऽथ निषेधस्तत्र कीर्त्तितः ॥ ८८ ॥

अर्कवैवाहिकं कर्म प्रकारश्चाहुतौ ततः ।
अथाग्निद्वयसंसर्गे विधिः सम्परिकीर्त्तितः ॥ ८९ ॥

अथावसथ्याधानं तु संस्था वै पाकयज्ञिया ।
अथ होमविधिः स्थालीपाकश्च तदनन्तरम् ॥ ९० ॥

क्रमेणातः परं पिण्डपितृयज्ञः प्रकीर्त्तितः ।
नवप्राशनशेषे तु श्रवणाकर्म कीर्त्तितम् ॥ ९१ ॥

सर्पाणां बलिरुद्दिष्ट आश्विनीकर्म तत्परम् ।
अथ कर्माग्रहायण्यां स्वस्तरारोहणं ततः ॥ ९२ ॥

अष्टकाऽन्वष्टकाकृत्ये कर्मणी तदनन्तरम् ।
कर्म शूलगवाख्यं च गोयज्ञस्तदनन्तरम् ॥ ९३ ॥
नैमित्तिकानि कर्माणि पश्चादुक्तानि विस्तरात् ।
संस्कारस्य प्रकाशेऽस्मिन् मित्रमिश्रेण सूरिणा ॥९४॥

तत्रात्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः । स च द्विविधः । एकस्तावत्कर्मान्तराधिकारेऽनुकूलः, यथोपनयनजन्यो वेदाध्ययनाद्यधिकारापादकः । अपरस्तूत्पन्नदुरितमात्रनाशको, यथा बीजगर्भसमुद्भवैनोनिबर्हणो जातकर्मादिजन्यः । तत्कर्त्तव्यत्वमाह

मनुः,
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

वैदिकैरिति। वेदशब्दोऽत्र मन्त्रात्मकवेदपरः। ततश्च तत्र भव इत्यर्थेऽध्यात्मादित्वाट्ठक् । कर्मशब्दश्चोच्चारणात्मकक्रियापरः। तथाच मन्त्रोच्चारणैरित्यर्थः पर्यवस्यति । यद्वा वैदिकैः वेदप्रमाणकैः। प्रत्ययश्चौपचारिकः । कर्मभिर्मन्त्रोच्चारणादीतिकर्त्तव्यतात्मकैः । शरीरपदेनात्राजहत्स्वार्थलक्षणया तत्कारणशुक्रशोणितादयोऽपि गृह्यन्ते । पावनः अशुद्धिनिबर्हणः । प्रेत्येहचेत्यनेन संस्कृतस्य दृष्टादृष्टफलेषु कारीरीज्योतिष्टोमादिकर्मसु अधिकारादुभयलोकोपकारकत्वं संस्काराणामुक्तम्। द्विजन्मनामित्यनेन शूद्रव्यावृत्तिः ।

**याज्ञवल्क्योऽपि.**

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।

निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ इति ।

कार्या इति शेषः । वैशब्द एवकारार्थकः शूद्रव्यावृत्त्यर्थः। उपनयनप्राग्भाविसंस्कारानुवृत्तौ शूद्रे प्रत्याह

**यमः.**

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।

न केनचित्समसृजच्छन्दसा तं प्रजापतिः ॥

विना मन्त्रेणेत्यत्र हेतुः. न केनचिदित्यादिः ।

**बैजवापगृह्येऽपि,**

शूद्रस्यापि निषेकपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलान्यमन्त्रकाणि यथाकालमुपदिष्टानीति ।

शूद्रस्यानुपनेयत्वं तु. शूद्र एकजातिः अशूद्राणामदुष्टकर्मणामुपनयनमिति गौतमापस्तम्बवाक्याभ्यां सिद्धम्। तस्य विवाहान्त्यकर्मणी आह

**जातूकर्ण्यः,**

शूद्राणां चैव भवति विवाहश्चान्त्यकर्म च । इति ।

एवंच

विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा ।

इति ब्रह्मपुराणवाक्यस्य

न शूद्रे पातकं किंचिन्नच संस्कारमर्हति ।

इति मनुवाक्यस्य च तत्तद्वाक्यविहितेतरसंस्कारव्यावर्त्तकत्वेन न कोऽपि विरोधः । अमुमेवार्थं स्पष्टमाचष्ट

**सुमन्तुः,**

ब्राह्मणक्षत्रियवैश्यानां गर्भाधानसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनव्रतचर्याऽध्ययनसमावर्त्तनविवाहयज्ञदानानि समानानीति ।

**मनुरपि,**

गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ इति* ।
शूद्रस्य उपनयनाभावे हेतुमाह

* इत उत्तरं "द्विजपदमेवोक्तवान् । कल्पतरुकारस्तु इममेव यमवाक्यं शूद्रस्य उपनयनप्राग्भाविसंस्कारान् अमन्त्रकान् प्रापयतीत्याह । तन्मते गर्भाधानपुंसवनानवलोभनसीमन्तोन्नयनजातकर्मविष्णुबलिनामकरणनिष्क्रमणभूम्युपवेशनान्नप्राशनकर्णवेधचूडान्ता द्वादशैव शूद्रस्य संस्कारा भवन्तीति पर्यवस्यति । अत एव गृह्यकारः शूद्रस्यापि निषेकपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलान्यमन्त्रकाणि यथाकालमुपदिष्टानि" इत्यधिकं पु.दृ. ।

श्रुतिः.

गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रमिति ।

ते च संस्कारा द्विविधाः । ब्राह्माः दैवाश्च । तथाच

हारीतः.

द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्च । गर्भाधानादिः स्मार्त्तो ब्राह्मः । स्नानान्त इति पाठः कल्पतरौ । पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैव इति। सौम्याः सोमयागा अग्निष्टोमादयः। ते च ब्राह्माः षोडश । तथाच

जातूकर्ण्यः.

आधानपुंससीमन्तजातनामान्नचौलकाः ।
मौञ्जी व्रतानि गोदानसमावर्त्तविवाहकाः ॥
अन्त्यं चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु ।
शूद्राणां चैव भवति विवाहश्चान्त्यकर्मच ॥ इति ।

अङ्गिरास्तु

पञ्चविंशतिसंस्कारानाह.

स्वेस्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्त्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥
पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः ॥
गर्भाधानं पुंसवनं सीमन्तो बलिरेवच ।
जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् ॥
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टका च यथातथा ॥

श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥
संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः । इति ।

भूतिरैहिकमामुष्मिकं च फलम् । आदिशब्दाद्याजनादावपि । बलिर्विष्णुबलिः । व्रतानां वेदव्रतानाम् । चतुष्टयं महानाम्नीमहाव्रतोपनिषद्गोदानानीति स्नानं समावर्त्तनम् । आग्रयणं नवान्नेष्टिः । अष्टकाः हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीषु विहितानि श्राद्धानि। यथातथा नियमश्चतस्रो वा। श्रावण्यां क्रियमाणं श्रवणाकर्म। एवमाश्वयुज्यामाश्वयुजीकर्म। मार्गशीर्ष्यां प्रत्यवरोहणम् । पार्वणं पर्वणि अमावास्यायां क्रियमाणं पार्वणं श्राद्धम्। उत्सर्गः उत्सर्जनं वेदानाम्। उपाकर्म वेदारम्भः। नित्यशः प्रत्यहं क्रियमाणाः पञ्च महायज्ञाः । एते च संस्काराः सर्ववर्णानामैहिकामुष्मिकफलानुकूलत्वेनावश्यका ब्राह्मणानां तु ब्राह्मण्याभिव्यञ्जकत्वेन विशेषतः । तथा च

**आङ्गिराः,**

चित्रकर्म यथा ऽनेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥ इति ।

एतेषां पञ्चविंशतिसंस्काराणां नित्यनैमित्तिकमासिकवार्षिकभेदेन चातुर्विध्यमाह

**आश्वलायनः,**

महायज्ञास्तु नित्याः स्युः सन्ध्यावच्चाग्निहोत्रवत् ।
नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः ॥
मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् ।
सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥

समुद्वाहावसानकाः विवाहपर्यन्ता इत्यर्थः । पार्वणश्राद्धस्य मासिमासि अमावास्यायां क्रियमाणत्वान्मासिकत्वमुक्तम् । अशक्तानां तदेव वार्षिकं, वर्षेवर्षे क्रियते इति वार्षिकम् । तेन प्रत्यमावास्यं पार्वणश्राद्धकरणाशक्तेन वर्षमध्ये एकवारमेव श्राद्धं कर्तव्यमित्यर्थः सिध्यति । वर्षेवर्षे क्रियमाणा वार्षिकाः ।

गौतमस्तु,

गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानम्, एतेषां चाष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था, इत्येते चत्वारिंशत्संस्कारा इति ।

गर्भाधानादयः संस्काराः स्वस्वगृह्योक्ता वेदितव्याः । चत्वारि वेदव्रतानि प्रतिवेदं प्रतिशाखं गृह्योक्तानि । स्नानं समावर्त्तनम् । सहधर्मचारिणीसंयोगो विवाहः । पञ्चानां देवादीनां यज्ञानामनुष्ठानम् । तच्चाहरहः कर्त्तव्यम्, न तु सकृत्कृतेन संस्कारसिद्धिः । एते च पृथक्पृथक् संस्काराः न पुनः समुदिता एकः संस्कार इति । अष्टकाः स्वस्वगृह्योक्ताः । पर्वणि भवः पार्वणः स्थालीपाकः । श्राद्धं मासिमासि अमावास्यायां क्रियमाणम् । श्रावणी सर्पबल्याख्यं श्रवणाकर्माख्यं च कर्म । आग्रहायणी प्रत्यवरोहणाख्यं कर्म । चैत्री शूलगवाख्यं कर्म । आश्वयुजी रुद्रायस इति छन्दोगाः । आश्वयुज्याख्यं कर्मेत्याश्वलायनाः । अग्न्याधेयादयः श्रुतिसिद्धाः संस्कारेषु गण्यन्ते । सप्तग्रहणाद-

र्ग्रपूर्णमासौ समुदायतयैकः संस्कारः*। अन्ये प्रसिद्धाः।

अथाष्टावात्मगुणाः। दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति। एतेषां लक्षणान्याह बृहस्पतिः,

आत्मवत्सर्वभूतेषु यद्धिताय शिवाय च।
वर्त्तते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता॥
बाह्ये चाभ्यन्तरे चैव दुःखउत्पादिते परैः।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता॥
न दुर्गुणान् गुणैर्हन्ति स्तौति मन्दगुणानपि।
नान्यदोषेषु रमते सा ऽनसूया प्रकीर्त्तिता॥
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः।
स्वधर्मेषु व्यवस्थानं शौचमेतत्प्रकीर्त्तितम्॥
शरीरं पीड्यते येन शुभेनापिच कर्मणा।
अत्यन्तं वर्ज्जयेत्तत्तु सोऽनायासः प्रकीर्त्तितः॥
प्रशस्ताचरणं नित्यमप्रशस्तविवर्ज्जनम्।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥
स्तोकादपिहि दातव्यमदीनेनान्तरात्मना।
अहन्यहनि यत्किंचित्तदकार्पण्यमुच्यते॥
विवर्ज्जयेदसंतोषं विषयेषु सदा नरः।
परद्रव्याभिलाषं च सा ऽस्पृहा कथ्यते बुधैः॥ इति।

---

* इत उत्तरं "ब्राह्मणस्य अग्निष्टोमे षोडशिग्रहग्रहणाभावाद् अत्यग्निष्टोमस्य कथमसौ संस्कार इति चिन्त्यम्। अत्यग्निष्टोमे राजन्यस्य गृह्णीयात् इति श्रुतेः,, इत्यधिकः पाठः पुस्तकान्तरे दृश्यते।

हितमायत्यां श्रेयस्करम्। चित्रं शुभम्। दुर्गुणान् द्यूतचौर्यादीन्। गुणैः श्रोत्रियत्वादिभिः। मन्दगुणान् अल्पगुणान्। स्तौति बहुगुणत्वेन ख्यापयति। शुभेन विहितेन धनार्ज्जनादिना। पीड्यते शरीरमत्यन्तं क्लेशमद्भवति। प्रशस्ताचरणं गन्धमाल्यादिधारणम्। अप्रशस्तमात्मनिन्दादि। अदीनेनाननुशायिना। असंतोषमतृप्तिम्।

बुधोऽपि,

गर्भाधानं पुंसवनं सीमन्तोन्नयनं सूतिकागृहसंस्कारः सोष्यन्तीकर्मेति।

सोष्यन्तीकर्म शीघ्रप्रसवाय गोभिलाद्युक्तम्। एषामुत्कर्षमाह

गौतमः,

यस्यैते न चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीति।

सालोक्यं समानलोकवासित्वम्। एकदेशयोगात्सालोक्यं समस्तयोगात्सायुज्यमिति द्रष्टव्यम्।

तथा,

यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीति।

तुशब्दो विशेषवाची। खलुशब्दः प्रसिद्धौ। अथशब्दोऽवधारणे। यस्य चत्वारिंशत्संस्कारेषु द्विजत्वमूलकतिपयसंस्कारसंबन्धेऽप्यष्टावात्मगुणाः सन्ति स ब्रह्मणः सायुज्यं सालोक्यं गच्छेत्।

हारीतोऽपि,

ब्राह्मसंस्कारसंस्कृतः ऋषीणां समानतां सामान्यतां समानलोकतां सायोज्यतां गच्छति। दैवेनोत्तरेण संस्कारेणानुसंस्कृतो

देवानां समानतां सामान्यतां समानलोकतां सायोज्यतां च गच्छति।

समानता समानो मानः पूजा यस्य स समानः समानस्य भावः। सामान्यता सामान्यशब्दः समानपर्यायः तेन तुल्यरूपतोक्ता। समानलोकता एकलोकनिवासः। सायोज्यता समानसायोज्यं शरीरं यस्य स सायोज्यः।

मनुः,

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥

स्वाध्यायेन वेदग्रहणेन। व्रतैः सावित्र्यादिभिः। त्रैविद्येन त्र्य्यर्थज्ञानेन। इज्यया देवादिपूजनेन। सुतैः पुत्रैः। ब्राह्मी ब्रह्मसंबन्धिनी तज्ज्ञानद्वारा।

शङ्खलिखितौ,

पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैव च।
संस्कारा ह्यग्निहोत्रान्ता अग्निहोत्रं तु जुह्वतः॥
संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः।
नाकपृष्ठं यशो धर्मं त्रिरीजानस्त्रिविष्टपम्॥

अग्निहोत्रिणो दर्शपूर्णमासं विना ऽपि अग्निहोत्रानुष्ठानं विहितमस्ति तस्याग्निहोत्रपर्यन्ताः संस्काराः। पूर्वैगर्भाधानादिभिः उत्तरैरग्न्याधेयादिभिः। अष्टगुणैर्दयादिभिः। ब्राह्मलौकिकः ब्रह्मलोकार्हः। नाकपृष्ठं मेरुपृष्ठम्। देवलोकः त्रिविष्टपम्। त्रिरीजानः पाकहविःसोमसंस्थाभिः। त्रिः सोमयागेनेष्टवानिति माधवस्वामी।

## अथ गर्भाधानं निरूप्यते।

"निषेकादिर्द्विजन्मनां" "निषेकाद्याः श्मशानान्ता" इत्यादि-मनुयाज्ञवल्क्यादिस्मृतिषु तस्यैवाद्यत्वाभिधानात्। गर्भाधानं पुंसवनमित्यादिगौतमादिस्मृतिषु प्रथमोद्दिष्टत्वाच्च। तत्र

**बृहस्पतिः,**

गर्भाधानमृतौ कुर्यादिति।

**याज्ञवल्क्योऽपि,** गर्भाधानमृतावितिति।

गर्भः आधीयते येन कर्मणा तद्गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्। उद्भिदधिकरणन्यायात्। ( पू.मी.अ.१पा.४अधि.२ )

**शौनकोऽप्याह,**

निषिक्तो यत्प्रयोगेण गर्भः संधार्यते स्त्रिया।

तद्गर्भलम्भनं नाम कर्म प्रोक्तं मनीषिभिः॥ इति।

यस्य कर्मणः प्रयोगेणानुष्ठानेन। इयर्त्ति गर्भधारणं गच्छतीति ऋतुः। स च नाभिकमलादुत्पन्नं शोणितम्। तच्चेन्द्रकृतब्रह्महत्यायास्तृतीयोंऽशः। तदेतत्सर्वं तैत्तिरीयशाखायां "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्" इत्यस्मिन्ननुवाके स्पष्टीकृतम्।

तद्यथा। स स्त्रीप्रसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं परिगृह्णीतेति। ता अब्रुवन् वरं वृणामहा ऋत्वियात्प्रजां विन्दामहै काममाविजनितोः सम्भवामेति। तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममाविजनितोः सम्भवन्ति। वारे वृतं ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन् सा मलवद्वासा अभवदिति।

अस्यानुवाकस्यार्थः पुराणे स्पष्टीकृतः।

**स्मृतिमञ्जर्याम्,**

देवतानां पुरोधास्तु त्वष्टा नाम द्विजोत्तमः।

भगिनी पूर्वदेवानां तस्य भार्या तयोः सुतः॥

विश्वरूप इति ख्यातः शिरोभिर्जायते त्रिभिः ।
एकस्मिन् सोमपानं च सुरापानं च मध्यमे ॥
वामपार्श्वेऽन्नमद्याच्च स्वेच्छया चरते दिवि ।
देवताभ्यो हविर्भागानपिधाय ददात्यसौ ॥
अपिधायासुरेभ्यस्तु मातुलप्रेमया सह ।
उत्पातादि विजायन्ते होनब्रह्मयकर्मणा ॥
तस्मात्सुरपतिर्भीतः स्वराज्यच्युतिशङ्कया ।
अच्छिनत्तस्य शीर्षाणि वज्रमादाय सत्वरः ॥

यत्सोमपानवदनमभवत्स कपिञ्जलः ।
अभवद्यत्सुरापानं कलविङ्कः स शीर्षकम् ॥
यदन्नादनमास्यं तु क्रमादासीत्स तित्तिरिः ।
ततस्तां ब्रह्महत्यां च वासवोऽञ्जलिना ऽग्रहीत् ॥
ब्रह्महत्यासमोपेतः प्रच्छन्नोऽब्दं चचार सः ।
स्वर्गे भूतानि चाक्रोशन् देवेन्द्र ब्रह्महन्निति ॥
स धरित्रीमुपासीदत् पृथिवीमब्रवीद् तृपा ।
ब्रह्महत्यातृतीयांशं त्वं गृहाणेति मत्कृतम् ॥
खातात्पराभवो माभूदितीन्द्रं प्रत्युवाच सा ।
सोऽब्रवीद्वत्सरादर्वाग्गर्त्तः पूर्णो भविष्यति ॥

इन्द्राद्वरं प्रतिगृह्य हर्षवशभवद्धरा ।
तस्मात्संवत्सरादर्वाक् खातं च परिपूर्यते ॥
सेन्द्रस्य ब्रह्महत्यायास्तृतीयं भागमग्रहीत् ।
तत्पापमीरिणं भूमावभवत्स्वकृतं यतः ॥
ईरिणं न स्पृशेत्तस्माद् ब्रह्महत्यासवर्णकम् ।
ततस्तरूनुपासीदत् सोऽब्रवीद्यन्मया कृतम् ॥
भवन्तः प्रतिगृह्णन्तु ब्रह्महत्यातृतीयकम् ।

वासवं तरवोऽप्यूचुरस्माकं छेदनात्परम् ॥
प्रभवन्त्वङ्कुराश्चेति वरो देयस्त्वया ऽधुना।
इन्द्रस्तथा करोमीति वृक्षाणामददाद्वरम् ॥
तस्माद्वृक्षाश्च भूयांस उत्तिष्ठन्ति लुनात्परम् ।
ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन्महीरुहाः ॥
सोऽभवद्वृक्षनिर्यासो ब्रह्महत्यासवर्णकः ।
तस्माल्लोहितनिर्यासं न स्पृशेन्न च खादयेत् ॥
स भूयः स्त्रीसभां गत्वा ह्युपासीताब्रवीदिति ।
ब्रह्महत्यातृतीयांशं प्रतिगृह्णीत मत्कृतम् ॥
ता अब्रुवन्वरं शक्रमृत्वियाच्च प्रजोद्भवम् ।
वृणीमहे कामभोगमाप्रसूतेर्यथेप्सितम् ॥
ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन्स्त्रियोऽपि च ।
तस्मात्स्त्रियः प्रजालाभमृतौ सुरतसंगमात् ॥
आप्रसूतेः प्रियैः सार्द्धं संभोगाः संभवन्ति हि ।
तथाच मलवद्वासा अभवन्योषितस्तथा ॥
नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम् ।
तस्मिन्सर्वाश्च दधते गर्भसंभवकारणम् ॥
अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् ।
बाल्यात्परं वयः प्राप्ते मुकुलं विकसद्भवेत् ॥
उत्फुल्लं कुसुमं स्त्रीणां स्वभावेन स्रवेद्रजः ।
तदाप्रभृति सर्वासां मासिमासि ऋतुर्भवेत् ॥ इति ।
अथ प्रथमर्त्तौ शुभाशुभमासादिफलनिर्णयः ।

ज्योतिश्चन्द्रिकायां,

चैत्रे तु प्रथमर्त्तौ स्यान्नारी वैधव्यभागिनी ।
वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता तथा ॥

शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधान्यदा ।
नभस्ये दुर्भगा क्लीबा आश्विने च तपस्विनी ॥
ऊर्ज्जे त्वायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पौषे च पुंश्चली नारी माघे पुत्रसुखान्विता ॥
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ।

अथ पक्षफलम् ।

शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत् ।
कृष्णस्य दशमीं यावन्मध्यमं फलमादिशेत् ॥

अथ तिथिफलम् ।

श्रीधरीये गुरुः,

प्रथमायां पतिं हन्ति द्वितीयायां सुखं भवेत् ।
तृतीयायां श्रियै स्याच्च चतुर्थ्यां वृपली भवेत् ॥
पञ्चम्यां पुत्रलाभश्च षष्ठ्यां चारित्र्यविक्रिया ।
सप्तम्यां पुत्रवृद्धिः स्यादष्टम्यां सुतनाशनम् ॥
नवम्यां रुदती नित्यं दशम्यां धर्मशीलिनी ।
एकादश्यां पतिस्निग्धा द्वादश्यां क्रन्दती भवेत् ॥
त्रयोदश्यां मानधना त्वपरा बहुदोषकृत् ।
पर्वण्यन्यगृहीता स्यादित्यादेवं तिथेर्वशात् ॥

पूर्वाह्णादिफलं स्मृतिरत्ने,

शुभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम् ।
अपराह्णे तु वैधव्यं पूर्वरात्रे शुभं भवेत् ॥
मध्यरात्रे तु मध्यं स्यात्पररात्रेऽशुभान्विता ।
तिथीनां फलमेवं हि वाराणां फलमुच्यते ॥
भानुवारे भवेद्व्याधिः चन्द्रवारे पतिव्रता ।
बहुरोगा बहुक्लेशा पतिहीना कुजे दिने ॥

बहुपुत्रवती सौम्ये सर्वसम्पद् गुरोर्दिने ।
सौभाग्यं सुखसम्पत्तिः शुक्रवारे पतिव्रता ॥
कष्टबुद्धिर्महाव्याधिः स्वयमर्थस्य चोरिणी ।
मन्दवारे विनाशः स्यात्प्रथमर्त्तौ रजस्वला ॥

नारदोऽपि,

रुग्णा पतिव्रता दुःखा पुत्रिणी भोगभागिनी ।
पतिप्रिया क्लेशभागा सूर्यवारादिषु क्रमात् ॥

अथ नक्षत्रफलं गर्गसंहितायां,

सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता ।
धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी ॥
सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ।
दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ॥
साध्वी पतिप्रिया नित्यं सुपुत्रा कष्टचारिणी ।
स्वकर्मनिरता हिंस्रा पुण्यपुत्रादिसंयुता ॥
नित्यं धनव्ययासक्ता पुत्रधान्यसमन्विता ।
मूर्खा चाज्ञा पुण्यवती दस्रर्क्षादेः क्रमात्फलम् ॥ इति ॥

अथ योगफलं नारदीये,

परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ ।
सन्ध्यासूपप्लुते विष्ट्यामशुभं प्रथमार्त्तवम् ॥

ग्रन्थान्तरेऽपि,

अमासंक्रान्तिविष्ट्यां च व्यतीपाते च वैधृतौ ।
परिघस्य तु पूर्वार्धे षट् च गण्डातिगण्डयोः ॥
व्याघाते नव शूले तु नाड्यः पञ्चर्त्तुदर्शने ।
वैधव्यमर्थहानिं च सुतनाशं महद्भयम् ॥
वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनम् ॥

तेजोहानिं समायाति सदा पुष्पवती क्रमात् ॥ इति ।

अथ राशिफलं **नारदीये**,

कुलीरवृषचापान्त्यनृयुकृकन्यातुलाधराः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्त्तवे ॥

अथ लग्नफलं **दैवज्ञभूषणे**,

मेषे स्याद्व्यभिचाराढ्या वृषभे परदारिणी ।
मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥
सिंहे तु पुत्रसंयुक्ता कन्यायां श्रीमती तथा ।
विचक्षणा तुलायां तु वृश्चिके च पतिव्रता ॥
मकरे त्वन्नहीना तु कुम्भे निर्धनयुक्तता ।
मीने विचक्षणा लग्ने ग्रहसंस्था विवाहवत् ॥

अथ वस्त्रफलं **गर्ग्गसंहितायां**,

सुभगा श्वेतवस्त्रा स्याद् दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥
दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी विधवा पुष्पिता ततः ॥
मलिनाम्बरधरा नारी दरिद्रा स्याद्रजस्वला ।
वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ॥
समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्त्तवे ।

सम्मार्जनीकाष्ठतृणाग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् ।
तल्पोपभोगे तपसि स्थिता चेद् दृष्टं रजो भाग्यवती तदा स्यात् ॥

अथ स्थानफलं **वसिष्ठसंहितायां**,

ग्रामाद्बहिः परग्रामे नारी स्याद्व्यभिचारिणी ।
पतिव्रता पतिस्थाने सुशीला गृहमध्यतः ॥
ग्राममध्ये तु वृद्धिश्च विधवा च दिगम्बरा ।

परागारे च दुःशीला आयुष्यं जलसन्निधौ ॥
धनमध्ये तु कन्या या धनधान्यसमृद्धिदा । इति ।

स्मृत्यन्तरेऽपि,
देवस्थाने पितृस्थाने निन्द्यस्थानेऽन्यवेश्मनि ।
पुष्पवत्याः फलं न स्यान्मार्गे चण्डालवेश्मनि ॥ इति ।

अथ प्रथमरजोदर्शने धर्मविशेषाः ।

तदुक्तं स्मृतिचन्द्रिकायां,
प्रथमर्त्तौ तु पुष्पिण्यां पतिपुत्रवती स्त्रियाः ।
अक्षतैरासनं कुर्यात्तस्मिंस्तामुपवेशयेत् ॥
हरिद्रापुष्पगन्धादीन् दद्यात्ताम्बूलकं स्रजम् ।
आशिषो वाचयेयुस्ताः पतिपुत्रवती भवेत् ॥
दीपैर्नीराजनं कुर्यात्सदीपे वासयेद् गृहे ।
तास्सर्वाः पूजयेत्पश्चाद् गन्धपुष्पाक्षतादिभिः ॥
लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः । इति ।

*अथोदक्ययोरन्योन्यस्पर्शे निर्णयः ।

स्मृतिमञ्जर्य्याम्,
उदक्ये द्वे सगोत्रे वा सवर्णे वैकभर्त्तृके ।
तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् ॥

सवर्णयोः सपत्न्योः सगोत्रयोर्वा मिथः स्पर्शे सद्यः स्नानं, शुद्ध्यनन्तरं च पञ्चगव्यप्राशनं प्रायश्चित्तमित्यर्थः । इदन्तु सहशयनादिचिरस्पर्शविषयम् । यत्तु

स्पृष्टे रजस्वले ऽन्योन्यं सवर्णे त्वेकभर्तृके ।
कामादकामतो वा ऽपि सद्यः स्नानेन शुद्ध्यतः ॥

---

*इतआरभ्य "मध्यस्थयोः क्षत्रियावैश्ययोरनुक्तप्रायश्चित्तत्वेऽपि अर्थात् पादोनार्धकृच्छ्रौ वेदितव्यौ" इत्यन्तः १९२ तमपृष्ठस्य चतुर्थपङ्क्तिकापर्यन्तं पाठः पुस्तकान्तरे एवास्ति ।

इति वसिष्ठवचनं तत्सकृत्स्पर्शविषयम् । तुशब्दो वार्थः । सवर्णे इत्युभयविशेषणमुन्नेयं, मूलवाक्ये तथा दर्शनात् । इदानीं सवर्णयोः सगोत्रयोः सोदरयोर्भगिन्योरुक्तां कामाकामाभ्यां मिथः स्पर्शे शुद्धिमाह ।

सवर्णयोनिसम्बन्धे सगोत्रे च रजस्वले ।
मिथः स्पृशेदमत्या तु स्नानमात्रेण शुध्यति ॥
मत्यैकरात्रं नाश्नीयात् पञ्चगव्यं पिबेत्ततः ।

वर्णश्च योनिश्च वर्णयोनी । समाने च ते वर्णयोनी समानवर्णयोनी । तयोः सम्बन्धे । यत्तु

उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया ।
तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयम् ॥

इति मार्कण्डेयवाक्यं, यच्च

रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥

इति कश्यपवाक्यं, तदुभयमपि मूलोक्तविषये एव कामाकामाभ्यां यथायथं योज्यम् । इदानीं भर्तृगोत्रासम्बद्धसवर्णयोः स्पर्शे प्रायश्चित्तं सपादश्लोकेनाह ।

उदक्ययोर्यदा ऽन्योन्यमसम्बद्धसवर्णयोः ।
स्पृशेदमत्या स्नात्वा च तस्मिन्नाद्या शुचिर्भवेत् ॥
मत्या तु नाद्यादाशुद्धेरिति ।

आशुद्धेः स्पर्शदिनमारभ्य शुद्धिदिनपर्यन्तमित्यर्थः । निषेधातिक्रमेण भुक्तवत्याः शुद्धिमाह ।

भुक्ता चेत्प्रतिवासरम् उपोषणं तदोति ।

स्पर्शानन्तरं यावद्दिनं भुङ्क्ते तावद्दिनं शुद्ध्यनन्तरम् उपवासः कर्तव्य इत्यर्थः । उपवासाशक्तायाः पक्षान्तरमाह ।

केचिदाहुस्तद्दिनसंख्यया ।

उपवासे त्वशक्ता चेत्तत्समं दानमाचरेत् । इति ।

यावद्दिनं भुङ्क्ते तावद्दिनसंख्याकब्राह्मणभोजनपर्य्याप्तमन्नं दद्यादित्यर्थः । प्राजापत्यमत्याम्नाये तथा दर्शनात् । एवं संबद्धासंबद्धसवर्णयोः शुद्धिमभिधायेदानीमसंबद्धब्राह्मण्योर्विशेषशुद्धिमाह ।

संभाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले ।
आस्नानकालान्नाश्नीतामुभे मत्या मिथः क्वचित् ॥
स्नात्वोपवासं कुर्य्यातां पञ्चगव्येन शुध्यतः ।

आस्नानकालात् स्पर्शदिनमारभ्य यावच्छुद्धिदर्शनम् । अन्ते त्रिरात्रोपवासश्च । तथा च

**पराशरः,**

स्पृष्ट्वा रजस्वला ऽन्योन्यं ब्राह्मणीं ब्राह्मणी तथा ।
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यति ॥ इति ।

एवकारः पञ्चगव्याशनव्यावृत्त्यर्थः । क्वचिदमत्या स्नानानन्तरमुपवासः पञ्चगव्यपानं चेदित्यर्थः । इदानीमुक्तविषयेष्वत्यन्ताभ्यासे प्रायश्चित्तमाह ।

एवमभ्यासतश्चाब्दं प्रायश्चित्तं समाचरेत् । इति ।

अथ सवर्णासवर्णयोः स्पर्शे निर्णयः । तथा च

**पराशरः,**

स्पृष्ट्वा रजस्वला ऽन्योन्यं ब्राह्मणीं वैश्यजा तथा ।
पादहीनं चरेत्पूर्वा पादमेकमनन्तरा ॥
स्पृष्ट्वा रजस्वला ऽन्योन्यं ब्राह्मणीं शूद्रजा तथा ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुद्ध्यति ॥ इति ।

दानं पादकृच्छ्रप्रत्याम्नायभूतनिष्कचतुर्थांशदानम् । अथ क्षत्रियादीनां वैश्यादिस्पर्शे निर्णयः । तत्र

वृद्धवसिष्ठः,

स्पृष्ट्वा रजस्वला ऽन्योन्यं क्षत्रियां शूद्रजा ऽपिवा ।
उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चान्तरा ॥
स्पृष्ट्वा रजस्वला ऽन्योन्यं वैश्यां शूद्रा तथैव च ।
त्रिरात्रात् शुध्यते पूर्वा उत्तरा तु दिनत्रयात् ॥ इति ।

इदञ्च त्रिरात्राहोरात्रादिकं स्नानानन्तरमेव द्रष्टव्यं, न तु स्नानात् प्राक् नैमित्तिकोपवासैर्गतार्थम् । एतच्च सर्वं कामतः स्पर्शे ।

वर्णानां कामतः स्पर्शे विधिरेष सनातनः ।

इति वसिष्ठवाक्यशेषात् । अकामतो

बृहद्विष्णूक्तं,

रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयात् न यावच्छुद्धा स्यात् । सवर्णामधिकवर्णां स्पृष्ट्वा सद्यः स्नात्वा शुद्ध्यनोति ।

अथ रजस्वलायाश्चण्डालादिस्पर्शे निर्णयः । तत्र

वृद्धवसिष्ठः,

पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥

व्यतिक्रम्य, उपोषणेनेति शेषः । तदेव प्रायश्चित्तमाह ।

प्रथमेऽह्नि त्रिरात्रं स्यात् द्वितीये त्र्यहमेवतु ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥

परतश्चतुर्थे ऽह्नि स्नानात्प्रागित्यर्थः ।

शूद्रयोच्छिष्टया स्पृष्टा शुना च द्व्यहमाचरेत् । इति ।

अकामतो

**बौधायन आह,**

रजस्वला चेत् संस्पृष्टा चाण्डालान्त्यश्ववायसैः ।

तावत्तिष्ठेन्निराहारा यावत्कालेन शुद्ध्यति ॥ इति ।

अशक्तां प्रति तु स एवाह ।

रजस्वला तु संस्पृष्टा ग्रामकुक्कुटशूकरैः ।

श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम् ॥ इति ।

भोजनकाले तु स्पर्शे स एवाह,

रजस्वला तु भुञ्जाना श्वान्त्यजादीन्स्पृशेद्यदि ।

गोमूत्रयावकाहारा षड्रात्रेण विशुद्ध्यति ॥

अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वा ऽपि भोजनम् । इति ।

विप्राश्चात्र ब्रतरात्रिसमसंख्यया षड् ग्राह्याः ।

अथाशौचमध्ये रजोदर्शने निर्णयः । तत्र

**मार्कण्डेयः,**

मृतसूतकसंपर्के ऋतुं दृष्ट्वा कथं भवेत् ।

नास्नानकालमश्नीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥ इति ।

**मनुरपि,**

अमायत्ये समुत्पन्ने मलवद्वासमी यदि ।

अभिषेके तु भुक्तिः स्याद्दिनत्रयमभोजनम् ॥ इति ।

अमायत्ये सूतकाद्याशौचोत्पत्तौ । दिनत्रयमत्रशिष्टकालोपलक्षणम् । एतच्च अबालापत्याविषयम् । बालापत्यानामशक्तानान्तु सद्यः स्नानमात्रेण भोजनमिति प्राञ्चः । उच्छिष्टस्पर्शे त्वाह

**अत्रिः,**

उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला ।

कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानैरुपोषिता ॥ इति ।

पूर्वा ब्राह्मणी । दानं पादकृच्छ्रसमम् । अत्र ब्राह्मणीशूद्रयोः कृच्छ्रकृच्छ्रपादरूपमायाश्चित्तमाम्नातम् । मध्यस्थयोः क्षत्रियावैश्ययोरनुक्तमायाश्चित्तत्वेऽपि अर्थात्पादोनार्द्धकृच्छ्रौ वेदितव्यौ ।

अथ ऋतुगमनकालमाह

याज्ञवल्क्यः,

षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥

नाभिकमलीयशोणितप्रत्यक्षतादिनमारभ्य षोडशाहोरात्राणि गर्भधारणयोग्यः कालः ऋतुर्भवति । तत्र आद्याश्चतस्रो निशाः पर्वाणि वक्ष्यमाणानि अयुग्माश्च रात्रीर्वर्जयित्वा पुत्रार्थी संविशेत् । ब्रह्मचारी ऋतुकालगमनात् प्राक् अकृततत्संसर्गः । तथा च

आश्वलायनः,

प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥ इति ।

यत्तु मिताक्षरायां, यत्र श्राद्धदिनादौ ब्रह्मचर्यं चोदितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोष इति, तच्चिन्त्यम् । ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्ज्जमितिगौतमवचनविरोधात् । प्रतिषिद्धं च श्राद्धदिनमृतावप्याश्वलायनेन ।

भोक्ष्यन्करिष्यन्वा श्राद्धं पूर्वरात्रौ प्रयत्नतः ।
व्यवायं भोजनं चैव ऋतावपि विवर्जयेत् ॥
श्राद्धं करिष्यन्कृत्वा वा भुक्त्वा वाऽपि निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ इति ।
ऋतुकाले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित् ।

तत्र गच्छन्समाप्नोति ह्यनिष्टं महदेव तु ॥

इतिबृहन्मनुस्मरणविरोधाच्च । पित्रोर्मरणे यावत्संवत्सरमृतौ नोपेयादित्यप्याह

आश्वलायनाचार्यः,

दीक्षितस्तु महायज्ञैः पित्रोः प्राग्वत्सरात् द्विजः ।
नेयाद्भार्यां प्रयत्नेन ऋतावप्यर्थितो बुधः ॥

महायज्ञैर्ज्योतिष्टोमादिभिः दीक्षितः दीक्षासंस्कारवान् अवभृथं यावत् ऋतावपि स्त्रियं नोपेयात् । तथा पित्रोर्मरणदिनमारभ्य यावत्संवत्सरम् । तुशब्दश्चार्थः । माधवस्तु रात्रौ गच्छन् ब्रह्मचार्येव भवतीति व्याचष्टे । प्राणं वा ते स्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते इत्याथर्वणिकश्रुतेः । महाभारते त्वनृतुगमनपरिहारेण ऋतुगाम्येव ब्रह्मचारीत्युक्तम् ।

ऋतौ गच्छति यो भार्यामनृतौ नैव गच्छति ।
यावज्जीवं ब्रह्मचारी मुनिभिः परिकीर्त्तितः ॥

इत्यनेन ऋतावेव गच्छेन्नान्यदेति परिसंख्यैव व्याख्याता भवति । अन्ये तु

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

इत्यगमने दोषश्रवणान्नियमं व्याचक्षते । ऋतुश्च प्रथम एव। अथ ऋतुमत्याः प्राजापत्यमृतौ प्रथमे इत्याश्वलायनपरिशिष्टात् । तस्मिन्पुत्रार्थी युग्मासु समासु रात्रिषु संविशेत् । अयुग्मासु कन्यार्थी ।

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम् ॥

इति मनुस्मरणात् । रात्रिसामान्योपादानेऽप्यर्धरात्रादनन्तरं गन्तव्यम् । तथा च

आश्वलायनाचार्यः,

पत्नीमृतुमतीं स्निग्धां तृप्तां भोगविवर्जिताम् ।
उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः ॥ इति ।

निशाशब्दग्रहणाद्दिवसप्रतिषेधः । तदाहतुः

शङ्खलिखितौ,

नार्त्तवे दिवा मैथुनमर्जयेदल्पभाग्या अल्पवीर्याश्च दिवा प्रसूयन्ते ऽल्पायुषश्चेति ।

आर्त्तवे इति विशेषोपादानादनृतौ दिवा गमने न निषेध इति यत्,तन्न । गत्वा चैव दिवा स्त्रियमिति याज्ञवल्क्येन सामान्यतः प्रायश्चित्ताभिधानात् ।

प्रवासादागतस्य दिवा ऽपि गमनमभ्यनुजानाति

व्यासः,

अनृतावृतुकाले वा दिवा रात्रावथापिवा ।
प्रोषितस्तु स्त्रियं गच्छेत् प्रायश्चित्ती भवेन्न च ॥ इति ।

तथा सकामायामपि दिवा गमनमुक्तम्

अग्निस्मृतौ,

कामान्धां मनुजोऽनिच्छन्नपि पत्नीं बहुप्रजाम् ।
प्रशस्तेऽहन्यशस्ते वा रात्रौ वा मतिमान्व्रजेत् ॥

"स्त्रियो रक्ष्या यतः स्मृता" इति याज्ञवल्क्योक्तहेतोश्च । ऋतौ गमने यज्ञोपवीतविन्यासे विशेषमाह

भरद्वाजः,

भार्यासंभोगसमये पुष्पकालं विना ऽन्यदा ।
ब्रह्मसूत्रं द्विजः कुर्यान्निवीतं पृष्ठभागतः ॥ इति ।

अनेनापि "पृष्ठदेशावलम्बि ग्राम्यधर्मेषु" इति सामान्यं निगमवाक्यम् ऋतुकालातिरिक्तकालगमनविषयं व्याख्येयम्। युग्मास्वपि रात्रिषु पुत्रोत्पत्तौ उत्तरोत्तरा एव रात्रयः प्रशस्ताः। अत एव

आपस्तम्बः,

चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमनमुपदिशन्तीति।

व्यासोऽपि,

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः।
नवम्यां सुभगा नारी दशम्यां चतुरः पुमान्॥
एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः।
त्रयोदश्यां सुता तस्य वर्णसंकरकारिणी॥
धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढव्रतः।
प्रजायते चतुर्दश्यां गुणौघैर्जगतीपतिः॥
राजपत्नी महाभागा राजवंशगता तथा।
जायते पञ्चदश्यां तु बहुपुत्रा पतिव्रता॥
विद्यालक्षणसंपूर्णः सत्यवादी जितेन्द्रियः।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान्॥ इति।

युग्मास्वपि गच्छन्प्रतिषिद्धेतरास्वेव गच्छेत्। तत्र प्रतिषिद्धदिनान्याह

मनुः,

अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥

चकाराद्रविसंक्रान्तिमपि ।

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेवच ॥
तैलस्त्रीमांससंभोगी पर्वस्वेतेषु यः पुमान् ।
विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते ॥

इति विष्णुपुराणात् । यद्यपि पूर्यते मासो यस्मिन्निति पर्वेति त्पत्त्या पौर्णमास्यमावास्ययोरेव पर्वत्वं तथापि पर्वाणीति वचनाच्छत्रिन्यायेन पर्वापर्वसमुदाये पर्वशब्दः प्रयुक्तः । ाक्षरायां तु ब्रह्मचार्येव पर्वाणीत्यत्र बहुवचनस्य आद्यर्थतया मीचतुर्दश्योर्ग्रहणमुक्तम् । स्नातकः ऋतुस्नातभार्यः ।

पैठीनसिरपि,

न प्रथमे न द्वितीये न तृतीये न चतुर्थ आह्वयेदिति । यत्तु स्नानात्पूर्वं तस्याः स्पर्शनिषेधेनैव गमनस्य निषिद्धत्वात्त- ने च प्रायश्चित्तविधानात् स्नानादूर्ध्वं चतस्रो रात्रीर्वर्जये- ाहुः । तन्न ।

निशाषोडशकं नारी संज्ञितर्त्तुमती सदा ।
तावत् योग्या प्रजास्थाने विना ऽऽद्याहश्चतुष्टयम् ॥
षोडशस्वृतुसंज्ञेषु दिनेष्वाद्यं चतुर्दिनम् ।
आर्त्तवाशौचसंपृक्तं वर्जयित्वा परेष्विति ॥

इति बृहस्पतिशौनकवचोविरोधात् ।

यत्तु हारीतवचनं "चतुर्थेऽहनि ऋतुस्नातायां युग्मासु च र्भाधानं ब्रह्मगर्भं संदधातीति" तच्चतुर्थदिवसे रजोनिवृत्तौ द्रष्ट- म् । यदर्त्तुमती भवत्युपरतशोणिता तदा संभवकाल इति भिलस्मरणात् ।

इदमत्र चिन्त्यते। गर्भाधानं किं गर्भसंस्कारः क्षेत्रसंस्कारो वेति। कुतः संशयः, उभयथा वचनदर्शनात्। यथा

"निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः"।

"निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः"।

इत्यादिषु यत्तच्छब्दोपात्तानां गर्भाणामेव संस्कार्यत्वमवसायात्।

स्नातायाः सुकृतायाश्च ऋतुमत्याः समेऽहनि।
दक्षिणस्यां नासिकायां सिञ्चेद्दूर्वारसं पतिः॥
जायाया दक्षिणे नासारन्ध्रे सिञ्चेत्तु तद्रसम्।

इत्यादिना जायायाः संस्कार्यत्वमवसायाच्च।

किं पुनर्युक्तं, गर्भसंस्कार इति। कुतः, समाख्यासामर्थ्यात्। यथा पुंसवनादिशब्देऽप्यवयवशक्त्यैव गर्भसंस्कारत्वं तथा गर्भस्याधानं यदि वा गर्भे आधानम् अथवा गर्भ आधीयतेऽनेनेति व्युत्पत्त्या सर्वथा गर्भस्यैव संस्कार्यत्वं वक्तव्यम्। गर्भाधानं पुंसवनमित्याद्युपक्रम्य एते चत्वारिंशत्संस्कारा इत्यभिधाय एतैश्चत्वारिंशता संस्कारैः संस्कृत इति गौतमेन पुरुषसंस्कारतोपसंहारात्। पूर्वोक्तयोगिमनुवचनाभ्यामपि तथाऽभिधानाच्च। यदि तु गर्भ आधीयते यस्मिन्नित्यधिकरणवचनतोच्येत तदा कुर्यादिति विध्यनुपपत्तिः। अधिकरणकर्त्तव्यताया अशक्यत्वेन विधिविषयत्वाभावात्। किंच। अग्निमादधीतेत्यत्र यथा आधानेनाग्निः संस्क्रियते तथा गर्भोऽप्याधानेन संस्कार्य इति माप्ते,

अभिधीयते क्षेत्रसंस्कार इति। कुतः, गर्भ आधीयतेऽनेनेति करणव्युत्पत्त्या

जायाया दक्षिणे नासारन्ध्रे सिञ्चेत्तु तद्रसम्।
उदरस्थे रसे तस्मिन्नाचान्तसलिलां सतीम्॥

उपगच्छेद्वधूमेवं विधिनोपगमे कृते ।
गर्भः स्थिरः स्यादित्येवं गर्भलम्भनमूचिरे ॥

इति शौनकीयवाक्यशेषेण चाश्वगन्धादिरससेचनसंस्कृताया वध्वा उपगमनसंस्कारस्यैव गर्भाधानत्वेन

विष्णुर्योनिं जपेत्सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती ।

इतिद्वितीयानिर्दिष्टयोन्युपगमस्य च तत्त्वेन क्षेत्रसंस्कारतासिद्धेः। यत्तु आधानेनाग्नेरिव गर्भस्य संस्कार इति, तन्न। दृष्टान्तवैषम्यात्।*आधाने हि द्वितीयया ऽग्नेः संस्कार्यत्वं प्रत्यक्षम्। न चात्र तथा ऽस्ति । न च स्त्रीसंस्कारोऽनर्थकस्तस्या भूतभाव्युपयोगाभावादिति वाच्यम् । असंस्कृतक्षेत्रोत्पन्नपुत्रस्य दुष्टत्वस्मरणेन तत्परिहारस्यैवार्थत्वात्। न चैवं मनुगौतमाद्युक्तगर्भसंस्कारत्वानुपपत्तिः । संस्कृतक्षेत्रोत्पत्तिजनितातिशयाभिप्रायेण तदुपपत्तेः। यथा ऽऽहरणसंस्कृतारण्युत्पन्नस्याग्नेः। अत एव

गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति ।

इत्याचार्योऽकृतगर्भाधानसंस्कारायां जातस्यैव दुष्टत्वमाह । गर्भसंस्कारत्वेऽस्य प्रतिगर्भमावृत्तिः स्यात्। सा च ऋतुमत्यां प्राजापत्यमृतौ प्रथमे इति परिशिष्टविरुद्धेत्यलं विस्तरेण।

अथ गर्भाधाने तिथ्यादयो निर्णीयन्ते ।

---

* "आधाने हि द्वितीयया ऽग्नेः संस्कार्यत्वं प्रत्यक्षं, न चात्र तथा ऽस्ति" इत्यस्य स्थाने "मन्थननिष्पन्नस्याग्नेराधानात् प्राक् सिद्धत्वेनाधानसंस्कार्यता घटते, न गर्भस्याधानजन्यतया। तस्य प्रागाधानात् संस्कारानर्हत्वात् । न चाहवनीयत्ववद् गर्भः संस्कारो, येन आधानेनैवासौ जन्येत । अथ स्त्री संस्कारो गर्भः, स चाधानेन इति,तदेष्टापत्तिः" इति पाठः पुस्तकान्तरे दृश्यते ।

श्रीधरीये,

षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं
चतुर्दशीमप्युभयत्र हित्वा।
शेषाः शुभाः स्युस्तिथयो निषेके
वाराः शशाङ्कार्यसितेन्दुजानाम् ॥

शशाङ्कश्चन्द्रः। आर्यो बृहस्पतिः। सितः शुक्रः। इन्दुजो बुधः।

नक्षत्रनिर्णयस्तत्रैव,

विष्णुप्रजेशरविमित्रसमीरपौष्ण-
मूलोत्तरावरुणभानि निषेककार्ये।
पूज्यानि पुष्यवसुशीतकराश्विचित्रा-
दित्याश्च मध्यमफला विफलाः स्युरन्ये ॥

विष्णुः श्रवणम्। प्रजेशो रोहिणी। रविर्हस्तः। मित्रोऽनुराधा। समीरः स्वाती। पौष्णं रेवती। उत्तरास्तिस्रः। वरुणः शतभिषा। एतान्येकादश नक्षत्राणि पूज्यानि। वसुर्धनिष्ठा। शीतकरो मृगः। अश्विः अश्विनी। आदित्यः पुनर्वसुः। एतानि षण्मध्यमफलानि। अवशिष्टानि दश नक्षत्राणि विफलानि, वर्ज्यानीत्यर्थः। विशेषनिषिद्धानि

ज्योतिःशास्त्रे,

पित्र्यं पौष्णं नैरृतं वाऽपि धिष्ण्यं
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम्।
पुष्टः क्षामां पुत्रकामो हि गच्छन्
सल्लक्षण्यं पुत्रमाप्नोति धीमान् ॥

पित्र्यं मघा। पौष्णं रेवती। नैर्ऋतं मूलम्। अत्र च मूलरेवत्योर्विहितप्रतिषिद्धत्वाद्विकल्पः। एतत्त्रितयपरित्यागे निमित्तमुक्तं

विष्णुपुराणे,

यस्मिन्नृक्षे भवेद्गर्भस्तस्माद्यद्दशमं भवेत् ।
तत्रापत्यं प्रजायेत तस्मादेतत्त्रयं त्यजेत् ॥ इति ।

क्षामां कृशाम् । क्षामता च रजस्वलाव्रतेनैव । तद्व्रतं चाग्रे दर्शयिष्यते । यदि तेन न भवति तर्हि लघुरूक्षादिभोजनेन पुत्रोत्पत्त्यर्थं कर्त्तव्या । पुरुषेण च पुष्ट्यर्थं स्निग्धादिभोजनमवश्यं कार्यम् । तथा च

बृहस्पतिः,

स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान् पुंसोऽधिके भवेत् ।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत् ॥
लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतम् । इति ।
वृष्यं वीर्यविवर्द्धनं द्रव्यम् ।

मनुरपि,

पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥ इति ।

शुक्रं रेतः पुरुषस्य । स्त्रियाः शोणितम् । शुक्रशोणितसंभवः पुरुष इति वसिष्ठोक्तेः । तस्मिन् पुंबीजे स्त्रीबीजादधिके अयुग्मास्वपि पुमानेव भवति । परं तु स्त्र्याकारः । स्त्रीबीजाधिक्ये युग्मास्वपि कन्यैव । परं तु पुरुषाकारा । बीजस्योपादानकारणत्वेन प्राबल्यात् । कालस्य च निमित्तकारणत्वेन दौर्बल्यात् । उभयोः समे शुक्रे अपुमान् नपुंसकम् । अथवोत्सृज्यमानस्य शुक्रस्य द्वैधीभावेन स्थलद्वयपाते समे सति पुंस्त्रियौ यमौ जायेते ।

तदुक्तं,

यदा विशेद् द्विधा भूतं बीजं पुष्पं परिक्षरत् ।
तदा भवेद् द्विधा गर्भः सूतिर्वेशविपर्ययात् ॥

अस्यार्थः। यदा बीजं शुक्रं परिक्षरत् पतत्सत् पुष्पं शोणितं प्रति द्विधा भूतं विशेत् गर्भकोशे प्रविशेत्, तदा गर्भो द्विधा स्थलद्वये भवेदित्यर्थः। तत्रापि स्थलद्वयेऽपि पुंशुक्रे अधिके पुमांसौ भवतः। स्थलद्वयेऽपि स्त्रीशुक्रे अधिके स्त्रियावेव। स्थलद्वयेऽपि स्त्रीपुंशुक्रयोः अल्पत्वबहुत्वाभ्यां पुंस्त्रियौ भवतः। पुमांश्च स्त्री चेति पुंस्त्रियौ। स्थलद्वयेऽपि स्त्रीपुंबीजयोः समे साम्ये नपुंसकावित। रोगादिना उभयोः शुक्रे क्षीणे परिमाणतो वा अल्पे सति विपर्ययो गर्भानुत्पत्तिरित्यर्थः। यमलजातयोर्गर्भत एव ज्यैष्ठ्यं न जन्मत इति। यथाऽऽह

मनुः,

जन्मज्यैष्ठ्येन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता॥ इति।

यमयोर्यमलजातयोर्गर्भेषु जन्मतः गर्भजन्मनैव ज्येष्ठता मुनिभिः स्मृता उक्तेत्यर्थः। यस्य प्रथमं गर्भकोशे जन्म स ज्येष्ठः। यस्य पश्चात्स कनिष्ठः। न तु यस्य गर्भकोशात्प्रथमं निर्गमनं स ज्येष्ठ इति। गर्भकोशे प्रथममुत्पन्नस्यापि पश्चादुत्पन्नेन मार्ग-निरोधात्पश्चात्प्रसूतिः। सूतिर्वेशविपर्ययादिति स्मरणात्। वेशो गर्भकोशसंवेशः स्थितिरिति यावत्। तद्विपर्ययश्चाग्रपश्चाद्भाव-स्तस्मात्सूतिः प्रसूतिरित्यर्थः।

युगपदुत्पन्नयोर्मध्ये तु यस्यादौ मुखसंदर्शनं स ज्येष्ठः।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्।
संतानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्॥

इति देवलस्मरणादिति केचित्।

वस्तुतस्तु निषेकक्रमेण ज्येष्ठत्वेऽनेकपत्नीकस्यैकस्यां पूर्वं

निषिक्तो गर्भः शल्यीभूतोऽन्यस्याश्चानन्तरं निषिक्तः स्वकाले उत्पन्नस्तदपेक्षया विलम्बोत्पन्नस्य ज्येष्ठत्वमसङ्गादुत्पत्तिक्रमेणैव ज्येष्ठत्वं साधीय इत्यादि प्रपञ्चयिष्यते राजनीतिप्रकाशे। ऋतुयौगपद्ये गमनक्रममाह

देवलः,

यौगपद्ये तु तीर्थानां विप्रादिक्रमशो व्रजेत्।
रक्षणार्थमपुत्राणां ग्रहणक्रमशोऽपि वा॥ इति।

तीर्थमृतुस्तद्यौगपद्ये विप्रादिक्रमशः ब्राह्मण्यादिक्रमेण ग्रहणक्रमशः विवाहक्रमेण वा गच्छेदित्यर्थः। ननु विवाहस्यापि वर्णक्रमेणैव वक्ष्यमाणत्वात्पृथग्विवाहक्रमोपादानं व्यर्थमिति चेत्। नैवम्। प्रथमतः स्ववर्णादिक्रमेणोढदारस्य दैवादन्यतरवर्णदारनाशेऽन्तरितस्य पुनस्तद्वर्णकन्यकां परिणीतवतः सवर्णापुत्रवतो दारेषु ऋतुकालयौगपद्ये विवाहक्रमेण गमनं नियम्यते इति ग्रहणक्रमोपादानस्य सार्थकत्वात्। यद्वा सवर्णास्वेव ऋतुयौगपद्ये विवाहक्रमेण गमनमिति पृथक् विवाहग्रहणम्। अनेन ऋतुकालातिक्रमः कथंचिदपि न कार्य इत्युक्तं भवति। अत एव

मनुः,

ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा।
पर्ववर्जं व्रजेदेनां तद्व्रतो व्रतकाम्यया॥

तद्व्रतः पुत्रोत्पत्तिव्रतः। इदं च ऋतुगमनं स्वस्थं सन्निहितं प्रत्युच्यते।

"ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति"।
"यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति"।

इति च पराशरस्मरणात् । अत एवास्वस्थादेरगमने दोषाभावमाह

व्यासः,

व्याधिते बन्धनस्थे वा प्रवासेष्वथ पर्वसु ।
ऋतुकालेषु नारीणां भ्रूणहत्या प्रमुच्यते ॥

नारीणामृतौ प्रवासादिगते पत्यौ अगमनेऽपि भ्रूणहत्या न भवतीत्यर्थः । एतदजातपुत्रविषयम् । जायमानो वै ब्राह्मणः त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा स्यादिति श्रुतेः । इदं चानृण्यं ज्येष्ठजननमात्रेणैव भवति । इतरेषां कामजत्वात् । अत एव

मनुः,

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते ।
स एव धर्मजः पुत्रः कामजानितरान्विदुः ॥ इति ।

स्त्रीणामपि ऋतुकाले रागद्वेषादिना पुरुषं प्रत्यगमने दोषमाह

पराशरः,

ऋतुस्नाता तु या नारी भर्त्तारं नानुमन्यते ।
सा मृता तु भवेन्नारी शूकरी च पुनः पुनः ॥ इति ।

अनुगमनम् उपसर्पणं समीपगमनमिति यावत् ।

यमोऽपि,

ऋतुस्नाता तु या भार्या भर्त्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं च परित्यजेत् ॥

अथ गर्भाधानाकरणे प्रायश्चित्तम् ।

तत्राश्वलायनः,

गर्भाधानस्याकरणे तस्यां जातस्तु दुष्यति ।
अकृत्वा गां ततो दत्त्वा कुर्यात्पुंसवनं व्रती ॥ इति ।

अथ गर्भाधानादौ कर्तृनिर्णयः ।

तत्र देवलः,

ऋतुकालेऽभिगमनं भर्त्रा कार्यं प्रयत्नतः ।
पुंसवादीनि कर्माणि चान्यैर्वाऽपि कारयेत् ॥ इति ।

अत्र भर्त्रेति कर्तृनियमादसन्निधाने अशक्तौ वा अन्यः प्रतिनिधिर्नास्तीति गम्यते । अत एव

पैङ्ग्यः,

गर्भाधानं पिता कुर्यादृतुस्नातासु शक्तिमान् ।
ऋत्वन्तरे वा कुर्वीत हीनसत्त्वो न दोषभाक् ॥

इत्यशक्तस्य कालान्तरमनुकल्पयति न कर्त्रन्तरम् । पितेति जनिष्यमाणगर्भापेक्षया । ऋत्वन्तरे द्वितीयादावपि हीनसत्त्वो दोषभाग्नेत्यर्थः । पुंसवनादिषु तु अनुकल्पमप्याह । पुंसवादीनीति । आदिशब्दादनवलोभनसीमन्तादीनां ग्रहणम् । अत एव

बैजवापः,

पिता पुत्रस्य संस्कारं कुर्याद्यदि न शक्नुयात् ।
अन्येन गुणयुक्तेन कारयेत्स्वस्वशास्त्रतः ॥ इति ।

संस्कारं पुंसवनादिकम् । अशक्तिरसंनिधानस्याप्युपलक्षणम् । अत एव

व्यासः,

मृते देशान्तरगते पत्यौ स्त्री यद्यसंस्कृता ।
देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत् ॥

मृते, गर्भं समाधायेति शेषः । अथवेदं वाक्यद्वयं भर्तृमर-

णक्लीवत्वादौ गर्भाधानेऽपि प्रतिनिधिविधानार्थत्वेन व्याख्येयम्। अस्मिन् पक्षे संस्कारशब्देऽसंकोचेन गर्भाधानादौ सर्वत्र वर्त्तते। न शक्नुयादिति पदं क्लैब्यादिना सर्वात्मना शक्त्यभावपरं व्याख्येयम्। देशान्तरगते सर्वात्मना अश्रूयमाणवार्त्ते इति वक्तव्यम्। मरणसाहचर्यात्।

पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः॥

इत्याश्वलायनस्मरणाच्च। गुरुर्ज्येष्ठः। वंश्यः सापिण्डः। इदमेवाभिप्रेत्याह

**याज्ञवल्क्यः,**

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।
सापिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥ इति।

एतमेवार्थं स्पष्टमाचष्ट

**ब्रह्मपुराणं,**

गर्भाधानादिसंस्कर्त्ता पिता श्रेष्ठतमः स्मृतः।
अभावे स्वकुलीनः स्याद् बान्धवो वाऽन्यगोत्रजः॥ इति।
एतदभावे असंबन्ध्यपि ब्राह्मणः प्रतिनिधिः कार्यः।
बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम्।
इति महाभारते सत्यवतीं प्रति भीष्मवचनात्। तत्स्वरूपमाह

**तदेव,**

आर्यावर्त्तसमुद्भूतः स्वशाखी श्रेष्ठ उच्यते।
स्वशाखी स्वशाखीयः।
ब्राह्मणः सर्ववर्णानां श्रोत्रियो वा स्ववर्णजः।
गृहस्थः सर्ववर्णेषु श्रेष्ठ इत्यभिधीयते॥

अभार्यस्त्वधमो ज्ञेय उपकुर्वाणनैष्ठिकौ ।
आचार्यौ मध्यमौ ज्ञेयावसगोत्रौ तु मध्यमौ ॥
वानप्रस्थयतीनां तु कर्तृत्वं नेष्यते सदा ॥ इति ।

अथ यथोक्तविधिना गर्भानुत्पत्तौ गर्भोत्पत्तिप्रकारः ।

**बौधायनः,**

प्रजामुत्पादयेदौषधमन्त्रयोगेन । तत्रौषधमाह

**पारस्करः,**

सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्पायाः उपोष्य पुष्येण मूलमुत्खाय चतुर्थ्यां स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चनीयमोषधी त्रायमाणेत्यादिना ।

सिंही कण्टकारिका । उपवासमूलोत्खननयोः पतिः कर्त्ता । तच्च सेचनं प्राजापत्यहोमानन्तरम् । तथाच

**बैजवापः,**

सा यदि नादधीत सिंह्याः श्वेतपुष्पाया उपोष्य पुष्येण मूलमुत्खाय चतुर्थ्यां स्नातायां निशि प्राजापत्यं स्थालीपाकं श्रपयित्वा प्रजापतये हुत्वा पश्चादग्नेर्वीरशयने प्राचीमुत्तानां संवेश्य चत्वाभ्यामोषधीमुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायां नस्तः कुर्यादियमोषधी त्रायमाणेति ।

## अथ पुंसवनं निरूप्यते ।

तच्च पुमान् सूयते येन कर्मणेति व्युत्पत्त्या गर्भस्य पुंरूपताऽऽपादकः कर्मविशेषः ।

आ ते गर्भो योनिमेतु पुमान् बाण इवेषुधिम् ।
आ वीरो जायतां पुत्रस्त दशमास्यः ॥

इति मन्त्रलिङ्गात् । अस्यार्थः । हे पत्नि तव योनिं गर्भाशयस्थानं पुमान् गर्भः आ एतु आगच्छतु । अयं गर्भः पुरूपो भवत्वित्यर्थः। कः कमिव, बाणः इषुधिमिव । ते अयं पुत्रः दशमास्यः दशभिर्मासैः प्रसूतो वीरोऽनिशयितवीर्यवान् आ जायताम् आविर्भवत्विति ।

शौनकोऽपि,

पुमान्प्रसूयते येन तत्पुंसवनमीरितम् । इति ।

अनेन पुंसवनशब्दस्य कर्मनामधेयत्वमप्याविष्कृतम् । तच्च गर्भस्य चलनात्प्रागेव कार्यम् । पुंसः सवनं स्पन्दनात्पुरेति योगिस्मरणात् ।

पुरा तु स्पन्दनात्कार्यं सवनं तु विचक्षणैः ।

इति शङ्खस्मरणाच्च । बृहस्पतिस्तु स्पन्दितेऽप्याह । सवनं स्पन्दिते शिशाविति । स्पन्दिते इति आदिकर्मणि निष्ठया स्पन्दितुमारब्ध इत्यन्ये। स्पन्दनं च तृतीये मासि भवति। तृतीये स्पन्दते तत इति योगिस्मरणात् । स्पन्दनात्पुरेति वदता द्वितीये मासि पुंसवनं कर्त्तव्यमित्युक्तं भवति । तथाच

जातूकर्ण्यः,

द्वितीये वा मासि पुंसवनं भवेदिति ।

पारस्करोऽपि,

मासे द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चंद्रमाः स्यात् तत्र पुंसवनमिति ।

बैजवापोऽपि, मासि द्वितीये तृतीये वा पुरा स्पन्दतइति। तच्च गर्भस्पष्टतायाम्,

व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथवा ।

इति जातूकर्ण्यस्मरणात् । अनेन द्वितीये गर्भास्पष्टतायां तृतीये इति सिध्यति । तथाच

शौनकः,

अथ पुंसवनं कुर्यात्तृतीये मासि पुंस्त्वदम् । इति ।

तदपि गर्भस्पष्टतायाम् । अस्पष्टतायां तु चतुर्थे कार्यम् ।

व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत् ।

गर्भोऽव्यक्तस्तृतीये चेच्चतुर्थे मासि वा भवेत् ॥

इति तस्यैव स्मरणात् । गर्भव्यक्ततायाश्च लक्षणमुक्तं

सुश्रुते,

सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योन्या इति ।

इदं तु प्रथमगर्भे । द्वितीयादिगर्भे तु चतुर्थे षष्ठाष्टमयोर्वा ।

तृतीये मासि कर्त्तव्यं गृष्टेरन्यत्र शोभनम् ।

गृष्टेश्चतुर्थे मासे तु षष्ठे मास्यथवा ऽष्टमे ॥

इति बृहस्पतिस्मरणात् । गृष्टिरेकवारं प्रसूता । सकृत्प्रसूतः गृष्टिः स्यादिति त्रिकाण्डीस्मरणात् । उक्तकालातिक्रमे सीमन्तेन सह कर्त्तव्यत्वमाह

जातूकर्ण्यः, सीमन्तेन सहाथवेति । इदं च पुंसवनं शूद्राणामप्यमन्त्रकं भवति । तदाह

बृहस्पतिः,

वर्धिष्णूनां चतुर्थानामपि कर्तव्यतां गतम् ।

अमन्त्रकं तु कर्तव्यं पुंकर्म तु शुभार्थिनाम् ॥ इति ।

वर्धिष्णूनां वृद्धिशीलानाम् । गर्भाणामिति शेषः । ये शुभमर्थयन्ते तादृशानां चतुर्थानां शूद्राणां पुंकर्म पुंसवनम् अमन्त्रकं कर्तव्यमित्यर्थः ।

इदं च गुरुशुक्रास्ताधिमासादिष्वपि कार्यम्। द्वितीयत्वादिना माससनियमात्। तथाच

बृहस्पतिः,

मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः।
न दोषकृत्तदा मासलक्षणो बलवान् इति॥

वृद्धिर्दास्यं पुंसवादि सेनकर्मानुमासिकम्।
नित्यं मास्यधिकेऽन्यत्तु सर्वदैवादि चोत्तरे॥ इति।

मासलक्षणः, काल इति शेषः। पक्षनिर्णयमाह

बैजवापः,

अथ पुंसवनानवलोभने करोति आपूर्यमाणपक्षे पुण्याहे यदहः पुंसा नक्षत्रेण चन्द्रमा युज्यते इति। अत्र विशेषमाह

लल्लः,

प्रतिपत्पूर्वदशाहं मध्यबलः शीतगुः सितपक्षे।
संपूर्णबलः पूर्णः कृष्णपक्षे च पञ्चमीं यावत्॥ इति।

प्रतिपत्पूर्वा ऽऽदिर्यस्मिन्दशाहे, प्रतिपदमारभ्य दशमीपर्यन्तमित्यर्थः। अत्र तिथ्यादिनिर्णयमाह

नृसिंहः,

रिक्ताश्च पर्व नवमीं त्यक्त्वा पुंसवने शुभाः। इति।

रिक्ताश्चतुर्थीनवमीचतुर्दश्यः। नवम्याः पुनरुपादानं दोषाधिक्यख्यापनाय। वारानाह

बृहस्पतिः,

गुरुशुक्रबुधेन्दूनां द्रेष्काणा दिवसांशकाः।
तेषामुदयहोरा च पुंसवेऽतिशुभावहाः॥ इति।

गुरुशुक्रबुधेन्दूनां वासरा ग्राह्याः। एतेषामेव द्रेष्काणरूपा दिवसांशका ग्राह्याः। द्रेष्काणश्च राशेस्तृतीयोंऽशः। एतदुक्तं भवति। मेषलग्ने तृतीयद्रेष्काणाधीशो गुरुः। तेन गुरुद्रेष्काणे कार्यम्। एवमन्यत्राप्यूह्यम्। उदयाः लग्नानि। तानि च गुर्वादीनामेव ग्राह्याणि। एवं होरा दिनपञ्चदशो भागः। नक्षत्राण्याह

गर्गः,

कुर्यात्पुंसवनाख्यं तु पुन्नामर्क्षे शुभे दिने।
पुन्नाम श्रवणं तिष्यः स्वाती हस्तपुनर्वसू॥
मूलं प्रौष्ठपदं चानुराधा मृगशिरोऽश्विनी। इति।

राशीनाह

बृहस्पतिः,

कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः। इति।

कुलीरः कर्कटः। शेषाः नव राशयः। अत्र प्रतिप्रसवमाह

स एव,

अनुक्ते चापि राशौ तु शुभं स्याच्छुभवीक्षिते।
कन्यायां न प्रशंसन्ति शुभदृष्टे युतेऽपि च॥ इति।

अनुक्ते निषिद्धेऽपि राशौ शुभग्रहवीक्षिते शुभं भवति। कन्याराशौ तु न तथेत्यर्थः।

## अथानवलोभनम्।

येन कर्मणा जातो गर्भो नावलुप्यते तदनवलोभनम्। छान्दसो वर्णव्यत्ययः। मा ऽहं पौत्रमघं नियामिति मन्त्रलिङ्गात्। अस्यार्थः। अहं पौत्रं पुत्रनिमित्तमघं व्यसनं मा नियां मा या-

सिपम् । एतस्यैव गर्भरक्षणकर्मत्वमुक्तं शाख्यायनगृह्ये, चतुर्थे मासि गर्भरक्षणमिति । तथाह

आश्वलायनः,

उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं चेति । कस्यांचिदुपनिषदि इदं कर्मत्रयमाम्नातमित्यर्थः ।

बैजवापोऽपि,

अथ पुंसवनानवलोभने करोति आपूर्यमाणपक्षे पुण्याह यदहः पुंसा नक्षत्रेण चन्द्रमा युज्यते इति । अनेन उभयोः समानकालत्वं दर्शितम् । ततश्च पुंसवनोक्त एव तिथ्यादिनिर्णयोऽत्रापि ज्ञेयः । तत्स्वरूपं चाह

आश्वलायनः,

अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति प्रजावज्जीवपुत्राभ्यां हैके इति ।

प्रजावता ऋषिणा दृष्टो मन्त्रः प्रजावान् । जीवपुत्रेण ऋषिणा दृष्टो जीवपुत्रः । अत्र च दूर्वारसावसेचनं हृदयस्पर्शनं चेति द्वयमनवलोभनम् । शेषं सर्वं पुंसवनमिति गृह्यप्रसिद्धिः । एते च पुंसवनानवलोभने गर्भसंस्कारत्वात्प्रतिगर्भमावर्त्तनीये ।

प्रतिगर्भमिदं कर्म कार्यं पुत्रीयता ऽखिलम् ।
प्राशनस्पर्शकरणाद्गर्भस्थः संस्कृतो भवेत् ॥
पुंसवे मन्त्रसामर्थ्याद्वेत्ति प्राग्जन्मनः स्मृतिम् ।
तस्मात्पुंसवसंस्कारः प्रतिगर्भं प्रवर्त्तते ॥

इति शौनकस्मरणात् । यत्तु मिताक्षरायाम्, एते च पुंसवनसीमन्तोन्नयने क्षेत्रसंस्काररूपत्वात् सकृदेव कार्ये इत्यनेन पुंसवनस्य सकृत्करणमुक्तं, तच्चिन्त्यम् । समारूपया गर्भसंस्का-

रत्वावगमादुक्तशौनकवाक्याच्च प्रतिगर्भमावर्त्तनीयत्वात् । यदपि अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमगर्भे इति पारस्करवचनमत्र प्रमाणतया प्रतीयते, तदपि सीमन्तोन्नयनस्य प्रथमगर्भकर्त्तव्यत्वं प्रतिपादयति, न पुनः पुंसवनस्य। उक्तवचनविरोधापत्तेः। वचनातिदेशस्तु धर्मान्तरोपसंग्रहार्थः । अपरार्कस्वरसोऽप्येवम् ।

**कात्यायनकारिकाऽपि,**

अथ पुंसवनं वक्ष्ये प्राग्गर्भचलनाद्भवेत् ।
गर्भसंस्कार एवायमिति कर्कस्य संमतिः ॥
अतस्तद् गर्भसंस्कारात्प्रतिगर्भं प्रयुज्यते । इति ।

## अथ सीमन्तोन्नयनम् ।

सीमन्तः उन्नीयते यस्मिन्कर्मणि तत् सीमन्तोन्नयनमिति कर्मनामधेयम् । तदुक्तं

**संग्रहे,**

त्रेण्या शलल्या दर्भेण उदुम्बरयवाङ्कुरैः ।
विभज्य तस्याः केशेषु मध्ये सीमन्तमुन्नयेत् ॥ इति ।
त्रेण्या त्रिशुक्लया । शलल्या शल्लकरोम्णा ।
श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।

इति त्रिकाण्डीस्मरणात् । औदुम्बरस्तबकाभावेऽन्यवृक्षस्तबको ग्राह्यः ।

औदुम्बरः स्यात्स्तबकस्तदभावेऽन्यवृक्षजः ।
इति कारिकोक्तेः । तदनुष्ठाने कारणमाह

**आश्वलायनाचार्यः,**

पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः ।

आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः ॥
तासां निरसनार्थाय श्रियमावाहयेत्पतिः ।
सीमन्तकरणी लक्ष्मीस्तामावहति मन्त्रतः ॥
श्रिया ऽऽश्रितशरीरिण्यास्तां त्यजन्तीह मोहिताः ।
अलक्ष्म्यो दुर्भगाः क्रूरा राक्षस्यः पिशिताशनाः ॥
गृह्णन्त्यः संप्रगृह्णन्ते पीड्यन्ते च विशेषतः ।
कासांचित्तादृशी शक्तिर्ब्रह्मणा विहिता पुरा ॥
तस्मात्प्रथमगर्भस्य सीमन्ताख्यो विधीयते ।

तच्च तृतीयचतुर्थपञ्चमषष्ठसप्तमाष्टमनवमदशममासेषु यथा-
गृह्यं पूर्वपूर्वासंभवे उत्तरोत्तरे मासि कार्यम् । तत्र

**लौगाक्षिः,**

तृतीये गर्भमासे सीमन्तं कारयेदिति ।

**आश्वलायनः,**

चतुर्थे गर्भमासे सीमन्तोन्नयनमिति ।

**आपस्तम्बोऽपि,**

सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासीति ।

**बैजवापः,**

सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे वा ऽपीति ।

**बौधायनोऽपि,**

स चेत्प्रथमगर्भः स्याच्चतुर्थे मास्युपागते ।
पञ्चमे वा ऽथ षष्ठे वा कुर्यान्नान्दीमुखादिकम् ॥ इति ।

**ज्योतिर्वसिष्ठः,**

चतुर्थे सप्तमे मासि षष्ठे वाऽप्यथवा ऽष्टमे । इति ।

**अत्रिः,**

आधानादष्टमे मासि सीमन्तोन्नयनं भवेत् ।
नवमे मासि वा कुर्याद्यावद् गर्भविमोचनम् ॥ इति ।

**कार्ष्णाजिनिरपि,**

गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा ।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा ॥ इति ।

**शौनकः,**

चतुर्थे गर्भमासे स्यात्सीमन्तोन्नयनक्रिया ।
षष्ठेऽष्टमे वा कुर्वीत सूत्रान्तरविधानतः ॥
अभावे पूर्वपूर्वस्य विदधीतोत्तरोत्तरे । इति ।
मासश्चात्र सौरः सावनो वा । तत्र सौरः

**कालविधाने,**

चतुर्थषष्ठाष्टममासभाजि
सौरेण गर्भे प्रथमे विधेयम् ।
सीमन्तकर्म द्विजभामिनीनां
मासेऽष्टमे विष्णुबलिं च कुर्यात् ॥ इति ।

**अथर्वेऽपि,**

सौरे मासि चतुर्थे तु शुभकर्माणि साधयेत् ।
ग्रहाणां नायकः सूर्यस्तस्मात्सौरे विशिष्यते ॥ इति ।

**बार्हस्पत्येऽपि,**

सौरेणैव चतुर्थे स्यान्मासे षष्ठाष्टमेऽपिवा ।
मासि प्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमासतः॥ इति।

**बृहस्पतिरपि,**

पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना । इति ।

अन्ते अवमाने भवमन्त्यम्, अन्त्यं च तत् त्रिकं चेति, त्रयोदश्यादित्रयमित्यर्थः। तिथय उक्ता

बृहस्पतिना,

पक्षच्छिद्रां च रिक्तां च विना पञ्चदशीं शुभाः।
चतुर्दशी चतुर्थी न कदाचित्स्युः शुभप्रदाः॥ इति।

षष्ठ्यष्टमीद्वादश्यः पक्षच्छिद्राः। चतुर्थीनवमीचतुर्दश्यो रिक्ताः। पञ्चदशी अमावास्या। पौर्णमास्याः क्वचिद् ग्रहणात्। यथा

कालनिर्णये,

शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम्।
पौर्णमासीं प्रशंसन्ति केचित् सीमन्तकर्मणि॥ इति।

चतुर्दशी शुक्ला। कृष्णे चान्त्यत्रिकं विनेति स्मरणात्।

नृसिंहोऽपि,

वर्ज्या रिक्ता ऽष्टमी षष्ठी सीमन्तोन्नयने सदा।
रात्रिश्चन्द्रो ऽष्टमो नाशत्रिजन्मविपदारयः॥ इति।

रात्रिनिषेधे विशेषमाह

नारदः,

विप्रक्षत्रिययोः कुर्याद्दिवा सीमन्तकर्म तत्।
वैश्यसच्छूद्रयोरेतद्दिवा निश्यपि केचन॥ इति।

वारानाह व्यासः,

पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि।
मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ॥ इति।

पुंग्रहाः रविभौमगुरवः। स्त्रीग्रहौ सोमभृगू। नपुंसकौ शनिबुधौ। नक्षत्राण्याह

बृहस्पतिः,

रोहिण्यैन्द्वमादित्यपुष्यहस्तोत्तरात्रयम् ।
पौष्णं वैष्णवभं चैव सीमन्ते दश संस्मृताः ॥ इति ।

ऐन्द्वं मृगशिरः। आदित्यं पुनर्वसुः। पौष्णं रेवती। वैष्णवभं श्रवणः ।

ज्योतिर्ग्रन्थे,

हस्तादित्यश्रवणमभिजित्तिष्यमैत्राश्विनीकं
पुन्नामैवं नवकमथच प्रौष्ठपादद्वयं च ।
मूलं सौम्यं शतभिषगिति त्रीणि नापुंसकानी-
त्यन्यास्तारास्त्वभिनिगदिता योषितो ज्योतिषज्ञैः ॥

अत्र राशयः कालविधाने,

सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकानि श्रेष्ठानीति । अलिर्वृश्चिकः । सिंहाली सक्त्वा ऽन्ये दशराशयस्तदंशाश्च शुभग्रहैर्दृष्टा युक्ता वा श्रेष्ठाः । तदाह

नृसिंहः,

केन्द्रत्रिकोणपुत्रस्थाः शुभाः सर्वे शुभावहाः ।
त्रिषडायगताः पापाः शुभाः सीमन्तकर्मणि ॥ इति ।

अत्राष्टमशुद्धिस्तत्रैव । विशुद्धेऽष्टमेऽपीति । विशुद्धिः सर्वग्रहराहित्यम् । लग्नादष्टमस्थाने सर्वग्रहरहिते इत्यर्थः । अत्र विशेषमाह

नृसिंहः,

लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमभस्योक्तं दोषमाशु व्यपोहति ॥ इति ।

इदं च सीमन्तोन्नयनं क्षेत्रसंस्कारत्वात्प्रथमगर्भे एव कार्य-

मिन्नेकः कल्पः । स चाश्वलायनबौधायनापस्तम्बपारस्करकात्य-विधानादिवचनैः प्रागेव दर्शितः ।

**हारीतोऽपि,**

सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥ इति ।

गर्भसंस्कारत्वात्प्रतिगर्भमावर्तनइत्यपरः कल्पः । तमाह

**विष्णुः,**

सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ।
केचिद्गर्भस्य संस्कारात्प्रतिगर्भं प्रयुञ्जते ॥ इति ।

**कात्यायनसूत्रे रेणुककारिकाऽपि,**

सीमन्तोन्नयनं कार्यं षष्ठे मास्यथवाऽष्टमे ।
गर्भसंस्कार एवायं कर्कोपाध्यायसंमतात् ॥ इति ।

अत्रापि स्वस्वगृह्यानुसारेण व्यवस्था ज्ञेया । अकृतसीमन्तायाः प्रसवे विशेषमाह

**गार्ग्यः,**

यदि सीमन्ततः पूर्वं प्रसूता चेत्तु भामिनी ।
तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत् ॥
पेटके पेटिकायाम् । गर्भं बालकम् ।

**सत्यव्रतोऽपि,**

स्त्री यद्यकृतसीमन्ता प्रसूयेत कदाचन ।
गृहीतपुत्रा विधिवत्पुनःसंस्कारमर्हति ॥ इति ।
पुनःसंस्कारम् अतिक्रान्तसंस्कारमित्यर्थः ।

## अथ विष्णुबलिः ।

तत्र वसिष्ठः,

मास्यष्टमे च गर्भस्य कुर्याद्विष्णोर्बलिक्रियाम् । इति ।

अत्र तिथय उक्तास्तेनैव,

द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः । इति ।

वारानपि स एवाह,

शुभग्रहोदयाः श्रेष्ठास्तेषां च दिवसा अपि ।
पापास्त्र्यायारिगाः श्रेष्ठाः नेष्टाः सर्वे ऽष्टमे स्थिताः ॥ इति ।

उदयाः लग्नानि । दिवसाः वाराः । नक्षत्राण्याह

स एव,

श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते । इति ।

श्रीधरीयेऽपि,

रोहिण्यां वा वैष्णवे पूर्वपक्षे
द्वादश्यां वा सप्तमे वा तिथौ च ।
मध्ये वा ऽह्नः पूर्वभागेन रात्रौ
विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥ इति ।

एतदनुष्ठाने कारणमाह

आश्वलायनः,

तथा विष्णुबलिश्चापि सप्तवर्षेषु पुष्टये ।
प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते ॥
अकृते च भवेद्दोषः कृते पुष्टिं समृच्छति ।
गर्भबाधानिवृत्त्यर्थं सुखसूत्यर्थमेव च ॥
महादोषापनुत्त्यर्थं बलिः कार्यो यथाविधि । इति ।

सप्तवर्धाः सप्तधातवः । एतद्विधिमप्याह

स एव ।

बलिः प्रवक्ष्यते सम्यक् हितार्थाय क्रियावताम् ।
तौ तु सन्मङ्गलस्नातौ दंपती अहताम्बरौ ॥
भवेतां पूर्वदिवसे नान्दीश्राद्धादयस्तथा ।
प्राङ्गणेऽग्निं समाधाय सुमुहूर्ते गृहेऽथवा ॥
घृतैर्हुत्वा ऽऽज्यभागान्तं स्थण्डिले चार्चयेद्धरिम् ।
पद्मस्थं स्वस्तिकस्थं वा समभ्यर्च्य निवेद्य च ॥
अग्नेर्दक्षिणतः कुर्यात्स्थण्डिले यजनं हरेः ।
विना स्थण्डिलयोगेन केचित् जुह्वति च द्विजाः ॥
आज्याक्तेनैव चरुणा वक्ष्यमाणैर्हुवेत्पतिः ।
अतो देवा इति चरुं तस्मिन्नग्नावधिश्रितम् ॥
षड्भिर्विष्णोर्नुकाद्यैश्च दशभिः सप्तभिर्हुवेत् ।
संवामित्यष्टभिर्ऋग्भिश्चतुर्दशभिरेव च ॥
परइत्यथ सूक्तेन पौरुषेण विचक्षणः ।
हुवेदादावथान्ते वा विष्णुर्योनिमिति त्रिभिः ॥
चतुःषष्टिभिरन्नेन हुवेदेवं बलौ हरेः ।
अग्नेः प्रागुत्तरे भागे लिप्त्वा गां गोमयेन तु ॥
सितेन रजसा कुर्याच्चतुरस्रं चतुष्पदम् ।
चतुःषष्टिपदं तस्मिन् कृत्वा स्पष्टं यथाविधि ॥
चतुरङ्गुलमानेन प्रतिप्रति ततो बलिम् ।
निर्ऋत्यादिषु तेष्वन्नैस्तैर्मन्त्रैर्विकिरेद्बलिम् ॥
पिण्डमेकं च तन्मध्ये दद्यादर्घं च विष्णवे ।
नमो नारायणायेति ताराद्यं मन्त्रमुच्चरन् ॥
दंपती प्राशयेतां च पृथक् पिण्डद्वयं शुभम् ।

स्वयं कर्त्ता ऽऽचरेत्कर्म पत्न्या स्पृष्ट इति द्विजः ॥
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
दक्षिणां गुरवे दत्त्वा भुञ्जीयात्तां द्विजैः सह ॥
बलिरेवं प्रकर्त्तव्यः प्रतिगर्भं द्विजातिना । इति ।

अस्य च गर्भपुष्टिफलकत्वश्रवणात्प्रतिगर्भमावृत्तिश्रवणाच्च स्पष्टमेव गर्भसंस्कारत्वम् ।

अथ प्रसङ्गाद्गर्भिणीधर्माः ।

पाद्मे गर्भिणीधर्मप्रस्तावे,

नावस्करेषूपविशेन्मुसलोलूखलादिषु ।
जलं च नावगाहेत शून्यागारं च वर्जयेत् ॥
वल्मीकं नाधितिष्ठेत नचोद्विग्नमना भवेत् ।
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥
न शयालुः सदा तिष्ठेद्व्यायामं च विवर्ज्जयेत् ।
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥
वर्जयेत्कलहं गेहे गात्रभङ्गं तथैवच ।
न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन ॥
न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् ।
न वस्त्रहीना नोद्विग्ना नचार्द्रचरणा तथा ॥
नामङ्गल्यं वदेद्वाक्यं न च हास्याधिका भवेत् ।
कुर्याच्च श्वशुरयोर्नित्यं पूजां माङ्गल्यतत्परा ॥
तिष्ठेत्प्रसन्नवदना भर्त्तुः प्रियहिते रता । इति ।

अवस्करः उत्करः ।

मत्स्यपुराणे दितिं प्रति कश्यपवाक्यम्,

संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ।

न स्थातव्यं न गन्तव्यं वृक्षमूले च सर्वदा ॥
न शयाना सदा तिष्ठेद्वृक्षच्छायां विवर्जयेत् ।
सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
दानशीला तृतीयायां पार्वत्या नक्तमाचरेत् ॥
गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥
शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥
अतिक्षारं तु नाश्नीयात् अत्यम्लमतिभोजनम् ।
अत्युष्णमतिशीतं च गुर्वाहारं परित्यजेत् ॥
इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ।
यश्च तस्यां भवेत्पुत्रः स्थिरायुर्वृद्धिसंयुतः ॥
अन्यथा गर्भपतनमवाप्नोति न संशयः । इति ।

मार्कण्डेयपुराणेऽपि,

गर्भे स्त्रीणां तथाऽन्यस्तु कललाशी सुदारुणः ।

कललं गर्भपिण्डः ।

तस्य रक्षा सदा कार्या नित्यं शौचनिषेवणात् ॥
प्रशस्तमन्त्रलिखनाच्छस्तमाल्यानुधारणात् ।

तथा,

परिवर्त्तसुतौ तौ तु विरूपविकृतौ द्विज ।
तौ तु वृक्षाद्रिपरिखाप्राकाराम्भोधिसंश्रयौ ॥
गर्भिण्याः परिवर्त्तं तौ कुरुतः पादपादिषु ।
अतो न वृक्षं नैवाद्रिं न प्राकारं पयोनिधिम् ॥

परिखां वा समाक्रामेदबला गर्भधारिणी ।
गर्भहन्तुः सुतो विघ्नो मेहनी चापि कन्यका ॥
प्रविश्य गर्भं हन्त्येको भुक्त्वा मेहयते परा ।
जायन्ते मेहनादस्याः सर्पमण्डूककच्छपाः ॥
सरीसृपाणि चान्यानि पुरीषमथवा पुरः ।
वृक्षच्छायाश्रितां रात्रौ स्थितां वा ऽपि चतुष्पथे ॥
श्मशानकष्टभूमिष्ठामुत्तरीयविवर्जिताम् ।
तुदमानां निशीथे च प्रविशन्तामिमौ स्त्रियम् ॥ इति ।

निमार्ष्टिनामिकायां भार्यायां दुस्सहनामकात् ग्रहविशेषादष्टौ पुत्रा अष्टौ कन्यकाश्च जाताः । तन्मध्ये गर्भहनामकः स्त्रीणां गर्भे तिष्ठति तस्य गर्भस्य तस्माद् ग्रहात् रक्षा कार्येत्यर्थः । तथा तत्संततावेव परिवर्त्तनामकस्य ग्रहस्य विरूपविकृती द्वौ सुतौ प्राकारादिषु तिष्ठतः । तावपि गर्भस्य वैरूप्यं विकृतिं वा कुरुतस्तस्माद्गर्भिणी प्राकारादीन्नाधितिष्ठेदित्यर्थः ।

## अथ गर्भिणीपतिधर्माः ।

तत्र याज्ञवल्क्यः,

दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं निधनं वा ऽपि तस्मात्कार्यं स्त्रियाः प्रियम् ॥ इति ।

पत्येति शेषः । संग्रहेऽपि

गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितम् ।
सूते चिरायुषं पुत्रमन्यथा दोषमर्हति ॥

आश्वलायनः,

वपनं मैथुनं तीर्थं वर्ज्जयेद्गर्भिणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्तु वेदवित् ॥ इति ।

वपनं क्षौरम् । मैथुनं गर्भिण्याम् । तीर्थं तीर्थयात्राम् । श्राद्धं श्राद्धभोजनम् । अन्यच्छवानुगमनादि । तथाच

हारीतः,

क्षौरं च तीर्थयात्रां च श्राद्धभोजनमेवच ।
मासात्तु सप्तमादूर्ध्वं वर्ज्जयेद्गर्भिणीपतिः ॥ इति ।

कालविधानेऽपि,

क्षौरं शवानुगमनं नखकृन्तनं च
युद्धं च वास्तुकरणं त्वतिदूरयानम् ।
उद्वाहमम्बुधिजलस्पृशनोपयोग-
मायुःक्षयो भवति गर्भिणिकापतीनाम् ॥ इति ।

क्षौरं क्षुरसाध्यं कर्म तदेव वपनं मुण्डनं चोच्यते । तच्चात्र कर्त्तनस्याप्युपलक्षणम् ।

नोदन्वतोऽम्भसि स्नायात् न च श्मश्र्वादि कर्त्तयेत् ।
अन्तर्वत्न्याः पतिः कुर्वन्न प्रजा भवति ध्रुवम् ॥

इति क्रतुस्मरणात् । यत्तु

वपनस्य निषेधेऽपि कर्त्तनं च विधीयते ।

इति स्मृत्यन्तरवचनं तद्गर्भिणीपतिव्यतिरिक्तानां जीवत्पितृकादीनां यो वपननिषेधः तत्र कर्त्तनविधानपरम् ।

पञ्चाशद्धायनात्पूर्वं क्षौरं नैमित्तिकं विना ।
न कुर्यात्तत्तदूर्ध्वं तु स्वेच्छया वपनं चरेत् ॥

इत्युपक्रम्यास्य विधानात् । तीर्थयात्रेति देशान्तरगमनमात्रोपलक्षणम् ।

सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् ।
विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः ॥

अन्तर्वत्न्यां तु जायायां तीर्थे क्षौरं न कारयेत् ।
प्रेतदाहादिकं चैव सीमन्तोन्नयनादनु ॥

इति स्मृत्यन्तरात् । उद्वाहः स्वस्य, न कन्यापुत्रयोः। क्षौरादीनां स्वक्रियाणामेव साहचर्यात् । उपयोगः पानम् । प्रेतकर्मनिषेधापवादः

स्मृत्यन्तरे,

क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम् ।
पित्रोः प्रेतविधानं च गर्भिणीपतिराचरेत् ॥ इति ।

अत्र च मासात्तु सप्तमादूर्ध्वमित्यनेनाष्टममासमारभ्यैव निषेधपरिपालनं गम्यते । तत्रानुकल्पोयं सीमन्तोन्नयनादन्विति । यद्वा । चतुर्थमासिकसीमन्तोन्नयनादनन्तरं निषेधपरिपालनं मुख्यः कल्पः, तत्रानुकल्पोऽयं मासात्तु सप्तमादूर्ध्वमिति ।

अथ प्रसङ्गात्सूतिकागृहनिर्माणविधिः ।

तच्च नवमे मासि कार्यम् । तदुक्तं रत्नकोशे,

आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः ।
तद्वत्प्रसवकाले स्यादिति शास्त्रेषु निश्चयः ॥ इति ।

आसन्नप्रसवे नवमे । प्रसवकालो दशमः । दशमे मासि सूतवइति मन्त्रलिङ्गात् ।

गर्गः,

वारे ऽनुकूले राशौ तु दिने दोषादिवर्जिते ।
स्वानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः ॥ इति ।

तत्र स्वानुकूलां दिशमाह

वसिष्ठः,

ऐन्द्रे तु विक्रमस्थानमाग्नेय्यां पचनालयः ।

वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् ॥
याम्यायां शयनस्थानं वायव्यां पशुमन्दिरम् ।
कौबेर्यां तु धनस्थानमैशान्यां देवतालयः ॥ इति ।
विक्रमो बलवर्द्धनम् तत्संस्थानम् ।

**विष्णुधर्मोत्तरे.**

सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ।
प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् ॥ इति ।
शुभमायादिशुद्धम् । तत्संस्कारश्चोक्तः

**सांख्यायनगृह्ये,**

काकादन्या मेचकरातन्याः कोशातक्याः बृहत्याः काकातकस्य मूलानि पेषयित्वा उपलेपयेद्देशं यस्मिन् जायेत रक्षसामपहत्यै ।

काकादनी काकजङ्घा । मेचकरातनी काचमाचिका । कोशातकी घोषकः । बृहती कण्टकारिका । काकातकः कृष्णगुञ्जेति । एतन्मूलरसेन यस्मिन् जायेत प्रसूयेत तं देशं गृहादिरूपं लेपयेदित्यर्थः ।

अथ गर्भिण्याः सूतिकागृहप्रवेशः ।

**विष्णुधर्मोत्तरे,**

प्रविशेत्सूतिकासंज्ञं कृतरक्षं समन्ततः ।
सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ॥
देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ।
विप्रपुण्याहशब्देन शङ्खवाद्यरवेण च ॥
प्रसूता बहवस्तत्र तथा क्लेशक्षमाश्च याः ।
इष्टा विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च तत् ॥

तान्चानुलेपनैर्हृद्यैस्तत्रैवमुपचारयेत् ।

उपचारयेत्, गर्भिणीति शेषः ।

आहारैश्च विहारैश्च प्रसवाय सुखं द्विज ।
एरण्डमूलचूर्णेन मधूनेन तथैव ताम् ॥
सुखप्रसवनार्थाय पश्चात्काये क्षिपेदिति ।

पश्चात्काये पृष्ठभागे तां गर्भिणीं क्षिपेदनुलिम्पेत् । उपसूतिकेति शेषः । तत्र निषेध्यद्रव्याण्युक्तानि व्यतिरेकमुखेन

मार्कण्डेयपुराणे,

अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे ।
अदीपशस्त्रमुसले भूतिसर्षपवर्जिते ॥
अनुप्रविश्य या जातमपहृत्यात्मसंभवम् ।
क्षणप्रसाविनी बालं तत्रैवोत्सृजते द्विज ॥
सा जातहारिणी नाम सुघोरा पिशिताशना ।
तस्मात्संरक्षणं कार्यं यत्नतः सूतिकागृहे ॥ इति ।

यूपोऽत्र यूपाकारः काष्ठविशेषः । तत्र तिथिवारनिर्णयः सामान्यनिर्णयादवगन्तव्यः । नक्षत्राण्याह

गर्गः,

रोहिण्यैन्दवपौष्णेषु स्वातीवारुणयोरपि ।
पुनर्वसुपुष्यहस्तधनिष्ठास्वुत्तरासु च ॥
मैत्रे त्वाष्ट्रे तथाऽश्विन्यां सूतिकागारवेशनम् ।
मृत्यर्थनाशौ मृत्युश्च वृद्धिपुष्ट्यायुरीप्सितम् ॥
मृत्युश्च मरणं पित्रोर्मरणं तु ततस्त्रिषु ।
मेषादिक्रमशो विन्द्यात्सूतिकागारवेशने ॥
ग्रहेऽनुकूले राशौ तु रिःफषष्ठाष्टवर्जिते ।

रिःफं द्वादशं स्थानम्।

सर्वे चाथ शुभाः केन्द्रे पापाश्च त्रिषडायगाः।
शुभांशे शुभदृष्टौ तु सूतिकावेशनं शुभम्॥ इति।

अथ सोष्यन्तीकर्म। तत्र

गोभिलः,

अथ सोष्यन्तीहोमं प्रतिष्ठिते वस्तौ परिस्तीर्याग्निमाज्याहुतीर्जुहोति "या तिरश्ची"त्येतयर्चा विपश्चित्पुच्छमभरादिति च।

सोष्यन्ती समसन्नशूला। वस्तिः योनिद्वारम्। तत्र स्थिते गर्भे सोष्यन्तीहोमः कार्य इत्यर्थः।

## अथ जातकर्म।

तत्र विष्णुः,

जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितम्। इति।

जातकर्मेति यौगिकं कर्मनामधेयम्। जाते कर्म जातकर्मेति च योगः। स च यद्यपि मुखदर्शनस्नाननान्दीश्राद्धादावतिप्रसक्तस्तथाऽपि

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्॥

इत्यत्र हिरण्यादिप्राशनजातकर्मशब्दयोस्सामानाधिकरण्याद्धिरण्यादिप्राशनमेव जातकर्म नान्यदिति सिध्यति। यथा यजतिसामानाधिकरण्यात् खनित्राद्यतिप्रसक्तयोगोऽप्युद्भिच्छब्दः कर्मनामधेयं तद्वदयमपि। एतेन जातस्य कर्म संस्कारो जातकर्म, मुखदर्शनादेः पितृसंस्कारत्वेन जातसंस्कारत्वाभावात्, जातः कर्म संस्कार्यो यस्मिन्निति वा योगोऽतिप्रसङ्गवारणायादरणीय इति परास्तम्। कर्मसामानाधिकरण्येनैव तद्वारणात्। ततः स्नानानन्तरम्।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

इति संवर्त्तस्मरणात् । यथोदितं स्वस्वगृह्यानुसारेणेत्यर्थः । स्नानं च पुत्रमुखदर्शनानन्तरं कार्यम् ।

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात् ॥
जातं कुमारं स्वं दृष्ट्वा स्नात्वाऽऽनीय गुरून्पिता ।
नान्दीश्राद्धावसाने तु जातकर्म समाचरेत् ॥

इति ब्रह्मपुराणाश्वलायनाभ्यां मुखदर्शनस्नानयोः क्रमस्ययेन पौर्वापर्याभिधानात् । यत्तु

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।

इति ज्योतिर्वसिष्ठेन मुखदर्शनप्राक्कालीनपुत्रजन्मश्रवणानन्तरमेव स्नानमुक्तं, तद् दशाहानन्तरं पुत्रजन्मश्रवणाभिप्रायमिति न विरोधः ।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

इति मनुस्मरणात् । अत एव

जातमात्रकुमारस्य मुखमस्यावलोकयेत्।
पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात् ॥

इति वसिष्ठेन जातकर्मकालीनमुखदर्शनव्यावृत्त्यर्थं मात्रशब्दः प्रयुक्तः । ततश्च जातकर्मकालीनानुषाङ्गिकान्मुखदर्शनादिदमतिरिक्तं फलार्थं प्रधानभूतं मुखदर्शनं विधीयते इति सिध्यति । तथा च

श्रुतिः,

ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति।

पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ इति।

न च पुत्रोत्पादनविधेरयमर्थवादः,पुत्रोत्पत्तेः पुत्रमुखदर्शनाविनाभावाभावेन तदाक्षिपकत्वासंभवात्। तस्मादप्राप्तपुत्रमुखदर्शनविधिमुन्नयत्येव। यद्येवं तर्हि मुखदर्शनाविनाभूतस्य पुत्रोत्पादनस्य मुखदर्शनविधिनैवाक्षेपात्पुनर्विधानमनुपपन्नमिति चेत्, नैवम्।क्षेत्रजादिमुखदर्शनस्य स्वोत्पादनेनाविनाभावाभावेन तदनाक्षेपकत्वात्। ततश्च परस्परानाक्षिप्तविधिभेदेन फलभेदे सिद्धे पुत्रोत्पादनविधेः पित्र्यणापाकरणं मुखदर्शनविधेश्च ऋणसामान्यापाकरणममृतत्वं च फलमिति सिध्यति। तस्मात्सिद्धो विधिभेदः। अत एव स्मृतिकारैरस्मादेवार्थवादान्मुखमस्यावलोकयेदित्यादिविधिरुन्नीतः। अथोक्तस्नानाधिकरणानि। तत्र

ज्योतिर्वसिष्ठः,

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत्।

उत्तराभिमुखो भूत्वा नद्यां वा देवखातके ॥ इति।

एतच्च स्नानं रात्रावपि कार्यं नैमित्तिकत्वात्। तथाच

व्यासः,

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।

नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु ॥

पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम्। इति।

वसिष्ठोऽपि,

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः।

राहोश्च दर्शने स्नानं प्रशस्तं नान्यदा निशि ॥ इति।

तच्च शीतलोदकेन कार्यम् । तदाह

जाबालिः,

कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च । इति ।

रात्रौ तडागादिगमनाशक्तौ विशेषमाह

सांख्यायनः,

दिवा यदाहृतं तोयं कृत्वा स्वर्णयुतं तु तत् ।
रात्रिस्नाने तु संप्राप्ते स्नायादनलसंनिधौ ॥ इति

यत्तु स्नानात्तु स्पर्शनं पितुरित्यस्पृश्यताऽपनोदः पितुः स्नानेन श्रूयते सोऽप्यनेनैव प्रसङ्गात्सिध्यतीति न तदर्थं पृथक् स्नानं कर्तव्यम् । यदपि जाते पुत्रे पितुः स्नानमित्यादिवचनेषु पुत्रपदोपादानात्कन्यादिजन्मनु न स्नानमिति । तन्न । बीजसम्बन्धाविशेषात् । अत एव

बौधायनः,

जनने तावन्मातापित्रोर्दशाहमाशौचं, मातुरित्येके तत्परिहरणात्, पितुरित्यन्ये शुक्रस्य प्राधान्यादयोनिजा ह्यपि पुत्राः श्रूयन्ते मातापित्रोरेव तु संसर्गसाम्यादिति ।

तत्परिहरणान्मातृपरिहरणात् । संसर्गसाम्यात्संसर्गः शुक्रशोणितयोस्तस्य साम्यात् । न चैवं मातापित्रोर्दशाहमस्पृश्यत्वसिद्धान्तात्पूर्वपक्षस्यैव सिद्धिः, तुशब्देन पूर्वपक्षस्य दशाहस्य व्यावृत्त्या कालविशेषानालिङ्गिताभ्युपगतास्पृश्यत्वमात्रस्य सामान्यस्य

माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ।

इत्यनेन विशेषेण व्यवस्थापनात् । तस्मादपत्यमात्रोत्पत्तौ स्नानं न पुत्रोत्पत्तावेवेति सिद्धम् । आशौचम् अस्पृश्यत्वलक्षणम् । स्नानानन्तरं च नान्दीश्राद्धं कुर्यात् ।

जातं कुमारं स्वं दृष्ट्वा स्नात्वा ऽऽनीय गुरून्पिता।
नान्दीश्राद्धावसाने तु जातकर्म समाचरेत् ॥

इत्याश्वलायनस्मरणात्। अत्र च नान्दीश्राद्धस्य न जातकर्माङ्गत्वम्।

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥

इत्यनेन जातकर्मणि तस्य पर्युदस्तत्वात्। किंतु

नामकर्मणि बालानां चूडाकर्मादिके तथा।
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ॥

इत्यनेन विहितस्य मुखदर्शननिमित्तकस्य श्राद्धस्य कालार्थसंबन्धः। यत्तु

जन्मन्यथोपनयने विवाहे पुत्रकस्य च।
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥

इति ब्रह्मपुराणे मुखदर्शनवत्पुत्रजन्मनोऽपि पृथक् नान्दीश्राद्धनिमित्तत्वं प्रतीयते तत् पुत्रमुखदर्शनपदस्य जन्मोपलक्षकत्वान्न श्राद्धान्तरविधायकमिति केचित्। छन्दोगपरिशिष्टटीकाकारस्तु पृथगेव जन्ममुखदर्शनयोर्निमित्तत्वमाह। अस्मिन्मते च तन्त्रेणैव श्राद्धद्वयानुष्ठानं बोध्यम्। तच्चामेन कार्यम्। तत्र

**प्रचेताः,**

शूद्रश्च श्वपचश्चैव जातकर्मणि चाप्यथ।
आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन च ॥ इति।

आमान्नाभावे हेम्ना कार्यम्। तदाह

**व्यासः,**

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥ इति।

हारीतस्तु द्रव्यान्तरमाह । जाते कुमारे पितॄणामामोदात्पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः स्वधा कुर्यात् प्रजापतये चेति । जातकर्मणि बालानामित्यादिवचनविहिते वृद्धिश्राद्धे हिरण्यतिलपात्रे समुच्चितद्रव्ये विधीयेते। स्वधाशब्देन श्राद्धोपस्थानात् । प्रजापतये च सहिरण्यतिलपात्रं सृजेदिति कल्पतरुः । तच्च नाभिच्छेदात्प्राक् कर्त्तव्यमित्याह

जाबालिः,

अच्छिन्ननाले कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि । इति ।

अत्र च पक्वान्ननिषेधो जाबाल्यादिपुराणयोः,

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणाच्छुद्धिस्तेषां भवति नान्यथा ॥ इति ।

जन्मनिमित्तकं च नान्दीश्राद्धं रात्रावपि कार्यं नैमित्तिकत्वात् । तदाह

लौगाक्षिः,

नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् ।
तेषामनियतत्वे तु तदानन्तर्यमिष्यते ॥

अत्रिरपि,

पूर्वाह्णे वै भवेद् वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥

जातकर्मकालमाह

मनुः,

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते । इति ।

वर्धनं छेदनम् ।

आश्वलायनोऽपि,

प्राङ्नाभिकर्त्तनात्कार्या जातकर्मक्रिया द्विजैः।

स्नात्वा सचैलवच्छुद्धैः सितगन्धादिभूषितैः॥ इति।

गर्गोऽपि,

जातमात्रकुमारस्य जातकर्म विधीयते।

स्तनप्राशनतः पूर्वं नाभिकर्त्तनतोऽपिवा॥ इति।

नाभिकर्त्तनतोऽपिवेत्यत्रव्यवधानेऽपि समुच्चयात्यन्तराऽपादानं नालच्छेदादूर्ध्वमपि स्तनप्राशनात्प्राक् गौणकालविधानार्थम्। अन्यथा वैयर्थ्यापत्तेः। अत एव एषु कालेष्वनीतेष्वित्यत्र कालत्रयाभिप्रायेण बहुवचनं वक्ष्यते। जातकर्मस्वरूपं चाह

मनुः,

मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्। इति।

आश्वलायनोऽपि,

कुमारं जातं पुरा ऽन्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं-हिरण्येन प्राशयेत्।

अन्यैः उपसूतिकेतरैः आलम्भात्स्पर्शात्पुरा पूर्वमित्यर्थः।

शङ्खलिखितावपि,

प्रसूते जातकर्म यवपिष्टमधुसर्पिर्भिर्मन्त्रवत्प्राशनं तस्य सुवर्णान्तर्हितया ऽनामिकया मेधाधिकं ब्राह्मणस्य करोति एवमितरयोः। मेधाधिकं मेधाजननम्। इतरयोः क्षत्रियवैश्ययोः। अनामिका कनीनिकासमीपाङ्गुलिः। एवंशब्देन क्षत्रियवैश्ययोर्मन्त्रवत्प्राशनातिदेशाच्छूद्रस्यामन्त्रकं प्राशनमिति गम्यते।

बैजवापः,

जातस्य कुमारस्याच्छिन्नायां नाड्यां हिरण्यमिश्राभिरद्भिराचामयेन्नानामन्त्रैर्हिरण्येन दधिमधुघृतं प्राशयति भूस्त्वयि दधामीति।

**पारस्करः,**

जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथास्य गुह्यं नाम करोतीति।

अभिनिधाय अभिमुखीभूय निधायेत्यर्थः। गुह्यं मातापितृभ्रातृवेद्यम्।

एषां च पक्षाणां यथागृह्यं व्यवस्था द्रष्टव्या।

अथ स्त्रीणां जातकर्म। तत्र

**मनुः,**

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥ इति।

इयमावृत् जातकर्मादिक्रिया।

**गोभिलोऽपि,**

तूष्णीमेनाः क्रियाः स्त्रीणां मन्त्रेण तु होम इति। अत्र होमपदं स्वस्तिवाचनादीनामङ्गानामुपलक्षणम्। तेन तान्यपि समन्त्रकाणि भवन्ति। अमन्त्रकत्वस्य "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या" इत्युपांशुत्वस्येव*प्रधानमात्रधर्मत्वात्। ततश्चात्र घृतमधुप्राशनादिप्रधानमन्त्राणामेव निवृत्तिर्नाङ्गमन्त्राणामिति सिद्धम्।

**याज्ञवल्क्योऽपि,**

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः। इति।

**आश्वलायनोऽपि,**

आवृतैव कुमार्या इति। अत्रेदं चिन्तनीयम्। किमिदं जातकर्म पुंस्त्रीनपुंसकानां सर्वेषामपि कर्त्तव्यमुत स्त्रीपुंसयोराहोस्वित्पुंस

---

* पू. मी. अ. ३। पा. ८। अधि. १९।

एवेति। कुतः संशयः। बीजगर्भसमुद्भवैनोनिर्बर्हणस्य बीजगर्भसमुद्भवमात्रापेक्षितत्वात्, स्त्रीपुंसयोः श्रवणात्, कुमारादिशब्देषु पुंस्त्वश्रवणाच्च। किं प्राप्तम्। त्रयाणामप्येतत्कार्यमिति, पूर्वोक्तयुक्तेः।

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात्॥

इति ब्रह्मपुराणे जातसामान्योपादानेन मुखदर्शनादिसंस्कारविधानाच्च। अत एव तूष्णीमेताः क्रियाः स्त्रीणामित्यादिविधिर्दृश्यते। स्मर्यते च बौधायनादिभिः क्लीबादीनामुपनयनमिति "अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्याम" इत्यादिना। मनुना तु

यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथंचन।

इत्यादिना विवाहोऽपि स्मर्यते। स च जातकर्मादिसंस्काराणां क्रमतल्लोपप्रायश्चित्ताभिधानान्यथाऽनुपपत्त्या पूर्वपूर्वसंस्कारसंस्कृतस्यैवोत्तरोत्तरसंस्कारयोग्यता भवतीति नियमात् जातकर्मादीनप्याक्षिपति। तदाह

देवलः,

प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे तूपनयनार्हो भवतीति।

तस्मात्त्रितयसाधारणं जातकर्मेति। मैवम्। सर्वस्मृतिसूत्रपुराणेषु स्त्रीपुरुषावेव प्रक्रम्य जातकर्माद्यभिधानेन तज्जन्यैनोनिबर्हणस्य तन्मात्रविषयत्वेन सर्वसाधारण्याभावात्। अन्यथा षण्ढोऽप्युपक्रम्येत। यत्तु ब्रह्मपुराणीयं जातपदं तद् वाक्यान्तरस्थपुत्रकुमारादिविशेषपदैकार्थतयोपसंहरणीयम्। सामान्यशब्दत्वात्। बौधायनादिवाक्यं तु तावन्मात्रविधानार्थम्। अन्यथा सामान्यवाक्येनैव सिद्धावस्यानर्थक्यात्। गुणमात्रविधित्वे तु

संस्कारप्रतिज्ञाऽनुपपत्तेः । तस्मात्कर्मान्तरमेव "अथैष ज्योति" रितिवत् अथशब्दोपादानात् । तर्हि स्त्रीपुरुषविषयमेवेदमस्त्विति चेन्न । उत्पत्तिवाक्ये पुत्रकुमारादिपदेषु पुंस्त्वश्रवणात् । अस्तु-उद्देश्यगतस्य पुंस्त्वस्य ग्रहैकत्ववदविवक्षेति चेत् । एवं तर्ह्यष्टनैव कुमार्याइत्याद्यनारम्भणीयं स्यात् । पुंस्त्वाविवक्षयैव प्राप्तत्वात् । अमन्त्रत्वरूपगुणविधानार्थं तदारम्भ इति चेत् । एवं तर्हि क्लीबे तत्प्राप्तिः केनवार्येतेति पूर्वः पक्षः ।

अत्र देवस्वामी समादधाति अधिकारार्थं कुमारग्रहणमिति, अष्टमे वर्षे ब्राह्मणमुपनयेदित्युपनयनं कुमारस्यैव यथा स्यान्न कुमार्या इति । ननु ब्राह्मणमितिपुंलिंगोपदेशादेव स्त्रीणां तन्न भविष्यतीति चेन्न । जात्युद्देशे लिङ्गस्याविवक्षितत्वात् । न ब्राह्मणो हन्तव्य इतिवत् । तस्मात्स्त्रीनिवृत्त्यर्थं कुमारग्रहणमिति । अनेनार्थात्क्लीबनिवृत्तिरभिहिता । कुमारग्रहणस्य स्त्रीनपुंसकनिवर्त्तनसामर्थ्यात् । मेधातिथिस्तु कण्ठरवेणैव स्त्रीनपुंसकयोर्निवृत्तिमाह ।

प्राङ् नाभिवर्द्धनात्पुंसो जातकर्म विधीयते ।

इति मनुना पुंशब्दोपादानात् । न चात्रापि पुंस्त्वमविवक्षितम् । प्रमयार्थस्य तस्योद्देश्यविशेषणस्याविवक्षायामपि प्रकृत्यर्थस्य तस्योद्देश्यस्याविवक्षायां वाक्यानर्थक्यप्रसङ्गात् । सिद्धं चैतच्चमसाधिकरणे* ।एकत्ववद् ग्रहत्वमप्यविवक्षित्वा चमसानामपि संमार्गोऽस्त्विति पूर्वपक्षे एकत्वविवक्षायामिव ग्रहत्वविवक्षायां वाक्यभेदाभावात्, सम्मार्गविधाने चार्थाक्षिप्तसोमलिप्तरूपोद्देश्यापेक्षया वाक्योपात्तग्रहरूपोद्देश्यस्य बलवत्त्वान्न चमसानां संमार्ग इति सिद्धान्तकरणात् । तद्वत्प्रकृतेऽपि । तस्मात्स्त्रीणामिव

* पू. मी. अ. ३ । पा. १ । अधि. ८ ।

क्लीबानां विध्यन्तराभावान्नजातकर्मेति सिद्धम् । अनेन जातकर्मवदन्येऽपि संस्काराः क्लीबस्य न भवन्तीति गम्यते तुल्यन्यायत्वात् । इदं च जातकर्म विरुद्धतिथ्यादिजातस्य न कार्यम् । तस्य च मुखदर्शनपूर्वकत्वान्मुखदर्शनस्य चात्र निषिद्धत्वात् ।

तथाचोत्तरगार्ग्यः,

अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानां च नामानि महादोषकराणि च ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥
? कालगण्डे मृत्युयोगे सुदारुणे ।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥
अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य तत्र दैवज्ञः शान्तिं कुर्याद्यथाविधि ॥ इति ।

**शौनकोऽपि,**

वैधृतौ च व्यतीपाते महादोषोऽभिजायते ।
कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः ॥
संक्रमश्च रवेरत्र जातो दारिद्र्यकारकः ।
दरिद्राणां महादुःखं व्याधिपीडा महद्भयम् ॥
अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा । इति ।

**नवनीतारिष्टे,**

पूर्णातिथीनां तिसृणां तथाऽन्ते
मीनालिकर्क्यो नवमो नवांशः ।
मेषे ऽथ कण्ठीरवधन्विनोश्च
गण्डान्तमाद्यो नवमस्तथांशः ॥

अश्विनीमघमूलादौ त्रिषट्कं नव नाडिकाः ।
रेवतीसर्पशक्रान्ते नाडिकाद्विनयं तथा ॥
अश्विनीमघमूलानां पूर्वार्द्धे बाध्यते पिता ।
पूषाहिशक्रपश्चार्धे जननी बाध्यते शिशोः ॥
पितृघ्नश्च दिवा जातो रात्रिजातस्तु मातृहा ।
आत्मघ्नः सन्ध्ययोर्जातो नास्ति गण्डो निरामयः ॥
सर्वेषां गण्डजातानां परित्यागो विधीयते ।
वर्जयेद्दर्शनं रात्रं नच पाण्मासिकं भवेत् ॥
मध्ये पूर्णानन्दयोर्नाडिके द्वे
स्याद्गण्डान्तं कीदृर्योस्तथैका ।
कोदण्डादौ वृश्चिकान्ते झषान्ते
मेषादौ स्यात्सर्वकार्येष्वनिष्टम् ॥
अथैषां फलं तत्रैव ।
तिथ्यर्क्षगण्डे पितृमातृनाशो
लग्ने तु संधौ तनयस्य नाशः ।
सर्वेषु नो जीवति हन्ति वंशं
जीवन् पुनःस्याद्बहुवारणाश्वः ॥ इति ।

* अत्र च जातस्य जनकस्तथेत्यादिसामान्यवाक्यानि प्राङ् नाभिवर्द्धनात्पुंस इत्यादिविशेषवचनैः स्त्रीपुंविषये उपसंह्रियन्ते । अतश्च षण्ढादीनां मापकाभावान्न जातकर्मादि कार्यम् ।

अत एव बौधायनादिभिस्तेषामुपनयनमेव धर्मान्तरयुक्तमुं-

---

* इत आरभ्य "न जातकर्मादि इति सिद्धम्" इत्यन्तः पाठः पुस्तकान्तरे नास्ति । एतत्स्थाने च १९४ तमपृष्ठस्थम् "अत्रेदं चिन्तनीय" मित्यारभ्य एतदुपरितनपङ्क्तिस्थबहुवारणाश्वइतीत्यन्तः पाठोऽस्ति । प्रथमपुस्तके च भयं नास्ति ।

कम् । अन्यथा सामान्यवाक्येनैव तत्सिद्धेर्विशेषविध्यानर्थक्यात् । न चोपनयने गुणमात्रविधानार्थं तदिति वाच्यम् । तथात्वे अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्याम इति संस्कारप्रतिज्ञाऽनुपपत्तेः । तस्मात्षण्ढादीनां न जातकर्मादि इति सिद्धम् । जातकर्मणि दानानि आह

हारीतः,

प्राङ् नाभ्याश्छेदात्संस्कारं पुण्यार्थान् कुर्वन्ति छिन्नायामाशौचमिति । संस्कारो जातकर्म । पुण्यार्थान् पुण्यप्रयोजनान् दानादीन् ।

शङ्खोऽपि,

सर्वेषां सकुल्यानां द्विपदचतुष्पदधान्यहिरण्यादि दद्यात् । कुमारप्रसवे नाड्यामच्छिन्नायां गुडतिलहिरण्यवस्त्रगुर्वर्थप्रावरणगोधान्यप्रतिग्रहेष्वदोषस्तदहरित्येके गुर्वर्थं कुर्वत इति प्रतिग्रहदोषाभावप्रतिपादनं तु नालच्छेदादूर्ध्वं सर्वदिनपुण्यत्वपक्षे । अन्यथा प्राङ्नाभिच्छेदादाशौचाप्रवृत्त्या दोषप्रसक्त्यभावेन तदपवादासंभवात् । तथाच

जैमिनिः,

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥ इति ।

ब्रह्मपुराणे,

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥
तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं तथा ।
छत्रं छागं च माल्यं च शयनं चासनं गृहम् ॥ इति ।

प्रतिग्रहीतारं मत्स्याह

व्यासः,

जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् ।
हिरण्यधान्यगोवासस्तिलांश्च मधुसर्पिषी ॥

वृद्धयाज्ञवल्क्य,ः

कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्यभूगवाश्वादिधान्यशय्यासनादिषु ॥
तत्र सर्वं प्रतिग्राह्यं पक्वान्नं तु विवर्जयेत् ।
भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥
सूतके तु सकुल्यानामदोषो मनुरब्रवीत् । इति ।

एतच्च जातकर्म उक्तकालात्यये आशौचानन्तरं कार्यम् ।

तथाच

जाबालिबैजवापौ,

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥ इति ।

गर्गोऽपि,

जन्मनोऽनन्तरं तु स्याज्जातकर्म यथाविधि ।
सूतकानन्तरं कुर्यान्नामनिर्देशनादधः ॥ इति ।

विष्णुधर्मोत्तरेऽपि,

अच्छिन्ननाभ्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आशौचोपरमे कार्यमथवा नियतात्मभिः ॥ इति ॥

वसिष्ठोऽपि,

यस्मिन्मुहूर्त्ते जनितः कुमारस्तस्मिन्विधेयं खलु जातकर्म ।
विनिर्गमे वाऽप्यथ सूतकस्य तस्मिन् दिने तस्य च नामधेयम् ॥ इति ।

पूर्वोक्तकालत्रयातिपाते कालान्तरमाह

गर्गः,

एष्वतीतेषु कालेषु शुभयोगे शुभोदये।
जातकर्मक्रियां कुर्यात्पुत्रायुःपरिवृद्धये॥ इति।

एषु नाभिच्छेदपूर्वकालस्तनप्राशनपूर्वकालाशौचानन्तरकालेषु।

अथ आशौचमध्ये पुत्रजन्मनि जातकर्मनिर्णयः। तत्र

प्रजापतिः,

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति॥ इति।

आशौचे तु समुत्पन्ने इत्यस्मिन्नपि पाठे आशौचपदं सूताशौचपरमेव व्याख्येयम्। तथाच

जातूकर्ण्यः,

जाताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
जननानन्तरं कुर्याज्जातकर्म यथाविधि॥
जातेष्टिः सूतकान्ते तु कर्त्तव्येति विनिश्चयः।
जननाशौचपदं नाशौचमात्रपरम्।
मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
आशौचापगमे कार्यं जातकर्म यथाविधि॥
इति तस्यैव स्मरणात्।

अथ जन्मदादिदेवतापूजनम्। तत्र

व्यासः,

सूतिकावासनिलया जन्मदा नाम देवताः।
तासां यागनिमित्ते तु शुद्धिर्जन्मनि कीर्त्तिता॥
जन्मदाख्यदेवतानां पूजने शुद्धिरस्तीत्यर्थः।

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वाशौचं न कुर्वीत सूतके पुत्रजन्मनि ॥
दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपिवा ।
बलिदानं तु दशमे ह्यन्नदानं प्रशस्यते ॥

**मार्कण्डेयपुराणे,**

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कार्यमन्नदानं तथा बलिः ॥
जन्मदानां तथा बलिरित्यपि पाठः ।
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ॥
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ।

**नारदः,**

जननात्सप्तमे चाह्नि मृत्युरायाति घातकः ।
तद्दिने चैव रक्षेयं कर्त्तव्या ऽऽयुर्विवृद्धये ॥
सायाह्ने पूज्य विघ्नेशमपूपैश्च पृथग्विधैः । इति ।

अथ पञ्चायुधाभरणधारणम् । तदुक्तं

**श्रीधरीये,**

जातस्य पञ्चमदिने शुभदे मुहूर्त्ते
पञ्चायुधाभरणधारणमिष्टमाहुः ।
नाभिप्रदेशपरिलम्बिसुवर्णसूत्रं
प्रोतं शिशोर्ग्रहनिवारणकं च युक्तम् ॥

अस्यार्थः । पञ्चमदिने जातस्य जन्मनक्षत्रात्पञ्चमनक्षत्रे पञ्चमदिने वा । पञ्चायुधाभरणधारणम् शङ्खचक्रगदाशार्ङ्गनन्दकानि पञ्चायुधानि तद्युक्ताभरणधारणम् । तत्र शिशोरिति सामान्येन कथनात् कुमारस्य कुमार्याश्च पञ्चायुधाभरणं धार्यमिति । तथोक्तं

बृहस्पतिना,

जन्मनः पञ्चताराङ्कयाते चन्द्रे शिशुं पिता।
भूषयेद्भूषणैः सर्वैः पञ्चायुधसमन्वितैः॥
विशेषात्कन्यकायाश्च कर्त्तव्यं मङ्गलेन च।
पुंसः सायुधमाकल्पमायुःश्रीकान्तिदं शिशोः॥ इति।

अथ सूतिकास्नानविधिः। तत्र

दैवज्ञवल्लभः,

करेन्द्रभाग्यानिलवासवान्त्यमैत्रैन्दवाश्विध्रुवभेऽह्नि पुंसाम्।
तिथावरिक्ते शुभमामनन्ति प्रसूतिकास्नानविधिं मुनीन्द्राः॥

इति।

ध्रुवभाणि रोहिणीसहितमुत्तरात्रयमिति। पुंसामह्नि रवि-भौमगुरुवारेषु। अत्रैव निषिद्धनक्षत्राद्याह

दैवज्ञमनोहरः,

भरणी कृत्तिका मूलमार्द्रा पुष्यः पुनर्वसुः।
मघा चित्रा विशाखा च श्रवणो दशमस्तथा॥
एषु मन्दे बुधे वारे सूतीस्नानं न कारयेत्।
यदि स्नानं प्रकुर्वीत पुनः सूतिर्न विद्यते॥ इति।

अथ पुत्रार्था दृष्टादृष्टप्रयोगाः। तत्र

व्यासः,

अङ्कोलमूलकल्कं तु चूर्णीकृत्य गुडेनयुक्।
काकाण्डमितमश्नीयात्पुत्रिणी सा भविष्यति॥

वसिष्ठोऽपि,

उत्तमं कर्णिकामूलं पेषयित्वा पयः पिबेत्।
पायसान्नं समश्नीयात्पुत्रिणी सहसा भवेत्॥ इति॥

**गौतमोऽपि,**

क्षीरद्राक्षाङ्कुरं शुभ्रं पेषयित्वा पयः पिबेत् ।
दैवोदरकृतो दोषो विनश्यति सुतं लभेत् ॥ इति ।

**मुद्गलोऽपि,**

वटाग्रं निम्बबीजं च स्तन्येन पयसा पिबेत् ।
पुत्रं प्रसूयते नारी दैवदोषं प्रमुञ्चति ॥ इति ।

अदृष्टार्थानाह

**पराशरः,**

महातीर्थे महायोगे महानद्यनुसंगमे ।
पलाशस्य दलात्स्नानं कुर्यात्पुत्रसुखार्थिनी ॥ इति ।

**दैवरामोऽपि,**

पलाशदलसाहस्राद् सावित्रेण दलं प्रति ।
स्नपयेत्सपवित्रेण एकादश्यां प्रजार्थिनीम् ॥ इति ।

## अथ पुत्रेष्टिः ।

**कारिकायाम्,**

अनाहिताग्निरेवेमान्कुर्यात्काम्यांश्चरूंस्तथा ।
परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् ॥
"अग्नये पुत्रिणे त्वेति" पुत्रकामस्तु निर्वपेत् ।
"अग्नये पुत्रिणे स्वाहे" त्येतेन जुहुयाच्चरुम् ॥ इति ।

**शौनकोऽपि,**

यस्य जाता प्रमीयेरन् पुत्रा नैव भवन्ति वा ।
ऋतुकाले दिने षष्ठे दंपती समलंकृतौ ॥
कृत्वा ऽऽभ्युदयिकं श्राद्धं स्वस्तिवाचनपूर्वकम् ।
पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ॥

श्वेतायाः श्वेतवत्साया गोः क्षीरेण चरुं पचेत् ।
कृत्वा ऽऽज्यभागपर्यन्तमाज्यस्योत्पवनादिकम् ॥
जुहुयात्पायसं तत्र ऋग्भिः पञ्चदशाहुतीः ।
प्रजावत्सूक्तपञ्चर्ग्भिर्जीवपुत्रस्य पञ्चभिः ॥
नेजमेषेति तिसृभिः सोमोधेनुमृचैकया ।
इहैवस्तमृचा चैव ततः स्विष्टकृदादिकम् ॥
अपश्यन्त्वेति मन्त्राभ्यां होमशेषं च दंपती ।
प्राशयेत्तत आचार्य्य दंपती नाभिमालभेत् ॥
पिशङ्गभृष्टिमित्यृचा तावुभावभिमन्त्र्य च ।
प्रायश्चित्तादि सकलं होमशेषं समापयेत् ॥
सवत्सां दक्षिणार्थाय गां दद्यात्तु पयस्विनीम् ।
पुत्रार्थमाचरेद्दानं विप्रेभ्यो हेम च स्वयम् ॥
रात्र्यास्तु पश्चिमे यामे शयीतां दर्भसंस्तरे ।
मनसा चतुर्होतारमनुद्रुत्योमिति ब्रुवन् ॥
उपगम्य ततः पत्नीं व्यवेयाच्च यथाविधि ।
एवमुत्पादिताः पुत्रा न लुप्यन्ते कदाचन ॥ इति ।

प्रजावज्जीवपुत्रयोः सूक्तयोर्मन्त्रा "आतेगर्भोयोनि" मेत्वित्यादि "देवकृतं ब्राह्मणं कल्पमान" मित्यन्ता दश मन्त्रा अनवलोभनप्रकरणे द्रष्टव्याः । शेषाः प्रसिद्धाः । चतुर्होतृमन्त्रः पृथिवी होता द्यौरध्वर्यू रुद्रोऽग्नीत् बृहस्पतिरुपवक्तेति । अन्येऽपि पुत्रार्थाः प्रयोगा ऋग्विधानादौ द्रष्टव्याः ।

**अथ सर्वथाऽप्यपुत्रस्य तत्परिग्रहविधिः । तदाह**

**अत्रिः,**

**अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।**
**पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ इति**

अपुत्रोऽजातपुत्रो मृतपुत्रो वा ।

अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ।
दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् ॥

इति शौनकस्मरणात् । वन्ध्यो मृतप्रजो वा ऽपीत्यपि पाठः । अपुत्रेणेति कर्तृगतपुंस्त्वश्रवणान्न स्त्रियाः पुत्रपरिग्रहाधिकारोऽस्तीति गम्यते । तथाच

**वसिष्ठः,**

न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुरिति । एकत्वश्रवणाच्च न द्वाभ्यां त्रिभिर्वा एकः पुत्रः कर्त्तव्य इति गम्यते ।

नन्वेवं दत्तकादीनां द्व्यामुष्यायणत्वस्मरणं विरुध्येत । यथा प्रयोगपारिजाते

**स्मृत्यन्तरं,**

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ॥ इति ।

नैवम् । द्व्यामुष्यायणत्वस्य जनकपरिग्रहीतृपितृद्वयाभिप्रायत्वात्, निषेधस्य च परिग्रहीतृद्वयाभिप्रायत्वेन न विरोधः । एवकारेण च पुत्रवतः पुत्रीकरणेऽनधिकारो गम्यते । अपुत्राधिकारेण पुत्रीकरणविधानाच्च । यत्तु विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रपरिग्रहलिङ्गदर्शनं तद् अपुत्रेणैवेत्यादिविधिविरोधात् श्वजाघनीभक्षणादिवन्न श्रुत्यनुमापकमिति ध्येयम् । न च स्मार्त्तो विधिः श्रौतस्य लिङ्गस्य न बाधक इति वाच्यम् । नापुत्रस्य लोकोऽस्तीत्याद्यपुत्राधिकारिकपुत्रपरिग्रहविधायकप्रत्यक्षश्रुत्युपष्टम्भेन तस्या एव बलवत्त्वात् । अपुत्रेणेति पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम् ।

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

इति पौत्रादिना ऽप्यलोकतापरिहारस्याविशिष्टत्वात्। प्रतिनिधिरित्येकत्वश्रवणादेक एव प्रतिनिधिः कार्यो न द्वित्राः। तात्रैवालोकतापरिहारात्। प्रतिनिधिश्चात्र क्षेत्रजादिरेकादशविधः।

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मानवात्। अत्र च येषु क्षेत्रजगूढजकानीनपौनर्भवसहोढेषु दंपत्योरन्यतरावयवसंबन्धः तेषां विकलावयवारब्धत्वेन न्यायसिद्धमेव प्रतिनिधित्वं नीवारादिवत्। वचनं तु नियमार्थं, यदि सोमं न विन्देत पूतीकानभिषुणुयादितिवत्। यद्यपि पुत्रिकायां दंपत्यवयवारब्धत्वेनौरसवत् मुख्यत्वमेव प्रतिभाति तथाऽपि पित्रवयवन्यूनतया विकलावयवारब्धत्वेन प्रतिनिधित्वमेवोचितम्। अत एव

याज्ञवल्क्यः,

तत्समः पुत्रिकासुत इति। तत्समो न तु सः। पौत्रिकेये तु परम्परया अवयवसंबन्धेऽपि साक्षादवयवसंबन्धाभावादुत्पादकावयवसंवलितत्वाच्च प्रतिनिधित्वम्। येषु पुनर्दत्तक्रीतकृत्रिमस्वयंदत्तापविद्धेषु दंपत्योरन्यतरस्याप्यवयवसंबन्धो नास्ति तेषां वाचनिकमेव अनुकल्पत्वम्। प्रतिनिधिपदं चैतदंशे अनुकल्पपरम्। यथा यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वा स आज्येनैता देवताः परिसंख्याय यजेतेत्यत्र। तेषु च

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।

इति कलिवर्ज्यवचनेन कलौ क्षेत्रजादीनां दशानां निषिद्धत्वादौरसप्रतिनिधित्वं दत्तकस्यैव परिशिष्यते इति, स एवात्र निरूप्यते । स च कः कीदृशः कथं च परिग्राह्य इति त्रितयं निरूपणीयम् । तत्र क इत्याह

शौनकः,

ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेत् ॥ इति ।

सपिण्डेषु सप्तमपुरुषावधिकेषु । सपिण्डेष्विति सामान्यश्रवणाच्च समानासमानगोत्रेष्विति गम्यते ।

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ।

इति वृद्धगौतमेन सगोत्रेषु पुत्रीकरणाभ्यनुज्ञानात् । गोत्रतां संततित्वम् ।

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।

इति त्रिकाण्डीस्मरणात् । न सापिण्ड्यं विधीयते इति तु सगोत्रासपिण्डस्य पुत्रीकरणे संततित्वोत्पत्तावप्यवयवान्वयरूपं सापिण्ड्यं नोत्पद्यते इत्यर्थमात्रानुवादपरं व्याख्येयम् । असगोत्रेषु सपिण्डेषु पुत्रीकरणे तु

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।

इति मानवीयं लिङ्गं प्रमाणम् । सपिण्डासपिण्डसाधारणासगोत्रविषयत्वेनास्य प्रवृत्तेः । तदयं मुख्यः कल्पः । तदसंभवेऽनुकल्पमाह । तदभावेऽसपिण्डेष्विति । तेऽपि द्विविधाः सगोत्रा असगोत्राश्चेति । अत्रापि पूर्वोदाहृतं वृद्धगौतमीयं वचनं मानवीयं लिङ्गं च प्रमाणम् । तत्रायं क्रमः । सपिण्डसगोत्रो मुख्यः । उभयथाऽपि प्रत्यासत्तेः । तदभावेऽसगोत्रः सपिण्डः । सापिण्ड्यप्र-

ह्रासत्तेः। तस्याप्यभावेऽसपिण्डः सगोत्रः। गोत्रप्रत्यासत्तेः। यद्यप्यसमानगोत्रः सपिण्डः, समानगोत्रोऽसपिण्डश्चेत्युभावपि तुल्यकक्षौ एकैकविशेषणराहित्यादुभयोः तथापि गोत्रप्रवर्तकपुरुषात्सापिण्ड्यप्रवर्त्तकपुरुषस्य सन्निहितत्वेनाभ्यर्हितत्वम्। तेन च असमानगोत्रोऽपि सपिण्ड एव ग्राह्यः। तस्याप्यभावे समानप्रवरः, प्रवरप्रत्यासत्तेः। यद्यप्यत्र वाक्ये समानप्रवरो नोपात्तस्तथापि पिण्डगोत्रर्षिसंबन्धेभ्य इति गौतमीये क्षेत्रजोत्पादकतया दर्शनात्क्षेत्रजदत्तकयोः प्रत्यासत्त्यपेक्षासाम्याच्चात्राप्यसौ कल्पनीयः। तस्याप्यभावेऽसगोत्रोऽसपिण्डोऽसमानप्रवरश्च। तदाह

**शाकलः,**

सपिण्डापत्यकं चैव सगोत्रजमथापि वा।
अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत्॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम्। इति।
अत्र च पूर्वपूर्वस्य प्रत्यासत्त्यतिशयेन निर्देश इति।

**वसिष्ठो**ऽपि तदाह। अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति। अस्यार्थः। *अदूरे चासौ बान्धवश्चेत्यदूरबान्धवः, सन्निहितः सपिण्ड इत्यर्थः। अनेनात्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधो गम्यते। सान्निध्यं च सगोत्रतया ऽल्पपुरुषान्तरेण च भवति। तत्र सगोत्रः स्वल्पपुरुषान्तरः सपिण्डो मुख्यस्तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः। तदभावेऽन्योऽसमानगोत्रः सपिण्डः। तस्याप्यभावे बन्धुसन्निकृष्टः। बन्धूनां सपिण्डानां

---

* सप्तम्यधिकरणे चेति चकारात् दूरान्तिकार्थेभ्यः प्रातिपदिकार्थमात्रे सप्तमीविधानात्सामानाधिकरण्यमुपपद्यते। तेन समानाधिकरणबहुव्रीहिः सिध्यतीति भावः।

सन्निकृष्टः सपिण्डः स्वस्यासपिण्ड इत्यर्थात्पर्यवस्यति । सन्निकर्षश्च पूर्ववदेवात्रापि वेदितव्यः ।

अत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधे कारणमाह स एव । संदेहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेदिति । संदेहोऽत्र कुलवृत्तादिविषयः । शूद्रमिवाव्यवहार्यमित्यर्थः ।

तत्र श्रुतिमुपन्यस्यति । विज्ञायते ह्येकेन बहूंस्त्रायत इति । एकेन कुलवृत्तादिसंपन्नेन पुत्रीकृतेन बहून्पित्रादींस्त्रायते तत्कृतपिण्डदानादिना तर्पयति । तद्विपरीते बहून्पातयतीत्यर्थात्सिध्यति । अस्मादेव वचनात्कुलवृत्तादिसंदेहाभावेऽत्यन्तविप्रकृष्टोऽपि पुत्रीकार्य इति गम्यते । अत एव

**शौनकः,**

तदभावेऽसपिण्डोऽपीति । असपिण्डोऽत्रासगोत्रासपिण्ड इति व्याख्यातं प्राक् ।

अन्यत्र तु न कारयेदिति । यद्यपि सपिण्डासपिण्डेभ्योऽन्यो न संभवति तथापि

सर्वेषामपि वर्णानां जातिष्वेव न चान्यतः ।

इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणादसमानजातीयाः सपिण्डा असपिण्डाश्च व्यावर्त्यन्ते । अप्रतिषिद्धमनुमतं भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसंभवात् । अत एव

**वृद्धगौतमः,**

यदि स्यादन्यजातीयो गृहीतो वा सुतः क्वचित् ।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥

इत्यसमानजातीयस्यांशभाक्त्वनिषेधेन पुत्रत्वानुत्पत्तिं गम-

यति। तस्मादसमानजातीयो न पुत्रीकार्य इति सिद्धम् । अत एव

याज्ञवल्क्यः,

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः । इति ।

मनुरपि,

सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः । इति ।

सदृशं सजातीयम् । यत्तु सदृशं न जातितः किं तर्हि कुलानुरूपै-र्गुणैस्तेन क्षत्रियादिरपि ब्राह्मणस्य युज्यतइति मेधातिथिव्यानं, यच्च शूद्रोऽपि किल पुत्रो भवतीत्यभिप्राय इति कल्पतरुव्याख्यानं, तदुभयमपि शौनकवृद्धगौतमयाज्ञवल्क्यवचनविरोधाच्चिन्त्यम्।यत्तु

मनुना,

स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ।

इत्यत्र शौद्रस्य पुत्रप्रतिनिधित्वेन परिगणनं कृतं तच्छूद्रेण दास्यामुत्पादितस्य अनूढोत्पन्नत्वेन मुख्यपुत्रत्वाभावात्पुत्रप्रतिनि-धित्वमभिप्रेत्येति व्याख्येयम् । तस्मात्सदृशं दातुः प्रतिग्रहीतुश्च सवर्णमित्यपरार्कव्याख्यैवात्र साधीयसी। सन्निहितसगोत्रसपिण्डेषु च भ्रातृपुत्र एव पुत्रीकार्य इत्याह

मनुः,

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ इति ।

पुत्रिण इत्यत्र पुत्रोस्यास्तीति भवनार्थकेनास्तिना पुत्रभव-नप्रतिपादनादभावितस्य पुत्रस्य भवनायोगात्प्रतिग्रहीतृव्यापार आक्षिप्यते । ततश्चायमिह वाक्यार्थः, सोदराणां भ्रातॄणामेक-स्यापि यः पुत्रस्तं ते सर्वेऽप्यपुत्राः भ्रातरः पुत्रं कुर्युरिति । न चात्र "न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति "वसिष्ठवाक्यवि-

रोधः। स हि संतानाय पूर्वेषामितिहेतुवचनप्रतिपादितपित्रादिपूर्वसंतानस्य भ्रातृद्वयसाधारणेनापि पुत्रेण निर्वाहादुक्तनिषेधस्य भ्रात्रतिरिक्तविषयतासिद्धेः । किंच वसिष्ठवाक्ये हि दानं निषिध्यते, न चात्र मनुवाक्ये दानं श्रूयते । किं तु संविदा तूभयोरिस्नेनेन क्षेत्रजस्य ह्यामुष्यायणत्ववत्सर्वे ते तेन पुत्रेणेत्यनेन साधारण्यमात्रबोधनात् । साधारण्यं च संविदं विना ऽनुपपद्यमानं सत् तामाक्षिपति । नन्वस्यां कल्पनायां किं प्रमाणमिति चेत् उच्यते । सर्वे ते तेन पुत्रेणेति शब्दश्रुतिरेकम् । वेतालभैरवाभ्यामुभाभ्यां भैरवपुत्रस्यैकस्य सुवेशस्य पुत्रीकरणं लिङ्गं चापरं प्रमाणम् । तथाच

कालिकापुराणे,

ऋषय ऊचुः ।

अपुत्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः ।
वेतालभैरवौ यातौ पुरा वै तपसे गिरिम् ॥
पूर्वं त्यक्तदारौ तौ तयोः पुत्रा न च श्रुताः ।
तेषां तु सम्यगिच्छामः श्रोतुं संस्थानमुत्तमम् ॥

मार्कण्डेय उवाच ।

अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमा ।
स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तो हि संगताः ॥
सम्यक्सिद्धिमवाप्येह यदा वेतालभैरवौ ।
हरस्य मन्दिरं यातौ कैलासं प्रति हर्षितौ ॥
तदा हरस्य वचनान्नन्दी तौ रहसि द्विजाः ।
प्राहेदं वचनं तथ्यं सान्त्वयन्निव बोधकृत् ॥

नन्द्युवाच ।

अपुत्रौ पुत्रजनने भवन्तौ शंकरात्मजौ ।

यतेतां जातपुत्रस्य सर्वत्र सुलभा गतिः ॥
मार्कण्डेय उवाच ।
तस्येदं वचनं श्रुत्वा नन्दिनः प्रीतमानसौ ।
एकमेव करिष्यावो नन्दिनं चेत्सभापनाम् ॥
ततः कदाचिद्दुर्वश्यां भैरवो मैथुनं गतः ।
तस्यां स जनयामास सुवेशं नाम पुत्रकम् ॥
तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ।
ततस्तौ तेन पुत्रेण स्वर्ग्यां गतिमवापतुः ॥ इति ।

तस्मादेतल्लिङ्गोपष्टम्भया ऽनया स्मृत्या ऽनेकैरप्यपुत्रैः भ्रातृभिरेकोऽपि भ्रातृपुत्रः पुत्रीकार्य इति सिद्धम् । एतेनाकृतस्यैव भ्रातृपुत्रस्यापुत्रपितृव्यपुत्रत्वमनेनोच्यते ।

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाम् ॥

इति बृहत्पराशरस्मरणादिति चोद्यं निरस्तम् । अभावितस्य भवनायोगादित्युक्तत्वात् । तस्मादत्र बृहत्पराशरवाक्येऽप्यपुत्रेण पितृव्येण भ्रातृपुत्र एव पुत्रीकार्य इत्येवार्थः प्रामाणिकः । किंच । यद्यकृत एव भ्रातृपुत्रः पुत्रः स्यात्तदा, अपुत्राधिकारे

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता इति,
पिण्डाधिकारे
पुत्रः पौत्रः प्रपौत्रश्च तद्वद्वा भ्रातृसंततिः ।
सपिण्डसंततिर्वापि क्रियाभाग्नृप जायते ॥

इति पञ्चमस्थानस्थितिश्च विरुध्येत । तस्मात्कृतत्वेन पुत्रत्वात्प्रथमस्थाने धनपिण्डभागित्वम् अकृतत्वेन भ्रातृपुत्रत्वात्पञ्च-

मस्थाने तद्भागित्वमित्यवश्यमभ्युपगन्तव्यमिति मिताक्षरास्वरसः। नन्विदमप्रयोजकं, यत्र पिण्डरिक्थाभावादपुत्रत्वमिति,

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥

इति विष्णुना कानीनादीनां पुत्रत्वेऽपि पिण्डरिक्थाभावस्मरणात्, तथा पिण्डरिक्थाभावेऽप्यकृतस्यैव भ्रातृव्यस्यास्तु पुत्रत्वं का क्षतिरिति चेत्। मैवम्।

पिण्डदोंऽशहरश्चैषामित्यनेन पिण्डरिक्थभागित्वं हि पुत्रत्वस्य प्रयोजनमुक्तम्। तदभावे क्लीबादेरिव पुत्रत्वस्वरूपसत्तामात्रस्याप्रयोजकत्वात्। अकृतस्य पुत्रत्वायोगाच्चेत्युक्तमेव। विष्णुवचनं तु पूर्वपूर्वपठितौरसक्षेत्रजादिसद्भावविषयमिति न क्वापि विरोधः। नन्वेवं

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत्॥

इत्यत्राप्यकृतस्य पुत्रत्वं न स्यात्। न चेष्टापत्तिः। आचारविरोधात्, पितृपत्न्यः सर्वा मातर इति पितृपत्नीत्वमात्रनिमित्तकमातृत्वव्यपदेशविरोधाच्चेति चेन्नैवम्। सपत्नीपुत्रस्य साक्षाद्भर्तृवयवारब्धतया ऽकृतस्यापि पुत्रत्वसम्भवात्। वचनं तु नियमार्थमित्युक्तमेव। भ्रातृव्ये तु दम्पत्योरन्यतरस्याप्यवयवसम्बन्धाभावान्नाकृतस्य पुत्रत्वमिति कर्त्तव्यता ऽपेक्ष्यते। यस्तु

बृहस्पतिना,

यद्येकजाता बहवो भ्रातरस्तु सहोदराः।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः॥

इति भ्रातृव्यधर्मातिदेशः सापत्नेऽभिहितः, सोऽपि प्रतिनिधित्वाभिप्रायेण। न पुत्रीकरणाभिप्रायेण। भर्तृवचनादेवारब्धत्वेन पुत्रत्वस्य सिद्धत्वात्। सर्वासां पिण्डद इत्यभिधानाच्च। तदेतत्स्पष्टीकृतं देवस्वामिना "उभयत्रापि नान्यः प्रतिनिधिः कार्य"इत्यनेन ग्रन्थेन। विवृतं चैतच्चन्द्रिकायाम्, उभयत्रापि यद्येकजाता इत्येव वचनद्वयेऽपि भ्रातृसुते सपत्नीसुते च पुत्रप्रतिनिधितया कथंचित्सम्भवत्यन्यो न प्रतिनिधिः कार्य इति। विज्ञानेश्वरोऽपि मानवं वचो व्याचष्टे, भ्रातृपुत्रस्य पुत्रीकरणसम्भवेऽन्येषां पुत्रीकरणनिषेधार्थं, न पुनः पुत्रत्वप्रतिपादनाय, तत्सुता इत्यनेन विरोधादिति। भ्रातृव्याभावेऽन्योऽप्युक्तरीत्या प्रत्यासन्नः सगोत्रः सपिण्ड इत्यादि ज्ञेयम्। क्षत्रियादेर्विशेषमाह

शौनकः,

क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमेऽपिवा।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु॥
सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः।
दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः॥

ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्। इति।

स्वजातौ क्षत्रियजातौ। जातिसामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववदत्रापि नियामिका। अदूरबान्धवमित्यादिवसिष्ठस्मरणात्। सपिण्डाभावे गुरुगोत्रसमेऽपिवा। क्षत्रियाणां प्रातिस्विकगोत्राभावाद्गुरुनिर्देशः। अत एव व्यवधानात्सापिण्डाभावे सगोत्रविधानम्। तत्रापि स्वजातावित्येव।

सर्वेषामपि वर्णानां जातिष्वेव न चान्यतः।

इति वाक्यशेषात्। तेन च भिन्नजातीयसपिण्डसगोत्रव्यावृत्तिः। वैश्यजातेषु वैश्यजातिष्वित्यर्थः। जातिर्जातं तु सामा-

न्यमिति त्रिकाण्डीस्मरणात् । अत्रापि सामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववदेव गुरुगोत्रसमेऽपि प्रवर्त्तते। पौरोहित्यान् राजविशामिति स्मरणात्। स्वगोत्रे संस्कृता ये स्युरित्यस्य त्रैवर्णिकसाधारण्याच्च। सपिण्डाभावे गुरुगोत्रसमे इति अत्रापि तुल्यम्। प्रत्यासत्तेर्नियामकत्वात्। शूद्रजातिष्विति। अत्रापि प्रत्यासत्तिः पूर्ववदेव। गुर्वश्रवणाच्च गुरुगोत्रसमेऽपिवेत्यस्यात्राप्रवृत्तिः। तेन शूद्रजातिमात्रे इति सिध्यति। तदाह

ब्रह्मपुराणम्,

शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ।
परायत्तशरीराणां न कश्चित्पुत्र इष्यते ॥
तस्माद्दासस्य दास्याश्च जायते दास एव हि । इति ।

त्रैवर्णिकानां त्रैवर्णिकानुलोमजानां चोत्कृष्टत्वात्प्रतिलोमजानां चापकृष्टत्वान्न कश्चित्पुत्रः कर्तुं शक्य इति शूद्र एव पुत्रीकार्यो दासदास्युत्पन्नत्वादिति। ननु क्षत्रियादिवाक्यत्रयं नारम्भणीयं, सर्वेषामेव वर्णानामित्यनेन पौनरुक्त्यादिति चेन्नैवम्। क्षत्रियादिपदैः क्षत्रियादिसमानधर्मकमूर्धावसिक्तादीनामपि प्राप्त्यर्थत्वात् । ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति, क्षत्रियेण वैश्यायां वैश्य एव, वैश्येन शूद्रायां शूद्र एवेति शङ्खस्मरणात् । स्वजाताविति क्षत्रियादिसमानधर्मत्वेऽपि मूर्धावसिक्तादीनां क्षत्रियादिपुत्रत्वाभावबोधनाय। न च सर्वेषामित्यनेन पौनरुक्त्यम् । तस्य वर्णानामनुलोमानां च स्वजातिनियमानुवादेन प्रतिलोमानां धर्महीनत्वेन तदभावबोधनार्थत्वात् । तदेवाह । सर्वेषामिति । वर्णपदोपादानसामर्थ्याद्वर्णानामेव स्वजातिनियमः स्यान्नानुलोमजानामिति तत्प्राप्त्यर्थं सर्वपदोपादानम् । प्राप्तिश्च वर्णसमानधर्मत्वात् । न च

वर्णविशेषणं तत्। वर्णपदेनैव सर्ववर्णप्राप्तौ विशेषणानर्थक्यात्। ततश्च वर्णानामनुलोमजानां च जातिष्वेवेति नियमो नान्यतो नान्येषु प्रतिलोमेष्वित्यर्थः। नन्विदं पूर्ववाक्यमात्रमत्यासत्त्यप-वादायैव कुतो नेष्यते। अदूरबान्धवमितिवसिष्ठवाक्यविरोधा-दिति चेन्न, तस्य ब्राह्मणवाक्यैकवाक्यतोपसंहारात्। मैवम्। वृद्धव्यवहारविरोधात्। तस्माद्यथोक्तव्याख्यैव प्रयोजनवतीति।

सपिण्डेषु प्रत्यसन्नतया सर्वेषामविशेषेण दौहित्रभागिनेययोः पुत्रीकरणप्राप्तौ वर्णविशेषेण व्यवस्थामाह। दौहित्र इति। तुशब्दस्यावधारणार्थतया शूद्रैरेवेति नियमात् क्वचिदपि शास्त्रे भागिनेयस्य त्रैवर्णिकसुतत्वादर्शनाच्च शूद्रैरेव दौहित्रभागिनेयौ पुत्रीकार्यौ न त्रैवर्णिकैरिति समुदायार्थः*। भागिनेयश्चात्र दौहि-त्रस्याप्युपलक्षणम्। तदाह

---

* अत्र विषये द्वैतनिर्णये शङ्करभट्टोऽन्यथाऽऽह। तथाहि "प्रयो-गपारिजाते पुत्रपरिग्रहविधिः शौनकोक्तो लिखितः। तत्र वाक्यं,

दौहित्रो भागिनेयश्च शूद्रस्यापिच दीयते। इति।

तत्र केचिच्छूद्रस्यैव नान्यस्य ब्राह्मणादेरिति नियमं प्रतिपे-दिरे। तन्न। ब्राह्मणाय गां दद्यादित्यादावेव ब्राह्मणादेर्भाव्यु-पयोगाभावाद् गुणत्वेन विधेयत्वान्नियमविधिविषयता युक्ता, नत्विह शूद्रस्य सा युक्ता। भाव्युपयोगित्वादगुणत्वेनाविधेयत्वात्, अविधेये च नियमविध्यसंभवात्। कथं शूद्रो भाव्युपयोग इति चेत्, उच्यते। नापुत्रस्य लोकोऽस्ति जायमानो वै ब्राह्मणस्त्रिभि-र्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यो विद्यया ऋषिभ्य इति श्रुतिः। तत्र ब्राह्मणग्रहणमुपलक्षणमित्युक्तं "ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगात्" इत्यधिकरणे। एवं च शूद्रस्यापि पितृऋणापाकरणाविशिष्टत्वेन भाव्यत्वं चतुर्थ्यर्थषष्ठ्या

भवति । यथा दण्डी प्रैषानन्वाहेति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगाद्भाव्युपयोगिनो "मैत्रावरुणाय दण्डं प्रयच्छतीति" दण्डितया भाव्यत्वं चतुर्थ्या । ततश्च यथा तत्र दण्डस्य यजमानसंस्कारेण कृतोपकारस्यापि भाव्यत्वं त्यक्त्वा दण्डदानेन मैत्रावरुणं भावयेदिति वाक्यार्थे दण्डस्य विधेयत्वम्, एवमिह

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।

इति संभवत्यपि पुत्रस्य भाविविनियोगत्वेन भाव्यत्वे तत् त्यक्त्वा भागिनेयदौहित्रदानेन शूद्रं भावयेदिति वाक्यार्थे दौहित्रभागिनेययोर्विधेयत्वेन तयोरेव नियमविधिविषयत्वं युक्तम् । शूद्रस्य तु शेषितया तन्नियमे परिसंख्याऽऽपद्येत । यथा इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्तइति । सा च त्रिदोषा । न चैकत्र वाक्ये नियमपरिसंख्ययोः सम्भवः । तेन ब्राह्मणादिभिरपि दौहित्रभागिनेयौ पुत्रत्वेन ग्राह्याविति सिद्धम्" इति । तदयुक्तम् ।

दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।

इति पाठस्य सर्व निबन्धसंमतत्वेन तुशब्दस्यावधारणार्थतया शूद्रैरेव दौहित्रो भागिनेयश्च पुत्रत्वेन ग्राह्यौ नान्यैरिति परिसंख्यायाः "अत्र ह्येवावपन्ती" त्यादाविव श्रौतत्वेन त्रिदोषग्रस्तत्वाभावात्, तस्यां सत्यां नियमविधेरसम्भवात्,

ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ।

इत्युत्तरार्धेन भागिनेयस्य त्रैवर्णिकपुत्रत्वाभावबोधनाच्च । उत्तरार्धस्य शूद्रैरेवेतिपरिसंख्यासिद्धत्रैवर्णिकपुत्रत्वाभावार्थानुवादकतया तत्र भागिनेयपदस्य दौहित्रोपलक्षणत्वेन दौहित्रभागिनेययोरुभयोरपि ब्राह्मणादिपुत्रत्वाभावस्येष्टत्वाच्च ।

शाकलः,

सपिण्डापत्यकं चैव सगोत्रजमथापि वा ।

अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत् ॥

समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।

दौहित्रं भागिनेयं च मातृष्वस्सुतं विना ॥ इति ।

दौहित्रादिपरिहरणं च न स्वरूपेण किं तु नियोगे स्वोत्पादनानर्हत्वेन। अन्यथा भ्रात्रादीनां पुत्रीकरणापत्तेः । न चेष्टापत्तिः । पुत्रच्छायावहं सुतमिति वक्ष्यमाणपुत्रविशेषणेन विरोधात् । पुत्रच्छाया च पुत्रसादृश्यं, तच्च मुख्यस्वोत्पादनयोग्यत्वमेव। न च तच्च शास्त्राविरोधेनान्यत्र संभवतीति नियोगेन स्वोत्पादनयोग्यत्वे पर्यवस्यति। ततश्च नियोगे स्वोत्पादनानर्हाणां पुत्रच्छायारहितानां भ्रातृपितृव्यपितृव्यपुत्रमातुलमातुलपुत्रपैतृष्वस्त्रीयादीनामुपलक्षणार्थं त्रितयपरिगणनमिति सिद्धम् । इदानीं कीदृशः पुत्रीकार्य इति निरूप्यते । तत्र

शौनकः,

नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन ।

बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः ॥ इति ।

---

समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।

दौहित्रं भागिनेयं च मातृष्वस्सुतं विना ॥

इति शाकलवचनेन स्पष्टमेव दौहित्रादीनां ब्राह्मणादिपुत्रत्वाभावबोधनाच्च। दौहित्रादीनां पुत्रत्वेन ग्रहणनिषेधश्च न दौहित्रत्वादिना किन्तु नियोगे स्वोत्पादनानर्हत्वेनेत्यादि मूले एव स्पष्टम् । तस्मात् दौहित्रादयः ब्राह्मणादिभिः पुत्रत्वेन न प्रतिग्राह्या इत्येव सर्वमुख्यनिबन्धसिद्धान्तः । विस्तरस्तु दत्तकमीमांसायां द्रष्टव्य इति दिक् ।

एक एव पुत्रोऽस्येत्येकपुत्रस्तेन तत्पुत्रदानं न कार्यम् । न त्वेवैकं पुत्रं दद्यादिति वसिष्ठस्मरणात् । अत्र स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्य दानपदार्थत्वात् परस्वत्वापादनं च परप्रतिग्रहनिमित्तमिति प्रतिग्रहनिषेधोऽप्यनेनैव सिध्यति । अत एव

**वसिष्ठः,**

न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति । तत्र हेतुमाह । स हि संतानाय पूर्वेषामिति । संतानार्थत्वाभिधानेनैकस्य दाने संतानविच्छित्तिः प्रत्यवायो बोधितः । स च दातृप्रतिग्रहीत्रोरुभयोरपि, उभयशेषत्वात् । यत्तु

**चन्द्रिकायां स्मृत्यन्तरं,**

सुतस्य सुतदाराणां वशित्वमनुशासने ।

विक्रये चैव दाने च वशित्वं न सुते पितुः ॥ इति,

यच्च योगिस्मरणं देयं दारसुतादृतइति, तदेकपुत्रविषयम् । कदाचन आपद्यपि । तथाच

**नारदः,**

निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ।

आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना ॥

अदेयान्याहुराचार्या यच्च साधारणं धनम् । इति ।

इदमप्येकपुत्रविषयमेव । वसिष्ठशौनकैकवाक्यत्वात् । तर्हि केन पुत्रो देय इत्यत आह । बहुपुत्रेणेति । बहवः पुत्रा यस्येति बहुपुत्रः । नैकपुत्रेणेति निषेधात् द्विपुत्रस्यैव दानप्राप्तौ यद्बहुपुत्रेणेत्युच्यते, तद् द्विपुत्रस्यापि तत्प्रतिषेधाय ।

एकपुत्रो ह्यपुत्रो मे मतः कौरवनन्दन ।

एकं चक्षुर्यथा चक्षुर्नाशे तस्यान्ध एव हि ॥

इत्यादि भीष्मं प्रति शंतनूक्तेः ।

बहुपुत्रेणेति पुंस्त्वश्रवणात् स्त्रियाः पुत्रदानप्रतिषेधः । अत एव

वसिष्ठः,

न स्त्री पुत्रं दद्यादिति। नैरपेक्ष्यश्रवणाच्च। भर्त्रनुज्ञाने तस्या अप्यधिकारः। तथाच स एव। अन्यत्रानुज्ञानाद्भर्तुरिति। यत्तु दद्यान्माता पिता यं वेति, यच्च माता पिता वा दद्यातामिति, मातुः पितृसमकक्षतया ऽभिधानं, तदपि भर्त्रनुज्ञानविषयमेव। न चैवं विधवाया आपद्यपि पुत्रदानं न स्याद्भर्त्रनुज्ञानासंभवात् * परिग्रहवदिति वाच्यम्। इष्टापत्तेः। शौनकीयलिङ्गदर्शनेन तथा कल्पनात्। नैरपेक्ष्यैकत्वश्रवणाच्च स्त्रीनिरपेक्षस्यैकस्यापि भर्तुर्दानाधिकारः। "दद्यान्माता पिता यं वा" "माता पिता वा दद्यातामिति" मातृनिरपेक्षैकपितृनिर्देशात्, बीजस्य प्राधान्यात्, अयोनिजा अपि पुत्रा दृश्यन्ते इतिबौधायनीयहेतुदर्शनाच्च ।

भारतेऽपि,

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः । इति ।

श्रुतिरपि, आत्मा वै जायते पुत्र इति ।

---

* प्रत्यक्षभर्त्रनुज्ञाऽसंभवेऽपि "नापुत्रस्य लोकोऽस्ति" इति श्रुत्या अपुत्रस्य गत्यभावबोधनात् पुत्रकरणस्यावश्यकत्वेन शास्त्रमूलकतदनुज्ञाया अक्षतत्वेन पुत्रपरिग्रहो यथा विधवाया भवति तथा पुत्रदानं न स्यात् तत्रैवात्र मानाभावात् इति वैधर्म्येण दृष्टान्तो योजनीयः । विधवायाः पुत्रदानं नैव भवति इति इष्टापत्त्या समाधत्ते । इष्टापत्तेरिति । परिग्रहे

"वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च" ।

इति शौनकीयवचने ( कौस्तुभनिर्दिष्टे ) अविशेषश्रवणेन

विधवाया अपि अधिकारो बोध्यते इत्याह । शौनकीयेति । नचैवम् "अन्यत्रानुज्ञानाद्भर्तुः" इतिवसिष्ठोक्तनिषेधवैयर्थ्यम्, शास्त्रीयानुमतेःसर्वत्र सत्त्वेन व्यावर्त्याभावादिति वाच्यम् । मुमुक्षोः पत्न्यन्तरे पुत्रवतो वा ऽनुज्ञाया असंभवात् स्वपुत्रार्थमेव तं प्रतिग्रहीष्यन्त्याः स्त्रियाः परिग्रहव्यावृत्त्यर्थत्वात् । जीवति भर्तरि तदनुमतिं विना न पुत्रीकरणीय इत्यर्थकत्वाद्वा । मृते तु भर्तरि यत्पारतन्त्र्यं तदनुमतिरेवापेक्षिता । एवं सति प्रतिषेधस्य दृष्टार्थता भवति । वसिष्ठोक्तौ भर्तृपदं च उपलक्षणमिति तात्पर्यम् । तस्माददत्तानुज्ञे भर्तरि मृते ऽपि भार्याया दत्तकग्रहणमविरुद्धमिति स्पष्टं मित्रमिश्रकृते व्यवहारप्रकाशे दायभागप्रकरणे द्वादशविधपुत्रनिरूपणावसरे इति तत्रापि द्रष्टव्यम् ।

निर्णयसिन्धुकारोऽपि "न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा ऽन्यत्रानुज्ञानाद्भर्तुः" इत्युपक्रम्य इदं च भर्तृसत्त्वे, अन्यथा "दद्यान्माता पिता वा यम्" इति व्यासवचोविरोधः स्यात् । दानं प्रतिग्रहोपलक्षणम् इति वदन् विधवायाः पुत्रस्य दाने परिग्रहे चाधिकारं बोधयति । समन्त्रकहोमस्य पुत्रप्रतिग्रहाङ्गत्वात् व्याहृत्यादिमन्त्रपाठे च स्त्रीणामनधिकारान्न तासां तत्राधिकार इति तु नाशङ्कनीयम् । भर्त्रनुज्ञायां सत्यां, विप्रद्वारा होमादिसंपादनेन प्रतिग्रहमन्त्रपाठस्य निषादस्थपतिन्यायात् कल्पनेन च अधिकारकल्पनवत् विधवानामपि तत्कल्पनात् । नापुत्रस्य लोकोऽस्तीति अलोकतापरिहारार्थं शास्त्रीयानुमतेस्तत्रापि संभवात् । विधवायाः नियोगेन पुत्रोत्पादनसंभवेन अलोकतापरिहारस्य सिद्धत्वात् भर्त्रनुज्ञातायाः सधवाया इव अधिकारकल्पकस्य स्पष्टवचनस्याभावान्न तस्याः परिग्रहाधिकार इति तु कलौ नियोगस्य निषिद्धत्वादसमञ्जसम् । अलोकतापरिहारस्य सार्वकालिकत्वात् ।

यत्तु, मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥

इति ब्रह्मचर्यव्रतेनैव अलोकतापरिहारसिद्धेर्न शास्त्रीयानुमतिःसिध्यति। नापि भर्तृपदस्योपलक्षकत्वम्। ततश्च न तद्बलात् वैदिकहोमाङ्गकवैदिकमन्त्रकरणके पुत्रपरिग्रहेऽधिकारः सिध्यतीति दत्तकमीमांसाकारः। तन्न। स्वर्गं गच्छत्यपुत्रापि इति वाक्यशेषेण तस्याः स्वर्गप्राप्तिबोधनेन भर्तुः अलोकतापरिहारस्यासिद्धत्वात्। निवृत्तिनिरतानां ब्रह्मचार्यादीनां पुत्रोत्पादनमन्तरेणापि महराद्युत्तमलोकप्राप्तिरिव निवृत्तिनिष्ठायाः ब्रह्मचारिण्या अपि पुत्रपरिग्रहमन्तरेण यद्यपि स्वर्गादिलोकप्राप्तिः सम्भवति तथापि प्रवृत्तिमार्गाभिनिविष्टानां गृहस्थानामलोकतापरिहाराय पुत्रोत्पादने यथा पत्न्यन्तरपरिग्रहेणापि अधिकारः नापुत्रस्य लोकोऽस्ति इत्यनेन बोध्यते तथा प्रवृत्तिमार्गाभिनिविष्टचित्तायाः स्वस्य भर्तुश्चालोकतापरिहाराय पुत्रपरिग्रहाधिकारबोधने न किंचिद्बाधकम्। ततश्च तद्बलात् व्रतादाविव ब्राह्मणद्वारा वैदिकहोमकल्पनं निषादस्थपतिन्यायेन प्रतिग्रहाङ्गवैदिकमन्त्रपाठकल्पनं च सिध्यति। अपुत्रेणेत्यादौ पुंस्त्वं श्रुतं च उद्देश्यगतत्वेन ग्रहैकत्ववदविवक्षितम् इत्यादि तु संस्कारकौस्तुभे स्पष्टम् अधिकजिज्ञासुभिस्तत एवावधार्यम्। व्यवहारमयूखे धर्मसिन्धौ च विधवानां स्त्रीणां पुत्रपरिग्रहाधिकार उपपादितः दत्तकचन्द्रिकायां च। एवं च बहुनिबन्धविरोधादत्रविषये दत्तकमीमांसामतं हेयमेव। नापुत्रस्य लोकोऽस्ति इतिश्रुतिबोधितालोकतापरिहारायैव परिग्रहः। तेन श्रुतिविरुद्धमाचरन्त्याः केवललोकव्यवहाराय नेति तु सर्वदाऽनुसन्धेयम् इति दिक्।

मानवे, दद्यातामित्युभयकर्तृकताश्रवणाच्चोभयाधिकारी मुख्यः। अत एव

वासिष्ठः,

शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकः। तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति।

बौधायनोऽपि, मातापित्रोरेव संसर्गसाम्यादिति। अत एव पिता वा दद्यातामिति।

मनुना मातुर्भर्त्रनुज्ञानसापेक्षत्वाज्जघन्यत्वं, स्त्र्यनुज्ञाननैरपेक्ष्यात्पितुर्मध्यमत्वं, जनकतासामान्यादुभयोर्मुख्यत्वमभिप्रेत्य पूर्वपूर्वास्वरसादुत्तरोत्तरमभिहितम्। न चेदमेकमेव वाक्यं द्विवचनान्तैकक्रियाश्रवणादिति वाच्यम्। मध्ये विकल्पासंगतेः। तस्मादेतद्वाक्यत्रयमेव। अत एव योगीश्वरः दद्यान्माता पिता यं वेति प्रत्येकान्वय्येकवचनान्तमेव क्रियापदमुदाजहार। तत्रापि निमित्तमाह। प्रयत्नत इति। प्रकृष्टो यत्नो यस्मिन्कालेऽसौ प्रयत्नः आपत्कालस्तेन चापत्काले एव पुत्रदानं नान्यथेत्यर्थः। यथाह

कात्यायनः,

आपत्काले तु कर्त्तव्यं दानं विक्रय एवच।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः॥ इति।
अक्रमात्पुत्रदाराणां दानादि निषिध्यते।

मनुरपि,

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। इति।

आपदि दुर्भिक्षादौ। अनापदि दाने दातुर्दोषः। अन्यथा न प्रवर्त्तेतेति निषेधात्। यद्वा प्रयत्नतः प्रतिग्रहीतुः प्रयत्नाद् आपदि अपुत्रत्वइति।

अपुत्रेणैव कर्त्तव्यः पुत्रः प्रतिनिधिः सदा।

इत्यत्रिस्मरणात्। व्याख्यातं चैवमेवार्कचन्द्रिकाभ्याम्, आपदि प्रतीग्रहीतुरपुत्रत्वइति। विशेषान्तराण्यपि-

कालिकापुराणे,

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः॥
पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः।
दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोच्यते॥
ऊर्द्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत्॥
पौनर्भवं तु तनयं जातमात्रं समानयेत्।
कृत्वा पौनर्भवष्टोमं जातमात्रस्य तस्य वै॥
सर्वांस्तु कुर्यात्संस्कारान् जातकर्मादिकान्नरः।
कृते पौनर्भवष्टोमे सुतः पौनर्भवस्ततः॥ इति।

दत्तेति। अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक् स्वशाखोक्तविधिना जातकर्मादिभिः संस्कृताश्चेत्तदैव प्रतिग्रहीतृपुत्रतां प्राप्नुवन्ति नान्यथेत्यर्थः। तदाह

वसिष्ठः,

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक्॥ इति।

दत्ताद्या इत्यादिपदेन कृत्रिमादीनां ग्रहणम्। प्रतिनिधित्वसाम्यात्। निजगोत्रेणेति। यद्यपि नामकर्मादिषु साक्षाद् गो-

त्रस्य करणता न श्रूयते तथापि तदङ्गभूते वृद्धिश्राद्धे तत्संबन्धावश्यंभावात्प्रधानेऽपि तत्संबन्ध इति । चूडायां तु साक्षादेव तत्संबन्धः ।

शिखा अपिच कर्त्तव्याः कुमारस्यार्षसंख्यया ।

इति स्मरणात् । संस्कारैः पुत्रत्वमित्युक्तं, तदेव संस्कारविवेचनेनान्वयव्यतिरेकाभ्यां विविनक्ति । पितुर्गोत्रेणेति । यः पुत्र आचूडान्तं जातकर्मादिचूडान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य पुत्रतां न याति । एतेन जातकर्मादिचूडान्तसंस्कारसंस्कृतस्यैव प्रतिग्रहीतृपुत्रत्वं भवतीति गम्यते । अकृतजातकर्माद्यसंभवे अकृतचूडोऽपि परिग्राह्य इत्याह । चूडाद्या इति । यदि चूडाद्याः संस्काराः निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण कृताः, वैशब्दोऽवधारणे, तदैव दत्ताद्यास्तनयाः स्युरन्यथा तेषां दासतोच्यतइति । चूडा आद्या येषां ते तथेति, न तु चूडाया आद्या इति । पूर्वेण पौनरुक्त्यापातात् । अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः । तथाचाकृतजातकर्मादिर्मुख्योऽकृतचूडोऽनुकल्प इति सिध्यति । अन्यथा दासतोच्यतइति । युक्तं चैतत् । नेदं स्त्रीपुरुषसंबन्धजन्यपुत्रत्ववत् लौकिकं पुत्रत्वं किं तु शास्त्रैकसमधिगम्यं होमसंस्कारादिजन्यत्वाद्भार्यात्ववदलौकिकसंस्कारविशेषपर्यवसन्नं तद् । यथा प्रतिग्रहादिना स्वत्वास्पदीभूतायां योषिति पाणिग्रहणादिना भार्यात्वं तथा प्रकृतेऽपि प्रतिग्रहादिना स्वीकृते बाले होमसंस्कारादिभिः पुत्रत्वम् । तथाच होमसंस्काराद्यन्यतमाभावे न पुत्रत्वं किं तु दासत्वमेव स्वत्वमात्रास्पदत्वादिति । अन्यथा चूडाद्यकरणे कृतचूडादिपरिग्रहे वा दासता भवति न तु पुत्रत्वमित्यर्थः ।

असंस्कृतः पुत्रीकार्य इति स्थितं, तत्रावध्यपेक्षायामाह । ऊर्ध्वमिति । असंस्कृतोऽपि पञ्चमादूर्ध्वं न ग्राह्यः कालाभावेन पुत्रत्वानुत्पत्तेः । अनेन पञ्चैव वर्षाणि पुत्रपरिग्रहकाल इत्युक्तं भवति । व्यतिरेकेणाभिधानं तु पञ्चमानन्तरं गौणोऽपि कालो नास्तीति प्रतिपादनाय । अन्यथा

स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्त्तितः ।

इति न्यायेन पञ्चमानन्तरस्य गौणकालत्वापत्तेः । ततश्च जननमारभ्यातृतीयवर्षं मुख्यःकालः। आचूडान्तमित्यभिधानात्। यद्यप्यत्र चूडैव श्रूयते न तृतीयं वर्षं तथापि तृतीयवर्षस्य मुख्यकालतया ऊर्ध्वं तु पञ्चमाद्वर्षादित्युपसंहारे वर्षश्रवणाच्चात्रापि चूडाशब्दस्य तृतीयवर्षपरतैवाभिप्रेतेति गम्यते । अन्यथोपनीतिसहभावपक्षे आऽष्टमवर्षमकृतचूडस्य परिग्रहापत्तेः। न चेष्टापत्तिः । ऊर्ध्वं तु पञ्चमाद्वर्षादित्यनेन विरोधात् । तस्मादाचूडान्तमित्यत्र चूडाशब्दस्तृतीयवर्षपर एव युक्तः । तृतीयानन्तरमापञ्चमं गौणः। ऊर्ध्वं तु गौणोऽपि नेति स्थितम् * ।

यस्तु कात्यायनस्मरणे,

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।

दाराः पुत्राश्चेत्यनिच्छूनां दानादिनिषेधः सोऽपि पञ्चवार्षिकस्यैव नाधिकवयस्कस्येति व्याख्येयः । यच्च सदृशं तु प्रकुर्याद्यमिति वाक्ये गुणदोषविचक्षणमिति पाठमभिप्रेत्य विचक्षणं न तु बालमिति सर्वज्ञेन व्याख्यातं तदपि पञ्चवार्षिकमेवाभिप्रेत्य विचक्षणं चातुर्यविशेषेण न तु बालं, बाल आषोडशाद्वर्षादितिल-

---

* गोत्रजस्तु संस्कृतः कृतविवाहश्च दत्तको भवतीति धर्मसिन्धौ । अत्र विषये संस्कारकौस्तुभे विस्तरो द्रष्टव्यः ।

क्षणविशिष्टं न कुर्यादित्यर्थ इति व्याख्येयम् । तर्ह्यकृतचूडान्तसंस्काराभावे कथमित्यत आह ।

गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् । इति ।

पञ्चवर्षीयं चूडान्तसंस्कारसंस्कृतमित्यर्थः । ननु कथं तस्य ग्रहणं दासताभिधानादित्यत आह । पुत्रेष्टिमिति । अयमत्राभिसंधिः । अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छतीति वाक्ये प्रजाफलकत्वमिष्टेः श्रूयते । तद्यत्रानुत्पन्ना प्रजा तत्र तत्स्वरूपमेव भाव्यं, यत्र तूत्पन्ना परिगृह्यते तत्र स्वरूपस्य सिद्धत्वेन भाव्यत्वासंभवात् प्रजात्वमेव भाव्यमिति कल्प्यते । अन्यथा प्रकृतविध्यनुपपत्तेः । तच्च दासत्वापनोदमृते न संभवतीति तदपनोदोऽप्यवश्यमभ्युपेयः । अन्यथा प्रजात्वमात्रसंपादकत्वं पुत्रपरिग्रहमात्रे स्यात् । यदि च संस्कारैरेव तत्र पुत्रत्वोत्पत्तेर्न तदपेक्षेति तर्हि प्रकृतेऽपि तुल्यम् ।

सर्वांस्तु कुर्यात्संस्कारान् जातकर्मादिकान्नरः ।

इति संस्काराभिधानात् । तस्मात्पुत्रेष्ट्या पूर्वसंस्कारप्रयुक्तदासत्वापनोदपूर्वकप्रजात्वसंपादनात्संस्कृतोऽपि परिग्राह्य इति स्थितम् । यद्येवं तर्हि संस्कृतमित्येव वाच्यं किं पञ्चवर्षीयपदोपादानेनेति चेत्, मैवम् । पञ्चवर्षीयस्यैव परिग्रहे पुत्रेष्टिरिति नियमार्थत्वात् । अन्यथोपनीतिसहभावपक्षे आऽष्टमवर्षमसंस्कृतस्य परिग्रहे ऊर्ध्वं तु पञ्चमाद्वर्षादिति विरुध्येतेत्युक्तमेवानुपदम् । नियमश्चाक्षरग्रहणपूर्वकब्रह्मवर्चसादिफलकोपनयनप्राप्त्यर्थः । न चायं नियमः पूर्ववाक्येनैव सिद्ध इति वाच्यम् । तस्याकृतसंस्कारावधिसमर्पकत्वेन प्रकृतार्थत्वाभावात् । प्रथममिति संस्कारेभ्यः प्रागित्यर्थः । ननु परिग्रहहोमादेव प्रागिति कुतो नेष्यते । गृहीत्वेति

साङ्गायाः ग्रहणभावनायाः स्वकामत्वयेन पूर्वकालताऽवगमात् । पुत्रेष्ट्या पूर्वसंस्कारापनोदेन संस्कारान्तरापेक्षणाच्चेत्यलं प्रसक्तानुप्रसक्त्या ।

कः कीदृश इति निरूपितमिदानीं कथमिति निरूप्यते । तत्र शौनकः,

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् ।
वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम् ॥
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ।
मधुपर्केण संपूज्य राजानं च द्विजान् शुचीन् ॥

राजा ऽत्र ग्रामाधीशः । सन्निहितत्वात् । द्विजान् त्रीन् याचनार्थतया मधुपर्कादिना संपूज्येत्यर्थः ।

बर्हिः कुशमयं चैव पलाशं चेध्ममेवच ।
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ॥

बन्धूनात्मपितृबन्धून् । ज्ञातीन्सपिण्डान् । बन्ध्वाद्याह्वानं दृष्टार्थं राजाह्वानवत् । बध्नन्ति स्नेहेनेति बन्धवः । जानन्त्यात्मीयतया परिगृहीतं नरमिति ज्ञातयः ।

बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः ।

बन्धूनाहूतान् । ब्राह्मणान् पूर्ववृतान् । चकारादाहूतान् ज्ञातींश्च संभोज्येत्यर्थः ।

अग्न्याधानादिकं तन्त्रं कृत्वा ऽऽज्योत्पवनान्तकम् ।
दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् ॥

याचयेत् याचनं कारयेत् पूर्वं वृतैर्ब्राह्मणैरित्यर्थः ।

दाने समर्थो दाता ऽस्मै ये यज्ञेनेति पञ्चभिः ।

दानसामर्थ्यं बहुपुत्रत्वं पुत्रानुमतिश्चेत्यादि । पञ्चभिः, दद्यादिति शेषः । प्रतिगृभ्णीत मानवं सुमेधस इति मन्त्रलिङ्गात् ।

देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥
वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम् ।

पुत्रच्छाया पुत्रसादृश्यं, तच्च व्याख्यातं प्राक् ।

नृत्तगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ।
गृहमध्ये तमाधाय चरुं हुत्वा विधानतः ॥
यस्त्वा हृदेत्यृचा चैव तुभ्यमग्रऋचैकया ।
सोमोददद्दित्येताभिः प्रत्यृचं पञ्चभिस्तथा ॥
एवं सप्तभिर्मन्त्रैः सप्तचर्वाहुतीर्हुत्वेत्यर्थः ।

वृद्धगौतमस्तु विशेषमाह,

पायसं तत्र साज्यं च शतसंख्यं तु हावयेत् ।
प्रजापते न त्वदेतामित्युद्दिश्य प्रजापतिम् ॥ इति ।

एतदनन्तरं ब्राह्मणानां सपिण्डेष्वित्यादयः पुत्रदानं प्रयत्नत इत्येतदन्ताः श्लोकाः पूर्वमेव व्याख्याताः । तदनन्तरं

दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।

द्विजोत्तमो ब्राह्मणः ।

नृपो राज्यार्द्धमेवापि वैश्यो वित्तशतत्रयम् ।
शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ॥

अशक्तश्चेद्यथाबलमित्यस्य सर्वशेषत्वान्नृपादीनामप्यर्धराज्याद्यसंभवे यथाशक्त्येव दक्षिणादानं द्रष्टव्यम् । इति शौनकीयः कल्पः ।

अथ वासिष्ठः कल्पः । शुक्रशोणितसंभवः मातापितृनिमित्तकस्ततस्तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवतो न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां, न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः, पुत्रं प्रतिग्रहीष्यन् बन्धूना-

हूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिसंगृह्णीयात्संदेहेचोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन बहूंस्त्रायतइति, तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति ।

अत्र शुक्रशोणितसंभव इत्यारभ्यान्यत्रानुज्ञानाद्भर्त्तुरित्यन्तं व्याख्यातं प्राक् । निवेशनं गृहम् । व्याहृतिभिर्व्यस्ताभिस्समस्ताभिश्चाज्यभागान्ते आहुतिचतुष्टयं हुत्वेत्यर्थः । अदूरबान्धवमित्यारभ्य त्रायतइत्येतदन्तं व्याख्यातं प्राक् । कल्पतरुस्त्वसंन्निकृष्टमेव प्रतिगृह्णीयादिति पाठमभिप्रेत्याह । असन्निकृष्टमेव अविज्ञातगुणदोषमपि । अप्यर्थ एवकारः । संदेहइति । बान्धवानामसंन्निधानाच्च ज्ञातिसंदेहे शूद्रत्वेनाध्यवस्य संस्कारहीनमेव स्थापयेदिति । अनयोश्च शौनकवासिष्ठकल्पयोः शाखाभेदेन शक्ताशक्तभेदेन वा व्यवस्थेति ध्येयम् । अन्येऽपि दत्तपुत्रीया विशेषास्तत्तत्प्रकरणे वक्ष्यन्ते । इति दत्तपुत्रप्रकरणम् ।

## अथ नामकरणम् ॥

तत्र

**ज्योतिर्वसिष्ठः,**

जन्माहे द्वादशाहे वा दशाहे वा विशेषतः ।
कुर्याद्वै नामकरणं कुमारस्येति वै श्रुतेः ॥ इति ।

**महेश्वरोऽपि,**

कार्यं सूनोर्जननसमये जातकर्माथ नाम
पित्रा ऽन्यैर्वा जननदिवसात् द्वादशेऽह्न्याद्यके वा। इति ।

अत एव आश्वलायनसूत्रवृत्तिकारोऽपि जातकर्मानन्तरमेव

नामकरणं कार्यमित्यभिप्रेत्य नाम चास्मै दद्युरिति सूत्रं व्याचष्टे। तथाच तदीयो ग्रन्थः। नामकरणमाचार्येण कालान्तरानुक्तेर्जातकर्मानन्तरं कार्यमित्येकइति। कालान्तरमुक्तं

विष्णुपुराणे,

ततस्तु नाम कुर्वीत पितैव दशमेऽहनि इति।

भविष्यपुराणे,

नामधेयं दशम्यां तु केचिदिच्छन्ति पार्थिव। इति।

व्यासोऽपि,

नामधेयं दशम्यां तु केचिदिच्छन्ति सूरयः। इति।

पारस्करोऽपि,

दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोतीति। उत्थाप्य, सूतिकामिति शेषः। इदं च दशमदिनविधानमाशौचानिवृत्तावपि विप्राणां नामकरणकर्त्तव्यतां गमयति। अत एव

नारदः,

जन्मतो दशमे वापि द्वादश्यां वापि तत्पुनः।
विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः॥ इति।

जन्मतो दशमेऽह्नि विप्राणां नामकर्माभिधायाशौचान्ते क्षत्रियादिविषयत्वेनोपसंहृतवान्। कल्पतरुस्तु दशम्यामित्येतद्येषां दशाहतः प्राक् शुद्धिस्तेषामित्याह। शेषयोः क्षत्रियवैश्ययोः। शूद्राणां त्वनन्तरमाह

स एव,

शूद्राणामपिचैवं स्यात् सतां नामासतामपि।
केचिन्नाम सतां प्राहुरेकत्रिंशदिने शुभम्॥ इति।

एवम् आशौचान्तइत्यर्थः एतेनाशौचव्यपगमे नामधेयमिति विष्णुवाक्यं,

आशौचे च व्यतिक्रान्ते नामकर्म विधीयते।

इति शङ्खवाक्यं च विमातिरिक्तविषयं व्याख्यातम्। अन्ये स्वाशौचापगमे नामधेयमिति विष्ण्वादिवाक्यानुरोधेन दशरात्रे व्युष्टइति गोभिलवाक्यैकवाक्यतार्थं दशमेऽहनीत्यादिवाक्या-न्यतीतपदाध्याहारेण योजयन्ति। तदिदं मेधातिथ्यपरार्कौ न क्षमेते। लक्षणायां प्रमाणाभावादिति। विष्णुवाक्यं तु व्याख्यात-मेवानुपदम्। याज्ञवल्क्यस्तु एकादशेऽहनीत्याह, अहन्येकादशे नामेति। द्वादशेऽहनीत्याह

**वसिष्ठः**

दशमे द्वादशे वा ऽह्नि नामकर्म विधीयते।
ततः परं विधानोक्तनामनक्षत्रराशिषु॥ इति।

**मनुरपि,**

नामधेयं दशम्यां तु द्वादश्यां वा ऽस्य कारयेत्।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते॥ इति।

**व्यासोऽपि,**

नामधेयं दशम्यां तु केचिदिच्छन्ति सूरयः।
द्वादश्यामाहुरन्ये तु मासे पूर्ण तथा परे॥ इति।
त्रयोदशाहादीनप्याह

**बृहस्पतिः,**

दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे।
षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात्॥

इति मदनरत्ने पाठः। प्रयोगपारिजाते त्वत्रैव पाठान्तरम्।

द्वादशे दशमे वा ऽपि जन्मतो दिवसे शुभे।
षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात्॥ इति।

दशाहद्वादशाहयोर्विप्राणां, त्रयोदशे क्षत्रियाणां, षोडशे वैश्यानां, शेषयोः शूद्राणामिति वर्णतः क्रमादित्यस्यार्थः । तथाच

संग्रहे,

एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे ।
वैश्यानां षोडशे कार्यं मासान्ते शूद्रजन्मनः ॥ इति ।

एकादशाहपदं दशाहद्वादशाहयोरुपलक्षणम् ।

महाभारते,

द्वादशे षोडशे विंशे द्वात्रिंशे क्रमतो दिने ।
नाम कार्यं द्विजातीनां विप्रस्य दशमेऽपि वा ॥ इति ।

नामधेयानुवृत्तौ भविष्यपुराणे,

द्वादश्यामपरे रात्र्यां मासे पूर्णे तथा परे ।
अष्टादशेऽह्नि च तथा वदन्त्यन्ये मनीषिणः ॥ इति ।

गोभिलगृह्यपरिशिष्टयोः,

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणमिति ।

तदयं संकलितोऽर्थः । प्रथमदशमैकादशद्वादशत्रयोदशषोडशाष्टादशैकोनविंशद्वात्रिंशैकात्रिंशद्वात्रिंशशतरात्रसंवत्सरान्ताः यथाव्यवस्थं नामकरणकालाः । प्राप्तकालेऽपि निमित्तविशेषेण

निषेधमाह

गर्गः,

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः ॥

कुर्यादिति शेषः । अन्यच्च,

अमासङ्क्रान्तिविष्ट्यादौ मासकालेऽपि नाचरेत् । इति ।
एवमतिक्रान्ते कालान्तरमाह

नारदः,

देशकालोपघाताद्यैः कालातिक्रमणं यदि ।
अनस्तगेज्ये च सिते तत्कार्यं चोत्तरायणे ॥ इति ।

अथात्र तिथ्यादिनिर्णयः । तत्र

नृसिंहः,

छिद्राख्यां पर्व नवमीं हित्वा शेषाः शुभावहाः । इति ।

छिद्राख्यामित्यादि । चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दश्यः छिद्राः । एताश्च पञ्चदशीं नवमीं च सप्त तिथीर्विहाय शेषास्तिथयो नामकर्मणि विहिताः ।

युग्माश्च तिथयः सर्वा अजधर्मतिथीर्विना ।
पक्षच्छिद्रा इति ज्ञेयाः सर्वकर्मसु गर्हिताः ॥ इति ।

अजो द्वितीया । धर्मो दशमी । वारानाह

वसिष्ठः,

बुधेन्दुसितजीवानामंशके दिवसोदये ।
द्रेक्काणे कालहोरायां नामकर्म प्रशस्यते ॥

बृहस्पतिरपि,

शुभवारे च षड्वर्गेशुभानां नामसंपदः । इति ।

कालनिर्णयेऽपि,

पापानां वारवर्गाश्च निन्दिता नामकर्मणि । इति ।

नक्षत्रं बृहस्पतिराह,

त्र्युत्तरासु धनिष्ठायां रेवतीहस्तयोरपि ।
मूलवारुणपुष्येषु श्रवणादित्ययोरपि ॥

मैत्रवाजिभयोः स्वातिरोहिण्यैन्दवभेषु च ।
कुर्यान्नामक्रियां विद्वानायुःश्रीकीर्त्तिवृद्धये ॥ इति ।
योगास्तु निषिद्धेतराः ज्ञातव्याः । करणान्याह

नृसिंहः,

शकुन्यादीनि विष्टिं च नामकर्माणि वर्जयेत् । इति ।
आदिशब्दाच्चतुरङ्घ्रिनागकिंस्तुघ्नानां ग्रहणम् । लग्ननिर्णयमप्याह

स एव,

लग्नद्व्यष्टमके सर्वे न शुभा नामकर्मणि ।
केन्द्रत्रिकोणगाः सौम्याः व्यये सर्वे त्वशोभनाः ॥ इति ।

ज्योतिर्वसिष्ठोऽपि,

स्वपुत्रायभ्रातृपत्नीनवमस्थाः शुभग्रहाः ।
पापास्त्रिलाभषष्ठस्था नामकर्मणि पूजिताः ॥
व्ययवर्ज्याः शुभाः सौम्याः प्रयच्छन्ति महद्यशः । इति ।

बृहस्पतिरपि,

अष्टमे तु ग्रहाः सर्वे नेष्टास्ते नामकर्मणि ।
धनकर्मसुतभ्रातृनवमस्थः शुभः शशी ॥
शुद्धे व्ययाष्टमे लग्ने पापाश्च त्रिषडायगाः ।
शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥ इति ।
अत्र पूर्वाह्णादिकालनिर्णयो बृहस्पतिनोक्तः ।
पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥ इति ।

ज्योतिर्वसिष्ठोऽपि,

पूर्वाह्णे चैव मध्याह्ने कुर्यादेवं विचक्षणः ।
अपराह्णे च रात्रौ च नामकर्म विवर्जयेत् ॥ इति ।

तच्च नाम चतुर्विधम्। कुलदेवतासंबद्धं माससंबद्धं नक्षत्रसंबद्धं व्यावहारिकं चेति।

तत्राद्यमाह शंखः, कुलदेवतासंबद्धं पिता नाम कुर्यादिति। कुलदेवता कुलपूज्या देवता तया संबद्धं तत्प्रतिपादकमित्यर्थः। अस्मिंश्च व्याख्याने अनादिरविच्छिन्नः शिष्टाचारो मूलम्। अन्यथोक्ताचारे मूलान्तरकल्पनाक्लेशापत्तेः।

अन्ये तु कुलसंबद्धं देवतासंबद्धमित्यप्याहुः। तत्र मासनामान्याह

गार्ग्यः,

मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता।
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः॥
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात्॥ इति।

अनुक्रमोऽत्र मार्गशीर्षादिकः। चैत्रादिक्रमे वैकुण्ठादिनामश्रवणात्। तथाच

गर्गः,

चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः।
उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा।
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः॥ इति।

नक्षत्रनामाहतुः शङ्खलिखितौ, नक्षत्राभिसंबद्धं पिता वा कुर्यादन्यो वा कुलवृद्ध इति। नक्षत्रादिसंबद्धमिति मदनरत्नादिपाठः। तत्रादिशब्देन व्यावहारिकं नाम गृह्यते। नाक्षत्रमेवच अभिवादनिकं नामेत्युच्यते। तथाच

**बौधायनः,**

नक्षत्रनामधेयेन द्वितीयं नामधेयं गुह्यमस्यान्यदभिवादनीयमोपनयनान्मातापितरौ संविदितौ भवतो विज्ञायते तस्माद्द्विनामा ब्राह्मण इति। द्वितीयं व्यावहारिकापेक्षया, तदेव गुह्यम्। अन्यत् व्यावहारिकनाम्नोऽन्यत्। नाक्षत्रमिति यावत्। न पुनस्तृतीयं, द्विनामा ब्राह्मण इतिवाक्यशेषासंगतेः। एतदेवाभिप्रेत्याह

**आश्वलायनः,**

अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनादिति।

**शौनकोऽपि,**

येन नाम्नोपनीतोऽसौ करिष्यत्यभिवादनम्।
तच्चास्मिन्नेव समये कर्त्ता ऽसौ नामकर्मणः॥
अभिवादननामेदमस्येत्यालोच्य चेतसा।
उपांशु निर्दिशेच्चैतन्न जानीयुर्यथा परे॥
तच्च नामौपनयनं स्मरेतां पितरौ शिशोः॥ इति।

अभिवादनीये च प्रयोगनियममाह

**बौधायनः,**

पुत्रस्य नाम गृह्णात्युपतिष्ठते वा। यथा नक्षत्राणि रोहिणीमृगशीर्षमघाचित्राज्येष्ठाश्रवणशतभिषग्रेवत्यश्वयुक्षु प्रथमाक्षरवृद्धिरस्माद्रोहिण्यां रौहिणायेति, तथेतराणीति तिष्याश्लेषाहस्तविशाखानुराधाषाढाश्रविष्ठासु प्रकृतिवत्तिष्यायेति, तथेतराणि फल्गुन्यां फाल्गुनायेति स्वातीपुनर्वस्वोः स्वातये पुनर्वसवइति मूलार्द्रयोर्मूलकायार्द्रकायेति प्रोष्ठपदासु प्रौष्ठपदाय प्रोष्ठपदायेति वा भरण्यामपभरणायेति अग्नये कृत्तिकाय कार्त्तिकायेति वा

ख्यातानि। होतुः स्त्रीविषये कुमार्यै रोहिण्यै सुश्रियै जयन्त्याइति प्रकृतिवत्तिष्यायै वेति फाल्गुन्यै स्वात्यै पुनर्वसवे इति। मूलार्द्र-कायै मूलकायै वेति प्रोष्ठपदासु निर्ऋत्यै रुद्राण्यै चेत्यापभरण्यै कार्त्तिकायै गौरिण्यै स्वस्तीति। अग्नयइति तत्तन्नक्षत्रदेवतानामु-पलक्षणम्। तथाच

लगधः,

अग्निः प्रजापतिः सोमो रुद्रो दितिर्वृहस्पतिः।
सर्पाश्च पितरश्चैव भगश्चैवार्यमा ऽपिच॥
सविता त्वष्टा ऽथवायुश्चेन्द्राग्नी मित्र एव च।
इन्द्रो निर्ऋतिरापो विश्वे देवास्तथैवच॥
विष्णुर्वसवो वरुणो अजैकपात्तथैवच।
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एवच॥
नक्षत्रदेवता एता एता वै यज्ञकर्मणि।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम्॥ इति।

यज्ञकर्मणीत्यभिवादनस्याप्युपलक्षणम्। देवताश्रयं नक्षत्रा-श्रयं वा अभिवादनीयं नामेति खादिरसूत्रात्। देवता ऽत्र नक्षत्रदेवता। ज्योतिर्विदस्तु जन्मनक्षत्रचरणलक्षितस्वरोदया-भिहितशतपदचक्रान्तर्गताक्षरादिकमेव कार्यमित्याहुः।तथाच गृह्य-परिशिष्टे, तदक्षरादिकं नाम यस्मिन्धिष्ण्ये तदक्षरमिति। शत-पदचक्रसारोद्धारो

ज्योतिषार्केऽभिहितः,

चूचेचोला पदेष्वाद्ये लीलूलेलो यमस्य भे।
आईऊए इमेऽग्नेर्भे ओवावीवू तथा कभे॥
वेवोकाकी मृगः ख्यातः कूघङच्छास्तु रौद्रभे।

केकोहाही त्वदितिभे हूहेहोडा च पुष्यभे ॥
डाडूडेडो इमे सार्पे मामीमूमे मघाभिधे ।
मोटाटीटू तथा भाग्ये टेटोपाप्यर्यमर्क्षके ॥
पूषाणाठा तथा हस्ते पेपोरारीति चित्रभे ।
रूरेरोता तथा स्वातौ तीतूतेतो द्विदैवभे ॥
नानीनूने क्रमान्मैत्रे नोयायीयू इतीन्द्रभे ।
येयोभाभीति मूलाख्ये भूधाफाढा जलस्य भे ॥
भेभोजाजीति विश्वर्क्षे जूजेजोखाऽभिजिद्भवेत् ।
खीखूखेखो श्रुतौ ज्ञेया गागीगूगे च वासवे ॥
गोसासीसू जलेशर्क्षे सेसोदादीथजाङ्घ्रिभे ।
दूथाझाञा तथोपान्त्ये देदोचाचीति पौष्णभे ॥ इति ।

आद्ये अश्विनीनक्षत्रे पदेषु चतुर्ष्वपि चरणेषु ततश्च तत्तदक्षरादीनि चूडामणिचेदिपतिचोलपतिलाटपतिरित्यादीत्युन्नेयानि । तथाच तत्रैवोपसंहृतम् ।

इति प्रोक्ता इमे पद्ये वर्णा नामादिजाः स्फुटाः ।
ज्ञेया मेषादिराशीनां नवभिर्नवभिः पदैः ॥ इति ।

इमे पूर्वोक्ताः । नामादिजाः नामादौ जाताः । विशेषान्तरं

**हिरण्यकेशिसूत्रे,**

नक्षत्रनाम द्वितीयं स्यादन्यतरद् गुह्यं स्यादन्यतरेणैनमामन्त्रयेरन्निति । अनेन व्यावहारिकस्याप्यभिवादनीयत्वं सिध्यति । यद्यप्यभिवादनीयं नाम व्यावहारिकनामकरणानन्तरं कर्त्तव्यमित्याश्वलायनादिसूत्रपाठक्रमादवगम्यते तथापि बौधायनापस्तम्बाभ्यां जातकर्मण्येव पशूनां त्वा हिंकारेणाभिजिघ्राम्यसाविति नक्षत्रनामधेयेनेति मूर्धाभिघ्राणएव नक्षत्रनाम्नो विनियोगाद्व्यावहारिकनाम्नः पूर्वमेव तत्कर्त्तव्यमिति सिध्यति ।

व्यावहारिकं नामाह

बृहस्पतिः,

नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः ।
नाम्नैव कीर्त्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म॥इति।

तत्स्वरूपमाह

आश्वलायनः,

नाम चास्मै दद्युर्घोषवदाद्यन्तरन्तःस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा, द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामो युग्मानि त्वेव पुंसामिति ।

दद्युरिति बहुवचनात् पिता माता बान्धवाश्च समुदिता नाम दद्युः कुर्युरित्यर्थः । कीदृशं तदित्यत आह । घोषवदिति । कुचुटुतुपु इति पञ्च वर्गाः । तेषां प्रथमद्वितीया वर्णाः शषसाश्चाघोषाः । शेषाः पञ्चदश हकारश्चेत्येवं षोडश वर्णा घोषवन्तः । ते आदौ यस्य तद्घोषवदादि । अन्तर्मध्येऽन्तःस्था यरलवा यस्य तदन्तरन्तःस्थम् । अभिनिष्ठानो विसर्जनीयः सोऽन्ते यस्य तदभिनिष्ठानान्तम्। अक्षरं स्वरः। ते चाकारादयो नपुंसकवर्जाः द्वादश । द्वे अक्षरे यस्मिन् तद् द्व्यक्षरं द्विस्वरमित्यर्थः । एवं चतुरक्षरं व्याख्येयम् । व्यञ्जनेषु तु न संख्यानियमः । युग्मानि त्वेव पुंसामिति । युग्मानि युग्माक्षराणि नामानि पुंसां भवन्ति । एवकारोऽवधारणार्थः । ततश्च रुद्रः देवः भवः भवदेवः देवदत्तः इत्येवंलक्षणानि नामान्युन्नेयानि । अत्र विशेषमाह

बैजवापः,

पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरमपरिमिताक्षरं वेति ।

वसिष्ठोऽपि,

तद् द्व्यक्षरं वा चतुरक्षरं वा विवर्जयेदन्त्यलकाररेफम् ।

तन्मासनामादिकमेत्र चिन्त्यं स्फुटं वदेद्दक्षिणकर्णरन्ध्रे॥इति।

अन्त्यलकाररेफं परहल् इत्यादि ।

**महाभाष्येऽपि,**

याज्ञिका अपि पठन्ति, घोषवदाद्यन्तरन्तःस्थं त्रिपुरुषानूक्त-मनरिप्रतिष्ठितं द्व्यक्षरं चतुरक्षरं वा कृतं कुर्यान्न तद्धितमिति । त्रिपुरुषाः पितृपितामहप्रपितामहास्तेष्वनूक्तम् अनूदितं कृत-मिति यावत्। कृतं कृदन्तं, तद्धितं तद्धितान्तम्, अरौ शत्रौ यन्न प्रतिष्ठितम् ।

**आश्वलायनोऽपि,**

द्विव्यक्षरं द्व्यक्षरं वा नाम कर्मणि शस्यते ।
नाम पैतामहं शस्यं यादृशं वा द्विजन्मसु ॥ इति ।

पितामहो देवतानामप्युपलक्षणम् ।

तथाच **कपिलसंहितायां,**

एकादशेऽह्नि विधिवन्नाम कुर्यात्कुलोचितम् ।
देवतानां विशेषेण पित्रोर्वा नाम शस्यते ॥ इति ।

**मनुरपि,**

मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रिस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥

मङ्गल्यं मङ्गलप्रतिपादकम्, यथा लक्ष्मीधरः । बलान्वितं शौर्यप्रतिपादकं, यथा युधिष्ठिरः। धनसंयुक्तं धनप्रतिपादकशब्द-संयुक्तं, यथा महाधनः। जुगुप्सितं निन्दाप्रतिपादकशब्दसंयुक्तं, यथा नरदासः ।

शर्मवद् ब्राह्मणस्य स्याद्राज्ञो राजसमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥

**व्यासोपि,**

शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य तु ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥

यमोऽपि,

शर्म देवश्च विप्रस्य वर्म राजा च भूभुजः ।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

नामानीति शेषः । शर्मादिशब्देषूपपत्तिमाह

आश्वलायनाचार्यः,

तपसा ब्रह्मचर्येण शमेन च दमेन च ।
जगतां शर्मदानेन शर्मान्तं ब्राह्मणे भवेत् ॥
तापत्रयादतिबलाज्जगत्संरक्षतीति यत् ।
तस्मात्सर्वसमे धीरे वर्मान्तं क्षत्रिये भवेत् ॥
काले काले धनं दत्त्वा सर्वान् गोपायतीति यत् ।
तस्माद्वैश्यस्य नामैतद् गुप्तान्तमभिधीयते ॥
द्विजान् शुश्रूषयन् नित्यं शूद्रस्तोषयतीति यत् ।
तस्मात्तस्य च दासत्वं तच्चत्स्त्रीणां तथातथा ॥

## अथ स्त्रीणां नामकरणम् ।

तत्र मनुः,

स्त्रीणां च सुखमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ इति ।

सुखोद्यं सुखोच्चार्यं यशोदेत्यादि । अक्रूरं हिंसाद्यर्थरहितं कुलघ्नीत्यादि । विस्पष्टार्थमव्याख्येयम्, इन्दिरेत्यादि । इदमुदाहरणद्वयं व्यतिरेके । मनोहरं कमनीयेत्यादि । मङ्गल्यं सुभद्रेत्यादि । दीर्घवर्णान्तं सुमित्रेत्यादि । आशीर्वादाभिधानवत् सौभाग्यवतीत्याद्युन्नेयम् ।

शौनकोऽपि,

कुमार्याश्चेदमखिलं कर्म कुर्यादमन्त्रकम् ।
पुंसां युग्माक्षरं नाम स्यात्स्त्रीणामयुगाक्षरम् ॥ इति ।

बैजवापोऽपि,

त्र्यक्षरमीकारान्तं स्त्रिया इतीति । ईकारान्तं सावित्री देवकीत्यादि ।

आश्वलायनोऽपि,

युग्मानि त्वेव पुंसामयुजानि स्त्रीणामिति । अयुजानि विषमाणि त्रीणि पञ्च वा अक्षराणि येषु तानि । अत्र च घोषवदादिनियमो नास्ति ।

तथाच कारिका,

पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम् ।
पक्षो घोषवदित्यादिरेवकारादनादृतः ॥ इति ।

एवकारात् युग्मानि त्वेव पुंसामितिसूत्रस्थाद् घोषवदादिपक्षः स्त्रीणां नास्तीत्यर्थः । शर्मान्तादिनियमस्त्वत्राप्यस्त्येव । तत्तत्स्त्रीणां तथातथेत्याश्वलायनस्मरणात् । तेषां वर्णानां स्त्रियः कन्यकास्तासामपि तथा शर्मवर्माद्यन्तमित्यर्थः । तस्य च स्त्रीत्वेऽपि मन इति नान्तलक्षणस्य ङीपः प्रतिषेधात् गार्गीशर्मेत्यादि पुंवत्प्रयोगः । डाबुभाभ्यामिति डाबन्तत्वे त्वाबन्तवद्गार्गीशर्मामित्यादिरिति विशेषः ।

अथात्रकर्तृनिर्णयः । विष्णुपुराणे,

ततस्तु नाम कुर्वीत पितैव दशमेऽहनि । इति ।

गार्ग्योऽपि,

मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता । इति ।

पितैवेत्येवकारः पितृपितामहादिसमवधाने पितृनियमार्थः । असमवधाने तु पितामहादिरपि कुर्यात् । तथाच

शङ्खः

पिता नाम कुर्यादन्योऽपिवा कुलवृद्ध इति।

**पारस्करोऽपि,**

ब्राह्मणान्भोजयित्वा पिता नाम करोतीति।

**शौनकोऽपि,**

शिशोर्नामाथ पित्रादिर्दशमे द्वादशेऽह्नि वा।
कुर्याद्यद्वा गुणैर्युक्तनक्षत्रेऽनुगुणे शिशोः॥ इति।

पिता मातुरप्युपलक्षणम्। तथाच

**बौधायनः,**

दशम्यां द्वादश्यां वा मातापितरौ स्नात्वा शुच्यगारं कृत्वा पुत्रस्य नामधेयमस्य निधीयतइति।

अथ प्रसङ्गाद्देवालयादिनामकरणम्। तत्र

**स्कन्दपुराणे,**

देवालयगजाश्वानां वृक्षाणां वापिकूपयोः।
सर्वापणानां पृष्ठयानां चिह्नानां योषितां नृणाम्॥
काव्यादीनां कवीनां च पश्वादीनां विशेषतः।
गजप्रासादयज्ञानां नामकर्म यथोदितम्॥ इति।

यथोदितं शास्त्रान्तरे यथाभिहितम्। यथा

स्वस्तिकः सर्वतोभद्रो नन्द्यावर्त्तादयोऽपि च।
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम्॥ इत्यादि।

इति नामकरणम्।

## अथ प्रेङ्खारोहणम्।

तत्र

**बृहस्पतिः,**

प्रेङ्खारोहस्तु कर्त्तव्यो दशमे द्वादशेऽपिवा।
षोडशे दिवसे वापि द्वात्रिंशे दिवसेऽपिवा॥ इति।

प्रेङ्खा दोलिका । क्वचित् खट्वेखापि पाठः ।

भविष्यपुराणेऽपि,

अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ॥ इति ।
योगशायं हरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् । इति ।

मृद्वादिलक्षणमुक्तं,

श्रीपतिना,

रोहिण्युत्तरभं स्थिरं गिरिशमूलेन्द्रोरगं दारुणं
क्षिप्रं चाश्विदिनेशपुष्यमनलेन्द्राग्नी तु साधारणम् ।
उग्रं पूर्वमघान्तकं मृदु मृगत्वाष्ट्रान्त्यमैत्रं चरा
विष्णुस्वातिशतोडुवस्वदितयः कुर्युः स्वसंज्ञाफलम् । इति ।

रोहिण्युत्तरात्रयं स्थिरम् । आर्द्रामूलज्येष्ठाश्लेषा दारुणानि । अश्विनीहस्तपुष्याणि क्षिप्राणि । कृत्तिकाविशाखे साधारणे । पूर्वात्रयमघाभरण्यः उग्राणि । मृगचित्रारेवत्यनुराधाः मृदूनि । श्रवणस्वातीशततारकाधनिष्ठापुनर्वसवश्चराणि । एतानि स्वस्वनामफलं कुर्युः ।

ज्योतिर्निबन्धेऽपि,

करत्रये वैष्णवरेवतीषु दितिद्वये चाश्विनभध्रुवेषु ।
कुर्याच्छिशूनां नृपतेश्च तद्वदान्दोलनं वै सुखिनो भवन्ति ॥
आन्दोलाशयने पुंसां द्वादशो दिवसः शुभः ॥
त्रयोदशस्तु कन्यानां न नक्षत्रविचारणा ॥
अन्यस्मिन्दिवसे चेत्स्यात्तिर्यगास्ये प्रशस्यते । इति ।

अथ दोलाचक्रम् । तदुक्तं

ग्रन्थान्तरे,

सूर्यभाच्चन्द्रभं यावत्पञ्चपञ्च चतुर्दिशम् ।

मध्ये तु सप्त देयानि दोलिकाचक्रउत्तमे ॥
पूर्वभागे तिर्यगत्वं दक्षिणे मरणं ध्रुवम् ।
पश्चिमे तु कृशो बाल उत्तरे व्याधिसम्भवः ॥
शेषेषु सप्तधिष्ण्येषु बालकस्य सुखं भवेत् । इति ।
स्त्रीशूद्रयोरप्येतद्भवति दृष्टार्थत्वात् ।

## अथ दुग्धपानम् ।

श्रीपतीये,

एकत्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले ।
शङ्खे क्षीरं संनिदध्याच्छिशूनां वक्त्रे धात्री पूज्यपूजां विधाय ॥इति।
द्वितीये जन्मर्क्षे वेत्यन्वयः । शङ्खइति तृतीयार्थे सप्तमी ।

नृसिंहोऽपि,

एकत्रिंशद्दिने चैव पयः शङ्खेन पाययेत् ।
अन्नप्राशननक्षत्रदिवसोदयराशिषु ॥
नाक्षत्रे मासि सम्पूर्णे जातर्क्षे तु विशेषतः ।
मासान्ते दुग्धपानं स्यात्पश्चात्काले सुशोभने ॥
उत्तरात्रयहस्तौ च त्वाष्ट्रवैष्णववासवाः ।
पौष्णाश्विनौ मघास्वातीवरुणादितिजीवभम् ॥
रोहिण्यैन्दवमैत्राश्च दुग्धपाने शिशोः शुभाः ।
षष्ठीरिक्ताष्टमीदर्शा वर्ज्या विष्टिस्थिराणि च ॥
वर्ज्यास्त्वशुभयोगाश्च कृष्णे चान्त्यत्रिभागकः ।
अधोमुखानि वर्ज्यानि मीनाजालिगृहाणि च ॥
जीवशुक्रेन्दुसौम्यानां वारवर्गोदयेक्षणाः ।
शुभानां राशयः श्रेष्ठा विशेषाः शुभकर्मणि ॥
आयारिभ्रातृगाः पापा विशेषेण शिशोः शुभाः ।
पूर्वाह्णे वापि मध्याह्ने कुर्याद्रात्रिं विवर्जयेत् ॥

योगिनीराहुरुद्रादिमुखं चैव विवर्जयेत् ।
**योगिनीलक्षणं,**

शतमुखेन्दुहुताशनरक्षसां
यमजलेशसमीरणशूलिनाम् ।
दिशिदिशि क्रमशः परिवर्तते
तिथिषु च प्रथमादिषु योगिनी ॥

एतत् स्थिरयोगिनीलक्षणम् । चरयोगिनीलक्षणं तु

रुद्रवायुयमशूलिपाशिनां
वह्निवैश्रवणरक्षसां क्रमात् ।
अर्धयाममनुवासरादितो
दिक्षु संभ्रमति योगिनी चरा ॥

**राहुलक्षणं,**
गुरुभान्वोर्वसेत्प्राच्या इन्दोः शुक्रे च दक्षिणे ।
कालराहुः कुजे प्राक्षउत्तरे बुधमन्दयोः ॥
**रुद्रलक्षणं,**
हरिसोमवह्निराक्षसयमवरुणानिलहरालये चैवम् ।
उदयादि भ्रमति सदा घटिकारुद्रो महाप्रबलः ॥ इति ।
इदं च दुग्धपानं स्त्रीशूद्रयोरपि भवति जीवनार्थत्वात् ।

## अथाचारप्राप्ता जलपूजा ।

स्मरन्तिच ज्योतिषिकाः,

कवीज्यास्तचैत्राधिमासे न पौषे
जलं पूजयेत्सूतिका मासपूर्त्तौ ।
बुधेन्द्विज्यवारे विरिक्ते तिथौ हि
श्रुतीज्यादितीन्द्वर्कनैनर्क्षमैत्रे ॥ इति ।

गुरुशुक्रास्तचैत्रपौषाधिकमासांस्त्यक्त्वा मासान्ते बुधचन्द्रगु-

हस्तारेष्वरिक्तायां तिथौ श्रवणपुष्यपुनर्वसुमृगहस्तमूलानुराधासु नद्यादौ जलपूजां कुर्यादित्यर्थः । स्त्रीशूद्रयोरप्येषा भवति । जलदेवताबाधानिवृत्त्यर्थत्वात् ।

अथ शिशोस्ताम्बूलभक्षणं दीपिकायां,

सार्द्धे मासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ।
कर्पूरादिकसंमिश्रं विलासाय हिताय च ॥
सार्द्धयुग्मकमासे तु पूगस्य प्राशनं हितम् ।
षड्भिरन्नस्य मासैस्तु भोगे भोगी भवेन्नरः ॥ इति ।

अन्नस्य भोगइत्यन्वयः । तेनात्र प्राशनकालोऽप्यस्य कालो लभ्यते ।

अथात्र नक्षत्राणि तत्रैव,

मूलादितिद्व्यहिणतिष्यकरोत्तरासु
पौष्णाश्विविष्णुरजनीकरशम्भुभेषु ।
वारेषु जीवशशिसूर्यसितेन्दुजानां
ताम्बूलभक्षणविधिः कथितः शिशूनाम् ॥ इति ।

राजमार्त्तण्डेऽपि,

दिनकरचन्द्रसमीरणमैत्रं पुष्यपुनर्वसुरेवतिचित्रम् ।
मृगघटमन्मथकन्यसमेतं पूगफलाशनमेभिरिहेष्टम् ॥ इति ।

अथात्र ग्रहसंस्था दीपिकायां,

दुश्चिक्यलाभारिगताश्च पापाः
सौम्यग्रहा नवमपञ्चमकण्टकस्थाः ।
आरोग्यशान्तिशुभभाग्यसुखोपभुक्त्यै
ताम्बूलभक्षणविधौ जगति प्रसिद्धाः ॥ इति ।

स्त्रीशूद्रयोरप्येतद्भवति पुष्ट्यर्थत्वात् ।

अथ प्रसङ्गान्नूतनपर्णाशनकालः तत्रैव,

मूलाश्विमैत्रकरतिष्यहरीन्द्रभेषु
पौष्णे तथा मृगशिरोदितिवासवेषु ।
अर्केन्दुजीवभृगुबोधनवासरेषु
ताम्बूलनूतनदलाद्यशनं शुभाय ॥ इति ।

अथ निष्क्रमणम् ।

तत्र भविष्यपुराणम्,

द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् । इति ।

बृहस्पतिरपि,

यात्रोक्तसमये मासि तृतीये द्वादशेऽह्नि वै । इति ।

लौगाक्षिः,

तृतीयेऽर्द्धमासे दर्शनमादित्यस्येति । अर्द्धमासः पक्षः । तृतीये पक्षइत्यर्थः ।

यमः,

ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥ इति ।

श्रीधरीयेऽपि,

मासे तृतीये दिवसे दिनेशं
शिशुं चतुर्थे शशिनं च धेनुम् ।
विलोकयित्वाऽत्र विधिप्रयुक्ते
काले गृहान्निष्क्रमणं विदध्यात् ॥ इति ।

सूर्यचन्द्रदर्शनयोरतुल्यार्थत्वात्समुच्चय इति कल्पतरुः ।

ततश्च मासभेदाद्द्वारद्वयं निष्क्रमणं भवतीति सिध्यति । यानि तु अत ऊर्ध्वं तृतीये मासि निष्क्रमणिकेति, चतुर्थे मासि निष्क्रमणिकेति, चतुर्थे मासि निष्क्रम इति,

चतुर्थमासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् । इति,

गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत् । इति,
चतुर्थे मासि कर्त्तव्यं तत्परेषां मतं विभो ।

इति शङ्खलिखितपारस्करयोगिबृहस्पतिमनुभविष्यपुराणवाक्यानि तानि तृतीयचतुर्थमासयोः सूर्यचन्द्रदर्शनाभिप्रायेण योज्यानि ।

मुहूर्त्तसंग्रहे,

अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् । इति ।

अन्नप्राशनकालः षष्ठो मासः ।

तथाऽऽश्वलायनः,

चतुर्थे मासि कार्यं स्यादुपनिष्क्रमणं शिशोः ।
षष्ठे वा देवतास्थानमियादादाय तं शिशुम् ॥ इति ।

शौनकोऽपि,

मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् ।
विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः ॥ इति ।

मासश्चात्र सावनः ।

तथाच यमः,

उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने । इति ।

## अथात्र पक्षादिनिर्णयः ।

मुहूर्त्तसंग्रहे,

पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना । इति ।

राजमार्त्तण्डेऽपि,

मासे तृतीये शशिवृद्धिपक्षे
क्षपाकरे गोचरशोभनस्थे ।
उत्पातपापग्रहवर्जिते भे
निष्क्रमणं सौख्यकरं शिशूनाम् ॥ इति ।

शौनकोऽपि,

पूर्वपक्षे शिशोर्जन्मनक्षत्रानुगुणे शुभे ।
नक्षत्रे गुणसंपन्नतिथिवारादिसंयुते ॥ इति ।

निष्क्रमणमित्यनुषज्यते ।

अथ वर्ज्यतिथयः ।

मुहूर्त्तसंग्रहे,

रिक्ता षष्ठ्यष्टमी दर्शो द्वादशी च विवर्जिताः । इति ।

अथ वाराः । तत्र

बृहस्पतिः,

जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया ।
दिवसे शस्यते नित्यमायुर्वृद्धिधनप्रदा । इति ।

अथ नक्षत्राणि ।

तत्र स एव,

अश्विनी रेवती हस्तो धनिष्ठा रोहिणी तथा ।
श्रवणं पुष्यसंयुक्तं मृगेणोत्तरफल्गुनी ॥
अनुराधोत्तराषाढा तथाचैव पुनर्वसुः ।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ ॥ इति ।

मुहूर्त्तसंग्रहेऽपि,

चत्वारि विश्वभादीनि तिस्रोऽहिर्बुध्न्यभाद्विदुः ।
मैत्रमादित्यपुष्ये च रोहिणी च शुभावहा ॥ इति ।

विश्वभम् उत्तराषाढा । अहिर्बुध्न्यभम् उत्तराभाद्रपदा ।

अथ योगादि तत्रैव,

वर्ज्याश्चाशुभयोगाश्च विष्टिश्च शकुनादि च ! इति ।

शकुनादीत्यादिशब्देन चतुष्पान्नागकिंस्तुघ्नानि गृह्यन्ते ।

अथ लग्नानि तत्रैव,

दृपालिमेरा वर्ज्याः स्युस्तथैवाधोमुखानि च ।
केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः ॥
उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुम् । इति ।
निष्क्रमणस्वरूपं चाहाश्वालानाचार्यः,
नयेदाकल्पकैः सम्यग्देवतायतनं गृहात् ।
अभ्यर्च्य देवतामूर्तिं पञ्चघोषपुरःसरम् ॥
आकल्पकैः भूषणैः । पञ्चघोषाः पञ्चविधं वाद्यम् ।
भोजयित्वा द्विजान्गेहे स्वस्तिवाचनमाचरेत् ।
शाकुन्ते प्रजपेत्सूक्ते शिशोर्निष्क्रमणे पिता ॥

शाकुन्ते शकुन्तदेवताके सूक्ते द्वे । प्रदक्षिणीदभिगृणन्ति कारव इत्याद्येकं, कनिक्रदज्जनुषं प्रब्रुवाण इत्याद्यपरम् ।

विष्णुधर्मोत्तरे
मन्त्रान्तरमपि पठितम्,
चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ।
निक्षेपार्थमिमं वच्मि तेऽस्मु रक्षन्तु सर्वदा ॥
अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापिवा ।
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥ इति ।

अत्र चन्द्रार्कादिप्रार्थनाबलात् तत्पूजनमपि प्राक्कर्त्तव्यमिति गम्यते ।

तथाच तत्रैव,
चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।
दिगीशानां दिशां चैव तथा चन्द्रार्कयोर्द्विजः ॥
पूजनं वासुदेवस्य गगनस्य च कारयेत् ।
ततस्त्वलंकृता धात्री बालमादाय पूजितम् ॥
बहिर्निष्कामयेद्गेहाच्छङ्खपुण्याहनिस्वनैः । इति ।

तदनन्तरकर्त्तव्यमाह ।
द्विजांश्चादर्शपूर्वाणि मङ्गलानि पुरो नयेत् ।
दर्पणः कलशः कन्या तथा सुमनसोऽक्षताः ॥
दीपमाला ध्वजं लाजाः संप्रोक्तं चाष्टमङ्गलम् ।
सुमनसः पुष्पाणि ।
विवाहे निष्क्रमे काम्ये वृद्धौ पूर्त्ते समागमे ।
उत्सवेषु च यात्रायां प्रशस्तं चाष्टमङ्गलम् ॥ इति ।
अत्र विशेषमाह शौनकः,
निर्गमय्य गृहादेनं नीत्वा वा देवतालयम् ।
ततः प्रदक्षिणं नीत्वा बालं तं देवतालये ॥
गन्धमाल्यादिभिस्तत्र पूजयित्वा च देवताम् ।
प्रणमय्य च तं बालं ततो देवालयस्थितैः ॥
विद्वद्भिर्ब्राह्मणैराशीर्वादाद्यैरभिनन्दितम् ।
परिगृह्य ततः स्थानान्निष्क्रमय्य ततः शिशुम् ॥
मातुलादेः समासन्नबन्धोः प्राप्य मन्दिरम् ।
तत्रोपहारदानाद्यैराशीर्भिश्चाभिलालितम् ॥
कुमारं परिगृह्यैनं प्रापयेत् स्वगृहं ततः । इति ।
विशेषान्तरमाह बृहस्पतिः,
अलंकृत्य शिशुं सम्यगभ्यर्च्य धवलाक्षतैः ।
स्वस्तिवाच्य समारूढवाहनं निर्णयेद् गृहात् ॥
मातुलो वा वहेत्तत्र निर्वाहनशिशुं स्वयम् ।
शिशुना सह मित्राणि निर्यायुश्च गृहात्स्वयम् ॥
सह दुन्दुभिघोषैश्च वाद्यशब्दसमन्वितैः ।
चतुरस्रे शुचौ देशे गोमयनोपलेपिते ॥
धान्यपुञ्जे समासीनं बालं बालामथापि वा ।

अर्चयेद्गन्धपुष्पाद्यैस्तस्मिन्मूर्ध्नि ललाटके ॥
अस्य रक्षां ततः कृत्वा मृतसंजीवनं जपेत् ।
तत्रार्चयेद् गणेशानं भूतेशानं तथैवच ॥
भक्ष्यैर्विचित्रैः सफलैः शिशूनभ्यर्चयेद् बुधः । इति ।

मृतसंजीवनश्च मन्त्रस्त्र्यम्बकं यजामहइत्यादिः आद्यन्तयोः ॐजुं सः सः जुंॐइति प्रत्येकं वीजत्रयदानेन भवति । इदं च निष्क्रमणं कन्यायाश्च भवति । चतुर्थे मासि निष्क्रम इत्युपक्रम्य तूष्णीमेताः क्रियाः स्त्रीणामिति योगिस्मरणात् ।

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥
इति मनुस्मरणात् ।
चतुरश्रे शुचौ देशे गोमयेनोपलेपिते ।
धान्यपुञ्जे समासीनं बालं बालामथापिवा ॥

इति बृहस्पतिस्मरणाच्च । एतच्च निष्क्रमणं शूद्रस्यापि भवतीत्युक्तं ग्रन्थादौ । अथात्र कर्तृनिर्णयः । तत्र

शौनकः,
मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् ।
विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः ॥ इति ।
आदिशब्दात्पितामहादीनां ग्रहणम् ।

आश्वलायनोऽपि,
भोजयित्वा द्विजान्गेहे स्वस्तिवाचनमाचरेत् ।
शाकुन्ते प्रजपेत्सूक्ते शिशोर्निष्क्रमणे पिता ॥ इति ।
स्वस्तिवाचनं नान्दीश्राद्धस्याप्युपलक्षणम् ।
अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते ।
इत्याश्वलायनकारिकास्मरणात् ।

जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥
इति विष्णुपुराणात् ।
स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।

इति कात्यायनस्मरणाच्च । कल्पतरुस्तत्र नान्दीश्राद्धं नेच्छति ;

सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।

इति कात्यायनवचनात् । एतत्करणाकरणयोः फलमाह बृहस्पतिः,

अथ निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ॥
कृते सम्पद्विवृद्धिः स्यादायुर्वर्द्धनमेव च । इति ।

## अथ भूम्युपवेशनम् ।

विष्णुधर्मोत्तरे

परशुरामं प्रत्याह पुष्करः,

पञ्चमे च तथा मासि भूमौ तमुपवेशयेत् ।

अथात्र तिथ्यादिनिर्णयः तत्रैव,

तिथिं विवर्जयेद्रिक्तां शस्तानि शृणु भानि मे ।
उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥
प्राजापत्यं च हस्तं च शस्तमाश्विनमित्रभम् । इति ।

सौम्यं मृगशिरः । शक्रदैवतं ज्येष्ठा । प्राजापत्यं रोहिणी । मित्रभम् अनुराधा । अथ ग्रहाः ।

तत्रैव,

तत्र सर्वे ग्रहाः शस्ताः सोमो राम विशेषतः । इति ।

अथेतिकर्तव्यता तत्रैव,

वराहं पूजयेद्देवं पृथिवीं च तथा द्विजः ।
पूजनं पूर्ववत्कृत्वा गुरुर्देवाद्द्विजन्मनाम् ॥
भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम् ।
शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत् ॥
अत्र शङ्खवचनं सर्ववाद्योपलक्षणम् ।
तत्र मन्त्रानाह स एव,
मन्त्राश्चात्र भवन्तीमे तन्मे निगदतः शृणु ।
रक्षेमं वसुधे देवि सदा सर्वगते शुभे ॥
आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये ।
अचिरादायुषस्तस्य ये केचित्परिपन्थिनः ॥
जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ।
धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ॥
अजरा चाप्रमेया च सर्वभूतनमस्कृते ।
त्वमेवाशेषजगतां प्रतिष्ठा चाश्रया ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥ इति ।
तदनन्तरकर्त्तव्यमाह स एव,
तस्योपवेशनं कृत्वा भूमौ ब्राह्मणपूजनम् ।
ततः कृत्वा ततः कार्यमुत्सवं पूर्ववद् द्विजैः ॥ इति ।
उत्सवो नीराजनादि । एतच्च कुमार्या अपि कर्त्तव्यं बालरक्षणार्थत्वात् ।

धान्यपुञ्जे समासीनं बालं बालामथापिवा । इति
वचनाच्च । शूद्रस्याप्येतद्भवतीत्युक्तमेव प्राक् ।

## अथ कटिसूत्रबन्धनम् ।

**चिन्तामणौ,**

पृथ्वीं वराहमभिपूज्य कुजे विशुद्धे

रिक्ते तिथौ व्रजति पञ्चममासि बालम् ।
बध्वा शुभेऽह्नि कटिसूत्रमथ ध्रुवेन्दु-
ज्येष्ठर्क्षमैत्रलघुभैरुपवेशयेत्कौ ॥ इति ।

कौ भूमावित्यर्थः ।

### अथ कर्णवेधः ।

स च यद्यपि षष्ठादिमासकर्त्तव्यतया ऽन्नप्राशनसमकालत्वेन तत्पूर्वभावीति न गम्यते तथाऽपि द्वादशाहादिकालत्वेन पूर्वभावित्वावगमात्तनः पूर्वं निरूप्यते । तत्र

**विष्णुधर्मोत्तरं,**

शिशोरेवाथ कर्त्तव्यं कर्णवेधं यथा शृणु । इति ।

तस्य कालमाह बृहस्पतिः,

जन्मतो दशमे वा ऽह्नि द्वादशे वा ऽथ षोडशे ।
सप्तमे मासि वा कुर्याद्दशमे मासि वा पुनः ॥ इति ।

**मुहूर्त्तसंग्रहेऽपि,**

दशमे द्वादशे वा ऽह्नि षोडशे कर्णवेधनम् ।
प्रथमे सप्तमे मासि अष्टमे दशमे ऽथवा ॥
द्वादशे च तथा कुर्यात्कर्णवेधं शुभावहम् । इति ।

**गर्गोऽपि,**

मासे षष्ठे सप्तमे वा अष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ॥ इति ।

वत्सरे अयुग्मइत्यर्थः । तथाच

**राजमार्त्तण्डः,**

ताराचन्द्रानुकूलेऽह्नि शस्ते भास्वति वाक्पतौ ।
अयुक्संवत्सरे प्राहुः कर्णवेधविधिं बुधाः ॥ इति ।

अथात्र विहितमासादि ।

व्यासः,

कार्त्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपिवा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥ इति ।

यस्तु

न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते ।
तिथौ न रिक्ते न च विष्टिदुष्टे कर्णस्य वेधं मुनयो वदन्ति ॥

इति व्यवहारोच्चये चैत्रपौषनिषेधः स मीनधनुर्विषयः । कार्त्तिकविधिस्तु बोधिन्युत्तरविषय इति न विरोधः । जन्ममासादिनिषेधफलमाह

व्यासः,

यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुते ऽतिमोहात् ।
मूढः स रोगी धनपुत्रनाशं प्राप्नोति गूढं निधनं तदाशु ॥ इति ।

जन्ममासो जन्मनक्षत्रादेरप्युपलक्षणम् ।

तथाच दीपिका,

नो जन्मेन्दुभमासस्सूर्यरविजक्ष्माजाहसुप्ताच्युते
शस्तेऽर्के लघुविष्णुयुग्ममृदुभस्वात्युत्तरादित्यभे ।
सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगै—
रोजाब्दे श्रुतिवेध इज्यसितयोर्लग्ने ऽनुकूले शुभः ॥ इति

ओजाब्दे अयुग्मवर्षइत्यर्थः । पक्षनिर्णयमाह

व्यासः,

कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने । इति ।

राजमार्त्तण्डोऽपि,

अर्केऽनुकूले शशिनि प्रशस्ते तारावले चन्द्रविवृद्धिपक्षे ।
अयुग्मवर्षे शुभदं शिशूनां कर्णस्य वेधं मुनयो वदन्ति ॥ इति।

तिथीनाह

बृहस्पतिः,

द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥ इति ।

वर्ज्यानाह

नृसिंहः,

एकादश्यष्टमी पर्व रिक्ता वर्ज्याः शुभावहाः ।
शिष्टाश्च तिथयः सर्वाः कृष्णे चान्त्यत्रिकं विना ॥ इति ।

अनेन कृष्णपक्षेऽप्येतत्सिध्यति । वारानाह

बृहस्पतिः,

भूमिजार्कात्मजार्काणां दिवसान्परिवर्जयेत् ।
जीवेन्दुजेन्दुशुक्राणां दिवसाः पूजिता मताः ॥ इति ।

वारफलानि स एवाह,

एकं भद्रकमल्परन्ध्रमपरं स्यात्कर्णयुग्मं बुधे
सोमे शीर्णतनु व्रणेन सहितं शस्तं गुरौ भार्गवे । इति ।

नक्षत्राण्याह बृहस्पतिः,

सौम्यार्द्रादित्युत्तराहस्तचित्राश्विविष्णुभम् ।
धनिष्ठा रेवती चैव शुभाः स्युः कर्णवेधने ॥ इति ।

आर्यः पुष्यः ।

काश्यपोऽपि,

हस्ताश्विनीस्वातिपुनर्वसौ च चित्रेन्दुतिष्ये श्रवणे च पौष्णे ।
चन्द्रेऽनुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमरेज्यलग्ने ॥ इति ।

योगादि तेनैवोक्तं,

शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ।
शुभयोगेषु सर्वेषु कर्णवेधः शुभावहः ॥ इति ।

आदिशब्दाच्चतुष्पान्नागकिंस्तुघ्नानि गृह्यन्ते ।

राशयो नारदेनोक्ताः,

वृषभे मिथुने मीने कुलीरे कन्यकासु च।

तुलाचापे तु कुर्वीत कर्णवेधं शुभं द्वये॥

मेषश्च मकरश्चैव मध्यमौ गुरुचोदितौ।

सिंहवृश्चिककुम्भाश्च अधमत्वाद्विवर्जिताः॥ इति।

ग्रहानाह बृहस्पतिः,

रन्ध्रारिव्ययगो नेष्टो गुरुः शेषः सुशोभनः।

सप्ताष्टमगतः शुक्रो न शुभोऽन्यत्र शोभनः॥

चन्द्रो द्वित्रिसुतस्त्रीषु धर्मकर्मगतः शुभः। इति।

रन्ध्रो नवमः। अरिः षष्ठः। व्ययो द्वादशः। सुतः पञ्चमः। स्त्री सप्तमः। धर्मो नवमः। कर्म दशमम्। शेषाः प्रसिद्धाः।

त्रिषडायगताः पापाः शुभाः कर्णस्य वेधने।

अष्टमस्थाः ग्रहाः सर्वे नेष्टाः कर्णस्य वेधने॥ इति।

संग्रहे,

सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे।

दिनच्छिद्रव्यतीपातविष्टिवेधविवर्जिते॥ इति।

कर्णवेध इति शेषः। स च रात्रौ न कार्यः। तथा च

वसिष्ठः,

न कश्चिदिष्टोऽष्टमराशिसंस्थस्तिथिद्वयं चावमसंज्ञकं च।

न तत्र कुर्याद्दिवसे विशेषाद्रात्रौ न कुर्यात्खलु कर्णवेधम्॥ इति।

अथ कर्तृनिर्णयः। तत्र

श्रीपतिः,

शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः।

सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया॥ इति।

लौह्या इत्यपि पाठः। शल्येत्यपि पाठः। अथ सूचीनिर्णयः। तत्र

बृहस्पतिः,
शातकुम्भमयी सूची वेधने शोभनप्रदा ।
राजती वाऽयसी वापि यथाविभवतः शुभा ॥
स्मृतिमहार्णवे ताम्रीत्यप्युक्तं,
शुक्लसूत्रसमायुक्तताम्रसूच्याऽथ वेधयेत् । इति ।
अथ वर्णविशेषेण सूचीव्यवस्था । तत्र

स एव,
सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका ॥ इति ।

मध्यमाङ्गुलिमध्यमपर्वमितमङ्गुलं तेन प्रमाणेनाष्टाङ्गुलेऽसर्थ इति प्राञ्चः । तन्न । अनक्षरार्थत्वात् । किं तु मध्यमा चासावष्टाङ्गुलात्मिकेति सम्यगर्थः । मध्यमा नातिस्वल्पा नात्यधिकेत्यर्थः । अथेतिकर्त्तव्यता

विष्णुधर्मोत्तरे,
शिशोरेवाथ कर्त्तव्यं कर्णवेधं यथा शृणु ।
पूर्वाह्णे पूजनं कुर्यात्केशवस्य हरस्य च ॥
ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च ।
नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ॥
गुरूणां मण्डनं कृत्वा तत्र दत्त्वा वरासनम् ।
तथोपवेशयेत्तत्र धात्रीं शुक्लाम्बरां तथा ॥
अलंकृतं तदुत्सङ्गे बालं धृत्वा तु सान्त्वितम् ।
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ॥
विध्येदेवं कृते छिद्रे सकृदेवात्र लाघवात् ।
प्राग्दक्षिणे कुमारस्य भिषग्वामे तु योषितः ॥
शिशोर्विवर्धनं कार्यं यावदाभरणक्षणम् ।

कर्णवेधदिने विप्राः सांवत्सरचिकित्सकौ ॥
पूज्याश्चाविधवा नार्यः सुहृदश्च तथा द्विज । इति ।
अत्र पुरुषकर्णरन्ध्रवृद्धिविषये विशेषमाह

**देवलः,**

कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः ।
तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः ॥
तस्मै श्राद्धं न दातव्यं यदि चेदासुरं भवेत् । इति ।

अविद्धकर्णादिनिषेधमाह **शालङ्कायनः,**

अविद्धकर्णैर्यद् भुक्तं लम्बकर्णैस्तथैवच ।
दग्धकर्णैस्तु यद् भुक्तं तद्वै रक्षांसि गच्छति ॥ इति ।

तत्प्रमाणमाहतुः **शङ्खगोभिलौ,**

हनुमूलादधः कर्णौ लम्बौ तु परिकीर्त्तितौ ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत् ॥ इति ।

स्त्रीशूद्रयोरप्येतद् भवति । "भिषग्वामे तु योषितः" "शूद्रस्य चायसी सूचीति" पूर्वोक्तलिङ्गात् । इति कर्णवेधः ।

**अथाङ्कुरार्पणम्** । तत्र

**नारदः,**

कर्त्तव्यं मङ्गलस्यादौ मङ्गलायाङ्कुरार्पणम् । इति ।

मङ्गलस्येति सामान्योपादानेऽपि गर्भाधानादिनामकरणान्तव्यतिरिक्तमङ्गलस्येति द्रष्टव्यम् । तथाच

**शौनकः,**

आधानं गर्भसंस्कारं जातकर्म च नाम च ।
हित्वा ऽन्यत्र विधातव्यं मङ्गलेऽङ्कुरवापनम् ॥ इति ।

तत्र कालमाह **नारदः,**

नवमे सप्तमे वापि पञ्चमे दिवसेऽपिवा ।

तृतीये वीजनक्षत्रे शुभवारे शुभोदये ॥

नवमे मङ्गलदिनात्पूर्वं नवमदिनइत्यर्थः । एवं सप्तमादौ द्रष्टव्यम् । वीजनक्षत्रं वीजावापनक्षत्रं वक्ष्यमाणम् ।

सम्यक् गृहाण्यलंकृत्य वितानध्वजतोरणैः ।
आशिषो वाचनं कार्यं द्विजैः पुण्याङ्गनादिभिः ॥
सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ।
तत्र मृत्तिकतं श्लक्ष्णं गृहीत्वा पुनरागतः ॥
मृन्मयेष्वथवा सम्यग्वेणुपात्रेषु पूरयेत् ।
अनेकवीजसंयुक्तं तोयपुष्पोपशोभितम् ॥

अनेकवीजानि व्रीह्यादिसर्षपान्तानि ।

व्रीहियवमापतिलमुद्गमिश्रितसर्षपान् ।
तान्प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् ॥

इति शौनकस्मरणात् ।

प्रदोषकाले कुर्वीत पूर्वाह्णे वा न रात्रिषु ।
वास्तुकर्मणि काले च स्याद्दिवैवाङ्कुरार्पणम् ॥ इति ।

गुरुः,

आसन्तिकेषु कार्येषु कार्यं सद्योऽङ्कुरार्पणम् । इति ।

**शौनकोऽपि,**

अथाङ्कुरार्पणविधिं प्रवक्ष्यामि विशेषतः ।
शौनकोऽहं द्विजातीनां मङ्गलार्थमुदीरितम् ॥
शुभे मुहूर्ते कल्याणे गोमयेनोपलिप्य च ।
सिताक्षतैः संप्रकीर्य पालिकाः स्थापयेत् द्विजः ॥

पालिकाः शरावाणि ।

मध्ये चतुर्मुखं विद्यात्पूर्वं वज्रिणमेवच ।
दक्षिणे तु यमं विद्यात् पश्चिमे वरुणं तथा ॥

उत्तरे शशिनं विद्यात्पालिकास्थाधिदेवताः ।
वल्मीकमृत्तिकां ह्रादं शुष्कगोमयमेवच ॥
ह्रादं ह्रदपङ्कम् ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाविधि ।
दूर्वामश्वत्थपर्णं च शिरीषं विल्वपत्रकम् ॥
तासां मूलेषु विन्यस्य श्वेतसूत्रेण पण्डितः ।
वेष्टयेदिति शेषः ।
मध्ये ब्रह्माणमाराध्य गन्धाद्यैरर्चयेत्क्रमात् ॥
ऐन्द्रादिक्रम एवं स्यादमुष्मै नम एवच ।
तिष्ठन्कर्त्ता जपेन्मन्त्रं पश्चात्प्राङ्मुख एवच ॥
दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥
व्रीहियवमाषतिलमुद्गमिश्रितसर्षपान् ।
तान्प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् ॥
रात्रौ मुहूर्त्ते कल्याणे कारयेदङ्कुरार्पणम् ।
अत्र रात्रिशब्दः प्रदोषपरः ।
प्रदोषकाले कुर्वीत पूर्वाह्णे वा न रात्रिषु ।
इति नारदेन रात्रिनिषेधात् ।
ब्रह्मजज्ञानमिति तु मध्ये ब्रह्माणमर्चयेत् ॥
यत इन्द्रभयामहे प्राच्यां प्रक्षेपयेद् बुधः ।
नाके सुपर्णमिति च ततो दक्षिणएवतु ॥
तत्त्वा यामि ब्रह्मणेति प्रतीच्यां वापयेद् बुधः ।
सोमोधेनुमुदीच्यां च ह्योषधीर्वापयेत्क्रमात् ॥
शुद्धाभिः सिकताभिश्च प्रच्छाद्यापः प्रसेचयेत् ।
विधाय गुप्तये सर्वमात्मानमिति मन्यते ॥

आसप्तमात्मजा जाता आषष्ठं पुत्रनाशनम् ।
पञ्चमे भक्तिमान्विष्णोः सर्वकामफलप्रदे ॥
चतुर्थे चाङ्कुरं विद्यात्पापीयाञ्जायते तु सः ।
त्रियहे सर्वकामानामङ्कुराहानि चोद्यते ॥

आसप्तमादित्यत्राङ्‌ सप्तमस्यैव दिनस्य संपूर्णतामाचष्टे नान्यावधित्वम् । एवमाषष्ठमित्यत्रापि। जातेत्यत्र प्रसवार्थ भूततामपहाय प्रकृत्यर्थो जननमात्रं विवक्षितम् । अङ्कुरमङ्कुरार्पणं विद्यात्कुर्यादित्यर्थः । त्रियहइत्यत्र यणस्थाने इयङ् छान्दसः । सर्वकामानां प्राप्तिरिति शेषः ।

आयुष्करं श्रीपदं च शुभेष्वन्येषु सर्वशः ।
तस्मात्सर्वेषु कार्येषु वापयेदङ्कुरार्पणम् ॥
यद्यङ्कुराणां रहितं तत्सर्वमशुभं भवेत् ।
सद्योऽङ्कुरार्पणं वापि सद्यः कर्तुं समाहितः ॥
अशक्तौ तण्डुलैः सिद्धैः सद्य एव शुभाङ्कुरे ।
पालिकानि प्रपूर्यैव पञ्च त्रीण्येकमेववा ॥
अलंकृत्य च पद्माभैः पुष्पैरापूर्यतेऽपिच ।
अङ्कुरोक्तक्रियाः सर्वास्तैस्तैरेव समाचरेत् ॥
ओषधीनां तु सर्वासां चन्द्रः प्रोक्तोऽधिदैवतम् ।
तस्मात्सर्वप्रयत्नेन तेन राञ्यङ्कुरार्पणम् ॥
आधानं गर्भसंस्कारं जातकर्म च नाम च ।
हित्वाऽङ्कुरार्पणं विद्यादन्यत्र शुभकर्मसु ॥ इति ।

बीजावापनक्षत्राणि कालविधाने,

हस्तस्वातीविरिञ्चासुरपितृसुरजिन्मित्रपौष्णार्यसार्प-
पाथोनाथोत्तरासु क्रिययुवतिधनुर्वृश्चिकान् भद्ररिक्ते ।
हित्वा पर्वाग्नुरेज्यामरगुरुशशिविद्वारलग्नांशके स्या-

द्रुमर्क्षे बीजवापः शशिनि शुभयुते चाष्टमे शुद्धियुक्ते॥ इति।

विरिञ्चो रोहिणी। असुरो मूलम्। पितरो मघा। मुरजिच्छ्रवणः। आर्यः पुष्यः। पाथोनाथः शततारका। क्रियो मेषः। युवतिः कन्या। विन् बुधः। इत्यङ्कुरार्पणम्।

अथान्नप्राशनम्।

तच्च कर्मनामधेयं, यौगिकन्यायादित्युक्तं प्राक्। तस्य च कालमाह

**योगीश्वरः**, षष्ठेऽन्नप्राशनं मासीति।

**आश्वलायनोऽपि**, षष्ठे मास्यन्नप्राशनम्। इति।

**मनुरपि**,

षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले। इति।

यद्वेति कालप्रक्रमात्तद्विषय एवायं विकल्पः। तं च स्पष्टयति

**यमः**,

ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि।
अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले॥ इति।

**लौगाक्षिरपि**, षष्ठेऽन्नप्राशनं जातेषु दन्तेषु वेति।

**आश्वलायनोऽपि**,

षष्ठेऽन्नप्राशनं प्रोक्तं सममास्युत्तरेऽथवा।
प्राग्वा चतुर्थे तस्मात्तत्प्रागापन्नो न संचरेत्॥ इति।

समइत्यनेन षष्ठोत्तराः अष्टमदशमद्वादशा गृह्यन्ते। तथाच

**नारदः**,

जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम्।
तदभावेऽष्टमे मासे नवमे दशमेऽपिवा॥

द्वादशे वापि कुर्वीत प्रथमान्नाशनं परम् ।
संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः ॥ इति ।

नवमइति कन्याभिप्रायेण ।

वृद्धगार्ग्योऽपि.

षष्ठे मासि प्रकुर्वीत बालस्यैवान्नभोजनम् ।
तदभावेऽष्टमे वापि कुर्यात् संवत्सरेऽपि वा ॥ इति ।

शङ्खलिखितावपि, संवत्सरेऽन्नप्राशनमिति । पूर्णइति शेषः । संवत्सरे वा संपूर्णे इति नारदवाक्यात् । प्राग्वेति । आपन्नश्चेत्षष्ठात्प्रागपि चतुर्थे तत्कुर्यादित्यर्थः । एषां च पक्षाणां यथाकुलाचारं व्यवस्था ज्ञेया । यद्वेष्टं मङ्गलं कुले इति मनुयमस्मरणात् ।

बृहस्पतिरपि,

पञ्चाशद्दिवसात् त्रिघ्नात्पश्चात् त्रिहतषष्ट्यहात् ।
अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवमूचिरे ॥ इति ।

त्रिघ्नात् त्रिगुणात् सार्धशततमदिवसादिति यावत् । त्रिहतषष्ट्यहात् त्रिगुणितषष्ट्यहात् । साशीतिशततमदिवसादिति यावत् । ततश्च सार्धशतदिनादूर्ध्वं साशीतिशततमदिवसादर्वागन्नप्राशनं कर्त्तव्यमित्यर्थः ।

वसिष्ठः,

युग्मेषु मासेषु च सत्सु पुंसां संवत्सरे वा नियतं शिशूनाम् ।
अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत् ॥ इति ।

श्रीपतिः,

षष्ठे मासे प्राशनं दारकाणामन्यस्मिंस्तत्कन्यकानां विधेयम् ।
इति ।

लल्लोऽपि, षष्ठे मासि विधेयं पुंसोऽन्नं तु स्त्रियोऽन्यस्मि-

न्निति । षष्ठइति युग्ममासोपलक्षणमित्युक्तं प्राक् । अन्यस्मिन्नयुग्मे ॥

तथाच गर्गः,

नरस्यान्नाशने युग्मं स्त्रीणां चान्नाशनेऽयुजम् । इति ।

तदेतत्स्पष्टमाचष्ट नारदः,

षष्ठे मास्यष्टमे वाथ पुंसां स्त्रीणां तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥ इति ।

अनेन पञ्चमे प्रसङ्गाभावादिति पारिजातोक्तिर्निरस्ता ।

तदभावेऽष्टमे मासे नवमे दशमेऽपिवा ।

इति नारदवाक्ये नवमपदं कन्याभिप्रायमेवेत्युक्तमेव । स्त्रीणां चान्नाशनेऽयुजमिति गर्गवाक्यात् । तेनैकादशेऽपि सिध्यति । मासश्चात्र सौरः सावनो वा ।

जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम् । इति,

बालान्नभोजनविधौ गुरुशुक्रमौढ्यं
मासप्रयुक्तमशुभं मलमासदोषः ।
नास्त्यत्र सावनविधाविह मासि षष्ठे
युग्मे च मासि चरतः सितचन्द्रपक्षे ॥

इति नारदवसिष्ठवाक्यात् । अत्र पक्षादिनिर्णयो

राजमार्त्तण्डे,

षष्ठे मासि शुभे चन्द्रे पक्षे चाप्यसिततरे ।
अन्नस्य प्राशनं कुर्याद्दिवैव प्रथमं शिशोः ॥ इति ।

नारदोपि,

पक्षयोरुभयोरुक्तं कृष्णे चान्त्यत्रिकं विना । इति ।

तिथयो बृहन्नारदीये,

ओजाश्च तिथयः श्रेष्ठा नवमीपर्ववर्जिताः ।
युग्मेषु दशमी प्रोक्ता द्वितीया चान्नभोजने ॥ इति ।

ओजाः अयुग्माः ।

**लघुनारदोऽपि,**

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी च दशमी प्राशने तिथयः शुभाः ॥
पञ्चपर्वसु रिक्तायां नन्दायामाद्यभोजनम् ।
बलमायुर्यशो हन्ति सप्तम्यां चेति केचन ॥
रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीममाम् ।
त्यक्त्वा ऽन्यतिथयः श्रेष्ठाः प्राशने शुभवासराः ॥ इति ।

**वसिष्ठः,**

विष्टिं च नवमीं चैव पक्षच्छिद्रां तथैव च ।
वर्जयेत्सर्वयत्नेन बुद्धिमान् भोजनद्वयम् ॥ इति ।

पक्षच्छिद्रापवादमाह **नारदः,**

वर्जितास्वपि भोक्तव्यं चन्द्रे मित्रनवांशगे । इति ।

वारानाह **नारदः,**

बुधशुक्रगुरूणां तु वारा बालाशने शुभाः ।
चन्द्रवारं प्रशंसन्ति कृष्ण चान्त्यत्रिकं विना ॥ इति ।

**बृहस्पतिरपि,**

पक्षच्छिद्रां च नवमीं यत्नेनैव विवर्जयेत् ।
रविभौमार्कवारांश्च बुद्धिमानन्नकर्मणि ॥ इति ।

अत्र प्रतिप्रसवमाह **नारदः,**

अर्काङ्गारकमन्दानां वाराश्चापि शुभप्रदाः ।
यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रगृहे तदा ॥
गुरुणा बलिना वापि वीक्षितश्च बलान्वितः ।

**वसिष्ठः,**

जीवसौम्यसितानां तु द्रेक्काणा दिवसांशकाः ।

बालान्नप्राशने शस्ता न चन्द्रार्कार्किजासृजाम् ॥ इति ।
असृग्भौमः । वारफलानि **राजमार्तण्डे**,

वाचालो बलवान् दिने दिनपतेरत्यन्तदीप्तानलो
देही हीनहुताशनः शिशिरगौ कौजे रुजापीडितः ।
बौधे भोगसुखं श्रियोऽनवरतं जीवे चिरायुः सुखी
शुक्रे चातिबलान्वितोऽतिमलिनो मन्दे च मन्दानलः॥ इति।

अत्र सोमवारनिन्दा क्षीणचन्द्रविषया । यत्तु,

शशिशुक्रे च मन्दाग्निः शनिभौमे बलक्षयः ।
बुधार्कगुरुवारेषु प्राशनं हि शुभावहम् ॥ इति,

तन्मूलं चिन्त्यम् । नक्षत्राणि **बृहस्पतिनोक्तानि**,

पौष्णादितीन्दुहस्ताश्वित्वाष्ट्रवैष्णववासवाः ।
रोहिणीमैत्रतिष्याश्च वरुणश्चोत्तरात्रयम् ॥
श्रविष्ठा च शुभा ह्येते षोडशान्नाशने शुभाः ॥ इति ।

**वसिष्ठोऽपि**,

विष्णुरुष्णकिरणो हिमरश्मिवायुमित्रवरुणादितिचित्राः ।
अश्वितिष्यवसुपौष्णभरोहिण्युत्तराश्च शिशुभोजनताराः ॥ इति।

विष्णुः श्रवणः । उष्णकिरणः हस्तः । हिमरश्मिः मृग-शिरः । वायुः स्वाती । मित्रम् अनुराधा । वरुणः शतभिषक् । अदितिः पुनर्वसुः। वसुर्धनिष्ठा । पौष्णं रेवती । शेषं प्रसिद्धम् ।

**ऋच्चोच्चयेऽपि**,

हस्तो विशाखाश्विमघार्द्रमूलस्वातीन्दुचित्रादितिविष्णुपूषा ।
शस्तोऽन्नपाने प्रथमे शिशूनां वारेषु सूर्येन्दुबृहस्पतीनाम् ॥इति।

अत्र च जन्मनक्षत्रमपि शुभमित्याह **वसिष्ठः**,

बालान्नभुक्तौ व्रतबन्धने च राजाभिषेके खलु जन्मधिष्ण्यम् ।
शुभं त्वनिष्टं सततं विवाहसीमन्तयात्रादिषु मङ्गलेषु॥इति ।

नारदोऽपि,

पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रं त्वशुभं त्वन्यकर्मणि ॥ इति ।

नृसिंहस्तु तन्निषेधति ।

जन्मर्क्षे च दिने श्रेष्ठे निशायां नैव भोजयेत् ।
उभयोः शुभदं प्रोक्तं कर्म्माधानर्क्षयोरपि ॥ इति ।

ज्योतिर्णवोऽपि,

जन्मर्क्षं वर्जयेद्विद्वान् विशेषेण विनाशकृत् । इति ।

जन्मर्क्षादीनां फलमाह स एव,

जन्मर्क्षे श्रीक्षयं विद्यात् कर्मर्क्षे चापि सौख्यकृत् ।
आधानर्क्षे च बालानां भोजनं रोगनाशनम् ॥ इति ।

विधिरत्नेऽपि,

अन्नप्राशनकार्ये तु जन्मभं मृत्युदं भवेत् ।
शुभं कर्मर्क्षमाधानं विवाहे चान्नभोजनम् ॥ इति ।

ज्योतिर्णवेऽपि,

सम्पत्स्याद्धनमित्रेषु क्षेमे परममित्रभे ।
भोजयेच्छुभवृद्ध्यर्थं कर्माधानर्क्षयोरपि ॥
शेषर्क्षा वर्जिता जन्मविपत्प्रत्यरिनैधनाः ॥ इति ।

जन्मभादीनां स्वरूपमुक्तं संग्रहे,

जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् ।
एकोनविंशमाधानं त्रयोविंशं विनाशनम् ॥ इति ।

योगनिर्णयं बृहस्पतिराह,

न वैधृतौ व्यतीपाते विष्ट्यां गण्डातिगण्डयोः ।
शूले वज्रे न परिघे बालान्नप्राशनं हितम् ॥ इति ।

राशयः काश्यपेनोक्ताः,

गोऽश्विकुम्भतुलाकन्यासिंहकर्कनृयुग्मकाः ।

शुभदा राशयश्चैते न मेषझषवृश्चिकाः ॥ इति ।

नृसिंहोऽपि,

मेषालिमीना वर्ज्याः स्युस्तथैवाधोमुखानि च । इति ।

अधोमुखानि सूर्याधिष्ठितराशयः । सूर्याधिष्ठितराश्युपक्रम-

तया अधस्तिर्यगूर्ध्वाननना इति संग्रहवाक्यात् ।

राशिफलानि राजमार्त्तण्डे,

क्षुद्रोगवान् प्रथमभुक् प्रथमे विलग्ने

मन्दानलो घटतुलालिकुलीरमेषु ।

श्यावाशनो मृगमृगाधिपकार्मुकेषु

मीनाङ्गनामिथुनगोषु वरान्नभोगी ॥ इति ।

क्षुद्रोगवान् भस्मकाख्यरोगयुक्तः । श्यावाशनः कदन्नभुक् ।

वसिष्ठः,

शुभग्रहाणां भवने विलग्ने नवांशके पूर्वदले दिनस्य ।

पूर्णेन्दुवारेऽप्यथवा विलग्ने नवांशके वाऽप्यथवा शुभस्य ॥

अनैधने कर्मविशुद्धियुक्ते दोषैर्विहीने शुभदृष्टियुक्ते ।

नोत्पातपापग्रहदूषिते भे वैनाशिकाद्यृक्षविवर्जितेऽपि ॥

अनैधने निधनताराररहिते । ग्रहसंस्थामाह

वसिष्ठः,

शुभाशुभेषु त्रिधनायकेन्द्रत्रिकोणगेष्वायरिपुत्रिगेषु ।

अषष्ठरिष्फाष्टगते हिमांशौ बालान्नभुक्तिः शुभदा च तेषाम् ॥ इति ।

रिष्फं द्वादशं स्थानम् । ग्रहफलानि

स एवाह,

कुष्ठी लग्नगते सूर्ये क्षीणे चन्द्रे च भिक्षुकः ।

सन्नदः पूर्णचन्द्रे च कुजे पित्तरुजाऽर्दितः ॥
बुधे ज्ञानी गुरौ भोगी दीर्घायुर्भाग्यवान् सिते ।
वातरोगः शनौ राहौ केतौ चान्नविवर्जितः ॥
संपूर्णेन्दुभयाष्टम्योर्मध्येन्दुः पूर्णसंज्ञितः ।
विनष्टेन्दुभयाष्टम्योर्मध्येऽसौ क्षीणसंज्ञकः ॥
षष्ठाष्टमान्त्यगश्चन्द्रो भोक्तुश्च निधनप्रदः ।
केन्द्रत्रिकोणगो मन्दस्तथैवान्नापहारकः ॥

**महेश्वरः,**

सूर्ये केन्द्रमृतिव्ययात्मजगते धर्मे च कुष्ठी भवे-
द्भौमे पित्तरुजाऽन्वितोऽनिलरुजा युक्तस्तु सूर्यात्मजे ।
क्षीणे शीतकरे तु भैक्ष्यभुगिति प्रोक्तं च रिक्ते तिथौ
सौम्ये ज्ञानयुतो विधौ मखकरः पूर्णे तु मन्नप्रदः ॥
गुरौ चिरायुर्भृगुजेऽथ भोगी कोणस्त्रिकोणाद्यखसप्तसंस्थः ।
बन्धुस्थितश्चान्नहरोऽथ षष्ठो मृत्युस्थितो मृत्युकरः शशाङ्कः॥ इति।
कोणः शनिः ।

**राजमार्त्तण्डः,**

लाभत्रिषष्ठभवनोपगतास्त्वसौम्याः
सौम्यग्रहा नवमपञ्चमकण्टकस्थाः ।
लग्नेषु दैत्यसचिवज्ञबृहस्पतीना-
मन्नोपभोगकरणैर्विविधोपभोक्ता ॥

अत्र गुरुशुक्रविधानं वृषमीनमात्रविषयम् । धनुस्तुलयोर-निष्फलताभिधानात् । गुणवद्विहितलग्नालाभे सत्युक्तगुणापेक्षया वा विधानमूहनीयम् । नवांशकास्तु शुभग्रहाणामेव कार्या इत्याह,

सौम्यामरेज्यभृगुनन्दनवासरेषु

लग्नेषु लग्नपतिसौम्यनवांशकेषु ।
नीचोद्भवोऽपि भवति प्रथमान्नभोजी
भोक्ता वरान्नकुसुमाम्बरकामिनीनाम् ॥ इति ।

अर्णवेऽपि,

दशमस्थान् ग्रहान् सर्वान् वर्जयेन्मतिमान्नरः ।
अन्नप्राशनकृत्येषु मृत्युक्लेशभयावहान् ॥

मुहूर्त्तसंग्रहेऽपि,

बुधशुक्रेनजीवाः स्युः व्ययलग्नायकेन्द्रगाः ।
शुभांशे शीतगौ भोक्तुर्द्दद्युरायुः श्रियं शुभम् ॥ इति ।

इनः सूर्यः । अन्नप्राशनप्रसङ्गेनाष्टमे लग्ने कर्मान्तराण्यपि निषेधति

स एव,

निधनभवनलग्ने भोजनं पौष्टिकानि
क्षितिपतिकुलसेवां सांपरायप्रयोगम् ।
रथतुरगगजेन्द्रारोहणं शस्त्रशिक्षा-
मपि शुभकरमन्यद् वर्जयेज्जीवितार्थी ॥

स्वलग्नादष्टमलग्नं निधनभवनं, तत्र एतानि कर्माण्यन्यदपि शुभकरं कर्म जीवितार्थी पुरुषो वर्जयेत् । अथान्नप्राशनस्वरूपम् । तत्र

शौनकः,

जन्मप्रभृतिषष्ठेऽस्य मासेऽन्नप्राशनं शिशोः ।
प्रशस्तेऽहनि मौहूर्त्तविहिते शोभनेऽपिच ॥
मुहूर्त्ते ब्राह्मणानत्र दानाद्यैः परिपूज्य च ।
पुण्याहं वाचयित्वा तैर्गन्धपुष्पाद्यलंकृतः ॥
उपवेश्यासने शुभ्रे प्राङ्मुखं बालमन्तिके ।

अद्भिर्वा दधिमध्वाज्यमिश्रमन्नं सुसंस्कृतम् ॥
मन्त्रेणान्नपतेऽन्नस्येत्यादिना प्राशयेत्सकृत् ।
यथेष्टं प्राशयेत्पश्चाच्छोधयेत्तन्मुखं शिशोः ॥ इति ।
पुण्याहवाचनं नान्दीश्राद्धस्याप्युपलक्षणम् । अत एव
कारिका,

अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं भवेत् ।
कृत्वाऽऽभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम् ॥
अन्नं तं प्राशयेदन्नपतइत्यादिमन्त्रतः । इति ।

यथेष्टं पञ्चकृत्वः । दधिघृतमधुमिश्रमन्नमकामसंयुक्तमन्नपते इत्यनेन मन्त्रेण प्राशयेत् ततः पञ्चकृत्वस्तूष्णीं प्राशयेदिति जयन्तस्मरणात् ।

**आश्वलायनोऽपि,**

तस्मिंश्च दधिमध्वाज्यमिश्रमन्नं तु मन्त्रवत् ।
स्तमलप्राशनाच्छुद्ध्यै प्राशयेच्चायुषे पिता ॥ इति
प्राशनीयं द्रव्यमाह सूत्ररूपेण

**स एव,**

षष्ठे मास्यन्नप्राशनमाजमन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो घृतौदनं तेजस्कामो दध्योदनमिन्द्रियकामो मध्वोदनमायुष्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत्सर्वकामो भवतीति विज्ञायतेऽन्नपतेऽन्नस्य नो देहीति ।

**अस्यार्थः** । जन्मप्रभृति षष्ठे मासे,न गर्भप्रभृति,जाताधिकारात् । अन्नप्राशनं नाम कर्म कार्यम् । अजस्येदमाजम् । तैत्तिरसाहचर्यान्मांसस्य ग्रहणम् । न क्षीरदधिघृतानाम् । तित्तिरेरिदं तैत्तिरम् । आजतैत्तिरयोर्व्यञ्जनत्वेनोपदेशो नान्नत्वेन तथा लोके प्रसिद्धत्वात् तेनान्नमपि सिद्धम् । घृतसंस्कृतौदनो घृतौदनः । कुतः,ओ-

दनग्रहणात् । यदि हि घृतमिश्रोऽभिप्रेतः स्याद् घृतं तेजस्काम इत्येव स्यात्। ततश्च घृतस्य पूर्ववद् व्यञ्जनत्वेनान्नमपि सिद्ध्यत्येव। शृते नेदीयसि घृतसेके कृते घृतसंस्कृतो भवति। न तु घृतेन श्रपणं, विक्लेदनानुपपत्तेः। एवं दध्योदनादावपि दधिमधुघृतमिश्रमन्नं प्राशयेत्सर्वकामो भवतीति विज्ञायतइति। अकामसंयोगेन दध्यादिमिश्रमन्नं प्राशयेदन्नपतेऽन्नस्य न इति मन्त्रेण। अयं मन्त्रः पूर्वप्राशनेषु च भवति। कुतः, प्राशनसहितत्वान्मन्त्रस्य। प्राशयेदित्यस्य च सर्वशेषत्वात्। आजं प्राशयेदित्यादिसमन्वयाच्च।

**सांख्यायनगृह्यमपि,**

षष्ठे मास्यन्नप्राशनमाजमन्नाद्यकामः तैत्तिरं ब्रह्मवर्चसकामो मात्स्यं जवनकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत्। जवनं वीर्यम्।

**पारस्करोऽपि,**

सर्वान् रसान् सर्वमन्नमेकत उद्धृत्य प्राशयेत् तूष्णीं हन्तेति वा भारद्वाज्या मांसेन वाक्प्रसारितकामस्य कापिञ्जलमांसेनान्नाद्यकामस्य मात्स्यैर्जवनकामस्य कृकषाया आयुष्कामस्य आट्या ब्रह्मवर्चसकामस्य सर्वैः सर्वकामस्यान्नपर्याय वा। भारद्वाज्या भारद्वाजपक्षिजातीयस्त्रियाः। वाक्प्रसारितं वाक्प्रसरः। कपिञ्जलो गौरतित्तिरिः। कृकषायाः गोधायाः। आट्याः शरालिजातीयपक्षिस्त्रियाः। * अन्नपर्याय अन्नपरिपाट्या।

**हिरण्यकेश्यपि,**

ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा ऽथैनं दधिमधुघृतमिति त्रिवृत्प्राशयति भूस्त्वयि दधामि भुवस्त्वयि दधामि सुवस्त्वयि दधामीत्याप्यैनमन्नं प्राश-

* अन्नपर्यायेति लुप्तविभक्त्यन्तमार्षं पदम्। अन्नपर्यायेणेत्यर्थः।

यसपां त्वौषधीनां रसं प्राशयामि शिवास्तआप ओषधयः सन्त्वनमीवास्तआप ओषधयो भवन्त्विति । त्रिवृत् त्रिरावृत्तम् । अत्र भोजनपात्रमाह

**मार्कण्डेयः,**

देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥
मध्वाज्यकनकोपेतं प्राशयेत्पायसं तु तम् ।
कृतप्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत् ॥ इति ।

कनकोपेतं कनकेनोपात्तमित्यर्थः । स्त्रीणामन्नप्राशनं

**मनुराह,**

अमन्त्रिका तु कार्येयं स्त्रीणामाष्टदशेषतः । इति ।

**शौनकोऽपि,**

इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम् । इति ।

**आश्वलायनोऽपि,**

जातकृत्यादि चूडान्तं स्त्रीणां कार्यममन्त्रकम् ।
हुतकृत्यं तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि ॥ इति ।

हुतकृत्यं होमः स च पुंवत्स्यात्पुरुषसंस्कार इव कृताकृत इत्यर्थः । सूत्ररूपेणाप्याह स एव । आवृतैव कुमार्या इति । अत्र विशेषमाह

**शौनकः,**

होमपक्षाश्रयेऽत्रापि जातकर्मवदाचरेत् ।
वृद्धिश्राद्धं तु पूर्वेद्युस्तस्मिन्पक्षे समाचरेत् ॥
उत्तरेद्युस्तु बध्नीयात्कौतुकं च यथाविधि ।
होमोपदेशो यत्रास्ति न तु मन्त्रोपदेशनम् ॥
तत्रानादेशहोमाः स्युरिति सूत्रकृतो मतम् । इति ।

जातकर्मवत् । प्रधानहोमानन्तरं स्विष्टकृद्धोमात्प्राग्यथा जातकर्म तद्वदिदमपीत्यर्थः । तस्मिन्पक्षे होमपक्षे वृद्धिश्राद्धं पूर्वेद्युः अन्यथा मन्त्र एव । महत्सु तु पूर्वेद्युस्तदहरल्पेष्विति वृद्धिश्राद्धप्रक्रमे परिशिष्टात् । अनादेशहोमा अनादिष्टदेवताका होमाः । तांश्चाह

**आश्वलायनः,**

अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे इति । शूद्राणामप्येवं भवतीत्युक्तं ग्रन्थादौ ।

अथ जीविकापरीक्षा ।

**तत्र मार्कण्डेयः,**

अग्रतोऽथ प्रविन्यस्य शिलाभाण्डानि सर्वशः ।
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥ इति ।
शास्त्राणि चैव शस्त्राणीत्यपि पाठः । इत्यन्नप्राशनम् ।
अथ प्रसङ्गात् बालस्यान्यदृष्टिदोषादौ रक्षाविधिः ।

**मानवे कपिलसंहितायां च,**

शिशुसंरक्षणार्थायाशुभग्रहनिवारिणीम् ।
रक्षां संध्यासु कुर्वीत निम्बसर्षपगृञ्जनैः ॥
फलीकरणसंमिश्रैः करञ्जैरवलोकने ।
वचोधरान्नदेशेषु बालग्रहविमुक्तये ।

अवलोकने, दुष्टदृष्ट्येति शेषः । वचोधरान्नदेशेषु वचनकाले धरारिङ्गणकाले अन्नभोजनकाले वृक्षादिच्छायायां च दुष्टदृष्ट्याऽवलोकनइत्यन्वयः ।

वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ।

रक्षतु त्वरितो बालं मुञ्चमुञ्च कुमारकम् ॥
कृष्ण रक्ष शिशुं शङ्खमधुकैटभमर्दन ।
प्रातःसङ्गवमध्याह्नसायाह्नेषु च सन्ध्ययोः ॥
महानिशि सदा रक्ष कंसारिष्टनिषूदन ।
यद्गोरजपिशाचांश्च ग्रहान् मातृग्रहानपि ॥
बालग्रहान्विशेषेण छिन्धि छिन्धि महाभयात् ।
त्राहि त्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम् ॥
इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ।
शिरोललाटवक्षस्यङ्गेषु रक्षां कुर्याद्यथाविधि ॥
मन्त्रसंरक्षणादेवं शिशुः संवर्द्धतेऽन्वहम् ॥ इति ।

अथ बालस्य स्खलनादौ रक्षाविधिः ।

**तथा च हरिवंशे,**

नन्दोऽङ्कमेनमारोप्य भूरेणुं परिगृह्य च ।
शिरः प्रदक्षिणं कुर्वन् मन्त्रमेनं जजाप ह ॥
विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणम् ।
ब्रह्मा च पश्चिमं पायाच्चन्द्रो रक्षत्वथोत्तरम् ॥
उपरिष्टात्तथा सूर्यः पायाच्चाधश्च वासुकिः ।
पायादूर्ध्वमधो वत्सं शिष्टाः काष्ठाः समीरणः ॥
स्वस्ति करोतु भगवान् पिनाकी वृषभध्वजः ।
गावो रक्षन्तु सर्वत्र भूमिः पातु सदा शिवा ॥
एवमुच्चार्य नन्दस्तु कृष्णं पस्पर्श सर्वतः ।
एष मन्त्रो हि बालानां रक्षायै परिकीर्तितः ॥ इति ।

रावणादिप्रोक्तोऽन्योऽपि बालग्रहनिवृत्तिविधिर्विस्तरभयान्नेहोक्तः । स तत्रतत्रैवावबोध्यः । अथ बालस्य प्रथममूर्ध्वदन्तोत्पत्तिफलम् ।

**विष्णुधर्मोत्तरे,**

दन्तजन्मनि बालानां लक्षणं तन्निबोध मे ।
उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ॥
दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ।
मातरं पितरं वाऽथ खादेदात्मानमेव वा ॥ इति ।

अथ बालस्य दन्तघर्षणशमनविधिः ।

**मार्कण्डेयपुराणे,**

दन्ताकृष्टिः प्रसूतानां बालानां दशनस्थितः ।
करोति संघर्षमति चिकीर्षुर्दुस्सहागमम् ॥

दुस्सह इत्यलक्ष्मीः मृत्योश्च पुत्रः । तत्पौत्रो दन्ताकृष्टिः ।

तस्योपशमनं कार्यं सुप्तस्य सितसर्षपैः ।
शयनस्योपरि क्षिप्तैर्मासं च दशनोपरि ॥

मासं मासपर्यन्तम् ।

सुवर्चलौषधिस्नानात्तथा सच्छास्त्रकीर्त्तनात् ।
उग्रकण्टकखड्गास्थिक्षौमवस्त्रविधारणात् ॥ इति ।

**अथाब्दपूर्त्तिकृत्यम् ।**

**तत्र नृसिंहः,**

सौरेणाब्दान्तजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः ।
आबध्य हेमसूत्रं तु रक्ष्यादावनुकूलके ॥
नवक्षौमवरादीनि यथार्हं धारयेत्तदा ।

जन्मदिनात् सौरेण मानेन योऽब्दस्तदन्ते यदा जन्मर्क्षं भवति तदा वक्ष्यमाणं विधिं कुर्यादित्यर्थः । अब्दान्तइति सामान्योपादानात्प्रत्यब्दान्ते कार्यम् ।

तथाच गर्गः,

यस्मिन् दिने सवितरि तन्नक्षत्रदिनं भवेत् ।

प्रत्यब्दान्ते च नक्षत्रे विधिं वक्ष्ये नृणां परम् ॥
येनायुर्वर्द्धते नित्यं बलं तेजः सुखं सदा । इति ।

सवितरीत्यत्राणल्लोपः छान्दसः । ततश्च सावित्रेऽब्दान्ते यस्मिन्दिने तन्नक्षत्रं भवतीत्यर्थः सिध्यति । पूर्ववाक्यानुरोधात् । तदेतत्स्पष्टमुक्तं

विधिरत्ने,

अब्देन सौरेण शिशोस्समाप्ते
बालं तु संस्नाप्य च जन्मधिष्ण्ये ।
कृत्वाऽऽयुषा वृद्धिकरं च कर्म
तं धारयेच्छान्तिसुवर्णसूत्रम् ॥ इति ।

जन्मर्क्षद्वैधे निर्णयमाह वृद्धगार्ग्यः,

एकमासे द्विजन्मर्क्षे प्रथमे जन्म चाचरेत् ।
तस्मिन्नक्षत्रखण्डे तु अन्त्यखण्डे समाचरेत् ॥
उदयव्यापिजन्मर्क्षे तस्माद् ग्राह्यं तु जन्मनः ।
सङ्गवव्यापिखण्डर्क्षे तत्र जन्म वरं शुभम् ॥ इति ।

द्विविधं तावन्नक्षत्रद्वैविध्यम् ।

तत्रैकस्मिन्सौरे मासे द्विवारं नक्षत्रप्रवृत्त्या एकम् । एकस्यैव नक्षत्रस्य दिनद्वयं प्रवृत्त्या च परम् । तत्र पूर्वार्धेन प्रथमं व्याख्यातम् । उत्तरसार्धश्लोकेन द्वितीयं व्याख्यातम् । जन्मर्क्षातिक्रमे तिथ्याद्याह,

रिक्तापर्वाष्टमीश्चैव कृष्णे चान्त्यत्रिकं विना । इति ।

वारादयस्तत्रैव,

शुभानां वारवर्गाश्च राशयश्च धनुर्विना ।
श्रेष्ठा नेष्टास्तथा शेषा मकरो मध्यमो भवेत् ॥ इति ।

नक्षत्राण्याह नृसिंहः,

हस्तादिभूतनक्षत्राण्यजद्वित्र्युत्तराणि च ।
वसुपौष्णादितीपुष्यवाजिभानि शुभानि तु ॥ इति ।

आदिः अश्विनी । भूतं मूलम् । अजद्वौ रोहिणीमृगशीर्षे । त्र्युत्तराणि उत्तरात्रयम् । वसुर्धनिष्ठा । शेषं प्रसिद्धम् । योगादिकमाह—

**स एव,**

शकुन्यादीनि विष्टिश्च वर्ज्या योगाः शुभेतराः । इति ।

ग्रहसंस्था ऽपि तत्रैव,

लग्ने सर्वे शुभाः श्रेष्ठास्तथा केन्द्रत्रिकोणयोः ।
चन्द्रः शुभप्रदो ज्ञेयो द्वादशाष्टमभाद्विना ॥
पापास्त्रिलाभषष्ठस्थाः शुभा वस्त्रस्य धारणे ।
उच्चमित्रस्ववर्गेषु शुभैः केन्द्रत्रिकोणगैः ॥
वस्त्रवाहनशस्त्रादिभूषणानि सुसंपदः ।
सद्गुणस्थे निशानाथे कुर्यात्तच्छोभने दिने ॥
नद्यादिगमने चैव तथा देवादिदर्शने ।
शिशोर्लीलादि चान्यत्तु वस्त्रधारणवद्भवेत् ॥ इति ।

अत्रेतिकर्त्तव्यतामाह

**गर्गः,**

पूर्वं जन्मदिनाद्रात्रौ कृत्वा कौतुकबन्धनम् ।
कृत्वा शान्त्युदकं चैव प्राशयेच्चाभिषेचयेत् ॥
ग्रहशान्तिं समाप्यैव नक्षत्राधिपपूजनम् । इति ।

शान्त्युदकप्रकारमाह

**बौधायनः,**

अथ वै भवति श्रद्धा वा आपः श्रद्धामेवारभ्येति यज्ञो वा आपो यज्ञमेवारभ्येति वज्रो वा आपो वज्रमेव भ्रातृव्येभ्यः प्रहृत्येत्यापो वै

रक्षोघ्नी रक्षसामपहत्या इत्यापो वै देवानां प्रियं धामैतममृतं वा आपस्त-स्मादद्भिरवतान्तमद्भिरभिषिञ्चतीत्यापो वै सर्वा देवता देवता एवा-रभ्येत्यापो वै शान्ताः शान्ताभिरेवास्य शुचं शमयतीति ब्राह्मणं त-स्मात्पवित्रेण शान्त्युदकं करोति जन्मनक्षत्रे विवाहचौलोपनयनस-मावर्त्तनाग्न्याधेयान्यन्यानि मङ्गलकार्याणि ग्रहोपरागे ग्रहोत्पाते वा द्विपात्सु चतुष्पात्सु भयं विन्देताथ शान्तिमारभेत युग्मान्ब्रा-ह्मणान्सुप्रक्षालितपाणिपादानप आचमय्य प्रतिदिशमासनेषूप-वेश्य गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्य दर्भेषु प्राङ्-मुख उपविश्य दूर्वा दर्भांश्च धारयमाणः पवित्रपाणिः स्थण्डिलं कृत्वा प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्य दूर्वादर्भैरवकीर्य गन्धो-दकेनाभ्युक्ष्य पुष्पैरवकीर्य ब्रह्मपात्रं निधाय ब्रह्मजज्ञानमित्य-नया तिरः पवित्रमप आनयन् जपति तत्सवितुर्वरेण्यमित्यथ यवाक्षततण्डुलानावपति भूर्भुवःस्वरोमित्यथ पुष्पैर्दूर्वाफलैरव-कीर्य दूर्वादर्भैः प्रच्छाद्याभिमृशति शं नो देवीरभिष्टय इत्यन्वा-रब्धेषु जपति तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्धर्चश ऋक्शो ऽनवानमुक्त्वा वेदादीन् जपति राक्षोघ्नं कृणुष्व पाजः प्रसितिं न पृथ्वीमित्येतमनुवाकं मदेचिदस्येत्यर्धर्चमपोद्धृत्येन्द्रं वो विश्व-तस्परीत्येतमनुवाकं यत इन्द्र भयामहे स्वस्तिदा विशस्पति-रिति द्वाभ्यां महाँ इन्द्रः सजोषा इन्द्रेति द्वाभ्यां ये देवाः पुरस्स-दोऽग्निनेत्रा रक्षोहण इति पञ्चभिः पर्यायैरग्नये रक्षोघ्न इति पञ्चा-ग्निरायुष्मानिति पञ्चाँहोमुचो या वामिन्द्रावरुणेति चतस्रो यो वामिन्द्रावरुणेत्यष्टावग्ने यशस्विन्निति चतस्र ऋतापाडृतधामेत्ये-तमनुवाकं नमो अस्तु सर्पेभ्य इति तिसृभिरनुच्छन्दसं पञ्चर्चोऽयं पुरोहरिकेश इति पञ्चभिः पर्यायैरप्रतिरथमाशुः शिशान इत्ये-तमनुवाकं शं च मइत्येतमनुवाकं विहव्यंच ममाग्ने वर्च इत्येतमनु-

वाकं मृगारमग्नेर्मन्व इत्येनमनुवाकं सर्पाहुतीः समीचीनामासि प्राचीदिगिति षड्भिः पर्यायैर्हेतयो नामस्थ तेषां वः पुरो गृहा इति षड्भिः शतायुधायेति पञ्च भूतं भव्यं भविष्यदित्येतमनुवाकमथर्वाङ्गिरसमिन्द्रो दधीच्च इत्येतमनुवाकं प्रत्याङ्गिरसं च चक्षुषो हेतइति प्रतिपद्य भ्रातृव्यं पादयामसीत्यन्तं प्राणो रक्षति विश्वमेजदित्येतमनुवाकं सिंह व्याघ्र उत या पृदाकावित्येनमनुवाकमहमस्मीत्येतमनुवाकं तामूर्याचन्द्रमसेत्येनमनुवाकमग्निर्नः पान्त्वित्यास्मनवोनव इत्येतैरनुवाकैरुत्तरैरुपहोमैश्च सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिस्तच्छंयोरात्रणीमह इत्येतमनुवाकं नमो ब्रह्मणइति परिधानीयां त्रिरन्वाहेति ब्राह्मण इति परिधानीयां त्रिरन्वाहेति ब्राह्मणं प्रणवेनोत्थाप्य व्याहृतिभिः प्रोक्षत्यथ दक्षिणां ददाति पुरस्तादुपविष्टाय हिरण्यं ददाति दक्षिणे रजतं पश्चात्कांस्यमुत्तरतो वासो ददात्यथ गृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां मित्रबन्धुसुहृज्ज्ञातिसंबन्धिबान्धवानां राज्ञां राजपुरोहितानां च बालवृद्धान्तर्वत्नी पापरोगी दीर्घरोगी कृशातुरान्प्रोक्षति हस्त्यश्वोष्ट्रमहिष्याजाविकभृत्यांश्च धनधान्यानि च प्रोक्षत्येवमेकरात्रं त्रिरात्रं पञ्चरात्रं सप्तरात्रं नवरात्रमित्यपमृत्युं जयतीत्याह भगवान्बौधायन इति ।

यत्तु प्रयोगपारिजातेन प्रयोगलिखनावसरे पूर्वं जन्मदिनाद्रात्राविदित्युपक्रम्य कृत्वा शान्त्युदकं चैवेति गर्गोक्तं बौधायनाभिहितप्रकारकं शान्त्युदकमलिखित्वा विष्णुधर्मोत्तरोक्तकलशोदकस्नानमत्र लिखितं तन्महाभ्रममूलकमित्यनादरणीयम्। अब्दान्तजन्मदिनर्क्षविहितादायुर्वर्धनाख्यकर्मणःजन्मर्क्षमात्रविहितस्य पुष्टिवर्द्धनाख्यकर्मणो निमित्तभेदेन फलभेदेन संज्ञाभेदेन देवताभेदेनाज्यरूपगुणभेदेन च भिन्नतया कर्मान्तरत्वेन तद्गुणापेसंहारायोगात्।

यद्यपि बौधायनीयमपि शान्त्युदकं जन्मर्क्षमात्रनिमित्तएवोत्पन्नं तथापि कृत्वा शान्त्युदकं चैवेति वाक्येन शान्त्युदकशब्देनैवोपादाय प्रकृतकर्मणि विनियुक्तत्वात्तदनुष्ठानमेव युक्तं, न विष्णुधर्मोत्तरीयस्य कलशोदकस्नानस्य । शान्त्युदकशब्देनानुपादानादित्यलं वृद्धविरोधेन । ग्रहशान्तिरत्र स्वपूर्वभाविनं मृत्युंजयहोममाक्षिपति बद्धक्रमत्वात् । तथाच

ब्रह्मपुराणे,

प्रतिसंवत्सरान्तर्क्षे वक्ष्ये नृणां विधिं परम् ।
पूर्वाह्णे चैव जन्मर्क्षे स्नात्वा नद्यां सुरोत्तम ॥
मध्वाज्यदधिसंयुक्तां दूर्वां मृत्युंजयेन तु ।
जुहुयाच्च सहस्रं वा अष्टाविंशतिमाहुतीः ॥
ततोऽपराह्णे संप्राप्ते कृत्वा कौतुकमङ्गलम् ।
ग्रहपूजां प्रकुर्वीत नक्षत्राधिपपूजनम् ॥
आयुष्यहोमं कृत्वा च श्रोत्रियानथ भोजयेत् ।
दत्त्वा गोभूहिरण्यादि तथा स्वर्णादिनिर्मितम् ॥
बध्वा वा कटिसूत्रं च वस्त्रं च परिधापयेत् । इति ।

गर्गोक्तं कौतुकबन्धनं शान्त्युदकस्याङ्गम्, इदं तु कौतुकबन्धनं ग्रहशान्त्यादेरङ्गमिति न स्थानद्वयविकल्पः । सन्निधिलक्षणप्रकरणेन तत्तदङ्गत्वावगमात् । ग्रहपूजा नवग्रहमखः । ग्रहशान्तिं समाप्यैवेति गर्गेण ग्रहशान्तिपदोपादानात् । नक्षत्राधिपस्तन्नक्षत्रदेवता, न चन्द्रः ।

नक्षत्रदेवतापूजां कुर्याद् गुरुसमन्वितः ।

इति वक्ष्यमाणशौनकवाक्यात् । पूजनं होमस्याप्युपलक्षणम् । तथाच

शौनकः,

अथ स्वजन्मनक्षत्रे स्नातः शुक्लाम्बरो नृपः ।
कृतकौतुकबन्धश्च सर्वाभरणभूषितः ॥
नक्षत्रदेवतापूजां कुर्याद् गुरुसमन्वितः ।
आचार्येणैव होतव्यो होमः सर्वत्र भूपतेः ॥
स्थण्डिलाद्याज्यभागान्तं कृत्वा सर्वं यथाक्रमम् ।
दूर्वा घृताक्ता जुहुयादष्टोत्तरशताहुतीः ॥
यद्देवताकं नक्षत्रं मन्त्रस्तद्दैवतः स्मृतः ।
ततः स्विष्टकृतं सर्वं होमशेषं समापयेत् ॥
गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणान् भोजयेन्नृपः ।
तस्मिन्नहनि सर्वत्र देवतायतनानि च ॥
पूजयेद् दुःखितान्सर्वान्मोचयेन्नृपतिस्ततः ।
द्विजान्सर्वानथाभ्यर्च्य तस्मिन्नहनि कारयेत् ॥
पूजयित्वा विधानेन पूजितव्यांश्च बान्धवान् ।
न हिंस्यात्सर्वभूतानि तदहस्तु विशेषतः ॥
सर्वं समाचरेद्राजा सुखी भवति सर्वदा । इति ।

अत्र कृतकौतुकबन्ध इति ग्रहशान्त्यङ्गभूतस्य कौतुकबन्धनस्यानुवादो नक्षत्रपूजनादावप्यङ्गताबोधनाय। अन्यथा सन्निधिना ग्रहशान्तिमात्रे एव तदङ्गतापत्तेः । अयं च दूर्वाहोमः ब्रह्मपुराणीयदूर्वाहोमात्पूर्वोक्तन्यायेन कर्मान्तरम् । ततश्च प्रयोगपारिजातीयो मृत्युंजयदेवताकनक्षत्रदेवताकयोर्होमयोरभेदाभिप्रायो निरस्तः। द्रव्यदेवतादिगुणभेदेन कर्मभेदावश्यंभावात् । अत्र राजपदं निगडबन्धनादिदुःखितजनमोचनरूपगुणविधानाय, न राजमात्राधिकारिताबोधनाय। विधिं वक्ष्ये नृणां परमिति गर्गवाक्येन सामान्योपादानात् ।

सर्वैः स्वजन्मादिवसे स्नातैर्मङ्गलवारिभिः ।

गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥

इत्यादिपुराणवाक्ये सर्वपदोपादानाच्च । न च स्वर्गकामादिपदस्य त्रैवर्णिकपरत्वात्संकोचः । अपशूद्राधिकरणन्यायेनाग्निविद्यादिरहितानां शूद्राणामनधिकारसिद्धौ स्वर्गकामपदस्य त्रैवर्णिकपरता सिध्यति, न तथा प्रकृते । अन्यथा ऽन्येषां सुखाभिवृद्धिरूपफलाकाङ्क्षावाधापत्तेः । तस्मान्न संकोचः । आयुष्यहोम इति कर्मनामधेयम् । तत्प्रकारमाह

शौनकः

आयुष्यहोमं वक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
कुर्यात्त्रिजन्मनक्षत्रे विषुवे संक्रमे तथा ॥
पौर्णमास्याममावास्यां ग्रहणे चन्द्रसूर्ययोः ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
अलंकृतः स्वस्तिवाच्य अन्नं दत्वा द्विजातये ।
अथाज्यभागपर्यन्तं कृत्वोपलेपनादिकम् ॥
कृतान्नं जुहुयात्सम्यगन्नदानस्य संपदा ।
आनोभद्राःक्रतव इत्यृचां च दशकेन च ॥
इमं स्तोममर्हतइत्युचां षोडशकेन च ।
एकया जातवेदस्य हुत्वा स्विष्टकृतं ततः ॥
होमशेषं समाप्याथ ब्राह्मणान् भोजयेत्ततः ।
स्वस्तिवाच्य द्विजाग्र्यैस्तैर्धेनुं दद्याच्च दक्षिणाम् ॥ इति ।

त्रीणि जन्मनक्षत्राणि जन्मदशमैकोनविंशानि । कृतान्नं गृहसिद्धान्नम् ।

आयुष्यहोमं कृत्वा च श्रोत्रियानथ भोजयेत् ।

इत्यत्रायुष्यहोमश्रोत्रियभोजनयोः पौर्वापर्यसिद्धौ पुनरथ-

शब्दोपादानमायुष्यहोमानन्तरं श्रोत्रियभोजनात्प्राक् मध्ये दिगीशपूजां गमयति । तथाच

वृद्धगर्गः,

आयुष्यहोमं कृत्वा च दिगीशानर्चयेद्बुधः ।
देवांश्च वैदिकान्विप्रान् गुरून्बन्धून्सुहृज्जनम् ॥
प्रणम्य पूजयेद्विद्वान् गन्धमाल्यानुलेपनैः ।
नवाम्बरधरो भूत्वा युक्तस्रग्वस्त्रभूषणः ॥
गुरुप्रणामं कृत्वा च राजा तु महिषीसखः ।
निगडेभ्यो विसृज्याथ मनुजान्निगडैर्युतान् ॥
अन्यानि पुण्यकर्माणि प्रकुर्वीत यथाविधि ।
पापकर्म न कुर्वीत यस्माच्छतगुणं भवेत्॥इति ।

कटिसूत्रबन्धनानन्तरं कर्त्तव्यमुक्तं

सायणीये,

आबध्य कटिसूत्रं च वासः संगृह्य नूतनम् ।
दूर्वाङ्कुरैरथाज्येन चरुणा वाऽपि नाकिने ॥
आयुष्यहोमं कृत्वा च तर्पयेत्पितृदेवताः ॥

इदमपि कर्मान्तरम्, द्रव्यदेवताभेदात् ।

अत्रायमुक्तकर्मणामनुष्ठानक्रमः । जन्मदिनात्पूर्वदिने रात्रौ कौतुकबन्धानन्तरं शान्त्युदकं जन्मदिने पूर्वाह्णे मृत्युंजयहोमोऽपराह्णे ग्रहशान्तिरनन्तरं नक्षत्रदेवतापूजा तद्दैवत्यो होमः अनन्तरमायुष्यहोमोऽनन्तरं दिगीशपूजा ब्राह्मणादिपूजनं सुवर्णकटिसूत्रधारणं नव्यवस्त्रधारणं पिनाकिदैवत्यो होमश्चेति । एवं सौरेण मानेनाब्दपूर्तेः सिद्धावपि सर्वदेशीयाः शिष्टाः चान्द्रेणैव मानेनाब्दान्ते जन्मदिनेऽब्दपूर्त्तिकृत्यमाचरन्ति । पूर्वं जन्मदिनाद्रात्राविति गर्गेण,

सर्वैः स्वजन्मदिवसे स्नातैर्मङ्गलवारिभिः ।

इति ब्रह्मपुराणेन च जन्मदिनोपादानात् । जन्मदिनपदस्य च जन्मतिथिपरताभिधानात् ।

तथाच बृहद्राजमार्त्तण्डे देवीपुराणं,

घस्रद्वये जन्मतिथिर्यदि स्यात्कुर्यात्तदा जन्मभसंयुना च ।

असंगता तेन दिनद्वयेऽपि पूज्या परा या भवतीह यत्नात्॥

इति । घस्रो दिनम् । जन्मभं जन्मनक्षत्रम् । इदं च पूर्वाह्णे नक्षत्रलाभएव द्रष्टव्यम् । तथाच

बृहस्पतिः,

नक्षत्रे खण्डिते येन प्राप्तः कालश्च कर्मणः ।

नक्षत्रकर्माण्यत्रैव तिथिकर्म तथैवच॥इति ।

अस्यार्थः । नक्षत्रे खण्डिते दिनद्वयव्यापिनि येन भागेन पूर्वेणोत्तरेण वा कर्मणः कालः प्राप्तः संबद्धो भवति तत्रैव दिने नक्षत्रकर्माणि तिथिकर्माणि च कुर्यात् । नक्षत्रैद्वैधे तु

बौधायनमार्कण्डेयौ,

यस्मिन्नुदेति सविता तन्नक्षत्रादिनं स्मृतम् । इति ।

जन्मतिथिकृत्यं मुख्यचान्द्रेण कार्यमिति कल्पतरुः । सूर्यसिद्धान्ते मुख्यचान्द्रेणैव तिथ्युत्पत्तेः । गौणचान्द्रेणापि तद्व्रतीत्यपरे । ब्रह्मपुराणे गौणचान्द्रेणैव सर्वतिथिकृत्याभिधानात् । जन्मतिथिकृत्यविधिश्च

ब्रह्मपुराणगर्गसंहितयोः,

सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।

गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥

सर्वपदं शूद्रादेरपि ग्रहणार्थम् । स्नातैस्तिलस्नातैः । तथा च वार्त्तार्थमधिकृत्य तत्रैवाभिहितं,

तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली नावसीदति ॥ इति ।
तिलहोमस्तु देवतानामभिः कार्यः ।
एकैकां देवतां राम समुद्दिश्य यथाविधि ।
चतुर्थ्यन्तेन धर्मज्ञ नाम्ना च प्रणवादिना ॥ इति ।
स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं चैव कर्त्तव्यश्च महोत्सवः ॥
गुडदुग्धतिलान्दद्याज्जन्मग्रन्थेश्च बन्धनम् ।

जन्मग्रन्थिबन्धनं नाम वक्ष्यमाणगुग्गुलादिपञ्चद्रव्यगर्भ-पोटलिकायाः हस्ते बन्धनम् । तान्येव द्रव्याण्याह,

गुग्गुलं निम्बसिद्धार्थं दूर्वागोरोचनायुतम् ।
संपूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् ॥
चिरजीवी यथा त्वं भो भविष्यामि तथा मुने ।
रूपवान्वित्तवांश्चैव श्रिया युक्तश्च सर्वदा ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव ॥ इति ।

श्रीपतिव्यवहारनिर्णयेऽपि,

नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ।
द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् ॥
मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा ।
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ॥
प्रह्लादं च हनूमन्तं विभीषणमथार्चयेत् ।

रामोऽत्र परशुरामः, द्रौणिरश्वत्थामा ।

स्वनक्षत्रं जन्मतिथिं प्राप्य संपूजयेन्नरः ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनःपुनः ॥

पूजा च प्रतिमास्वक्षतपुञ्जेषु शालग्रामे जलपूर्णकलशे वा कार्या ।

तथा च पद्मपुराणे,

शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवासुरा यक्षा भुवनानि चतुर्दश ॥ इति ।

जन्मदिने शनिभौमवारपाते तु विशेष उक्तो दीपिकायां,

कृतान्तकुजयोर्वारे यस्य जन्मदिनं भवेत् ।
अनृक्षयोगसंप्राप्तो विघ्नस्तस्य पदेपदे ॥
तस्य सर्वौषधिस्नानं ग्रहविप्रसुरार्चनम् ।
सौरारयोर्दिने मुक्ता देया ऋक्षे च काञ्चनम् ॥

पद्मपुराणे,

ॐकारादिसमायुक्तं नमस्कारान्तकीर्त्तनम् ।
स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते ॥
अनेनैव विधानेन गन्धपुष्पे निवेदयेत् ।
एकैकस्य प्रकुर्वीत यथोद्दिष्टक्रमेण हि ॥ इति ।

सर्वत्र कर्मोपदेशकं दक्षिणादिभिरर्चयेत् ।

तथाच तत्रैव,

तथोपदेष्टारमपि पूजयेच्च ततो गुरुम् ।
न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया ॥ इति ।

अथ जन्मतिथौ निषिद्धानि ।

तत्र स्कन्दपुराणे,

खण्डनं नखकेशानां मैथुनाध्वानमेवच ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥ इति ।

अध्वानम् अध्वगमनम् ।

वृद्धमनुः,

मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा॥ इति।

अथ प्रयोगः। तिलोद्वर्त्तनं कृत्वा तिलोदकेन स्नात्वा नव्यवस्त्रं परिधाय कृतनित्यक्रियो दक्षिणपाणौ गुग्गुलादिपञ्चद्रव्यगर्भां पोटलिकामाबध्य देशकालौ संकीर्त्य ममामुकगोत्रस्यामुकशर्मणः आयुष्याभिवृद्ध्यर्थं वर्षवृद्धिकर्म करिष्ये इति संकल्पयेत्। ततः सुवर्णप्रतिमासु अक्षतपुञ्जेषु शालग्रामे वा जलपूर्णकलशे वा गुरुदेवाग्निविप्रस्वनक्षत्रपितृप्रजापतिभानुविघ्नेशमार्कण्डेयव्यासपरशुरामाश्वत्थामकृपबलिप्रह्लादहनुमद्विभीषणान् षष्ठीं चेत्येकोनविंशतिदेवताः प्रणवाद्यैः चतुर्थ्यन्तैर्नमोऽन्तैः ॐगुरवे नम इत्यादिप्रयोगेण आवाहनादिषोडशोपचारैः पूजयेत्। ततः "मार्कण्डेय" "चिरजीवी यथा त्व"मित्यादिमन्त्राभ्यां प्रार्थयेत्। षष्ठ्या नैवेद्यं दधिभक्तम्। ततः,

जय देवि जगन्मातर्जगदानन्दकारिणि।
प्रसीद मम कल्याणि नमस्ते षष्ठि देवते॥

इत्यनेन नमस्कृत्य,

रूपं देहि यशो देहि भगं भगवति देहि मे।
पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे॥

इत्यनेन वरं प्रार्थ्य,

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च।
ब्रह्मविष्णुशिवैस्सार्द्धं रक्षां कुर्वन्तु तानि मे॥

इत्यनेन रक्षां कुर्यात्। ततो यथोक्तदेवताभ्यो यथोक्तमन्त्रैस्तिलान्हुत्वा ब्राह्मणाय तिलान्दत्त्वा भूमावपि तानुप्त्वा यथाशक्ति दक्षिणां गुरवे दद्यात्। ततः तिलगुडमिश्रमञ्ज-

ल्यर्धमितं पयः पिबेत् । तत्र मन्त्रः,

सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः ।
मार्कण्डेय वरं लब्ध्वा पिबाम्यायुष्यहेतवे ॥ इति ।

ततो दीनानाथेभ्यो दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत । इति वर्षवृद्धिकृत्यम् ।

अथ प्रसङ्गाद्बालपुष्टिकरं कर्मोच्यते ।

विष्णुधर्मोत्तरे,

परशुराम उवाच,

स्नानमन्यत्समाचक्ष्व भगवन्पुष्टिवर्धनम् ।
न तृप्तिमधिगच्छामि तव वाक्यामृतं पिबन् ॥

पुष्कर उवाच,

जन्मनक्षत्रगे सोमे सर्वौषधिसमन्वितम् ।
कुम्भं तु पूजितं कृत्वा स्नपनं चैव कारयेत् ॥
स्नातश्चैवार्चयेद्देवं वासुदेवं जगत्पतिम् ।
नक्षत्रदैवतं चन्द्रं नक्षत्रं वरुणं तथा ॥
वाहनायुधपीठाद्यं छत्रं संपूजयेत्तथा ।
यथोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद् घृतम् ॥
शक्त्या च दक्षिणा देया ब्राह्मणेभ्यो भृगूत्तम ।
ततोऽनुलिप्तः सुरभिः स्रग्वी विविधभूषणः ॥
तिष्ठेन्मनुजशार्दूल हविष्याशी जितेन्द्रियः ।
उपवासं विना ऽप्येतत्स्नानं पुष्टिप्रदं तथा ॥
अलक्ष्मीशमनं धन्यं कलिदुःस्वप्ननाशनम् ।
सर्वव्याधिहरं पुण्यं पवित्रं पापनाशनम् ॥
मातृस्थानं च जगतां जन्मतारा विधीयते ।
चन्द्ररूपी च भगवान् पिता विष्णुः प्रकीर्तितः ॥

तस्मात्सर्वप्रयत्नेन जन्मनक्षत्रसंस्थितम्।
भक्त्या संपूजयेच्चन्द्रं जन्मर्क्षं च विशेषतः॥

पूजां सदा चन्द्रमसस्तु कृत्वा
जन्मर्क्षसंस्थस्य भृगुप्रधान।
कामानवाप्नोति नरस्तु सर्वा-
न्सुखी तथा स्यात्खलु नष्टपाप्मा॥ इति।

अथापमृत्युनाशनम्। तत्र बौधायनः,

अथातोऽपमृत्युंजयकल्पं व्याख्यास्यामो जन्मनक्षत्रे पुण्ये नक्षत्रे त्रिजन्मानि वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा प्रादेशमात्र्यस्तिस्रो दूर्वाः समिधोऽष्टसहस्रमष्टशतमष्टाविंशतिं वा दधिमधुघृतपयांसि समुदायुत्याभ्यज्यादघात्यपैतु परं मृत्यो मानो-महान्तं मानस्तोके त्र्यम्बकं येतेसहस्रमित्यथाज्याहुतीरुपजुहोति

मृत्युर्नश्यत्वायुर्वर्धतां भूः स्वाहा मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा मृत्युर्नश्यत्वायुर्वर्द्धतां सुवः स्वाहा मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवः सुवः स्वाहेति। जयप्रभृतिसिद्धमाधेनुवरप्रदानादथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति तच्छंयोरावृणीमहइत्यथ दक्षिणां ददाति धेनुमृषभमनड्वाहं कंसं वासो वेतिहस्माह बौधायन इति।

अथ चूडाकरणम्।

स च चूडाकरणशब्दः कर्मनामधेयम्। यौगिकन्यायेनोद्भिदादिशब्दवत्। योगश्च चूडायाः करणं चूडार्थं करणं चूडा क्रियते यस्मिन्कर्मणीतित्रा त्रिधैव संभवति, न पुनश्चूडा करणं यस्मिन्कर्मणीति। चूडाया असिद्धत्वेन वपनकर्मणि करणत्वायोगात्। न च संस्कारस्यान्यपदार्थत्वे सिद्धायाश्चूडायाः करणत्वं

संभवतीति वाच्यम् । तस्य साक्षात्पुरुषकृत्यविषयत्वेन चूडाकरणं कर्त्तव्यमित्यादिविधिविधेयत्वासंभवात् । एतेन चूडाकर्मचौलकर्मचौलचूडादिशब्दास्तत्तद्वाक्येषु कर्मनामधेयानि व्याख्यातानि ।

तत्र वसिष्ठः,

सर्वेषामेव वर्णानां चौलकर्मविधिः स्मृतः ।
चौलेनैवायुषो वृद्धिश्चौलेनैवायुषः क्षयः ॥
तस्मात्सर्वप्रयत्नेन कारयेद्द्विजसत्तम । इति ।

विहितनिषिद्धकालयोश्चौलक्रियायामायुर्वृद्धिक्षयौ भवत इत्यर्थः ।

मनुः,

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् । इति ।

वाशब्दाद् द्वितीयग्रहणम् । तथाच

यमः,

ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥ इति ।

अत्र अपूर्णे इति पदच्छेदः । स च द्वितीयादिष्वप्यनुषज्यते । ततश्च प्रथमादिवर्षाणामेवाधिकरणत्वं सिध्यति । तदाह

षड्गुरुशिष्यः,

आद्येऽब्दे कुर्वते केचित्पञ्चमेऽन्ये द्वितीयके ।
जाताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम् ॥
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः । इति ।

यत्तु कल्पतरुणा प्रथमेऽब्देतृ तीये वेति मनुवाक्ये प्रथमेऽब्दे वर्त्तमाने इति व्याख्याय

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।

इति यमवाक्ये नञ्प्रश्लेषमकृत्वा संवत्सरे पूर्णे इति व्याख्यातं, तत्पूर्वापरविरोधाच्चिन्त्यम् । संभवत्यविरोधे विरुद्धव्याख्यानानौचित्यात् । यदपि द्वितीये संपूर्णे तृतीये त्वसंपूर्णे, तृतीये भूयिष्ठे गते इति लौगाक्षिस्मरणादिति व्याख्यातं, तदपि तथैव । विलम्बोपस्थितिकवाक्यान्तरैकवाक्यतापेक्षया समानवाक्यस्थितपदानुषङ्गस्य शीघ्रोपस्थितिकत्वेनाभ्यर्हितत्वादिसत्त्वद्धविरोधेन । वाशब्दद्वयोपादानं पञ्चमसप्तमवर्षयोरपि ग्रहणाय।

तथाचाश्वलायनः,

तृतीये पञ्चमे वाऽब्दे चौलकर्म प्रशस्यते ।

प्राग्वा ऽसमे सप्तमे वा सहोपनयनेन वा ॥ इति ।

अत्रासमे इति पदच्छेदः । युग्मे वर्षे तु गर्हितमिति वक्ष्यमाणात्त्रिवचनात् ।

वसिष्ठोऽपि,

तृतीयेऽब्दे पञ्चमेऽब्दे स्वकुलाचारतोऽपिवा ।

चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः ॥

आधानतो जन्मतो वा सप्तमाब्देऽपि कारयेत् । इति ।

तृतीयादिवर्षसंख्या च गर्भतो जन्मतो वा द्रष्टव्या । तथाच बृहस्पतिः,

तृतीयेऽपि शिशोर्गर्भाज्जन्मतो वा विशेषतः ।

पञ्चमे सप्तमे वाऽपि स्त्रियाः पुंसोऽथवा समम् ॥ इति ।

एषां चाब्दानामुत्तमादिव्यवस्थामाह नारदः,

जन्मतस्तु तृतीये च श्रेष्ठमिच्छन्ति पण्डिताः ।

पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत् ॥

प्रथमं गर्भतः स्यात्तु दशमैकादशेऽपित्रा ॥ इति ।

अत्र दशमैकादशग्रहणमुपनयनकालात्ययेनातीतकालचौलाभिप्रायेण काम्योपनयनसहभावाभिप्रायेण क्षत्रियवैश्याभिप्रायेण वा व्याख्येयम् । मध्यमाधमत्वं चैषां नित्यत्वाभिप्रायेण। काम्यत्वे तूत्तमत्वमेव ।

तथाऽऽत्रिः,

तृतीयवर्षे चौलं तु सर्वकामार्थसाधनम् ।
संवत्सरे तु चौलेन आयुष्यं ब्रह्मवर्चसम् ॥
पञ्चमे पशुकामस्य युग्मे वर्षे तु गर्हितम् ॥ इति ।

समवर्षगर्हणा तु द्वितीयदशमातिरिक्तविषया ।

यमेन तस्य विधानात् । एतानि वर्षाणि सावनमानेन ग्राह्याणि । तथाच

कश्यपः,

जन्मर्क्षाणां चतुर्विंशात्परतश्चौलमाचरेत् ।
अथवा पञ्चमे वर्षे सावनेनैव योजयेत् ॥ इति ।

चतुर्विंशतिर्जन्मनक्षत्राणि चतुर्विंशत्या मासैस्संपद्यन्ते । ततश्च चतुर्विंशान्मासात्परतस्तृतीयेऽब्दइत्यर्थस्सिध्यति । पञ्चम इत्युक्तवर्षाणामुपलक्षणम् । अन्यथा तेषु मानान्तरकल्पनाक्लेशापत्तेः । तृतीयपञ्चमयोः त्रिभागात्यये चौलं कार्यमिति केचित्। तदाह

नृसिंहः,

तृतीये पञ्चमे वर्षे गते भागे तृतीयके ।
आदौ चौलं प्रकर्त्तव्यमिति केचित्प्रचक्षते ॥ इति ।

कालविधानेऽपि,

वर्षे तृतीयेऽप्यथ पञ्चमे वा गते त्रिभागे प्रवदन्ति चौलम् ।

इति ।

लौगाक्षिस्तु भागत्रयेऽतीते तृतीये कर्त्तव्यमित्याह, तृतीये वर्षे भूयिष्ठे गते चूडा कार्येति । तृतीये ईषदपूर्णे इति कल्पतरुहरनाथौ ।

अत्रेयं संकलना । प्रथमद्वितीयतृतीयपञ्चमसप्तमदशमैकादशेषु उपनीतिदिने यथाकुलाचारं वा चौलं कार्यमिति । तथाच

याज्ञवल्क्यः,

चूडा कार्या यथाकुलमिति ।

नारदोऽपि,

तृतीये पञ्चमे वाऽब्दे स्वकुलाचारतोऽपि वा ।

बालानां जन्मतः कार्यं चौलमावत्सरान्तरात् ॥ इति ।

आवत्सरान्तरात्प्रथमाब्दे इत्यर्थः ।

षड्गुरुशिष्योऽपि,

यादृशः कुलधर्मः स्यात्तादृशं चौलकर्म च । इति ।

उक्तपक्षाणामेव कुलधर्मो व्यवस्थापक इत्येके । स्वतन्त्रं कालान्तरमित्यपरे । तेनानुक्तेऽपि काले भवति । अयननिर्णयमाह

देवरातः,

उत्तरं देवभागः स्याद्दक्षिणं याम्यमुच्यते ।

देवभागगते सूर्ये चूडाकर्म समाचरेत् ॥ इति ।

राजमार्त्तण्डः,

उत्तरवर्त्मनि सवितरि चूडाकरणं जगुर्यवनाः ।

चैत्रं हित्वा पापग्रहदिवसं जन्ममासं च ॥ इति ।

अयनफलमाह देवरातः,

अयने चोत्तरे सौख्यं दक्षिणे त्वशुभावहम् । इति ।

अयनान्तर्गतमासफलमुक्तं

ज्योतिर्निबन्धे,

मकरे सर्वसंपत्तिः कुम्भे संतानकारकः ।
मीनमासे सदा सौख्यं मेषे सर्वार्थसाधनम् ॥
विजयं वृषभे विद्यान्मिथुने वंशवृद्धिकृत् ।
कर्कटे बहुरोगित्वं सिंहे नष्टप्रजा भवेत् ॥
षष्ठे कुलक्षयं विद्यात्तुलायां देहनाशनम् ।
वृश्चिके बन्धुनाशः स्याद्वित्तनाशस्तु कार्मुके ॥ इति ।

षष्ठे कन्यायाम् । उत्तरायणेऽपि क्वचिदपवादमाह

बृहस्पतिः,

उत्तरायणगे सूर्ये विशेषात्सौम्यगोलके ।
अधिमासस्तु निन्द्यः स्यात्संसर्पांहस्पती तथा ॥ इति ।

मासा उक्ता

राजमार्त्तण्डे,

विवाहव्रतचूडादिमङ्गलेषु विशेषतः ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥ इति ।

ननु दशानामपि मासानां प्राशस्त्ये पूर्वोक्तकर्कादिनिषेधानां का गतिरिति चेत्, इयमत्र गतिः । कालातीतचौलकन्यकोद्वाहयोः पुनरुपनयने च दशानामपि मासानां प्राशस्त्यम् । तेषां सार्वकालिकत्वात् । प्राप्तकालेषु चौलोपनयनविवाहेषु कर्कादिनिषेध इति न विरोधः । चैत्रनिषेधस्तु वह्न्यसान्निधाने बोद्धव्यः । तथाच

भुजबलः,

शुभदं संनिहितेऽग्नौ क्षौरं चैत्रे मुनिभिरुक्तम् ।
दिननाथस्य च दिवसे प्रथमं द्विजवह्निसन्निहितम् ॥ इति ।

राजमार्त्तण्डेऽपि,

क्षौरं दिने तीक्ष्णरुचेस्तु चैत्रे मासेऽथवा संन्निहिते हुताशे ।

इति ।

अग्निसन्निधानं चात्र जातारणिपरिग्रहः । ततश्च येषां जातारणिपरिग्रहोऽस्ति तेषां चैत्रविधिः अन्येषां तन्निषेध इति । यच्छाखीयानामहोमकमेव चौलं तान्प्रति चौलनिषेधः, येषां सहोमकं चौलं तान्प्रति चैत्रविधिरित्यन्ये । त्रैवर्णिकान्प्रति चैत्रविधिः साग्निकत्वात्, शूद्रान्प्रति तन्निषेध इत्यपरे । पौषनिषेधस्तु धनुष्ट्वेन, तत्र मकरसंक्रमे त्वनिषेध इति ज्योतिर्णववाक्येनाविरोधः । एतेन

न जन्ममासे न च चैत्रपौषे क्षौरं विवाहो न च कर्णवेधः ।
विवाहवर्जं न च जन्ममासे यात्राऽपि नेष्टफलेति सत्यः ॥

इति ऋक्षोच्चयवाक्यस्थश्चैत्रपौषनिषेधोऽपि व्याख्यातः । अत्र जन्ममासे विवाहाभ्यनुज्ञा अनाद्यगर्भविषयेति द्रष्टव्यम् । विशेषान्तरमुक्तं

सारसंग्रहे,

ज्येष्ठे मासि तथा मार्गे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत् ॥
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ।
अधिमासे च यत् क्षौरं जन्ममासेऽथ जन्मभे ॥
न भवेत्तत्र कल्याणमिति शंसन्ति सूरयः । इति ।

अथ पक्षनिर्णयं बृहस्पतिराह,

शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत् ।
अशुभोऽन्त्यस्त्रिभागः स्यात्कृष्णपक्षे त्रिधा कृते ॥ इति ।

चौलमिति शेषः ।

मुहूर्त्तसंग्रहेपि,
दामोदरमतं जातात्सप्तमे चौलकर्मणि ।
पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना ॥ इति ।
बृहस्पतिरपि,
दशपञ्चात्मकतिथौ कृष्णपक्षे त्रिधा कृते ।
अशुभं चान्त्यभागे स्यात्पूर्वभागद्वये शुभम् ॥ इति ।
तिथयः प्रोक्ताः पराशरेण,
पञ्चमी सप्तमी चैव दशम्येकादशी तथा ।
त्रयोदशी तृतीया च चौलकर्मशुभावहाः ॥ इति ।
वसिष्ठोऽपि,
द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैवच ।
दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ॥ इति ।
वर्ज्यान्प्याह नृसिंहः,
षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
द्वादशी दर्शपूर्णेन्दू प्रतिपच्चैव निन्दिताः ॥
बृहस्पतिरपि,
द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदं तथा ।
हित्वा शेषासु तिथिषु क्षौरकर्म शुभावहम् ॥
वसिष्ठोऽपि,
पक्षच्छिद्रां च नवमीमाद्यां पञ्चदशीं तथा ।
हित्वा तु तिथयः सर्वाः प्रशस्ताः क्षुरकर्मणि ॥ इति ।
चूडां व्रतं तथोद्वाहं कर्णयोरपि वेधनम् ।
गलग्रहे न कुर्वीत यदीच्छेत्पुत्रजीवितम् ॥ इति ।
वारानाह पराशरः,
सितेज्यसौम्यवारेषु चौलं पक्षद्वये हितम् ।

इन्दुवारः सिते पक्षे वाराः शेषा न शोभनाः ॥

बृहस्पतिरपि,

शुभग्रहाणां वाराः स्युः पूजिताः क्षौरकर्मणि ।

सोमवारः सिते पक्षे कृष्णे पक्षेऽतिगर्हितः ॥

बुधवारोऽशुभः प्रोक्तः पापग्रहयुते बुधे ॥ इति ।

वर्ज्यानाह वसिष्ठः,

रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैवहि ।

निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः शुभाः ॥

बृहस्पतिरपि,

पापग्रहाणां वारांश्च निन्दिताः शुभकर्मणि ॥ इति ।

वर्ज्यानामपि वर्णविशेषेण प्रतिप्रसवमाह

स एव,

पापग्रहाणां वारादौ विप्राणां तु शुभो रवेः ।

क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां शनेः शुभः ॥ इति ।

वारफलानि भुजबले,

मासं हरेत् क्षौरमिहायुषोऽर्कः शनैश्चरः पञ्च कुजस्तथाऽष्टौ ।

आचार्यभृग्विन्दुबुधाः क्रमेण दशचतुर्दशैकादश सप्त पञ्च ॥

आयुःक्षयं प्रकुरुते दिनकृद्दिने तु

दोषापतेरपि सुखानि च दीर्घमायुः ।

पृथ्वीसुतस्य तु सुरैरपि रक्षितानां

क्षौरं करोति निधनं न चिरान्नराणाम् ॥

आरोग्यमिन्दुजदिने चिरजीवितत्वं

जीवस्य जीवितमपि प्रबलं च भोग्यम् ।

नानाविधं विषयभोगसुखं सितस्य

मन्दस्य मण्डनविधौ विभवस्य नाशः ॥ इति ।

नक्षत्राण्याह बृहस्पतिः,

हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।
सौम्याचित्रे नवक्षौरे उत्तमा नव तारकाः ॥
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ॥ इति ।

व्यासोऽपि, ।

अश्विनी श्रवणः स्वाती चित्रा पुष्यः पुनर्वसुः ।
धनिष्ठा रेवती ज्येष्ठा मृगे हस्ते क्षुरक्रिया ॥
दारुणेषु च सर्वेषु दुष्टतारा विवर्जयेत् । इति ।

दारुणेष्वपि ज्येष्ठा ग्राह्या प्रशस्तपठितत्वात्तस्याः ।

नारदोऽपि,

दस्रादितीज्यचन्द्रेन्द्रपौष्णभानि शुभानि तु ।
चौलकर्मणि हस्तर्क्षात्त्रीणि, त्रीणि च विष्णुभात् ॥
पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणः ॥ इति ।

दीपिकाऽपि,

जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु ।
क्षौरभैषजवादाध्वकर्त्तनेषु च वर्जयेत् ॥
कर्त्तनमत्र कर्णवेधो न केशकर्त्तनम् ।

तदुक्तं,

जन्मानि मासि विवाहः शुभदो जन्मर्क्षजन्मराश्योश्च ।
अशुभं वदन्ति गर्गाः श्रुतिवेधक्षौरयात्रासु ॥

जन्मर्क्षस्य नारददीपिकादिभिर्विहितप्रतिषिद्धत्वाद्विकल्प इत्यापातदर्शिनः । वस्तुतस्तु नारदवाक्ये जन्मर्क्षपदं दशमैकोनविंशजन्मतारापरं व्याख्येयम् ।

हित्वैकं जन्मनक्षत्रं द्रे तारे जन्ममंज्ञिते शुभदे ।
उद्वाहे चोपनये यात्रायामन्नभोजने क्षुरे कार्ये ॥
इति लल्लस्मरणात् ।
नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रौष्ठपदयोर्नैव नाग्नेये चापि भारत ॥
इत्यत्र व्यासवाक्ये जातपदोपादानात् ।
नक्षत्रफलान्याह गर्गः
अश्विन्यां तुष्टिमाप्नोति भरण्यां मरणं भवेत् ।
कृत्तिकासु क्षयो रोगो रोहिण्यां रोगनाशनम् ॥
सौभाग्यवृद्धिः सौम्ये स्यादार्द्रे वित्तस्य नाशनम् ।
पराक्रमः पुनर्वस्वोः पुष्ये मानार्थसिद्धयः ॥
सार्प्ये शरीरपीडा स्यात् धननाशस्तु पैत्रभे ।
व्याधयो बहवो भागे त्वार्यम्णे रसनाशनम् ॥
तेजोऽभिवृद्धिर्हस्ते स्यात्सौभाग्यं त्वाष्ट्रभे भवेत् ।
स्वात्यां दुःखविनाशः स्यादैन्द्राग्ने वित्तनाशनम् ॥
मैत्रे मित्रविनाशः स्याज्ज्येष्ठायां भूमिदं स्मृतम् ।
समूलनाशनं मूले पूर्वाषाढाऽपि मूलवत् ॥
सौम्यवच्चोत्तराषाढा वैष्णवे रूपसंपदः ।
वसुभे ह्यायुषो वृद्धिर्वारुणे बलवर्द्धनम् ॥
पूर्वभाद्रपदे मृत्युराहिर्बुध्न्यं सुखावहम् ।
पौष्णे स्यान्महती वृद्धिर्नवक्षौरे फलं क्रमात् ॥ इति ।
योगास्तु निषिद्धेतराः ज्ञातव्याः । लग्नान्याह
पराशरः,
वृषः कर्कटकश्चैव धनुः कन्या तुलाधरः ।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः ॥

वसिष्ठस्तु,

धनुर्विहाय मकरमाह,

वृषभश्च कुलीरश्च यमः कन्या तुलाधरः ।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः ॥

यमो मिथुनम् । राजमार्त्तण्डस्तु तुलाकर्कौ विहाय कुम्भमाह,

क्षौरं प्रशस्तं मृगचापमीने कन्याख्यकुम्भे मिथुने वृषे च ।
पुष्टिर्बलं बुद्धिविवर्द्धनं च शेषे च रोगं कुरुते भयं च ॥

इदं च कुम्भविधानं बलवत्तरविहितलग्नान्तरालाभेऽगत्या द्रष्टव्यम् ।

कुम्भः कुलविनाशाय कथितः क्षुरकर्मणि ।
शुभैर्दृष्टोऽथवा युक्तो न शुभः कुम्भभृत्सदा ॥

इति बृहस्पतिना सदा कुम्भनिषेधात् । जन्मलग्नमपि शुभमित्याह

भृगुः,

कृष्टिः प्रयाणं क्षौरं च विवाहः प्राशनं तथा ।
शिशोर्वस्त्रं च यानं च जन्मराशौ शुभं भवेत् ॥
जन्मलग्ने शुभं क्षौरं मध्ये वर्ज्यं यथाऽष्टमे । इति ।

कृष्टिः कर्षणम् । मध्ये द्वितीयादिक्षौरे । यत्तु

आत्मराश्युदये षष्ठे द्वादशे निधने तथा ।
शत्रुक्षेत्रे च नीचे च क्षौरं नैव प्रकारयेत् ॥

इति गर्गवाक्यं, तद् द्वितीयादिक्षौरविषयम् ।

निषेधान्तरं

संग्रहे,

कर्त्तुः षष्ठं त्यजेल्लग्नं चौरोद्वाहयतीर्विना ।

मूर्ति व्ययं च सर्वत्र एकमित्राधिपादने ॥ इति ।
कर्त्तुः संस्कार्यस्य । यातिः यात्रा ।
**बृहस्पतिरपि,**
अस्तग्रहाणां वर्गाश्च नाद्ग्वर्गगनः शशी ।
पापग्रहाणां वर्गश्च वर्ज्याः क्षौरे विशेषतः ॥ इति ।
वर्गाः लग्नहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशाः ।
लग्नफलानि व्यवहाराच्चयं,
क्षौरे तु मेषे ज्वरपित्तपीडां वृषे च पुष्टिं मिथुने तु विद्याम् ।
रोगं फलं कर्कटके ददाति प्राणाभिघातं जनयेच्च सिंहे ॥
कन्या तु भोगं बलपुष्टिमेधास्तुला तु रोगान्विविधान् करोति ।
अक्ष्यामयं बुद्धिबलापहानिं मन्दाग्निकोपं तनुयादलिश्च ॥
मेधां धनुषि विधत्ते मकरे सौख्यानि धनलाभम् ।
कुम्भे बलस्य वृद्धिं क्षेमारोग्यप्रभूतधनलाभम ॥
मीने करोति विमलां दृष्टिं पुष्टिं च तुष्टिं च ।
अत्र धनुषः शुभफलत्वाभिधानं शुभग्रहयोगे सति द्रष्टव्यम् । अन्यथा राजबाधाफलकत्वेन निषेधात् ।

**तथा च वसिष्ठः,**
मेषे दुःखी मृगेन्द्रे च वृश्चिके व्यसनं महत् ।
राजबाधा च धनुषि शुभयुक्ते न दुष्यति ॥
विषशस्त्रजलैर्घोरैः पीड्यते मरणान्वितः ।
क्षौरे मर्त्यो घटे लग्ने शुभयुक्ते प्रचक्षते ॥ इति ।
शुभग्रहयुक्तत्वं च मेषादीनामपि विशेषणम् । तथाच
**श्रीधरः,**
कर्काङ्गनामिथुनमीनतुलोक्षनक्राः
पूज्याः क्रियालिहरिचापधरा जघन्याः ।

तेऽपि स्ववीर्यशुभदृष्टियुता विधेया-

श्चौले घटः शुभयुतोऽपि निषिद्ध एव ॥ इति ।

वस्तुतस्तु शुभग्रहयुक्तत्वं धनुष एव शेषां युक्तः, न मेषादीनाम् । तस्यैव पराशरेण विधानात् । तेषां क्वचिदपि शुभफलत्वाश्रवणाच्च । तस्माच्छ्रीधरीयं व्याख्यानं चिन्त्यमिव प्रतिभाति । एषां वर्णविशेषेण प्रतिप्रसवमाह

गुरुः,

अर्कोदयः प्रशस्तः स्याद्विप्राणां क्षुरकर्मणि ।
भौमोदयः क्षत्रियाणां विट्शूद्राणां यमोदयः ॥
चन्द्रोदयोऽङ्गनानां तु प्रशस्तः क्षुरकर्मणि ।
तत्तत्संबन्धिनो वर्गाः शुभाः स्युश्चौलकर्मणि ॥ इति ।

उदयो लग्नम् । वर्गाः व्याख्याताः । ग्रहसंस्थानमाह

बृहस्पतिः,

यथोक्तकालाभावे तु यथालाभं शुभो बलैः ।
योगो दोषहरः कुर्याद्दोषाणामपवादनम् ॥
अथास्मिन् योगान् वक्ष्यामि दुर्लभे प्रोक्तलक्षणे ।
अहं तद्दोषसंघाततूलवाताल्लँघौ दिने ॥
अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः ।
शुक्रश्च निधने क्षौरे सर्वसंपत्प्रदः शिशोः ॥
सितेन्दुजीवसौम्यानामंशके दिवसोदये ।
होराद्रेष्काणलग्ने च चूडाकर्मातिशोभनम् ॥
त्रिकोणकण्टके वाऽपि सत्कर्मणि गते विधौ ।
गुरुर्वा ऽतिबली प्रोक्तः चौलयोगः शुभावहः ॥
गुरुर्भृगुर्वा चन्द्रो वा शुभांशस्थो बलान्वितः ।
लग्नादुपचये क्रूराश्चौलयोगः शुभावहः ॥

मीने शुक्रेण संयुक्ते भवे भानौ चतुष्टये ।
गुरौ याते ऽथवा योगः शुभदश्चौलकर्मणि ॥
घटे सशुक्रे लग्नस्थे सबुधे व्ययगे रवौ ।
त्रिकोणगे गुरौ चन्द्रे चूडायोगोऽयमुत्तमः ॥
मीने मेष वृषे लग्ने ससिते भवगे रवौ ।
बुधोदये वा योगाः स्युश्चूडाकर्मणि शोभनाः ॥
यमे कर्किणि सिंहे च शशिजे भृगुजे त्रिधौ ।
रवौ भवे व्यये वाऽपि योगश्चौले शुभावहः ॥
भवे व्ययोदये भानुबुधशुक्रा यदा स्थिताः ।
चन्द्रे शुभांशके केन्द्रे चूडायोगः शुभावहः ॥
सिते पक्षे विधुः प्राणी भवे लग्नाद् ग्रहो बली ।
लग्नस्योपचये नाथश्चूडायोगः शुभावहः ॥
लग्नेन्दुराशिगौ द्वौ द्वौ भवनाथयुतेक्षितौ ।
भवे कश्चिद्बली स्याच्चेच्चूडायोगोऽयमुत्तमः ॥
त्रिषडायेषु पापेषु शुभाः केन्द्रत्रिकोणयोः ।
एको द्वौ वा यथालाभं चूडायोगः शुभावहः ॥
अनिष्टस्थानगो यः स्याद् ग्रहो लग्नेशवीक्षितः ।
गुरुणा बलिना दृष्टो यदीष्टस्थानगो भवेत् ॥ इति ।

निधनम् अष्टमम् । दिवसोदये वारे । होरा लग्नार्धम् । द्रेष्काणो लग्नतृतीयांशः । त्रिकोणं नवमपञ्चमम् । कण्टकं प्रथमचतुर्थसप्तमदशमानि स्थानानि । उपचयः तृतीयषष्ठदशमैकादशस्थानानि । भवे एकादशे । चतुष्टये केन्द्रे । व्यये द्वादशे । प्राणी प्राणवान् । वर्ज्यं ग्रहसंस्थानमाह

बृहस्पतिः,
यमारार्कांशगे लग्ने द्रेष्काणे दिवसे तथा ।

कालहोरोदये चैव क्षौरमायुःक्षयावहम् ॥ इति ।

श्रीपतिः,

क्षौरर्क्षेषु स्वकुलविधिना चौलमाहुर्मुनीन्द्राः
केन्द्रं यातैर्गुरुभृगुबुधैस्तत्र सूर्ये ज्वरस्तु ।
शस्त्रान्नाशो धरणितनये पङ्गुता सूर्यपुत्रे
शीतज्योतिष्यपचिततनौ निश्चितं नाश एव ॥
धनव्ययत्रिकोणगैरसद्ग्रहैर्मृतावपि
क्षुरक्रिया न शोभना शुभैस्तु तुष्टिकारिणी ॥ इति ।

बृहस्पतिरपि,

जन्माष्टमे विधौ याते चौलमायुःक्षयाय च ।
तस्माज्जन्माष्टमं वर्ज्यं सर्वदा क्षुरकर्मणि ॥

पराशरः,

अष्टमस्था ग्रहास्सर्वे नेष्टाः शुक्रविवर्जिताः ।
क्षौरे स्मरस्थौ भौमार्कौ मृत्युदौ नियतं शिशोः ॥
राहुकेतू स्मरस्थाने सर्वकार्यविनाशनौ । इति ।

वसिष्ठोऽपि,

जामित्रे भास्करे क्षौर मृत्यु स्याद्भूमिजे तथा
शुक्रे सौख्यविनाशः स्यान्मन्दभाग्यं शनैश्चरे ॥
त्रिषडायगताः पापाः क्षुरकर्मणि पूजिताः ।
शेषेषु निन्दिताः प्रोक्ताः स्वोच्चस्वर्क्षबलादृते ॥
तस्मात्सम्यक्परीक्ष्यैव कर्त्तव्यं चौलमायुषः इति ।

अर्णवेऽपि,

स्नानं चौलं व्रतं नाम नृपाणामभिषेचनम् ।
अन्यत्र क्षौरेण युक्तं च शुद्धे रन्ध्रे तु कारयेत् ॥
रन्ध्रमष्टमम् । अष्टमापवादे

**बृहस्पतिः,**

लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमगस्योक्तं दोषमाशु व्यपोहति ॥
रन्ध्रेशः स्वांशकस्वोच्चस्वक्षेत्रोपचयर्क्षगः ।
अष्टमस्थस्य दोषोऽयं विनश्यति न संशयः ॥

**नारदोऽपि,**

लग्नाष्टमेशयोर्मध्ये लग्नेशे बलसंयुते ।
अस्तगे निधनेंऽशे वा निधनेऽपि शुभो ग्रहः ॥ इति ।

इदं च चौलं दिवैव कर्त्तव्यम् ।

तथा च **नारदः,**

नराणां सवनं पुंसः सीमन्तं कर्णवेधनम् ।
नामकर्मक्रिया चौलं विद्यारम्भोपनायने ॥
दिवा कार्याणि चान्यानि कर्त्तव्यानि दिवैव हि॥इति ।

तच्च प्राङ्मुखस्योदङ्मुखस्य वा कार्यम् ।

तथा च **महाभारते,**

प्राङ्मुखः श्मश्रुकर्माणि कारयेत समाहितः ।
उदङ्मुखोऽथवा भूत्वा तथाऽऽयुर्विन्दते महत् ॥इति।

क्षौरकाले स्मरणीयान्याह

**श्रीपतिः,**

केशवमानर्त्तपुरं पाटलिपुत्रपुरीमहिच्छत्रम् ।
दितिमदितिं च स्मरतां क्षौरविधौ भवति कल्याणम्॥इति।

तथोक्तकालेऽपि सिंहस्थादौ न कार्यम् ।

तथा च **गर्गः,**

न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपिवा ।
क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म च ॥ इति ।

तन्नर्मदोत्तरविषयमिति वक्ष्यते।

अथात्र विशेषः **गृह्यपरिशिष्टे,**

माता कुमारमादायेत्युक्तं कात्यायनादिभिः।
सा चेद्यदि सगर्भा स्यात्तदा चौलं न कारयेत् ॥
चूडाकर्म न कर्त्तव्यं यस्य माताऽस्ति गुर्विणी।
करोति यदि मन्दात्मा तदा गर्भस्य नाशनम् ॥
पित्रोर्मृतिं वदन्त्येके चतुरब्दान्तरे स्फुटम्।

**वसिष्ठसंहितायामपि,**

पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत्।
विपद्यते गुरुस्तत्र दंपती शिशुरब्दतः ॥

माता जननी। मात्यस्यां गर्भ इति व्युत्पत्तेः।
गुरुः उपाध्यायः। गृणाति प्रकृतं कर्मोपदिशतीति व्युत्पत्तेः।
दंपती शिशोर्मातापितरौ।

**बृहस्पतिः,**

गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत्।
शताभिषेकेऽप्येवं स्यात्कालो वेदव्रतेष्वपि ॥ इति।

शताभिषेको बौधायनोक्तः शान्तिकप्रकाशे वक्ष्यमाणः।
वेदव्रतानि महानाम्न्यादीनि।
अस्य निषेधस्य व्यवस्थामाह

**वसिष्ठः,**

गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥

पञ्चमासाः पूर्यन्ते यस्मिन्दिने तत्पञ्चमासं तस्मादधः ऊर्ध्वं चेत्यर्थः।

गते तु पञ्चमे मासे इति स्मरणात्।

गर्गोऽपि,

पुत्रचूडाकृतौ माता यदि सा गर्भिणी भवेत् ।
शस्त्रेण मृत्युमाप्नोति तस्मात् क्षौरं विवर्जयेत् ॥

अयं च निषेधः कुमारस्य पञ्चमवर्षादर्वागेव न तूर्ध्वम् ।

तथा च नारदः,

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥
यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं भवेत् ।
सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥ इति ।

पञ्चाब्दात्प्रागित्यत्रापि पूर्ववदेव पञ्चमाब्दान्तिमदिनं व्याख्येयम् । यत्तु

सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् ।
गते तु पञ्चमे मासे गर्भादीनां मृतिर्भवेत् ॥

इति कैश्चिद्वचनमुदाहृतं, तन्मूलं चिन्त्यम् । समूलत्वेऽपि मौञ्जीचूडे इत्यत्र साहित्यं न विवक्षितम् । सहोपनीत्या कुर्याच्चेदित्यनन्तरोदाहृतनारदवचनविरोधात् । किं तु प्रत्येकमेव निषेधः । वस्तुतस्तु साहित्यमेकक्रियान्वयित्वेन धवखदिरौ छिन्धीतिवत्, नैककालान्वयित्वेनेति न दोषः । शिशुमातरि रजस्वलायामपि चौलं न कार्यम् ।

तदाह वृद्धगार्ग्यः,

विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥
विवाहे विधवा नारी जडत्वं व्रतबन्धने ।
चौले चैव शिशोर्मृत्युस्तस्मादेतत्त्रयं त्यजेत् ॥

बृहस्पतिरपि,

वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने।
चूडायां च शिशोर्मृत्युर्विघ्नो यात्राप्रवेशयोः ॥ इति ।

यदा चौलादौ शुद्ध्यनन्तरं लग्नान्तराभावस्तदा शान्तिकं कृत्वा तदैव कार्यम् । तदुक्तं

कारिकानिबन्धे,

सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् ।
प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न शुध्यति ॥

प्राप्ते प्रारब्धे । तथा

अलाभे सुमुहूर्त्तस्य रजोदोषउपस्थिते ।
श्रियं संपूज्य तत्कुर्याद् दृत्रहत्या भयंकरी ॥
हैमीं माषमितां पद्मां श्रीसूक्तविधिना ऽर्चयेत् ।
प्रत्यृचं पायसं हुत्वा निषिच्य शुभमाचरेत् ॥ इति ।

अथ कुलैक्ये मण्डनानन्तरं मुण्डननिषेधः । तत्र

**कात्यायनः,**

कुले ऋतुत्रयादर्वाङ् मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥ इति ।

कुलमत्र त्रिपुरुषं चतुःपुरुषं वा । तथाच

**मेधातिथिः,**

पुरुषत्रयपर्यन्तं प्रतिकूलं सगोत्रिणाम् ।
प्रवेशान्निर्गमस्तद्वत्तथा मुण्डनमण्डने ॥
प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥ इति ।

ऋतुत्रयात् षण्मासात् । मुण्डनादिलक्षणमाह

**कात्यायन एव,**

पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।

मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥
चौलं मुण्डनमेवोक्तं वर्जयेद्वरणात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ॥ इति ।

उभयतः विवाहात्प्रागूर्ध्वं चेत्यर्थः । विशेषान्तरमत्रत्यं विवाहप्रकरणे वक्ष्यामः ।

अथ शिखानिर्णयः ।

तत्राश्वलायनः,

यथाकुलधर्मं केशवेषान्कारयेदिति । केशवेषाः शिखाः ।

**शौनकोऽपि,**

बालस्य सकलान्केशानार्द्रीकृत्यार्द्रपाणिना ।
वंशाचारक्रमोपेतां शिखां कृत्वा वपेच्छिरः ॥

**हिरण्यकेश्यपि,**

यथोदितं चूडाः कारयन्ति यथर्षि वेति ।

**बौधायनोऽपि,**

एकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्याद्यथर्षि शिखा निदधातीति ।

गोत्रविशेषेण शिखानिवेशमाह लौगाक्षिः,

**लौगाक्षिः,**

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयेत्, दक्षिणतः कमुजा वसिष्ठानाम्, उभयतोऽत्रिकश्यपानां, मुण्डा भृगवः, पञ्चचूडाऽङ्गिरसोवाजिमेके मङ्गलार्थं, शिखिनोऽन्ये, यथाकुलधर्मं वेति । कमुजा शिखा । सा उत्सर्गतो मध्ये शिरसि कार्या । वसिष्ठानामेकप्रवरत्वे एकैव शिखा, सा च दक्षिणतो नियम्यते । त्र्यार्षेयत्वपक्षे तिस्रः शिखाः । अत्रीणां कश्यपानां च उभयतो वामे दक्षिणे च । द्व्यार्षेयत्वपक्षे चेदम् । त्र्यार्षेयत्वपक्षे तिस्रः । तत्र पार्श्वयोर्द्वे मध्ये चैकेति । भृगूणां मुण्डत्वं वंशसमाचारपक्षे, त्र्यार्षेयपक्षे तिस्रः

शिखाः, पञ्चार्षेयपक्षे पञ्च। तथाऽङ्गिरसामपि त्र्यार्षेयपक्षे तिस्रः पञ्चार्षेयपक्षे पञ्च। एवमन्येषामप्यार्षेयसमसंख्यया शिखा भवन्ति। तथाच बौधायनः, यथर्षि शिखा निदधातीति।

आश्वलायनकारिकाऽपि,

शिखाऽपिच प्रकर्त्तव्या कुमारस्यार्षसंख्यया। इति।

यथर्षिशिखाकरणं वैकल्पिकार्षेयसंख्यापक्षपरिग्रहात्वधारणार्थम्। एके पुनर्मङ्गलार्थं वाजिं केशपङ्क्तिं कुर्वन्ति। सा च समन्ताल्ललाटकर्णमूलस्पर्शिनी मालेव भवति। तत्र मध्ये शिखा भवति वाजिपङ्क्तेर्मङ्गलार्थत्वात्। शिखिन इत्यनियमेन यत्र क्वापि शिखामात्रमेव कुर्वन्ति। यथा द्रविडेषु केचन पश्चाच्चूडाः केचन पुरश्चूडाः। यथाकुलधर्मं वेति सर्वशेषः। एतासां च शिखानामागोदानं धारणं, गोदाने वपनश्रवणात्।

तथा च जयन्तः, अत्र कुलधर्मानुमताभिः शिखाभिः सह वपनं भवतीति।

अत्र कुलधर्मानुमताभिरिति वचनाच्चूडा कार्या यथाकुलमित्यादिस्मृत्युक्तशिखाया वपनं नास्तीति गम्यते।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्॥

इति देवलेन तस्या नित्यधार्यत्वस्मरणात्।

शिखां छिन्दन्ति ये मोहात् द्वेषादज्ञानतोऽपि वा।
तप्तकृच्छ्रेण शुध्यन्ति त्रयो वर्णा द्विजातयः॥

इति हारीतेन शिखानाशे प्रायश्चित्ताभिधानाच्च। मोहात्प्रमादात्। द्वेषात्स्त्र्यादिकलहे क्रोधाद्यावेशात्। अज्ञानतः शिखानिसत्वाज्ञानात्। अत एव शिखानाशे तत्प्रतिनिधिरुक्तः

**काठकगृह्ये,**

अथ चेत्प्रमादान्निःशिखं वपनं न स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थिसमन्वितां दक्षिणकर्णोपर्याशिखाबन्धादधत् तिष्ठेदिति ।

### अथ स्त्रीणां चूडाकर्म ।

तत्र मनुः,

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः । इति ।

याज्ञवल्क्योऽपि,

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः । इति ।

आश्वलायनगृह्येऽपि,

आवृतैव कुमार्याइति ।

स्मृतिरूपेणाप्याह स एव,

हुतकृत्यं तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि । इति ।

हुतकृत्यं होमः, पुंवत्समन्त्रकः । तेन प्रधानमात्रममन्त्रकमित्युक्तं प्राक् । कुमारीचौलेऽपि यथाकुलधर्ममित्यनुवर्त्तते । ततश्च सर्वमुण्डनं शिखाधारणम् अमुण्डनमेव वेति सिध्यति । तासां च लग्नविशेषमाह

गुरुः,

चन्द्रोदयोऽङ्गनानां तु प्रशस्तः क्षुरकर्मणि । इति ।

चन्द्रोदयो चन्द्रदेवताकं लग्नम् ।

### अथ शूद्राणां चूडाकर्म ।

तत्र यमः,

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केनचित्समसृजत् छन्दसा तं प्रजापतिः ॥

द्विजात्युक्तचूडान्तकर्मेतिकर्त्तव्यतापरामर्शार्थ एवंशब्दः ।

**गृह्यकारोऽपि,**

शूद्रस्यापि निषेकपुंसवसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलान्यमन्त्रकाणि यथाकालमुपदिष्टानीति ।

अत्रैषां वारविशेषमाह

**बृहस्पतिः,**

विट्शूद्राणां शनेः शुभ इति ।

लग्नविशेषमप्याह स एव, विट्शूद्राणां यमोदय इति । यमोदयः शनिदेवताकं लग्नमित्यर्थः । तेषां स्त्रीणां च शिखा न कार्या ।

शिखा यज्ञोपवीतं च कुशा मौनं तथैवच ।
वेदाध्ययनभैक्ष्ये च स्त्रीशूद्रपतनानि षट् ।
इति धर्मप्रदीपे तन्निषेधात् ।

**प्रभासखण्डेऽपि,**

न दर्भानुद्धरेच्छूद्रो न पिवेत्कापिलं पयः ।
मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि ॥
नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत् ।
न शिखां नोपवीतं च नोच्चरेत्संस्कृतां गिरम् ॥
न पठेद्वेदवचनं त्रिपर्वं न हि सेवयेत् ।
नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेद् ध्रुवम् ॥
निषिद्धाचरणं कुर्वन् पितृभि सह मज्जति । इति ।

अथ प्रसङ्गात्सामान्यक्षौरनिर्णयः ।

तत्र व्यासः,

चतुर्थीं चैव षष्ठीं च अष्टमीं च चतुर्दशीम् ।
तथा पञ्चदशीं चैव ब्रह्मचारी भवेत्सदा ॥
श्मश्रुकर्म शिरोऽभ्यङ्गं दन्तधावनमञ्जनम् ।
वर्जयेदिति शेषः ।

मरीचिः,

षष्ठ्यां पर्वसु पक्षादौ रिक्ताभद्रातिथिष्वपि।

कृते श्राद्धे विवाहे च क्षौरं वर्ज्यं निशासु च॥

वृद्धगर्गः,

षष्ठ्यमा पूर्णिमा पातश्चतुर्दश्यष्टमी तथा।

आसु सन्निहितं पापं तैले मांसे क्षुरे भगे॥ इति।

वारानत्र स एवाह,

शन्यारकरविवारेषु रात्रौ पाते व्रताहनि।

श्राद्धाहे प्रतिपद्रिक्ताभद्राः क्षौरे विवर्जयेत्॥

वराहसंहितायां,

न स्नातमात्रगमनोत्सुकभूषिताना-

मभ्यक्तभुक्तरणकालनिरासनानाम्।

संध्यानिशाशनिकुजार्कदिने च रिक्ते

क्षौरं हितं न नवमेऽह्नि न चापि विष्टयाम्॥ इति।

स्नातमात्र इत्यत्र नित्यनैमित्तिककाम्यस्नानानन्तराभ्यर्हित-कालो निषिध्यते। यत्र तु तीर्थप्रायश्चित्तादौ स्नानानन्तरमेव क्षौरविधानं तत्र न दोषः विधिबलात्। गमनोत्सुकः ग्रामान्तर-गमनेच्छुः। तस्य च क्षौरनिषेधोऽग्रेमङ्गलसूचनार्थः। भूषितः धृतो-त्तमवस्त्रभूषणादिः। अभ्यक्तस्तैलेन। भुक्तो भुक्तवान्। रणकालो युद्धोद्यमकालः। निरासन आसनरहितः। नक्षत्राण्याह

वसिष्ठः,

हस्तत्रये पुष्यपुनर्वसौ च शशाङ्कविष्णुत्रितयेऽश्विनीषु।

पौष्णेन्द्रधिष्ण्ये क्षुरकर्म शस्तं विहाय शन्यंशकवारलग्नम्॥

बृहस्पतिः,

हस्ताश्विविष्णुपौष्णानि श्रवणादितिपुष्यकाः।

सौम्याचित्रे नवक्षौरेषूत्तमा नव तारकाः ॥
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।
क्षौरे षण्मध्यमास्ताराः शेषा द्वादश निन्दिताः ॥

श्रीपतिः,

षट्कृत्तिकः पञ्चमघस्त्रिमैत्रो ब्राह्माष्टको यश्चतुरुत्तरश्च ।
क्षौरी स वर्षं चतुराननोऽपि न प्राणितीति प्रकटः प्रवादः ॥

च्यवनः,

नैधने जन्मनक्षत्रे वैनाशेऽष्टमचन्द्रके ।
विपत्करे व्यये क्षौरं प्रत्यरावपि वर्ज्जयेत् ॥

कालविधाने,

अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्यात्पुनः शुभे ।
आहिताग्नेः पर्वदिने द्वादश्यां च प्रशस्यते ॥ इति ।
योगाश्च निषिद्धेतराः ज्ञातव्याः ।

अत्रापि जन्मर्क्षजन्ममासौ निषिद्धौ **राजमार्त्तण्डेन,**
देवकार्ये पितृश्राद्धे रवेरंशपरिक्षये ।
क्षुरकर्म न कुर्वीत जन्ममासे न जन्मभे ॥ इति ।
अंशपरिक्षयः सौरमासान्तिमदिनम् ।

**गर्गः,**

न देवपितृकार्यान्ते न पक्षादौ वपेन्नरः ।
उपोषितोऽथ जन्मर्क्षे पक्षान्ते च विशेषतः ॥ इति ।
उपोषितो व्रतादौ ।

सर्वनिषेधापवादमाह **वराहमिहिरः,**

नृपाज्ञया ब्राह्मणसंमते च विवाहकाले मृतसूतके च ।
बन्धस्य मोक्षे क्रतुदीक्षणेषु सर्वेषु शस्तं क्षुरकर्म भेषु ॥

बृहस्पतिः,

राजकार्यनियुक्तानां नटानां रूपजीविनाम् ।
श्मश्रुरोमनखच्छेदे नास्ति कालविशोधनम् ॥

अत्र नृपक्षौरे श्रीपतिः,

श्मश्रुकर्म पञ्चमेपञ्चमेऽह्नि भूभुजाम् । क्षौरभस्य चोदये निन्द्यतारका नचेत् । निन्द्यतारा जन्मत्रिपञ्चमसप्तमताराः ।

गर्गोऽपि,

क्षौरकर्म महीशानां पञ्चमेपञ्चमेऽहनि ।
कर्त्तव्यं क्षौरनक्षत्रेऽप्यथवा तन्मुहूर्त्तके ॥ इति ।

इति चौलप्रकरणम् ।

## अथ विद्यारम्भः ।

तत्र विश्वामित्रः,

प्राप्ते तु पञ्चमे वर्षे त्वप्रसुप्ते जनार्द्दने ।
विद्यारम्भस्तु कर्त्तव्यो यथोक्ततिथिवासरे ॥ इति ।

पञ्चमवर्षातिक्रमे गौणकालमाह

बृहस्पतिः,

द्वितीयजन्मनः पूर्वमारभेताक्षरान् सुधीः । इति ।

जनार्द्दनस्वापकालो विष्णुधर्मोत्तरे,

आषाढशुक्लद्वादश्यां शयनं कुरुते हरिः ।
निद्रां त्यजति कार्त्तिक्यां तयोः संपूज्यते हरिः ॥ इति ।

अयनविधिरत्ने,

बालस्य पञ्चमे वर्षे प्राप्ते भानौ मृगादिगे ।
आरभेताक्षरविधिं शुभे काले यथोदिते ॥ इति ।

मृगो मकरः । मृगादिगे इत्यत्र सामान्योपादानेऽपि कुम्भमासो वर्जनीयः । तथा च

नृसिंहः,

अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने ।
उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ॥ इति ।

अत्र कुम्भमासनिषेधेन मकरादयो मिथुनान्ताः पञ्च मासा अभ्यनुज्ञाताः ।

मूहूर्तसंग्रहे,

उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ।
पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना ॥ इति ।

मार्कण्डेयः,

षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीम् ।
रिक्तां पञ्चदशीं चैव सौरिभौमदिनं तथा ॥

नृसिंहः,

रिक्तां षष्ठीं प्रतिपदं पर्वाष्टम्यौ च वर्जयेत् । इति ।

अत्र गलग्रहनिषेधमाह बृहस्पतिः,

विद्यारम्भो व्रतोद्देशः क्षौरं चैव विशेषतः ।
गलग्रहे न कर्त्तव्यं यदीच्छेत्पुत्रजीवितम् ॥ इति ।

गलग्रहलक्षणमाह राजमार्तण्डः,

त्रयोदश्याश्चतुष्कं च सप्तम्यादिदिनत्रयम् ।
चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः ॥ इति ।

तत्र त्रयोदश्याः प्रतिप्रसवमाह

देवरातः,

त्रयोदश्यक्षरे श्रेष्ठा न षष्ठी प्रतिपत्तथा ।
चन्द्रवारेऽपराह्णे तु विद्यायुक्तिर्विधीयते ॥ इति ।

मार्कण्डेयः,

वारे दिनेशभृगुपुत्रबृहस्पतीनां

विद्वानसौ भवति योऽतिविमूढबुद्धिः ।
चन्द्रे च चन्द्रतनये त्वकृशे च सर्वे
विघ्नो भवेदवनिजे शनिजे विनाशः ॥

**वासिष्ठः,**

दिवसांशोदया वर्ज्या यत्नेन कुजसौरयोः ।
श्रेष्ठाः सितज्ञजीवानां मध्यमाश्चन्द्रसूर्ययोः ॥
रविवारे तु पूर्वाह्णे विद्यारम्भो विशिष्यते ।
चन्द्रवारेऽपराह्णे च विद्या गुर्वी विधीयते ॥
रात्रौ तु वर्जयेन्नित्यं सन्ध्ययोश्च विशेषतः । इति ।

**राजमार्त्तण्डः,**

विद्यारम्भे गुरुः शस्तो मध्यमौ भृगुभास्करौ ।
मरणं शनिभौमाभ्यामविद्या बुधसोमयोः ॥ इति ।

अविद्या अनवधारणम् अन्यथाज्ञानं वा । अत्र बुधवारनिषेधो धनुर्विद्याविषय इति व्याख्यातारो व्याचक्षते । ग्रन्थान्तरे विद्यान्तरे प्राशस्त्याभिधानात् ।

तथाच श्रीपतिः,

विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टार्थदायी
कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान्मध्यमोऽत्र ।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे
छायासूनावपिच मुनयः कीर्त्तयन्त्येवमाद्याः ॥ इति ।

नक्षत्राण्याह नृसिंहः,

हस्तादिसप्तरुन्मित्ररौद्रपौष्णाश्विचित्रभम् ।
श्रवणं च प्रशस्तं स्यादक्षरग्रहणे शिशोः ॥

**भीमपराक्रमोऽपि,**

चित्राश्विनीश्रवणवासवपुष्यपौष्ण

पूर्वात्रयश्वसनदैवतनैर्ऋतानि ।
मित्रेन्दुतिग्मकिरणादितिदैवतानि
विद्याविवृद्धिमधिकां जनयन्त्यमूनि ॥

**महेश्वरः,**

हस्तादित्रितये तथा निर्ऋतिभे पूर्वान्त्यभेष्वश्विभे
मित्रर्क्षे च मृगादिपञ्चसु शुभः प्रारम्भ आद्यैः स्मृतः ।
विद्यानां हरिभत्रये च दिवसे सूरेर्भृगोर्वा विदो
ऽनध्यायाख्यतदाद्यवर्जिततिथौ केन्द्रस्थितैः सद्ग्रहैः ॥इति ॥

योगाश्च निषिद्धतराः ज्ञातव्याः । करणान्याह

**नृसिंहः,**

चराणि सर्वसौख्यानि करणानि विशेषतः ।
शकुन्यादीनि विष्टिं च वर्जयेदक्षरग्रहे ॥ इति ।

लग्नानि संग्रहे,

ज्ञेनेन्द्राचार्य्यशुक्राणां वारवर्गोदयाः शुभाः ।
स्थिराः श्रेष्ठाश्चरा निन्द्या मध्यमाश्चोभयात्मकाः ॥ इति ।

ग्रहसंस्थानमाह श्रीपतिः,

लग्नकर्मगते सौम्ये जीवे वा ऽमृतदीधितौ ।
तयोर्वर्गगते शिल्पाविद्यारम्भः प्रशस्यते ॥

शिल्पारम्भो विद्यारम्भश्चेत्सन्वयः ।

**नृसिंहोऽपि,**

शुभाः पापाश्च रन्ध्रस्थाः सर्वे नेष्टाः सदा ग्रहाः ।
भ्रातृषष्ठायकर्मस्थाः पापाः सर्वे शुभावहाः ॥
शुभाः केन्द्रत्रिकोणस्था धनभ्रातृगताः शुभाः ।
सर्वे लाभे प्रशस्ताः स्युरक्षरग्रहणे शिशोः ॥

अत्र सिंहस्थादिनिषेधोऽभिहितो

**राजमार्तण्डेन,**

विद्यारम्भः प्रशस्तो भवति मधुरिपौ प्राप्तबोधे शशाङ्के
शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरावुद्गते चाथ शुक्रे ।
स्वाध्याये सिंहसंस्थं खरकिरणयुतं देवपूज्यं विहाय
शुक्रादित्येज्यवारे त्रिदशपतिगुरौ केन्द्रसंस्थे न पापे ॥
अनध्यायास्तु स्वाध्यायप्रकरणे वक्तव्या इति नेहोच्यन्ते ।

**वसिष्ठः,**

उदग्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम्
सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरभिपूज्य कुर्यात् ॥
देवतान्तरं पूजाप्रकारं चाह **मार्कण्डेयः,**
अभ्यङ्गस्नानपूर्वं तु गन्धाद्यैश्च विभूषितः ।
शुक्लं वस्त्रं समास्तीर्य तन्दुलोपरि पूजयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः ॥
एतेषामेव देवानां नाम्नाऽपि जुहुयाद् घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥
प्राङ्मुखो गुरुरासीनो वरुणाशामुखः शिशुः ।
अध्यापयीत प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥
ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत् । इति ।
गुरुपूजाऽप्युक्ता **नृसिंहेन,**
वाचं गणपतिं चेष्ट्वा गुरुं पश्चाद्यथाक्रमम् ।
आददीत गुरोर्विद्यां वारुण्यभिमुखः शिशुः ॥ इति ।
धात्रीपूजाऽप्युक्ता **विष्णुधर्मोत्तरे,**
ब्राह्मणानां गुरूणां च देवतानामनन्तरम् ।
ततः संपूज्य वित्तेन धात्रीं राम गुरुस्तथा ॥ इति ।

इत्यक्षरस्वीकारः ॥

अथानुपनीतधर्माः ।

स च त्रिविधिः, शिशुर्बालः कुमारश्चेति । तल्लक्षणान्याह

वृद्धशातातपः,

प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥ इति ।

तेषां चास्पृश्यस्पर्शनादौ शुद्धिभेदमप्याह

स एव,

शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ।

आपस्तम्बोऽपि, आऽन्नप्राशनात्प्रयता भवन्त्यासंवत्सरादित्येके,यावता वा दिशो न प्रजानीत. पुरोपनयनादित्यपरे इति ।

प्रयता भवन्ति, प्रोक्षणेनेति शेषः । एके त्वासंवत्सरम् । अपरे यावद्दिक्परिज्ञानम् । अन्ये यावदुपनयनं प्रोक्षणमेवत्याहुः । दिक्परिज्ञानं नाम आहूतस्य तत्संमुखीभवनं शब्दार्थपरिज्ञानं वा । तदेतद्व्याध्यादिना ऽशक्तस्याचमनस्नानाद्यसंभवे वेदितव्यम् । यत्तु "अन्यत्रापमार्जनप्रधावनावोक्षणेभ्य" इति गौतमेन त्रयोऽवस्थाविशेषानादरेण सामान्यतोऽपमार्जनाद्युक्तं, तदप्यस्मिन्नेव विषये द्रष्टव्यम् । अपमार्जनं सोदकेन पाणिना परिमार्जनमुच्छिष्टादिलिप्तस्य । प्रधावनममेध्यादिलिप्तस्य मृज्जलाभ्यां प्रक्षालनम् । अवोक्षणं रजस्वलादिस्पृष्टस्याधोमुखेन पाणिना जलसेचनम् । एतानि हित्वा ऽनुपनीतस्य नान्यच्छुद्धिहेतुरित्यर्थः । नेत्यनुवर्त्तते । बालस्याचमनं नाम सकृज्जलभक्षणमात्रं न सेतिकर्त्तव्यताकम् । नास्याचमनकल्पो विद्यतइति गौतमस्मरणात् । कल्प इतिकर्त्त-

व्यता, त्रिः प्राश्यापो द्विरुन्मृज्येत्यादिका । सकृत्त्वं च स्त्रीशूद्रसमानधर्मत्वेन ।

शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ।

इति योगिस्मरणात् । शूद्रसमानधर्मत्वं च वेदाध्ययनानधिकारात् ।

शूद्रेण हि समस्तावद्यावद्वेदे न जायते ।

इति मनुस्मरणात्।रजस्वलादीत्यादिशब्देनास्पृश्यानां म्लेच्छचण्डालसूतिकादीनां ग्रहणम्। कुमाराणां स्नानं नाम सर्वाङ्गजलसंयोगमात्रं, नेतिकर्तव्यता । मन्त्राद्यभावात् ।

स्नानं सर्वाङ्गसंयोगो वारिणा परिकीर्तितः ।

इति स्मरणात् । उदक्यादिस्पृष्टस्याप्यनुपनीतस्य स्पर्शे नाशौचमित्याह

**गौतमः**, न तदुपस्पर्शनादशौचमिति ।

उदक्याऽशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।

इत्यनेन तृतीयं प्रति प्राप्तस्याचमनस्यापवादोयम् ।

धर्मान्तरमप्याह स एव, प्रागुपनयनात्कामचारवादभक्ष इति ।

कामचार इच्छाचरणम् । अपण्यान्यपि विक्रीणीयात् शूद्रवृत्त्याऽपि जीवेदित्यर्थः । कामवादः अश्लीलानृतादिवचनम् । कामभक्षः लशुनपर्युषितादिभक्षणम् चतुः पञ्चकृत्वो वा भोजनमिति । एतावद्यस्य स तथोक्तः ।

**अत एव विष्णुपुराणे**,

भक्ष्याभक्ष्ये तथा ऽपेये वाच्यावाच्ये तथा ऽनृते ।

अस्मिन्काले न दोषोऽस्ति स यावन्नोपनीयते ॥ इति ।

**ब्रह्मपुराणेऽपि**,

मातापित्रोरथोच्छिष्टं बालो भुञ्जन् भवेत्सुखी । इति ।

न तु ब्रह्महत्यासुरापानाद्यतिप्रसङ्गः ।
स्यात्कामचारभक्षोक्तिर्महतः पातकादृते ।

इति स्मृत्यन्तरवचनात् । न ब्राह्मणं हन्यात्, नित्यं मद्यं ब्राह्मणो वर्जयेदित्यादिनिषेधस्य कर्तृगतवयोऽवस्थाविशेषानादरेणैव प्रवृत्तत्वात् । महापातकप्रकरणे,

पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः । इति,
तथा,
अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता पिताऽथवा ॥

इत्यादिप्रायश्चित्तस्मरणाच्च । प्रागुपनयनादिति वदता अतिक्रान्तोपनयनकालस्यापि यावदुपनयनमेते धर्मा भवन्तीत्युक्तं भवति ।

किंच अहुतात्, हुतशिष्टं पुरोडाशाद्यत्तीति हुतात् न हुतादहुतात् । हुतशिष्टं पुरोडाशादि नाद्यादित्यर्थः ।

तथाच जातूकर्ण्यः,
वैश्वदेवं पुरोडाशमग्निमध्ये तु यद्धुतम् ।
प्रमादाच्छिशुराकर्षन्मात्रा रक्ष्यः प्रयत्नतः ॥ इति ।

आकर्षन्, भक्षणार्थमिति शेषः । यद्वा अहुतं वैश्वदेवासंस्कृतमप्यद्यादित्यर्थः । किंच ब्रह्मचारी । कामचारादेरयमपवादः । आषोडशादित्युक्तत्वात्स्त्रीषु प्रसङ्गयोग्यताऽस्ति । अतो ब्रह्मचारी जितेन्द्रियः स्यादित्यर्थः । किंच यथोपपादमूत्रपुरीषो भवतीति । यथोपपादं यथासंभवं मूत्रपुरीषे यस्य स तथोक्तः । तेनास्योदङ्मुखत्वादिनियमो नास्तीत्यर्थः । किंच न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यादिति । एनमनुपनीतमग्निहवने औपासनहोमादौ बलिहरणे वैश्वदेवादौ न नियुञ्जीतेत्यर्थः ।

तथाच मनुः,

नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः।

होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा॥ इति।

कन्या कुमारिका। अत्र कुमारीनिषेधः अग्निहोत्रविषयः। वक्ष्यमाणाश्वलायनीयो विधिस्तु स्मार्तहोमविषय इति न विरोधः। तुशब्दादन्यत्रापि समन्त्रके कर्मणि। एवकारोऽवधारणार्थः। पाणिग्रहणादिगृह्यं परिचरेत्स्वयं पत्न्यापि पुत्रः कुमार्यन्तेवासी वेत्यनेन पुत्राग्निवासिनया प्राप्तस्यायं प्रतिषेधः। एतेनाषोडशादनुपनीतस्यैव विवाहे स्वकर्त्तव्योपासनहोमः सुतरां न भवतीति सिद्धम्। अनुपनीतत्वात्। व्रात्यानां तु सर्वधर्मबहिष्कृतत्वादेव स न भवति। किंच, न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनादिति। ब्रह्म वेदः। तमनुपेतं नोच्चारयेत्। तस्यापवादः, स्वधानिनयनं पितृकर्म तस्माद्विना।

तथाच वसिष्ठः, अथाप्युदाहरन्ति। न ह्यस्य विद्यते कर्म किंचिदामौञ्जिबन्धनात् अन्यत्रोदकधर्मस्वधापितृसंयुक्तेभ्य इति।

उदकं तिलाञ्जलिदानादि, धर्म आशौचिनां कटशयनादिः, स्वधा श्राद्धम् एकोद्दिष्टसपिण्डनमासिकवार्षिकादि, पितृसंयुक्तं शय्यादानवृषोत्सर्गादि पितृसंयोगाविशेषात्। एतेभ्योऽन्यत्र एतानि विहायेत्यर्थः। तेनतेष्वनुपेतस्यापि मन्त्रोच्चारणं सिध्यति। तदपि कृतचूडस्य त्रिवर्षस्य वा द्रष्टव्यम्।

अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम्।

यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः॥

इति सुमन्तुस्मरणात्। चूडा चात्र प्रथमवर्षातिरिक्तवर्षकृता द्रष्टव्या।

पुत्रश्चोत्पत्तिमात्रेण संस्कुर्याद्दणमोचनात्।

पितरं नाब्दिकाच्चौलात्पैतृमेधेन कर्मणा ॥

इति तस्यैव स्मरणात्। उत्पत्तिमात्रेण पुत्रः पैतृमेधेन कर्मणा पितरं न संस्कुर्यादित्यन्वयः। किं त्वाब्दिकाच्चौलात्, प्रथमवर्षकृताच्चौलादारभ्येत्यर्थः।

अत एव कालादर्शः,

चौलादाद्याब्दिकादर्वाग्न कुर्यात्पैतृमेधिम्। इति।

तदप्यमन्त्रकं कुर्यात्।

तथाच व्याघ्रः,

कृतचूडस्तु कुर्वीत उदकं पिण्डमेवच।

स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥ इति।

संग्रहेऽपि,

कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।

उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥ इति।

इदं च वचनद्वयं प्रथमवर्षकृतचूडाविषयत्वेनैव घटते। अन्यथा पूर्वोदाहृतसुमन्तुवचनविरोधात्। एतेन

नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते।

इति मनुवाक्यमपि कृतचूडस्य त्रिवर्षस्य वा पैतृके मन्त्राधिकारं बोधयतीति व्याख्येयम्। यत्तु

कुर्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः।

पितृयज्ञाहुतिं पाणौ जुहुयान्मन्त्रपूर्वकम् ॥

इति वचनं, यच्च

असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्।

कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥

इति कात्यायनवाक्यं, तदुभयमपि उक्तविषयएव योज्यम्। यत्तु

न ह्यस्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्।

इति, तदपि पैतृकातिरिक्तविषयं द्रष्टव्यम् ।
अयं च पैतृकमन्त्राधिकारोऽनुपनीतस्यौरसस्यैव । तथाच

स्कन्दपुराणे,

पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ।
और्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥ इति ।
और्ध्वदैहिकं, समन्त्रकमिति शेषः ।

तथाच सुमन्तुः,

नाभिव्याहारयेद् ब्रह्म यावन्मौञ्जी न बध्यते ।
मन्त्राननुपनीतोऽपि पठेदेवैक औरसः ॥ इति ।
और्ध्वदैहिके इति शेषः ।

## अथ प्रसङ्गाद्बालपितृधर्म्मा अप्युच्यन्ते ।

विष्णुधर्मोत्तरे,

अपथ्यं न च बालानां तथा भार्गव पश्यताम् ।
प्रार्थितं बालकानां च दातव्यं स्याद्धितं ततः ॥
बालानां प्रार्थितं दत्त्वा नाकलोके महीयते ।
बालकाश्चानुनेयाः स्युर्धर्मकामैः सदा नरैः ॥
तेषां भोज्यप्रदानेन गोदानफलमाप्नुयात् ।
तेषां क्रीडनकं दत्त्वा मोदते नन्दने दिवि ॥
आह्लादयन्ति सततं यस्मिन्गृहे न बालकाः ।
दौर्भाग्यं महदाप्नोति यत्रयत्राभिजायते ॥
तस्मात्सर्वप्रयत्नेन बालानग्रे तु भोजयेत् ।
अभुक्तवत्सु बालेषु न चाश्नीयात्कदाचन ॥
यन्न दद्यान्न चाश्नीयात्कदाचिदपि न स्वयम् । इति ।

## अथोक्तसंस्कारातिपत्तिप्रायश्चित्तम् ।

**तत्र कात्यायनः,**

संस्कारा अतिपद्येरन्स्वकालाच्चेत्कथंचन ।
कृत्वैतदेव कर्त्तव्या ये तूपनयनात्पुरा ॥ इति ।

एतत्स्वयमेव वक्ष्यमाणम् । तस्मिन्कृतेऽपि ते कर्तव्या एव । तैरेवोपनयनयोग्यत्वात् ।

तथाच देवलः, प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाऽष्टमे वर्षे तूपनयनार्हो भवतीति । इदं च तेषां गौणकालसद्भावे । तदतिक्रमे तु प्रायश्चित्तमात्रमेव ।

तदाह भृगुः,

गर्भाद्यसंस्कृतस्यापि कर्तव्यं चोपनायनम् ।
प्रायश्चित्तं तु पूर्वेषां नौपनायनिकस्य तु ॥
श्रौतस्मार्त्ताधिकारी स्यान्नौपनायनिकं विना । इति ।

तदेतत्प्रायश्चित्तमाह कात्यायनः,

लुप्ते कर्माणि सर्वत्र प्रायश्चित्तं विधीयते ।
प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ॥
त्वन्नः सत्वन्न इत्याभ्यामिमं मे त्वेतया ऋचा ।
येतेशतमयाश्चाभ्यामुदुत्तममृचा ऽऽहुतीः ॥
हुत्वा पृथक्पृथक्पादमर्धं चौले समाचरेत् ।
स्त्रीणामप्येवमेवं स्याज्जाताद्यामान्त्रिकाः क्रियाः ॥ इति ।

**शौनकोऽपि,**

आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणाम् ।
व्याहृत्याऽऽज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥
एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् ।
चूडाया अर्धकृच्छ्रं स्यादापादि त्वेवमीरितम् ॥

अनापदि तु सर्वत्र द्विगुणाद्द्विगुणं चरेत् । इति ।
इति संस्कारातिपत्तिप्रायश्चित्तम् ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरी-
नीराजितचरणकमल—

श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज—

श्रीमन्महाराजमधुकरसाहसूनु—

श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुंधराहृदय-
पुण्डरीकविकाशदिनकर—

श्रीवीरसिंहोद्योजित—

श्रीहंसपण्डितात्मज—

श्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणजग-
द्दारिद्र्यमहाराजपारीन्द्रविद्वज्जनजीवातु—

श्रीमन्मित्रमिश्रकृते
श्रीवीरमित्रोदयनिबन्धे संस्कारप्रकाशे गर्भाधानादि-
संस्कारप्रकरणम् ।



# अथोपनयनम् ।

तत्रोपनयनशब्दः कर्मनामधेयम् । तथाच

**भरद्वाजः**,

उपानयाख्यं यत्कर्म विद्यार्थं तदुदीरितम् । इति ।

तच्च यौगिकम्, †उद्भिदून्यायात्* । योगश्च भावव्युत्पत्त्या करणव्युत्पत्त्या वेत्याह **भारुचिः** । स यथा, उपसमीपे आचार्यादीनां वटोर्नीतिर्नयनं प्रापणमुपनयनं, समीपे आचार्यादीनां नीयते वटुर्येन तदुपनयनमिति वा ।

**तदुक्तमभियुक्तैः**,

गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च ।
देवतानां समीपं वा येनासौ नीयते द्विजः ॥ इति ।

तत्र च भावव्युत्पत्तिरेव साधीयसीति गम्यते । श्रौतार्थविधिसंभवात् । न करणव्युत्पत्तिः । अन्यपदार्थलक्षणापातात् । तस्य च विवक्षाधीनतयाऽनेकत्वसंभवात्, अनियतशास्त्रार्थतापत्तेश्च । तथाहि । उपनीयतेऽनेनेति व्युत्पत्तौ कदाचिच्चलनं कदाचित्पुरुषः कदाचिदाचार्यश्चान्यपदार्थत्वेनोपनयनं स्यात् । ततश्चोपनयनानियम इत्यनेकशास्त्रार्थविप्लवापत्तिः । संस्कारस्या-

---

† न रूढम् । रूढेः योगवाक्यभेदतत्प्रख्यतद्व्यपदेशानन्तर्भावेन कर्मनामधेयत्वोपायत्वानभ्युपगमात् । प्रत्युत निरूढे तु न स्वार्थादपनीयते इति न्यायविरोधाच्चेत्यधिकः पाठः पुस्तकान्तरे ।

* पू.मी.अ. १ । पा. ४ । अधि० २

न्यपदार्थत्वेन तस्य तत्करणत्वायोगात्। तस्मादुक्तैव व्युत्पत्तिर्ज्यायसी। तत्रोपनयनं नामाचार्येण बटोर्गायत्र्या संस्करणम्। गायत्र्या ब्राह्मणमुपनयीतेति कात्यायनवाक्ये ब्राह्मणगायत्र्योः द्वितीयातृतीयाभ्यां संस्कार्यसंस्कारकत्वाभिधानेनोपनयनशब्दस्य संस्कारमात्रपरत्वावगमात्।

तथाचापस्तम्बः, उपनयनं विद्यार्थस्य श्रुतितः संस्कार इति।

तदेव च ब्रह्मजन्मत्वेन परामृष्टं मनुना,

तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥ इति।

ब्रह्मणा वेदेन गायत्रीरूपेण जन्मेव जन्म, संस्कारविशेषाधानेन पुनर्नवीकरणम्।

तथा च श्रुतिः, गायत्र्या ब्राह्मणमसृजत, त्रिष्टुभा राजन्यं, जगत्या वैश्यं, न केनचिच्छन्दसा शूद्रमिति।

एतान्नियताभिप्रायेणैव ब्रह्मशब्दप्रयोगो न संपूर्णवेदाभिप्रायेणेति स्पष्टयितुं विशेषणमाह। मौञ्जीबन्धनचिह्नितमिति। गायत्र्युपदेशानन्तरं हि मौञ्जीबन्धनं क्रियते न संपूर्णवेदाध्ययनानन्तरम्। अत एव व्यतिरेकमुखेनाह

**मेधातिथिः**, तया ह्यनुक्तया तन्न निष्पन्नं भवतीति। तस्माद्गायत्र्युपदेश एव उपनयनपदार्थ इति सिद्धम्।

इदमेव द्वितीयजन्मेत्याह **गौतमः**,

तद्द्वितीयं जन्म अत्रास्य माता सावित्री पिता त्वाचार्य इति।

एतेनोपनीत्युपनयोपनायनोपानयादिशब्दाः कर्मनामधेयत्वेन व्याख्याताः। यस्तु

गर्भाष्टमेऽष्टमे वा ऽब्दे ब्राह्मणस्योपनायनम् ।

इति याज्ञवल्कीये उपनायनशब्दः श्रूयते, सोपि छन्दोऽनुरोधादुपनयनमेवोपनायनमिति स्वार्थे तद्धितविधानाद्वा उपनयनमेवाचष्टे इति विज्ञानेश्वरः । कल्पतरुरप्यमुमेवार्थमनुमेने ।

अपरार्कस्तूपनयनं नाम बटोर्गायत्रीसंबन्धकरणं, तच्चाचार्यकर्तृकम् । उपनायनं नाम अधीहि भोः अनुब्रूहि इत्याचार्यं प्रति प्रयोजकव्यापारः । स च बटुकर्तृक इत्युपनयाद्भिन्नमेवोपनायनम् । तच्चाष्टवर्षो ब्राह्मण आत्मानमुपनाययेदिति बुधस्मृतौ स्पष्टमेवाभिहितमिति व्याचष्टे ।

पित्राद्युपनेत्रभावविषयं बुधवचनमिति कल्पतरुः ।

मेधातिथिरपि, पितुरभावे व्युत्पन्नबुद्धिना माणवकेनाप्यात्मोपनाययितव्य इति, सत्यकामो ह जाबालः सहहारिद्रुमजं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्यामीति लिङ्गादिति । यत्तु

ज्योतिर्विदुक्तसमये कुमारमुखदर्शनम् ।
उपानयं तु तं प्राहुर्याज्ञिकास्तत्त्वदर्शिनः ॥

इति, पितृकुलाद्विधिवदाचार्यकुलप्रापणं शिशोरुपनयनमिति च परिशिष्टहरदत्तादीनां निर्वचनं, तदव्यभिचरितगायत्र्युपदेशसंबन्धाद् ग्रहादिशब्दप्रयोगवदङ्गेषु लक्षणया प्रधानशब्दप्रयोग इति द्रष्टव्यम् ।

तच्च द्विरूपम्, अङ्गं प्रधानं च ।

तत्राङ्गत्वं मन्यन्ते मीमांसकाः,

संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ।

इत्यादिना । तथाहि । अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत,

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥

इत्यादिश्रुतिस्मृत्यादिवाक्यपूपर्यालोचनेन किं कर्तव्यमित्यपेक्षायां तत्सन्निधौ श्रूयमाणस्याध्ययनस्य च कर्त्रपेक्षायामुपनीतेनाध्ययनं कर्त्तव्यमिति वाक्यार्थसिद्ध्योपनयनाध्ययनयोरङ्गाङ्गिभावसिद्धिः। तेन न क्रत्वर्थः संयोगः। अक्रत्वर्थत्वात्। यद्यप्यत्रोपनयनाध्यापने प्रयोजकव्यापारावेव श्रूयेते तथापि तयोर्वृत्त्यर्थतया प्राप्तयोरविधेयत्वादप्राप्तयोरुपगमनाध्ययनयोरेव विधिः। अत एव याज्ञवल्क्याश्वलायनादिभिरुपनायनमुपेतश्चेदाहिताग्न्यात्मना इत्यनुपेतपूर्वस्याथोपेतपूर्वस्येत्यादिशब्दो माणवकव्यापाराभिप्रायेणैव प्रयुक्तः। प्रयोजकव्यापारश्रवणं त्वेतया निषादस्थपतिं याजयेदित्यत्रार्थप्राप्तऋत्विग्व्यापारानुवादवदनुवादः। आत्मनेपदं त्वकर्त्रभिप्राये क्रियाफलेऽपि भवति, सम्मानननसूत्रविधानान्यथानुपपत्त्येत्यादि प्रपञ्चितं न्यायविद्भिः। ततश्चाध्ययनार्थिन एवात्रिद्वत्कर्तृकोपनयने तमसो वा एष तमः प्रविशति यमविद्वानुपनयते इति निन्दार्थवादोऽपि घटते। तदेतत्स्पष्टमाचष्ट

भरद्वाजः,

उपानयाख्यं यत्कर्म विद्यार्थं तदुदीरितम्। इति।

ततश्च प्रतिवेदाध्ययनमुपनयनावृत्तिस्सिध्यति। प्रतिप्रधानं गुणावृत्तिरिति न्यायात्। गुणत्वं च तत्तच्छाखीयस्यैवोपनयनस्य तत्तच्छाखाध्ययनं प्रतीति मन्तव्यम्। अन्यथा प्रतिशाखंतदाम्नानानुपपत्तेः।

तथाचापस्तम्बः, उपनयनं विद्यार्थस्य श्रुतितः संस्कारइति।

विद्यया अर्थः प्रयोजनं यस्य स विद्यार्थः। येन वेदेन यस्य प्रयोजनं तच्छुत्या संस्कारस्तस्योपनयनम्। नान्यवेदेनोपनीतस्यान्यवेदाध्ययनमित्यर्थः।

वसिष्ठोऽपि,

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ।
तच्छाखाध्ययनं कार्यमेवं न पतितो भवेत् ॥ इति ।

तदशक्तावाहापस्तम्बः । सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणमिति । वैशब्दो वाऽर्थ इति धूर्तस्वामिनः ।

त्रिभ्य एव तु वेदेभ्यः पादंपादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

इति मनुस्मरणात् । अस्मिन्नपि पक्षे अथर्ववेदाध्ययनार्थं पृथगेवोपनयनं कार्यम् ।

तथाच तदीयैव श्रुतिः । नान्यत्र संस्कृतो भृग्वङ्गिरसो-ऽधीयतइति । विशेषान्तरं पुनरुपनयनप्रकरणे वक्ष्यतइत्यास्ता-मतिविस्तरेण ।

प्रधानमिति स्मृतिकाराः । अष्टाचत्वारिंशता संस्कारैस्सं-स्कृतो ब्राह्मणः सायुज्यं गच्छति ।

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
चित्रकर्म यथा ऽनेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥
गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥

इत्यादिवाक्यैः सामान्यविशेषाभ्यां पुरुषार्थताऽवगमात् ।

किंच मूकबधिरादीनामध्ययनासमर्थानामप्युपनयनदर्शना-त्सिद्धमस्य पुरुषार्थत्वम् । मूकाद्युपनयनं कर्मान्तरमेवेति चेत्, अस्तु तर्हि नामधारकविप्राणामुपनयनमत्रोदाहरणम् । नामधारकलक्षणं

स्मृत्यन्तरं,

गर्भसंस्काररहितः केवलं ब्रह्मसूत्रधृक् ।

न कर्मवित्र चाधीते स भवेन्नामधारकः ॥ इति ।

किंच । सर्वेष्वप्युपनयनवाक्येषु द्वितीयाश्रुत्या ब्राह्मणादेरेव संस्कार्यत्वावगमात्परस्मैपदयुक्तेषु पुनराद्यैव तद्गतक्रियाफलावगमाच्चोपनयनस्य पुरुषार्थत्वं सिध्यति । यत्त्वष्टमे वर्षे ब्राह्मणमुपनयेदित्याश्वलायनगृह्यभाष्ये

परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः ।

आचार्यकरणं यस्मात्प्राप्नोत्येवात्मनेपदम् ॥

इति । हरदत्तव्याख्यानं,तदपि पार्थसारथ्यादयो नानुमन्यन्ते। स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेनैव ञितो नित्यः आत्मनेपदसिद्धौ पुनः सम्माननसूत्रारम्भादकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदं भवतीति ज्ञापयति । ततश्चाचार्यकरणेऽपि आत्मगामिक्रियाफलाभावादात्मनेपदमपि परस्मैपदतुल्यमेव । तदुक्तं वैयाकरणैः,अकर्त्रभिप्रायार्थः पुनरारम्भ इति । तस्मान्नायं प्रमादपाठः।

## अथोपनयनकालः ।

स च द्विविधः, नित्यः काम्यश्च । तत्र फलानुपबन्धेन श्रुतोऽपि नित्यः । तदुपबन्धेन श्रुतश्च काम्यः । नित्योऽपि द्विविधः, मुख्यो गौणश्च। तत्रोत्पत्तिवाक्यशिष्टो मुख्यः। उत्पन्ने कर्मणि पश्चाच्छिष्यमाणो गौणः।सोऽपि त्रिविधः, गौणो गौणतरो गौणतमश्चेति ।

तत्र नित्यमाह श्रुतिः, अष्टवर्षं ब्राह्मणमुपनयीतेति। मुख्यत्वं चास्य प्रत्यक्षश्रुतिविधानादुत्पत्तिवाक्यशिष्टत्वाच्च। अष्टवर्षत्वं चाष्टमवर्षसंबन्धेन, नातीताष्टमवर्षत्वेन। अष्टमे वर्षे ब्राह्मणमुपनयेदित्यष्टमस्याधिकरणत्वश्रवणात् । अष्टमनवमयोस्सहनिर्देशाच्च। एवमुत्तरत्रापि पञ्चवर्षमित्यादौ।क्षत्रियवैश्ययोरप्येकादशद्वादशे मुख्ये।

नित्यगौणकालमाह पैठानिसिः,गर्भपञ्चमेऽब्दे ब्राह्मणमुपनयेद्गर्भाष्टमे वा, गर्भैकादशे राजन्यं गर्भद्वादशे वा, गर्भद्वादशे वैश्यं गर्भषोडशे वेति हेमाद्रिपाठः। निबन्धान्तरपाठस्तु विश्रुतत्वादत्र न लिखितः। गर्भसहचरितोऽब्दो गर्भशब्देनोच्यते इति भारुचिः। यस्मिन् वर्षे गर्भो भूत्वा शेते स गर्भ इति हरदत्तः। स पञ्चमो यस्येति बहुव्रीहिः पञ्चमीसमासो वा, न षष्ठीसमासः। तस्य पूरणप्रत्ययान्तेन निषेधात्। एवमुत्तरत्रापि। गर्भपञ्चमश्चात्र जन्मतश्चतुर्थो भवति। गर्भाष्टमः सप्तमः। गर्भैकादशो दशमः। गर्भद्वादश एकादशः। गर्भषोडशः पञ्चदशः।

बौधायनोऽपि, गर्भादिः संख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेत्, राजन्यमेकादशे, द्वादशे वैश्यमिति। तदष्टमेषु तस्माद्गर्भादष्टमेषु। बहुवचनात् षष्ठसप्तमयोर्ग्रहणमिति भाष्यकारः। ततश्च गर्भषष्ठे गर्भसप्तमे गर्भाष्टमइति सिध्यति। गर्भश्चात्र जन्मनोऽप्युपलक्षणम्।

तथाचाश्वलायनः,

गर्भाष्टमेऽष्टमे वा ऽब्दे पञ्चमे दशमेऽपिवा।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः॥
वैश्यश्च द्वादशे वर्षे विप्राणां षोडशोऽवधिः। इति।

यद्यप्यत्र जन्मत इति न श्रूयते तथापि गर्भाष्टमेऽष्टमे ऽवाब्दइति विकल्पाभिधानात्तत्सिध्यति। ततश्च पञ्चमादयोऽपि जन्मत एव सिध्यन्ति। गर्भपदस्य समस्तत्वेनासंबन्धिव्यवधानेन चोत्तरत्रानन्वयात्। एतेन

गर्भाष्टमेऽष्टमे वा ऽब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम्॥

इति याज्ञवल्क्यवाक्ये एकादशादौ मिताक्षरोक्तो गर्भपदान्वयो निरस्तः । ततश्च

गर्भाधानाष्टमे वा ऽब्दे पञ्चमे नवमेऽपि वा ।
कार्यं विप्रस्य राज्ञस्तु दशमे द्वादशे विशः ॥

इति राजमार्त्तण्डवाक्यमपि व्याख्यातम् । तस्मात्

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥

सप्तमे वर्षे ब्राह्मणस्योपनयनं नवमे राजन्यस्यैकादशे वैश्यस्येत्यादि मनुलौगाक्ष्यादिवाक्येषु गर्भोपपदात्केवलमष्टमादिपदं जन्मादिपक्षान्तरमेवाभिधत्ते, नोपसंहारम् । ततश्च गर्भपञ्चमपञ्चमाद्यब्दानां विकल्प एव सिध्यति । तदेतं विकल्पं स्पष्टमाह

नारदः,

आधानादष्टमे वर्षे जन्मतो वा ऽग्रजन्मनाम् ।
राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम् ॥

भीमपराक्रमोऽपि,

प्रायः पाणिग्रहणे वर्षविशुद्धिं व्रतोपनयनेऽपि ।
गर्भादिमाहुरेके मुनयो जन्मादिमपरे च ॥
सप्तपरा ये मुनयो गर्भादिमुदीरयन्ति वर्षाणाम् ।
परिशुद्धिं परिणयने व्रते च जन्मादितश्चान्ये ॥ इति ।

गर्भपञ्चमादीनामष्टमार्वाचीनानां नित्यत्वं गायत्र्युच्चारणावधारणसमर्थं प्रत्येव । अन्यथा प्रधानानिष्पत्तेः । सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वां यथाशक्ति वाचयीतेत्याश्वलायनादिभिरनुवचनविधानात् । यत्तु सावित्रींमन्वाहेत्युपक्रम्य संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वेति पारस्करेण गायत्र्युपदेशस्य नानाकालत्वमभिहितं तद्ब्राह्मणातिरिक्तविषयम् । सद्यस्त्वेव

गायत्रीं ब्राह्मणयानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेरिति तेनैवाभिधानात् ।

अथ मुख्यकालातिक्रमे गौणकालः ।

तत्र पैठीनसिः, द्वादशषोडशविंशतिश्चातीताः अविरुद्धाः काला भवन्तीति । अस्यार्थः । द्वादशश्च षोडशश्च विंशतिश्चेति द्वादशषोडशविंशतिः अतीताश्च द्वादशादिभ्यः पूर्वं वृत्ताश्च ये काला अब्दास्तेऽपि इति मुख्यकालवदविरुद्धाः प्रत्यवायाजनका इत्यर्थः। अत्रायं श्रुतिपैठीनसिबौधायनाश्वलायनयाज्ञवल्क्यराजमार्त्तण्डमनुलौगाक्षिपैठीनसिवाक्यानां निर्गलितोऽर्थः । स यथा। ब्राह्मणस्य जन्माष्टमोऽब्दो नित्यमुख्यः । गर्भपञ्चमगर्भषष्ठगर्भसप्तमगर्भाष्टमजन्मनवमजन्मदशमजन्मैकादशाब्दा यथा कुलधर्मं वेति नव नित्यगौणा भवन्ति । क्षत्रियस्य जन्मैकादशो नित्यमुख्यः। जन्मनवमगर्भैकादशजन्मद्वादशजन्मत्रयोदशजन्मचतुर्दशजन्मपञ्चदशजन्मषोडशाब्दा यथा कुलधर्मं वेत्यष्टौ नित्यगौणाः । कल्पतरुस्तु क्षत्रियस्य जन्माष्टममप्यब्दमिच्छति । वैश्यस्य जन्मद्वादशो नित्यमुख्यः । गर्भद्वादशजन्मत्रयोदशजन्मचतुर्दशजन्मपञ्चदशजन्मषोडशजन्मसप्तदशजन्माष्टादशजन्मैकोनविंशजन्मविंशत्यब्दा यथाकुलधर्मं वेति दश नित्यगौणाः । एतेन गौतमादिस्मृत्यन्तरवाक्यानि व्याख्यातानि । अनतिरिक्तार्थत्वात् ।

गौणतरमाह **मनुः**,

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ इति ।

**याज्ञवल्क्योऽपि,**

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ इति ।

अत्राभिविधावाङ् ।

तथाच व्यासः,

औपनायनिकः कालः परः षोडशवार्षिकः

द्वाविंशतिपरो ह्यस्य स्याच्चतुर्विंशतिः परः ॥ इति ।

षोडशवार्षिकः षोडशभिर्वर्षैः परिच्छिन्नः ।

शङ्खोऽपि,

षोडशाब्दानि विप्रस्य राजन्यस्य द्विविंशतिः ।

विंशतिः सचतुष्का च वैश्यस्य परिकीर्तिता ॥ इति ।

षोडशत्वं चात्र गर्भतो ज्ञातव्यम्। मनुना गर्भाष्टमेऽब्दे कुर्वीतेत्युपक्रम्याषोडशाद् ब्राह्मणस्येत्यभिधानात्।गौतमेनापि गर्भादिसंख्या वर्षाणामित्युपक्रम्याषोडशाद्ब्राह्मणस्यापतिता सावित्रीत्यभिहितत्वाच्च। एतेन बौधायनादिस्मृत्यन्तरवाक्यान्यपि व्याख्यातानि। यस्तु आषोडशादिति याज्ञवल्क्यीये षोडशशब्दः,स जन्मतः। तत्र गर्भपदानन्वयस्य प्रागुक्तत्वात् । आङ् चात्र मर्यादायाम् । इदमेवचाभिप्रेत्य

यमेन,

सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।

सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥ इति

पञ्चदशैव वर्षाणि गौणकालोऽभिहितः । स च जन्मतः संख्याकरणएव घटते । जन्मतः पञ्चदशस्य गर्भतः षोडशत्वात्। तदभिव्याप्तौ न विरोधः । अत एवाश्वलायनस्मृतौ

विप्राणां षोडशोऽवधिः ।

द्विजत्वप्रापणे राज्ञां द्वाविंशोऽब्दोऽवधिः स्मृतः ।

वैश्यस्य चाचतुर्विंशात्त्रय एते द्विजातयः ॥

इत्यत्र जन्मतः षोडशस्य स्पष्टमवधित्वमेव व्याजहार । यद्येवं तर्हि गर्भषोडशस्याप्यवधित्वमेवास्तु किमभिव्याप्त्येति चेत् ।

मैवम्। तच्छन्दःसु पादाक्षरवदब्दसमुदाय उपनयनं, द्वितीयो नार्हः कालः, तृतीयः पतितस्तादृक्काले व्रात्यो भवतीति हारीतस्मरणविरोधात्। अस्यार्थः। तेषां ब्राह्मणक्षत्रियविशां यानि छन्दांसि गायत्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यं, जगत्या वैश्यमितिश्रुतिविहितानि तेषु त्रिषु छन्दस्सु ये पादाः त्रयश्चत्वारश्च तेषां यान्यक्षराणि अष्टैकादश द्वादश तद्वन्तस्तत्संख्यावन्तो येऽब्दा वर्षाणि तेषां समुदायः मेलनं यस्मिन्वर्षे तस्मिन्नुपनयनम्।

अयमभिसंधिः। गायत्र्याः पादे अष्टाक्षराणि भवन्ति, तेन ब्राह्मणस्याष्टमे वर्षे उपनयनम्। त्रिष्टुभः पादे एकादशाक्षराणि भवन्ति,तेन क्षत्रियस्यैकादशे वर्षे। जगत्याः पादे द्वादशाक्षराणि भवन्ति, तेन वैश्यस्य द्वादशे वर्षइति। एवं तर्हि द्वितीयेऽप्यब्दसमुदाये तुल्यन्यायत्वादुपनयनं कुतो नेत्यत आह। द्वितीय इति। द्वितीयः कालः कलयत्यक्षरसंख्यामिति कालोऽब्दसमुदायः नवमवर्षमारभ्याष्टौ वर्षाणीत्यादिः नार्हो मुख्यो न, किंतु गौणः किंचित्प्रत्यवायजनक इत्यर्थः। द्वितीयश्चेन्नार्हस्तर्हि तृतीये तदस्त्वित्यत आह। तृतीय इति। तृतीयोऽब्दसमुदायस्सप्तदशवर्षमारभ्याष्टौ वर्षाणीत्यादिः पतितः उपनयनेऽत्यन्तं गर्हितोऽतिशयितप्रत्यवायजनक इत्यर्थः। कुतइत्यत आह। तादृशे काले तृतीयेऽब्दसमुदाये ब्राह्मणादिवटुः व्रात्यस्संस्कारानर्हो भवति। संज्ञाकरणमुत्तरव्यवहाराय।

अत्र मूलभूतां श्रुतिं मेधातिथिरुदाजहार। सावित्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्य, जगत्या वैश्यमिति। एतेषां च छन्दसामियता कालेन द्वौ पादौ पूर्येते तदन्तं कालकलयन्ति संसजन्ति स्वाश्रयभूतान्वर्णान्। तृतीये तु पादे प्रक्रान्ते आत्तरसान्यतिवयांसि न्यूनसामर्थ्यानि भवन्ति। समाप्तिमुपयान्ति। यथा पञ्चाशतस्थ स्थविरो मनुष्य इति। अतश्च नैतेन वयमुपासिता-

नीति संजनित तं वर्णम्। ततो न गायत्रो ब्राह्मणो न त्रैष्टुभो राजन्यो न जागतो वैश्य इति। सावित्र्यत्र गायत्री तत्सवितुरिति, त्रिष्टुप् आकृष्णेनेति, जगती विश्वारूपाणीति। इयता कालेन षोडशादिवर्षात्मिकेन द्वौ पादौ षोडशाद्यक्षरसंख्यौ पूर्येते तदन्तं तस्य कालस्य अन्तं षोडशादिवर्षं, प्राप्येति शेषः। तानि कालकलवन्ति, कल्कः शोधकं द्रव्यं गौरसर्षपकल्केनेत्यादिप्रयोगदर्शनात् तत्संबन्धी कालकः स चासौ लवश्चेति कालकलवः शोधकद्रव्यकणः तद्वदाचरन्तीति तद्वच्छोधकानि भवन्तीत्यर्थः। यद्वा कल्कः पापं,कल्कोऽस्त्री शमलैनसोरित्यभिधानात्। तत्संबन्धी कालकः,स चासौ लवश्चेति तद्वदाचरन्ति ईषत्पापवन्ति भवन्तीत्यर्थः।

काम्यानाहोशना,
जन्मतः पञ्चमे वर्षे ब्राह्मणस्योपनायनम्।
राज्ञस्तु षष्ठे वैश्यस्य सप्तमे तु बलार्थिनः॥ इति।

मनुरपि,
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे॥ इति।

वसिष्ठः,
कुमारस्याष्टमे वर्षे गर्भाद्वा जन्मतस्ततः।
ब्रह्मवर्चसकामस्तु नित्यं विप्रो विशेषतः॥
अन्नाद्यकामो नवमे धीकामो दशवत्सरे।
एकादशे रत्नकामो द्वादशे पुष्टिकामनः॥
आषोडशाद्वा सर्वेषामनतीतो महापदि।
अतिषोडशको विप्रो नोपनेयः कदाचन॥
क्षत्रियो विंशतेरूर्ध्वं न वैश्यः पञ्चविंशकात्।

विंशतिरत्र अधिका द्रष्टव्या। पञ्चविंशकादिति गर्भमवधीकृत्य, आचतुर्विंशाद् इत्यभिधानात्।

अङ्गिराः,

षष्ठे तथा द्वादशे च राज्ञो वृद्धिर्बलायुषोः।
ईहायुषोस्तु वैश्यस्य ह्यष्टमे च चतुर्थके॥

ईहा कृष्यादिविषया चेष्टा। चतुर्थो जन्मतः।

आपस्तम्बः, अथ काम्यानि, सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकाममाषोडशाद्ब्राह्मणस्य नात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्येति।

बौधायनोऽपि, अथापि काम्यानि भवन्ति सप्तमे ब्रह्मवर्चसकाममष्टमआयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकामामिति।

भ्रातृव्यवन्तं भ्रातृपुत्रकामम्। नित्यानामप्येषां कालानां फलश्रवणात् संयोगपृथक्त्वन्यायेन * नित्यकाम्यत्वं द्रष्टव्यम्। यद्यपि पञ्चवर्षादेर्बालस्य हिताहिताव्युत्पन्नतया तत्तत्फलकामना न संभवति तथापि तद्धितैषिपित्रादेरेव तद्गतफलकामनया तदनुष्ठानं न विरुद्धम्।

तदाहुः,

हितकारिभिरेवासौ ज्ञायमानः प्रयोजकः।
कर्त्रा ऽविज्ञायमानोऽपि नैव स्यादप्रयोजकः॥ इति।

ततश्च विप्रस्य बटोर्ब्रह्मवर्चसकामेन पित्रा पञ्चमेऽब्दे उपनयनं कार्यमिति तृतीयार्थषष्ठ्या व्यधिकरणषष्ठ्या वा वा-

* पू. मी. अ. ४। पा. ३। अधि. ३।

क्यार्थः साधनीयः । ब्रह्मवर्चसकाममित्यादिद्वितीया तु, ब्रह्मवर्चसं कामयते पिता यस्य बटोरसौ ब्रह्मवर्चसकाम इति व्याख्येया ।

गौणतममाहतुर्मनुयमौ,

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ इति ।

याज्ञवल्क्योऽपि,

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ इति ।

शङ्खलिखितौ, अतो निष्क्रान्तकालाः पतन्तीति । सावित्र्या इति शेषः ।

शङ्खोऽपि,

नातिवर्त्तेत सावित्री अत ऊर्ध्वं निवर्त्तते ।
विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः ॥
सावित्रीपतिता व्रात्याः सर्वधर्मबहिष्कृताः । इति ।

यमोऽपि,

सावित्रीपतिता व्रात्याः परिहार्याः प्रयत्नतः । इति ।

सावित्र्याः पतिताः सावित्रीपतिताः पतितसावित्रीका इत्यर्थः। अत ऊर्ध्वं पतितसावित्रीका भवन्तीत्याश्वलायनस्मरणात् । सर्वधर्मबहिष्कृता इति सर्वधर्मपदमुपनीताधिकारिकसर्वधर्मपरं, न धर्ममात्रपरम् । *सर्वत्वमाधिकारिकमिति न्यायेन समन्त्रककर्ममात्रपरत्वौचित्यात् ।

अत एवाश्वलायनः,

अत ऊर्ध्वं पतन्त्येते द्विजत्वं नाप्नुयुर्यदि ।
मन्त्रकर्मपरिभ्रष्टा यास्यन्ति व्रात्यतामिह ॥ इति

* पू. मी. अ. १ पा. २ अधि. १ सू. १६ ।

मन्त्रवत्स्वेव कर्मस्वनधिकारमाह । मन्त्रैः कर्माणि मन्त्रकर्माणि । न तु मन्त्राश्च कर्माणि चेति समासः । अतिप्रसङ्गात् । मन्त्राश्च वैदिका एव न नमोमन्त्राः । तेषां शूद्रधर्मत्वेन तदभ्यनुज्ञानात् ।

तथा च **मनुः**,

न ह्यस्मिन्युज्यते कर्म किंचिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ॥
शूद्रेण हि समस्तावद्यावद्वेदे न जायते । इति ।

शूद्रसमत्वं चात्र मन्त्रवत्कर्मानधिकारहेतुः। हिशब्दश्रवणात्। "चतुरुपभृति गृह्णाति न ह्यत्रानुयाजान् यक्ष्यन् भवति"इतिवत् । नार्थवादः "तेन ह्यन्नं क्रियत"इतिवत् । यत्रयत्र शूद्रसधर्मत्वं तत्रतत्र मन्त्रवत्कर्मानधिकारो यथा प्रतिलोमजादाविति व्याप्तिदर्शनात् ।

तथाच **मनुः**,

शूद्राणां च सधर्माणः सर्वेऽपध्वंसजाः स्मृताः । इति ।

शूद्रसमत्वं चास्यैकजातित्वेन स्पष्टमेवोक्तं यावद्वेदे न जायते इति ।

**वसिष्ठोऽपि** शूद्रवृत्तित्वं तस्याह,

न ह्यस्य विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
वृत्त्या शूद्रसमस्तावद्यावद्वेदे न जायते ॥ इति ।

वृत्तिराचारो जीवनोपायश्च । वृत्तिर्वर्त्तनजीवने इति त्रिकाण्डीस्मरणात् ।

**बौधायनोऽपि,**

नास्य कर्माणि यच्छन्ति किञ्चिदामौञ्जिबन्धनात् ।
वृत्त्या शूद्रसमो ह्येषो यावद्वेदे न जायते ॥ इति ।

यद्यप्येतदनुपनीतप्रकरणेऽभिहितं तथापि व्रात्यानामनुपनीतत्वापरिहारेणैव व्रात्यत्वोक्त्या न तत्सामान्यधर्मनिवृत्तिः। बालत्वादिप्रयुक्तविशेषधर्मनिवृत्तिस्त्वास्ताम् । ततश्च व्रात्यानामप्यविरुद्धानुपनीतधर्मशूद्रधर्मसाधारणधर्मेष्वधिकारः सिध्यति । परिहार्याः प्रयत्नेन इति । परिहार्याः अव्यवहार्या इत्यर्थः ।

व्यवहारांश्चाह मनुः,

नैतैरपूतैर्विधिवदापद्यपि हि कर्हि चित् ।

ब्राह्मान्यौनांश्च संबधान्नाचरेद् ब्राह्मणैस्सह ॥ इति ।

अपूतैरकृतप्रायश्चित्तैः । संबन्धातिप्रसङ्गवारणायाह ब्राह्मानिति । उपनयनाध्ययनाध्यापनयाजनप्रतिग्रहान् ।

तथाचाश्वलायनः,

नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुरिति ।

व्यवहारोऽत्र योनिसंबन्धः. कन्यादानादानरूपः । यौनानिति मानवात् । एतेन नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुरिति वसिष्ठवाक्यमपि व्याख्यातम् ।

आश्वलायनोऽपि,

मन्त्रयोन्यर्थसंबन्धस्तैर्न कार्यः कथंचन ।

शिष्टेन धर्मनिष्ठेन शुभकर्म प्रयत्नतः ॥

मन्त्रसंबन्धोऽध्ययनाध्यापनादिः।अर्थसंबन्धोऽर्थार्थं संबन्धो याजनादिः । शुभकर्म अदृष्टार्थं दानादि । संबन्धविशेषपरिगणनं संलापादिसंबन्धानामपरिहार्यत्वाभिप्रायेणेति मेधातिथ्याशयः ।

## अथैषां प्रायश्चित्तम् ।

तत्र यमः,

सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।

सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥

एकविंशतिरात्रं च पिबेत्प्रसृतियावकम् ।
हविषा भोजयेच्चैव ब्राह्मणान्सप्त पञ्च वा ॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् । इति ।

इदं चातिक्रान्तषोडशवर्षस्य सप्तदशे वर्षे उपनयने द्रष्टव्यं, निमित्तप्रायश्चित्तयोरल्पत्वात् ।

अष्टादशेऽब्दे तूपनयने प्राजापत्यत्रयम् । तथा च

**मनुः,**

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान्यथाविध्युपनाययेत् ॥ इति ।

अस्मिन्नेव विषये

**आश्वलायनः,**

गवां दानेन भूम्या वा प्राजापत्यत्रयेण वा ।
चान्द्रायणेन वा शुद्धास्ते भवन्तीह सत्तमाः ॥ इति ।

गवां तिसृणाम् ।

एकोनविंशेऽब्दउपनयने त्वापस्तम्बः, अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्य इति ।

ऋतुः द्वौ मासौ । ऋतुशब्दसामर्थ्याद्दत्वारम्भएव व्रतारम्भः । त्रैविद्यकं व्यवयवा विद्या त्रिविद्या तामधीयते त्रैविद्याः तेषामिदं त्रैविद्यकम् । गोत्रचरणाद्वुञ् । एवंभूतं ब्रह्मचर्यम् अग्निपरिचर्यामध्ययनं शुश्रूषामिति त्रयं परिहाय सकलं ब्रह्मचारिधर्मं चरेत् ।

विंशेऽब्दे उपनयने मनूक्तं त्रैमासिकमुपपातकसामान्यप्रायश्चित्तम् ।

एकविंशेऽब्दे उपनयने चातुर्मासिकमुद्दालकव्रतं चरेत् ।

तथाच वसिष्ठः,

पतितसावित्रीक उद्दालकव्रतं चरेत् द्वौ मासौ यावकेन वर्तयेन्मासं पयसा ऽर्धमासमामिक्षया ऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवास श्चेति ।

द्वात्रिंशेऽब्दे उपनयनेऽश्वमेधावभृथस्नानम् ।

तदाह वसिष्ठः,

अश्वमेधावभृथं वा गच्छेदिति ।

त्रयोत्रिंशेऽब्दे उपनयने व्रात्यस्तोमः प्रायश्चित्तम् । व्रात्यस्तोमेन वा यजेतेतिवसिष्ठस्मरणात् । व्रात्यस्तोमाद्दते क्रतोरिति योगिस्मरणाच्च । वाशब्दो व्यवस्थितविकल्पार्थः । उक्तकल्पानां गुरुलघुभावात् व्यवस्था चेयमेव साधीयसी । गुरूणि गुरूणि लघुनि लघूनीत्यापस्तम्बस्मरणात् ।

एवम् क्षत्रियवैश्ययोरपि द्वाविंशाच्चतुर्विंशाब्दादूर्ध्वं यथोक्तक्रमेणैतानि प्रायश्चित्तानि पादपादहान्या योज्यानि । अत ऊर्ध्वम् आतृतीयकालसमाप्तेर्व्रात्यस्तोम एव दक्षिणाधिक्यपक्षाश्रयणेन योजनीयः । तृतीयकालादूर्ध्वं गौणतमोऽपि कालो नास्तीति क्षत्रियवैश्ययोःपातित्यमेव न ब्राह्मणस्य । न ब्राह्मणः पतनमृच्छतीति गौतमेन ब्राह्मणपदोपादानात् ।

## अथ व्रात्यापत्यानां प्रायश्चित्तम् ।

तत्रापस्तम्बः, अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसँस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति वर्जयेत्तेषामिच्छतां प्रायश्चित्तं यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरोऽथोपनयनं तत उदकोपस्पर्शनमिति ।

यस्य बटोः पिता पितामहश्चानुपेतः स्यात्ते त्रयोऽपि ब्रह्महतुल्याः। यथा ब्रह्म हसविधे नाध्येतव्यं तथा तेषामपीत्यर्थः। तेषां त्रया

णामप्यभ्यागमनम् उपसर्पणं स्वशरीरादिरक्षार्थमपि सर्वत एवात्मानं गोपायेदित्यादिवचनप्राप्तम्, भोजनम् अभ्युद्यतां भिक्षामित्यादिवचनप्राप्तमपि, विवाहं स्त्रीरत्नं दुष्कुलादपीत्यादिवचनप्राप्तमपि। वर्जयेदिति प्रत्येकं संबन्धः । इतिकरणं समाप्तौ । त्रितयमेव वर्जयेन्नान्यदित्यर्थः । तेषामिच्छतां प्रायश्चित्तं, ते यदीच्छन्ति तदा वक्ष्यमाणं प्रायश्चित्तं कुर्युः, न बलात्कारयितव्या इत्यर्थः । तदेवाह । यथेति । यथा प्रथमे पुरुषे स्वस्मिन् उपनयनकालातिक्रमे ऋतुः शुद्धिहेतुः एवमन्यस्मिन्द्वितीयादिपुरुषे संवत्सरः शुद्धिहेतुः । चारितव्रतस्योपनयनं कार्यम् । उदकोपस्पर्शनं वक्ष्यमाणैर्मन्त्रैः संवत्सरं शिरस्यद्भिर्मार्जनम् ।

अत्र विशेषमाह । प्रतिपुरुषं संख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः सप्तभिः पावमानीभिर्यदन्ति यच्च दूरकइत्येताभिः यजुःपवित्रेण सामपवित्रेणाङ्गिरसेनेत्यपिवा व्याहृतिभिरेवाथाध्याप्य इति ।

यदि पितैवानुपेतस्तदा संवत्सरमेकम् अथ पितामहोऽपि तदा संवत्सरौ अथ स्वयमपि यथाकालमनुपनीतः तदा संवत्सरान् । उक्तं चरेदिति शेषः । पवमानः सोमो देवता यासां ताः पावमान्यः, आपो अस्मान्मातरः शुन्धयन्त्वित्याद्याः । यजुःपवित्रेण कयानश्चित्रआभुवादित्यादिना। सामपवित्रेण वामदेव्येन साम्ना । आङ्गिरसेन हंसः शुचिषदित्यनेन।एतैरञ्जलिना शिरस्यपो निषिञ्चेत् । पूर्वैः सह व्याहृतीनां विकल्पः । अथाध्याप्यः। स्पष्टार्थम् अथ यस्य पिता पितामह इत्युपक्रमएकवचनम्, अन्तेऽप्यथाध्याप्य इति। मध्ये तु ब्रह्महसंस्तुतास्तेषामभ्यागमनं तेषामिच्छतामिति बहुवचनम् । तत्रोपक्रमोपसंहारयोर्द्वयोर्बलवत्त्वेन माणवकस्यैव प्रायश्चित्तम् उपनयनम्अध्यापनं च, बहुवचनं तु

तथाविधमाणवकापेक्षयेति द्रष्टव्यमिति हरदत्तः । वस्तुतस्तु बहुवचनं त्रिष्वपि जीवत्सु त्रयाणामपि प्रायश्चित्तोपनयनाध्यापनानि भवन्तीत्यभिप्रायेण संगच्छते ।

अथ प्रपितामहाद्यनुपनयनआह । अथ यस्य प्रपितामहादेर्नानुस्मर्येत उपनयनं ते श्मशानसंस्तुतास्तेपामभ्यागमनं भोजनं विवाहमिति वर्जयेत्तेपामिच्छतां प्रायश्चित्तं द्वादशवर्पाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधोपदेशनं नाध्यापनं ततो यो निर्वर्त्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत ऊर्ध्वं प्रकृतिवदिति ।

यस्य माणवकस्य प्रपितामहमारभ्य त्रयाणां पुरुषाणामुपनयनं नानुस्मर्यते ते श्मशानवदध्ययनानर्हाः । तेषामभ्यागमनादि पूर्ववन्न कार्यम् । तत्र माणवकस्य द्वादशाब्दं त्रैविद्यकं ब्रह्मचर्यं प्रायश्चित्तम् । पूर्वेषां तु पूर्वमेवोक्तम् । अथ गृह्यमन्त्राणामेवोपदेशनं, नाध्यापनं कृत्स्नस्य वेदस्य । ततस्तस्मात्कृतविवाहाद्य उत्पद्यते तस्य द्वौ मासौ व्रतं चारयित्वोपनयनं कार्यम् । तदुत्पन्नस्य तु प्रकृतिवत् उपनयनादि सर्वं कार्यं न प्रायश्चित्तमिति सर्वं सुस्थम् ।

## अथायनम् ।

तत्राहाश्वलायनः, उदगयनापूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा इति ।

नृसिंहोऽपि,

उत्तरायणगे सूर्ये कर्त्तव्यं ह्युपनायनम् । इति ।

वर्णविशेषणास्यापवादमाहतुर्बृहस्पतिवृद्धवसिष्ठौ,

विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।

दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ॥ इति ।

## अथ ऋतुनिर्णयः ।

तत्राह श्रुतिः, वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं वर्षासु रथकारमिति ।

गर्गोऽपि,

विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् ।

वैश्यस्य ग्रीष्ममप्याह बृहस्पतिः,

श्रीविद्याबल्लकारि चोपनयनं प्रोक्तं वसन्ते शिशोः
ग्रीष्मे क्षत्रियवैश्ययोः शुभकरं पूर्वाह्णपक्षे सिते ।
कृष्णे च प्रतिपद्दिनं शुभकरं नैकादशी द्वादशी-
रिक्तानध्ययनं विना शुभदिने चन्द्रे शुभैर्वीक्षिते ॥ इति ।

वसन्तादिलक्षणमाह वृद्धवसिष्ठः,

वसन्तश्चैत्रवैशाखौ ग्रीष्मः शुक्रशुची तथा ।
इषोर्जौ च शरच्चान्द्रमासाः श्रौतादिकर्मणि ॥ इति ।

वराहमिहिरस्तु गौणमपि वसन्तमाह,

माघश्च फाल्गुनश्चैव वसन्तऋतुरिष्यते ।
मधुश्च माधवश्चापि मुख्यो द्वेधा ऽयमुच्यते ॥

सोऽयं चान्द्रो वसन्तः ।

वृद्धगर्गस्तु सौरमप्याह,

मीनमेषौ रविर्यावद्वसन्तस्तावदिष्यते ।
नृयुग्मवृषभौ ग्रीष्मो ऽनन्तराश्च ऋतुः शरत् ॥ इति ।

अनन्तराः कर्कसिंहकन्यातुलाः राशयः शरदृतुः ।

बौधायनोऽपि, मीनमेषयोर्मेषवृषयोर्वा वसन्त इति ।

ब्राह्मणं प्रति सति संभवे वसन्तावश्यकतामाह

बृहस्पतिः,

विनतुर्ना वसन्तेन कृष्णपक्षे गलग्रहे ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥ इति ।

त्रैवर्णिकसाधारणकालमाह "विप्रं वसन्ते" इत्युपक्रम्य

**गर्गः,**

माघादिशुक्रान्तिकपञ्चमासाः

साधारणा वा सकलद्विजानाम् । इति ।

**नारदोऽपि,**

शरद्ग्रीष्मवसन्तेषु व्युत्क्रमात्तु द्विजन्मनाम् ।

मुख्यं साधारणं तेषां व्रतं माघादिपञ्चसु ॥

**वृद्धवसिष्ठोऽपि,**

विप्राणामुपनयनं वसन्तसमये, धराधिनाथानाम् ।

ग्रीष्मर्तौ, शरदि विशां मासाः साधारणाश्च माघाद्याः॥ इति।

**कश्यपोऽपि,**

ऋतौ वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथ ।

विशां मुख्यं च सर्वेषां द्विजानां चोपनायनम् ॥ इति ।

अत्र विप्रादिपदैरेव द्विजप्राप्तौ पुनर्द्विजानां चेति समुच्चयाभिधानं द्विजानुलोमजाभिप्रायेणेति मन्तव्यम् । ततश्च मूर्धावसिक्तादीनां क्षत्रियादिकाल एवोपनयनं सिध्यति । तेषां तद्धर्मत्वात् ।

मासानाह वृद्धगार्ग्यः,

माघादिमासषट्के तु मेखलाबन्धनं मतम् ।

चूडाकरणमन्नं च श्रावणादौ विवर्जयेत् ॥

एतेऽपि षट् त्रैवर्णिकसाधारणा इत्युक्तं **मैत्रायणीयगृह्ये,** माघादिषण्मासाश्च सर्ववर्णानामिति ।

**राजमार्तण्डः,**

**माघे मासि महाधनो धनपतिः प्रज्ञायुतः फाल्गुने**

**मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः ।**

वैशाखे निखिलोपभोगसहितो ज्येष्ठे वरिष्ठो बुध-
स्त्वाषाढे सुमहाविपक्षविजयी ख्यातो महान् पण्डितः ॥

**चण्डेश्वरः,**

माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः ।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥
ज्येष्ठे गृही च नीतिज्ञ आषाढे क्रतुभाजनः ।
मार्गशीर्षे भवेद्भ्रष्टः शेषे दुःखमवाप्नुयात् ॥ इति ।

**नारदोऽपि,**

स्वकुलाचारधर्मज्ञो माघमासेऽथ फाल्गुने ।
विधिज्ञश्चार्थवांश्चैत्रे वेदवेदाङ्गपारग ः ॥
वैशाखे धनवांश्चैव वेदशास्त्रविशारदः ।
उपनीतः कलाज्ञश्च ज्येष्ठे विधिविदां वरः ॥ इति ।

एतेन माघादिषण्णां मासानां नित्यत्वे सत्येव काम्यत्वमपि सिध्यति । यत्तु

मृगकुम्भगते भानौ मध्यमं मीनमेषयोः ।
उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् ॥

इति बृहस्पतिना मिथुनार्कस्याधमत्वमुक्तं, तद्ब्राह्मणाभिप्रायेण । तं प्रति वसन्तस्यैव मुख्यत्वात् । आषाढस्य च कथमपि वसन्तत्वाभावात् । क्षत्रियं प्रति तु न तस्याधमत्वम् । ग्रीष्मत्वेन मुख्यत्वात् । एवं वैश्यं प्रत्यपि साधारणकालत्वान्मुख्यत्वमवे । तस्मादियमुत्तमादिव्यवस्था ब्राह्मणं प्रत्येव । अत्राषाढो हरिशयनात्प्रागेव ग्राह्यः ।

नन्वयं मार्गशीर्षप्रतिषेधः कं प्रति । न तावद्ब्राह्मणक्षत्रियौ प्रति । तयोर्दक्षिणायननिषेधेनैव तदप्राप्तेः । नापि वैश्यं प्रति ।

तस्यापि शरद्वच्छिन्नदक्षिणायनस्यैव विधानात्तदप्राप्तेः । नापि नित्यानुवादः । निष्प्रयोजनत्वादिति चेन्न । मैवम् । मार्गशीर्षाद्युत्तरायणवादिमते मार्गशीर्षप्राप्तौ निषेधप्रवृत्तेः सावकाशत्वात् । न च पौषेऽतिप्रसङ्गः । सामान्येन एव तस्य निषिद्धत्वादित्यलम् ।

एतेषु षट्स्वपि मासेषु ब्राह्मणस्य सर्वदोषापवादकतया चैत्रः प्रशस्तः ।

तथाच बृहस्पतिः,

गुरौ भृगौ नष्टगते च चैत्रे कार्यं न मङ्गल्यमनर्थकारि ।
मीनास्थितेऽर्के खलु चैत्रमासे शुभप्रदो ब्राह्मणमौञ्जिबन्धः ॥
गोचराष्टमवर्गाभ्यां गुरुशुद्धिर्न लभ्यते ।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ ॥
शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे ।
व्रतोपनयनं कार्यं चैत्रे मीनगते रवौ ॥
जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ ।
मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ ॥
अतीव नष्टे सुरराजपूज्ये सिंहस्थिते वा द्विजपुङ्गवानाम् ।
व्रतं प्रशस्तं खलु मासि चैत्रे कर्त्तुश्चिरायुःसुखसंपदे स्यात् ॥

इति ।

ज्येष्ठापत्योपनयने ज्येष्ठमासनिषेधे

गर्गः,

ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैवहि ।
उपनीतस्य पुत्रस्य जडत्वं मृत्युमादिशेत् ॥

इति ।

अथ जन्ममासनिर्णयः,

**तत्र राजमार्त्तण्डः,**

वसन्तसमये कुर्यादब्दे गर्भाष्टमेऽपि वा ।
मेधावी मेखलाबन्धं जन्ममासेऽथ जन्मभे ।
यज्वा वसन्तसमये बहुवित्तभागी
गर्भाष्टमे विविधशास्त्रविशारदस्तु ।
वेदार्थपालनपरः खलु जन्ममासे
ऋक्षेऽपि जन्मनि बटुः क्रतुभाजनं स्यात् ॥

शौनकोऽपि,

जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मराशौ ।
व्रतेन विप्रो न बहुश्रुतोऽपि प्रज्ञाविशेषैः प्रथितः पृथिव्याम् ॥
गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबन्धने तु ।
ततोऽधिकं जन्मसु तारकासु मासेऽथवा जन्मनि वाडवानाम् ॥

वाडवाः ब्राह्मणाः । जन्मस्विति बहुवचनं तिसृणां जन्मताराणां परिग्रहाय । यस्तु

विवाहे मेखलाबन्धे जन्ममासं विवर्जयेत् ।
विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम् ॥ इति ।
न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि वा ।
आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः ॥

इति गर्गनारदाभ्यां जन्ममासनिषेधः कृतः, स गर्भाष्टमवर्षातिरिक्तवर्षविषयः ब्राह्मणातिरिक्तविषयो वा । जन्मतिथिपक्षनिषेधस्तु विषयविशेषव्यवस्थापकप्रमाणाभावात्सर्वविषय एवेत्यवगम्येत ।

**अथ पक्षः,**

**तन्निर्णयमाहाश्वलायनः,**

उदगयनापूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगो-

दानविवाहा इति ।

आपूर्यमाणपक्षः शुक्लपक्षः ।

कालविधानेऽपि,

शुक्ले पक्षे निर्मले शीतभानौ
राशौ चर्क्षे स्याच्छिशोर्मौञ्जिबन्धः ।

बृहस्पतिः,

शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना । इति ।

स्मृत्यन्तरेऽपि,

शुक्लपक्षः शुभः प्रोक्तः कृष्णपक्षे त्रिधा कृते ।
अन्त्यभागं विना ऽन्यौ द्वौ गणितौ मध्यमाधमौ ॥ इति ।

शुक्लपक्षस्य प्राशस्त्ये हेतुमाह वत्सः,

पूर्वाह्णः पूर्वपक्षश्च उत्तरायणमेवच ।
देवानामप्यहश्चेति दिवसो निर्मलस्तथा ॥ इति ।

## अथ तिथयः ।

तत्र बृहस्पतिः,

द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ॥
द्वादश्येकादशी चैव मध्यमास्तिथयस्तथा ।
मध्यमाश्च प्रशंसन्ति चन्द्रे च बलसंयुते ॥
कृष्णे चैव प्रशस्ताः स्युस्तिथयश्चोपनायने ।

द्वादश्येकादशी चैवेत्यत्र शुक्ले इत्यनुषङ्गः । मध्यमा इति शुक्लपक्षीयाः मध्यमाः प्रशस्ताश्च तिथयश्चन्द्रस्य बलवत्त्वे कृष्णपक्षेऽप्युपनयने स्युरिति प्रशंसन्त्येवाचार्याः ।

तथाच नृसिंहः,

तृतीया पञ्चमी षष्ठी द्वितीया वापि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः ॥

धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा ।
कृष्णे त्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ॥
द्वादश्येकादशी चैव मध्यमे च प्रचक्षते । इति ।

धर्मो दशमी । कामः त्रयोदशी । ते उभे शुक्ले कृष्णे चेत्यन्वयः। प्रथमा प्रतिपत् । साऽपि कृष्णे पक्षे चन्द्रबले सति ग्राह्या ।

तथा च बृहस्पतिः,

कृष्णे च प्रथमा पूज्या कदाचिच्छुभगे विधौ । इति ।

यत्तु मदनरत्नेन प्रथमा इति बहुवचनान्तं पाठं कल्पयित्वा प्रथमा आद्याः पञ्चम्यन्ता इति व्याख्यातं, तदसत् । पूर्ववाक्ये कृष्णपक्षीयषष्ठीसप्तम्यादीनामपि ग्रहणेन परिसंख्याऽसंभवात् ।

द्वादश्येकादशी चैव मध्यमा चोपनायने ।
प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे विधौ ॥
चन्द्रे बलयुते लग्ने वर्णानामतिलङ्घने ।
शेषेषु वर्जयेद्विद्वान् द्विजानामुपनायनम् ॥

इति व्यासवाक्ये कृष्णे च प्रतिपादिनं शुभकरमिति पूर्वोक्तबृहस्पतिवाक्ये च साक्षात्प्रतिपच्छब्दोपादानाच्च ।

बृहस्पतिः,

चन्द्रे बलयुते लग्नाच्छुभभावे शुभेक्षिते ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके ॥ इति ।

कृष्णे च प्रथमा पूज्येत्यस्यानन्तरमाह

नारदः,

शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा ।
त्रयोदशी च दशमी सप्तमी व्रतबन्धने ॥
श्रेष्ठास्त्वेकादशी षष्ठी द्वादश्येतास्तु मध्यमाः ।
एकां चतुर्थीं संत्यज्य कृष्णपक्षे तु मध्यमाः ॥

आपश्चम्यास्तु तिथयः पराः स्युरतिनिन्दिताः। इति।

**वसिष्ठोऽपि,**

विधातृगौरीफणिषण्मुखेन्द्रयमास्मकामास्तिथयः प्रशस्ताः।
मध्येऽर्करुद्रेऽपि च ते प्रशस्ते मुहूर्त्तमनुज्ञर्क्षगते शशाङ्के॥
त्यक्त्वा चतुर्थीमपि कृष्णपक्षे त्वाद्यं त्रिभागं शुभदं व्रते च। इति।

विधाता द्वितीया। गौरी तृतीया। फणिः पञ्चमी। षण्मुखः षष्ठी। इन्द्रः सप्तमी। यमश्चतुर्थी। कामः त्रयोदशी। अर्को द्वादशी। रुद्र एकादशी।

अत्रेयं व्यवस्था। कृष्णपक्षे प्रतिपच्चतुर्दश्योरुपादानं व्रात्योपनयनविषयम्।

"वर्षाणामतिलङ्घने" "कुमारे वयसाधिके" इति व्यासबृहस्पतिवाक्याद्। अतिलङ्घनं षोडशाद्यतिक्रमः। ततश्चानध्यायत्वेन दुष्टफलकत्वेन च तन्निषेधो नातीतकालबटुविषय इति न विरोधः। चतुर्थीसप्तमीत्रयोदशीनां गलग्रहत्वेऽप्युपादानं मूकाद्युपनयनविषयम्। तेषामध्ययनाभावेन तस्यादोषत्वात्। यत्तु बृहस्पतिनृसिंहवासिष्ठैरुत्तमत्वेनोक्तायाः षष्ठ्याः नारदेन मध्यमत्वमुक्तं, तद्वर्गमते तस्याः गलग्रहत्वमभिप्रेत्येति न विरोधः।

**नृसिंहप्रसादे,**

नं च षष्ठ्यामथाष्टम्यां पञ्चदश्यां च पर्वणि।
प्रतिपत्सु न कर्त्तव्यो न विष्टिकरणे तथा॥ इति।
अत्र षष्ठीनिषेधः प्रदोषयुक्तषष्ठीविषयः।
षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका।
प्रदोषे न त्वधीयीत तृतीया नवनाडिका॥

इति मुहूर्ततत्त्ववाक्यात् । प्रातिपन्निषेधस्तु शुक्लप्रतिपद्विषय इति न विरोधः ।

**संग्रहेऽपि,**

रिक्ताऽष्टमीपर्वतिथीननध्यायांश्च वर्जयेत् । इति ।

**अपरार्केऽपि,**

नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे चैत्र भास्करे ।
कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे ॥

निरंशलक्षणं ग्रन्थान्तरे,

राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते ।

अनध्यायान् सोपपदाचातुर्मास्यद्वितीयादींस्त्वध्ययनप्रकरणे वक्ष्यामः ।

तत्र केषुचित्प्रतिप्रसवमाह **भरद्वाजः**,

या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥ इति ।

गलग्रहानाह **राजमार्त्तण्डः**,

त्रयोदश्याश्चतुष्कं च सप्तम्यादिदिनत्रयम् ।
चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः ॥

**मुहूर्त्ततत्त्वेऽपि,**

प्रतिपत्पूर्वचतुष्कं नवमीपूर्वत्रयं चतुर्थी च ।
अष्टौ गलग्रहास्त्याज्या गर्गस्य मते तथा षष्ठी ॥ इति ।

**राजमार्त्तण्डः,**

आरम्भानन्तरं यत्र प्रत्यारम्भो न सिध्यति ।
गर्गादिमुनयस्सर्वे तमेवाहुर्गलग्रहम् ॥

कारिकानिबन्धे,

अनध्यायस्य पूर्वेद्युरनध्यायात्परेऽहनि ।
व्रतारम्भं विसर्गं च विद्यारम्भं न कारयेत् ॥ इति ।

अनध्यायात्परेहनीति द्वितीयेतरविषयम् । बृहस्पत्यादिभिः तस्याः साक्षादुपादानात् ।

नारदोऽपि,

कृष्णपक्षे चतुर्थीं च सप्तम्यादिदिनत्रयम् ।
त्रयोदशीचतुष्कं च अष्टावेते गलग्रहाः ॥ इति ।

अत्र कृष्णपक्षग्रहणं निन्दातिशयप्रतिपत्त्यर्थं न तु शुक्लचतुर्थ्यादिकानामुपादेयताप्रतिपत्त्यर्थम् । दग्धपक्षच्छिद्रादितिथीनां सामान्यनिषेधेनैवात्रापि निषेधोऽवगन्तव्यः ।

अथ तिथिफलानि । तत्र बादरायणः,

प्रतिपदि मदिरासक्तः श्रुतिमेधाधिको द्वितीयायाम् ।
नीतिज्ञो मेधावी जितसकलारिस्तृतीयायाम् ॥
मन्दधिया हतचित्तो दीनश्चपलश्चतुर्थ्यां स्यात् ।
पञ्चम्यां बहुवित्तः पूर्णायुर्धनपतिर्मतिमान् ॥
षष्ठ्यामशुचिः सततं सप्तम्यां व्याधिसंतप्तः ।
अल्पायुरथाष्टम्यां नवमे धनवर्जितः सदा पुरुषः ॥
दशम्यामर्थसंपत्तिरेकादश्यां गुणान्वितः ।
द्वादश्यां नीतिशास्त्रज्ञो निधनाय त्रयोदशी ॥
चतुर्दश्यां भवेन्नाशः पञ्चदश्यां क्षयी भवेत् । इति ।

## अथ वाराः ।

तत्र नारदः,

गुरुशुक्रबुधानां तु वाराः श्रेष्ठतमाः स्मृताः ।
अधमः सोमवारस्तु सूर्यवारस्तु मध्यमः ॥

वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः ।
अस्तं गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनि ॥
आरो भौमः । द्विजन्मनि उपनयने ।

बृहन्नारदोऽपि,

आचार्यकाव्यसौम्यानां वाराः शस्ताः शनीनयोः ।
वारौ मध्यफलौ प्रोक्तौ निन्दितावितरौ व्रते ॥
इनः सूर्यः ।

बृहस्पतिः,

पापग्रहाणां वाराः स्युर्न शुभाश्चन्द्रवासरः ।
सिते पक्षे प्रशस्तः स्यात्कृष्णे वारो विधोर्न हि ॥
शुभो बुधो नास्तमितः पापग्रहयुतो न च ।

वृद्धगर्गः,

शाखाधिपे बलिनि केन्द्रगते च मौञ्जी-
बन्धस्तदीयदिवसेषु शुभाय क्लृप्तः ।
अस्मिन्बलेन रहिते तु पुनर्द्विजानां
स्याद्वर्णसंकर इति प्रवदन्ति तज्ज्ञाः ॥
तदीयदिवसेषु शाखाधिपतिवारेषु ।

नारदः,

शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते ॥

शाखेशानाह स एव,

दृश्यमाने गुरौ शुक्रे शाखेशे चोत्तरायणे ।
वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात् ॥ इति ।
तत्तच्छाखाध्येतॄणां तत्तच्छाखाधिपवारे उपनयनं कार्यमित्याह

**वराहः**,

गुरोः कवेर्लोहितस्य मिहिरस्य च वासराः।
ऋग्यजुःसामाथर्विणां शस्ताः स्युर्व्रतबन्धने॥
लोहितोऽङ्गारकः। मिहिरः सूर्यः।

**बृहस्पतिः**,

बह्वृचानां गुरोर्वारो यजुर्वेदजुषां कवेः।
सामगानां धरासूनोरथर्वविदुषां रवेः॥ इति।

शाखेशवत् वर्णेशेऽपि बलवति उपनयनं कार्यम्।

तथाच **पराशरः**,

सदाऽनुकूले चैकस्मिन् वर्णेशे बलशालिनि।
ब्राह्मणादेः प्रकुर्वीत कुमारं व्रतचारिणम्॥

**वर्णेशानाह स एव**,

पती सितज्यौ विप्राणां नृपाणां कुजभास्करौ।
वैश्यानां शशभृत्सौम्याविति वर्णाधिपाः स्मृताः॥ इति।

**अर्णवोऽपि**,

ब्राह्मणस्य गुरुः प्रोक्तो नृपस्य ज्योतिषां पतिः।
बुधो वैश्यस्य शूद्रस्य सुखदः शीतदीधितिः*॥

वारफलं **राजमार्त्तण्डे**,

मेधा भानुदिने जडः शिशिरगौ चन्द्रात्मजे बोधवान्
पश्चत्वं कुजमन्दयोर्भृगुसुते वाग्मी बलीयान् शुचिः।
षट्कर्माभिरतः सुखी सुरगुरौ विद्वांश्चिरायुर्भवेत्
धिष्ण्ये पापनिपीडितेऽथ हिमगौ मूढो गतायुर्भवेत्॥ इति।

---

* एतदनन्तरम् अत्र शूद्रशब्देन पारशवो गृह्यते। तस्य "एतया निषादस्थपतिं याजयेत्" इति यागदर्शनेन संस्कारावश्यंभावात् इत्याधिकः पाठः पुस्तकान्तरे।

अत्र भौमवारस्य दुष्टफलत्वं सामगातिरिक्तविषयम् ।

विकुजार्किदिनं शस्तं सामगानां कुजः शुभः ।

इति बृहस्पतिस्मरणात् । कुजो भौमः । आर्किः शनैश्चरः । तदुभयातिरिक्तं दिनमुपनयने शस्तम् । तस्यापवादः सामगानां कुजः शुभ इति । यदा तु स्वशाखाधिपतिवारो न लभ्यते तदा शाखान्तराधिपवारोऽपि ग्राह्यः सामान्यविधिबलात् । विशेषविधिस्तु प्राशस्त्यार्थो न परिसंख्यार्थः । सामान्यविध्यानर्थक्यादिति ।

### अथ नक्षत्राणि ।

तत्र **बृहस्पतिः**,

त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ।

त्वाष्ट्रे सौम्यपुनर्वस्वोः प्रशस्तं ह्यौपनायनम् ॥

मैत्रमनुराधा । वासवं धनिष्ठा । त्वाष्ट्रं चित्रा । सौम्यं मृगशिरः ।

**नारदोऽपि**,

श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च ।

विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ॥

अर्कत्रयं हस्ताचित्रास्वातयः । अन्त्यं रेवती । इज्यः पुष्यः । चन्द्रो मृगशीर्षम् । अदितिः पुनर्वसुः । विष्णुत्रयं श्रवणधनिष्ठाशततारकाः । अब्जयोनिभं रोहिणी । उत्तरादीनां श्रेष्ठत्वं चन्द्राशुद्धावपीत्याह

**वसिष्ठः**,

उत्तरासु तिसृषूपनायनं हस्तमैत्रमृगरोहिणीष्वपि ।

त्वाष्ट्रपूषभपुनर्वसुष्वपि श्रेष्ठमप्यशुभभागगे विधौ ॥ इति ।

अथ मध्यमानि । तत्र **बृहस्पतिः**,

वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा ।

अश्विभे षट्सु भेषूक्तं मध्यमं व्रतबन्धनम् ॥
शेषेषु वर्जयेद्विद्वान् द्विजानामुपनायनम् ।
मध्यमानां शुद्धत्वं चन्द्रानुकूल्ये सत्येव भवतीत्याह

**वसिष्ठः,**

दस्रपुष्यवसुवारुणानिलश्रोत्रभेष्वपि च यद्व्रतं विधौ ।
शोभनांशकगते शुभावहं मध्यमानि कथितानि भानि तु ॥

अथ वर्ज्यानि । तत्र **बृहस्पतिः,**

कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः ।
पूर्वात्रये च सार्पक्षे न कुर्यादौपनायनम् ॥ इति ।

सार्पर्क्षमश्लेषा ।

**केचित्तु ब्राह्मणस्य पुनर्वसुनिषेधमाहुः ।**

तत्र **राजमार्तण्डः,**

चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि ।
पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ॥

**स्मृत्यन्तरेऽपि,**

त्र्यहःस्पृशि मले मासि शूद्रत्वमधिगच्छति ।
पुनर्वसौ कृतो विप्रः पुनस्संस्कारमर्हति ॥ इति ।

**दीपिकायामपि,**

जीवार्केन्द्वडुशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे
स्वाध्याये वेदवर्णाधिपइह शुभदे क्षौरभे नादितौ च ।
शुक्रार्केज्यर्क्षलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दुं
नो जीवास्तातिचारेऽर्कसितगुरुदिने कालशुद्धौ व्रतं स्यात् ॥ इति ।

अन्ये तु कृतः उपनीतो विप्रः केन चिन्निमित्तेन पुनस्संस्कारं चेदर्हति तदा पुनर्वसाविति वर्णयन्ति । तदपरे न सहन्ते । पुनःपदेनैवोपनयनावृत्तिशुद्धौ कृतपदोपादानवैयर्थ्यात् । तेन

विप्रपदोपादानात्क्षत्रियादीनामनिषेधः । अत्र येषामुत्तमत्वेन परिगणनं तेषामेवान्यत्र मध्यमत्वेनाभिधानं केवलोत्तमादपकर्षं गमयति । कैश्चिज्ज्येष्ठाऽप्युपनयने ग्राह्येत्युक्तम् । तथा च

भुजबलः,

हस्तत्रये दैत्यरिपुत्रये च शक्रेन्दुपुष्याश्विनिरेवतीषु ।

राजमार्त्तण्डोऽपि,

हस्ते चित्राश्विशक्रादितिविधिवरुणोपेन्द्रपुष्येन्दुपौष्ण-
स्वातिष्वव्याहतासु स्मृतमुपनयनं भार्गवाद्यैर्मुनीन्द्रैः ।

श्रीपतिनिबन्धेऽपि,

अश्विनीमृगचित्रासु हस्ते स्वात्यां च शक्रभे । इति ।

अथ वेदविशेषेण नक्षत्रविशेषो ज्योतिर्निबन्धे.

मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥
पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥
पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् ।
प्रशस्तं मेखलाबन्धे बटूनां सामगायिनाम् ॥
मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥

व्यवहारनिबन्धेऽपि,

हस्तत्रये सार्पशिवर्क्षपूर्वा·
मूलेषु बह्वृचबटूपनयः प्रशस्तः ।
तिष्यादितिद्रुहिणसूर्यशशाङ्कपौष्ण-
मैत्रोत्तरासु यजुषां रशनानिबन्धः ॥
विश्वाश्वितिष्यशिवविष्णुकरोत्तरासु

यज्ञार्थदो व्रतविधिः ... सामगानाम् ॥
शशाङ्कहस्तत्रिपुनर्वसौ च
पुष्याश्विभेऽथर्वविदो विधिश्च ।
शार्ङ्गधरीयेऽपि,
मूलार्द्रश्रवणाश्लेषापूर्वात्रयकरत्रये ।
बह्वृचवटोर्व्रतं देयं विद्यावित्तसुखाप्तये ॥
त्र्युत्तरारोहिणीहस्तरेवतीमृगमैत्रभे ।
आदित्यपुष्यभे शस्तं यजुषां मौञ्जिबन्धनम् ॥
पुष्याश्विनीधनिष्ठार्द्राश्रुतिहस्तोत्तरात्रये ।
मौञ्जीबन्धः शुभः प्रोक्तः सामगस्य बटोर्बुधैः ॥
हस्तपुष्यमृगादित्यपूषवस्वश्विभैः स्मृतम् ।
अथर्वशाखिनां शस्तं रशनाबन्धनं बुधैः ॥ इति ।
पुरुषविशेषेण नक्षत्रविशेषमाह नृसिंहः,
रौद्रेऽशिवाद्द्विजः कुर्याद्वैष्णवे वैष्णवस्तथा ।
वासवर्क्षे सवर्णश्च वारुणे कुण्डगोलकौ ॥ इति ।

प्रातिस्विकनक्षत्रासंभवे सामान्यतो विहितानि नक्षत्राणि ग्राह्याणि । अन्यथा सामान्यविध्यानर्थक्यापत्तेः । विशेषविधीनां तत्प्राशस्त्यमात्रपरत्वेनान्यपरिसंख्यार्थत्वाभावात् ।

अत एव सारसमुच्चये,
मघाग्नेयविशाखेन्द्रयाम्यं हित्वा च वारुणम् ।
व्रते शस्तानि सर्वेषां चेच्छाखोक्तं न लभ्यते ॥
शार्ङ्गधरीयेऽपि,
श्रवणादित्रयपौष्णादिद्वये हस्तत्रये मृगे ।
सर्वेषां मेखलाबन्धः शुभः प्रोक्तो द्विजन्मनाम् ॥ इति ।
उक्तान्यपि नक्षत्राणि दुष्टग्रहाक्रान्त्यादिदुष्टानि त्याज्यानि ।

तथाच ऋक्षोच्चये,

दशयोगचक्रशुद्धैर्नक्षत्रैः कारयेच्छुभं कर्म ।
केतुतमःसूर्यार्किक्षितितनयानुपहतैः षड्भिः ॥ इति ।

तदेतत्सर्वं विवाहप्रकरणे वक्ष्यामः । अत्र जन्मर्क्षविधिनिषेधयोर्गतिर्जन्ममासनिर्णये पूर्वमुक्ता । विशेषान्तरमप्याह

नारदः,

जन्मभाद्दशमं कर्म संघातर्क्षं च षोडशम् ।
अष्टादशं सामुदायं त्रयोविंशं विनाशनम् ॥
मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु । इति ।

वसिष्ठोऽपि,

उक्तेष्वेतेषु ऋक्षेषु शुभांशेषूपनायनम् ।
कुर्वीत शुभकामस्तु नैव क्रूरांशकेन तु ॥ इति ।

## अथ योगाः ।

तत्र बृहस्पतिः,

व्याघातं परिघं वज्रं व्यतीपातं च वैधृतिम् ।
गण्डातिगण्डशूलं च विष्कम्भं चैव वर्जयेत् ॥
शिष्टाष्टादशयोगेषु प्रशस्तं ह्युपनायनम् ।

वर्ज्ययोगेषु विशेषमाह श्रीपतिः,

सवैधृतिस्तु व्यतिपातनामा
सर्वोऽप्यनिष्टः परिघस्य चार्द्धम् ।
तिस्रस्तु योगे प्रथमे सवज्रे
व्याघातसंज्ञे नव पञ्च शूले ॥
गण्डेऽतिगण्डे च षडेव नाड्यः
शुभेषु कार्येषु विवर्जनीयाः । इति ।

### अथ करणानि ।

तत्र बृहस्पतिः,

बवादीनां तु षट्कं स्यादुपनाये सुपूजितम् ।
शकुन्यादीनि विष्टिं च वर्जयेत्तु विशेषतः ॥ इति ।

### एवं पञ्चाङ्गशुद्धौ पूर्वाह्णादिनिर्णयः ।

स्कन्दपुराणे,

ऊर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्त्तानां तु पञ्चकम् ।
पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् ॥
अपराह्णस्ततः प्रोक्तो मुहूर्त्तानां तु पञ्चकम् । इति ।

तत्रापराह्णे उपनयनं न कार्यम् ।

विनर्त्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥

इति नारदीयनिषेधात् । तस्य पैतृककालत्वेन दैवमानुषकर्मानर्हत्वाच्च ।

तथाच नारदः,

त्रिधा विभज्य दिवसं तत्रादौ कर्म दैविकम् ।
द्वितीये मानुषं कार्यं तृतीयेंऽशे तु पैतृकम् ॥ इति

तत्र उत्तमादिव्यवस्थामाह मनुः,

सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितम् ॥ इति ।

### अथ गुर्वादिबलम् ।

तत्र भीमपराक्रमः,

शस्ते शशिनि सुरेज्ये सवितरि शस्ते च मेखलाबन्धः ।
भवति चिरायुर्विद्वानुक्ते संवत्सरे विप्रः ॥

प्रशस्तस्थानान्याह **वसिष्ठः,**

धर्मार्थलाभसुतभाग्यगते सुरेज्ये
मौञ्जीव्रतं शुभकरं तु वटोः पितुश्च ।
जन्माष्टबन्धुरिपुरिष्फनभस्तृतीये
दारिद्र्यशोकबहुरोगकरं हि जन्म ॥
बन्धौ तृतीये रिपुराशिसंस्थे
इच्छन्ति पूजां दशमे सुरेज्ये ।
नेच्छन्ति पूजां जनिगे व्ययस्थे
पुरातना ह्यष्टमगेऽपि सूरौ ॥

धर्मो नवमं स्थानम् । लाभ एकादशम् । सुतः पञ्चमम् । अर्थो द्वितीयम् । भाग्यं सप्तमम् । बन्धुश्चतुर्थम् । रिष्फो द्वादशम् । नभो दशमम् । द्विजन्म द्वितीयं जन्म, उपनयनमित्यर्थः । जनिगे जन्मराशिस्थे ।

**नारदोऽपि,**

जन्मभ्रातृचतुर्थारिमृत्युकर्मव्यये गुरौ ।
मृत्युपातकरोगाश्च रिपुशस्त्रमतिर्मृतिः ॥
सुरापोत्वं च विज्ञेयं क्रमादेतत्फलं शिशोः ।
बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः ॥
यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् । इति ।

गुरुबलवद्वर्णेशादिबलमप्यपेक्षितमित्याह

**स एव,**

नैवोपनयनं कार्यं वर्णेशे दुर्बलेऽपि वा ।
स्ववेदाधिपतौ कुर्याद्बलिष्ठे व्रतबन्धनम् ॥ इति ।

अथ गुरोर्निमित्तविशेषेणाष्टमादिस्थानास्थित्यपवादः ।

तत्र भरद्वाजः,

धनुर्मीनकुलीरस्थो जीवो जन्मान्त्यमृत्युगः ।
अतिसौख्यं वटोः कुर्यादभिष्टवचनं यथा ॥
मृत्युरष्टमं स्थानम् ।

वृहस्पतिरपि,

वृषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयनादिषु ॥
एवं शुभेऽब्दे देवेज्यो जन्मकर्मव्ययारिभिः ।
तृतीयवन्धुरन्ध्रैश्च विना ऽन्यत्र शुभप्रदः ॥
विशेषाद्देवमन्त्री चेदशुभे गोचरे स्थितः ।
चापे मीने कुलीरे च शुभदश्चोपनायने ॥ इति ।

## अथ गुर्वाद्यस्तविचारः ।

तत्र वृद्धवसिष्ठः,

शाखेशगुरुशुक्राणां मौढ्ये बाल्ये च वार्द्धके ।
नैवोपनायनं कार्यं वर्णेशे दुर्बले सति ॥

लल्लोपि,

नीचशत्रुगृहगे पराजिते छन्नशत्रुसचिवेऽथवा भृगौ ।
यस्य मौञ्जिरशना निबध्यते स श्रुतिस्मृतिमखक्रियोज्झितः ॥

अत्रिः,

पराजितेऽतिनीचस्थे नीचे शुक्रे गुरौ तथा ।
व्रतिनं यदि कुर्वीत स भवेद्वेदवर्जितः ॥

वसिष्ठोऽपि,

नीचारिराशावतिनीचभागे
पराजिते वापि गुरौ सिते वा ।

योऽन्यत्र यस्य करोति नूनं
स वेदशास्त्रार्थविधर्महीनः ॥

वृद्धवसिष्ठोऽपि,

शुक्रेज्ययोरस्तगयोर्ग्रहाणां बलपूर्वकम् ।
समासन्नेऽपि गुरुबलं तुल्यमाचार्यशिष्ययोः ॥

शुक्रेज्यादिबलपूर्वकं यस्मादुपनयनं ततः कारणादाचार्यशिष्ययोर्गुरुबलमन्वेष्यम । ननु मुख्यकालगुरुशुद्ध्योरसन्निपाते कस्यातिक्रमः कार्य इत्यपेक्षायामाह

नारदः,

द्विजन्मकाले वर्षात् प्रोक्ते वर्षे गुरोर्यदि ।
गत विरोधे वर्षे स्याद्बलवच्छ्रुतिचोदनात् ॥
गुरोर्योगः स्मृतिप्रोक्ता त्रिवर्षादि श्रुतेः स्मृतिः । इति ।

बृहस्पतिरपि,

यस्माद् ग्रहेभ्यः कालस्तु बली संवत्सरः स्मृतः ।
शान्तिर्ग्रहाणां कर्तव्या न तु संवत्सरस्य च ॥ इति ।

वृद्धवसिष्ठोऽपि,

उक्तेऽपि वर्षे न बली गुरुश्चे-
दज्ञान्यया यस्य व्रतबन्धकर्म ।
अनुक्तवर्षेषु बलप्रदोऽपि
नैवैतयोरब्दबलं बलीयः ॥

अस्तेशगुरुशुक्राणामेकस्मिन् शत्रुनिर्जिते ।
विद्यार्थार्थिभिस्तत्र न कार्यमुपनायनम् ॥
अस्तेशे वा गुरौ शुक्रे स्वनीचगृहसंश्रिते ।
तदोपनीतः स्वल्पायुर्विद्यावित्तादिवर्जितः ॥

नीचांशसंस्थिते शुक्रे शाखेशे वा बृहस्पतौ ।
स्वकुलाचारविभ्रष्टो नीचकर्मरतो व्रती ॥
नीचर्क्षनीचांशकसंस्थिते च शाखेश्वरे वा स्फुजितीन्द्रपूज्ये।
व्रती शिशुर्हीनकुलमसक्तः शस्त्रोपजीवी स्वकुलं विसृज्य ॥
स्वारिनीचभगे जीवे शाखेशे वा भृगोः सुते ।
उपनीतस्तदा बालः क्षिप्रादन्त्यजसेवकः ॥
शाखेशगुरुशुक्राणामेकस्मिन्स्वारिराशिगे ।
परदारेष्वभिरत उपनीतस्तदा शिशुः ॥
शाखेशगुरुशुक्राणां मध्ये शत्रुनवांशके ।
एकस्मिन्नुपनीतो यस्तदा मूर्खः खलो भवेत् ॥
शत्रुराशौ तदंशस्थे चैकस्मिस्तत्र यो व्रती ।
शाखेशगुरुशुक्राणां महापातककारकः ॥
स्वनीचस्वारिषड्वर्गसंस्थे जीवेऽथवा सिते ।
शाखेशे वा तदा बालो महापातककृद् व्रती ॥
अधिशत्रुगृहस्थे वा तदंशस्थेऽथवा भृगौ ।
शाखेशे वा व्रती बालस्तदा चण्डालसेवकः ॥

**अस्यापवादमाह स एव,**

शत्रुनीचाधिशत्रुस्थे स्वांशे वा मित्रभागगे ।
शाखेशे वा गुरौ शुक्रे न नीचफलमश्नुते ॥
स्वमित्रराशिसंस्थे वा स्वमित्रांशकसंस्थिते ।
गुरौ भृगौ वा शाखेशे व्रती विद्यामवाप्नुयात् ॥
स्वमित्रगेहे मित्रांशसंश्रिते भृगुनन्दने ।
शाखेशे वा गुरौ वापि वेदविद्यायुतो व्रती ॥
स्वाधिमित्रगृहस्थे वा स्वाधिमित्रांशगेऽपिवा ।
गुरौ शाखाधिपे शुक्रे वित्तविद्याधिको व्रती ॥

स्वाधिमित्रगृहे स्वाधिमित्रांशकगते व्रती ।
गुरौ भृगौ वा शाखेशे वित्तविद्याविशारदः ॥
तुङ्गस्थे वा तदंशस्थे गुरौ शाखाधिपे सिते ।
उपनीतस्तदा बालो विद्यावान्धनवान्भवेत् ॥
स्वतुङ्गतुङ्गांशगते शाखेशे वा गुरौ सिते ।
व्रती शिशुर्बलायुष्यवृत्तविद्याविशारदः ॥ इति ।

अथ रविबलम् । तत्र **वसिष्ठः,**

शाखेशसूर्यवर्णेशगुरूणां बलपूर्वकम् ।
ततोऽन्येषां गुरुबलं मुख्यमाचार्यशिष्ययोः ॥

**राजमार्त्तण्डोऽपि,**

पितुः सूर्यबलं श्रेष्ठं शाखावर्णेशयोर्बटोः ।
सर्वेषां गुरुचन्द्रार्कबलं श्रेष्ठं व्रतादिषु ॥ इति ।

**रत्नमालाऽपि,**

वर्णाधिपे बलोपेते उपनीतिक्रिया हिता ।
सर्वेषां च गुरौ चन्द्रे सूर्ये च बलशालिनि ॥ इति ।

**भीमपराक्रमोऽपि,**

विप्राणां गुरुसितयो राज्ञां रविभौमयोर्बलं शस्तम् ।
इन्दोर्विशां रवीन्दुत्रिदशेज्यबलेऽखिलानां तु ॥ इति ।

## अथ लग्नानि ।

**तत्र वसिष्ठः,**

लग्नायसौम्यग्रहराशयो ये ग्राह्या न पापग्रहराशयो ये ।
ग्राह्याश्च तेऽपि प्रबलैश्च सौम्यैरधिष्ठिताश्चापि निरीक्षिता वा ॥
इति ।

लग्नार्थं शुभग्रहराशयो ग्राह्याः, नाशुभग्रहराशयः ।
तेऽपि शुभग्रहेण युक्ता दृष्टा वा ग्राह्या इत्यर्थः ।

तथाच **नारदः**,

राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः । इति ।

लग्नफलान्याह **वसिष्ठः**,

मेषे भवति वाक्कुण्ठो वित्तविद्यायुतो वृषे ।
युग्मे वेदान्तदर्शी च कुलीरे च षडङ्गवित् ॥
शिल्पकर्मरतः सिंहे षष्ठे भवति पण्डितः ।
तुलायां वणिजः प्राप्तिः काण्डपृष्ठस्तु वृश्चिके ॥
सर्वत्र पूजितश्चापे शूद्रवृत्तिर्मृगे तथा ।
राजप्रेष्यो भवेत्कुम्भे मीने वेदान्तपारगः ॥ इति ।

**अथ स्वाम्युदयविशेषेण लग्नफलनिर्णयः ।**

तत्र **नृसिंहः**,

गुरुशुक्रोदये शस्तमनस्तस्य बुधस्य च ।
पूर्वपक्षे विधोः शस्तं नेतरेषां द्विजन्मनि ॥
जीवोदये नृपद्वाःस्थो दीर्घायुर्धनवान्महान् ।
सितोदये महाज्ञानी वित्तवानायुषो गुणी ॥
उपनीतौ समादेश्यमेवं ग्रहवशात्फलम् ।

**बृहस्पतिरपि**,

उपनीतो रवेर्लग्ने हन्यते भूपते रुषा ।
तेन दृष्टे युते लग्ने बहुरोगी द्विजो भवेत् ॥ इति ।

**अथ ग्रहसंस्थानफलम् ।**

तत्र **वसिष्ठः**,

इष्टाः पञ्च ग्रहा यस्य राशेस्तल्लग्नसंज्ञकम् ।
रविचन्द्रेज्यमुख्यास्ते चत्वारो वा बलान्विताः ॥
नीचस्थिताः शत्रुगृहस्थिताश्च पराजिताश्चास्तमुपागताश्च ।
लग्ने ग्रहास्ते स्वफलं प्रदातुं क्षमा न किंचिद्रिपुदृष्टदेहाः ॥

ते च ग्रहाः के इत्यपेक्षायामाह स एव,

बुधे लग्नगते जीवे शुक्रे चाप्यथवा स्थिते ।
करोति व्रतिनं नूनं वित्तविद्यासुखान्वितम् ॥
द्वितीयस्था ग्रहाः सौम्याः सौख्यभोगकरास्सदा ।
तत्र पापग्रहास्सर्वे सर्वस्वफलनाशनाः ॥
तृतीयस्थाः शुभाः पापा वित्तभोगकरास्सदा ।
चतुर्थस्थानगास्सौम्याः संपद्भोगसुखप्रदाः ॥
पञ्चमस्थानगाः सौम्या नृपपूजार्थसिद्धिदाः ।
तत्र पापग्रहाः सर्वे सदा तत्फलनाशनाः ॥
षष्ठस्थाः खेचराः सौम्या दुःखशोकभयप्रदाः ।
तत्रस्थाः क्रूरखचराः सदा तत्फलनाशनाः ॥
लग्नात्सप्तमगाः सौम्या वित्तविद्यासुखप्रदाः ।
सर्वग्रहा अष्टमगा निधनाधनशोकदाः ॥
नवमे सौम्यखचरा वित्तायुष्यसुखप्रदाः ।
तत्र पापास्सौम्यखेटफलस्यैव विघातदाः ॥
सौम्याः कुर्वन्ति दशमे वृत्तविद्याधनान्वितम् ।
व्ययस्थानस्थिताः सर्वे कुर्वन्ति व्ययशीलिनम् ॥
खलं हीनं पापरतं बुद्धिहीनं विदेशगम् ।
सूर्यभौमशनिराहुकेतवः क्रूरसंज्ञखचराः क्षयचन्द्रः ।
पूर्णचन्द्रगुरुशुक्रसोमजाः सर्वसौम्यसहसौम्यखेचराः ॥

अथ दुष्टग्रहफलम् ।

रवौ लग्नादिकेन्द्रस्थे दोषः स्फुरितसंज्ञकः ।
तत्रोपनीतस्य शिशोः कुलनाशो भवेत्तदा ॥
कुजे लग्नादिकेन्द्रस्थे दोषः कुजितसंज्ञकः ।
तत्रोपनीतं बटुकं हन्ति वर्षान्न संशयः ॥

शनौ लग्नादिकेन्द्रस्थे दोषो रुदितसंज्ञकः ।
करोति महतीं पीडां व्रतिनो वा गुरोस्तथा ॥
राहौ लग्नादिकेन्द्रस्थे दोषो रन्ध्राह्वयो भवेत् ।
व्रतिनां जननीं हन्ति त्वथवा धनसञ्चयम् ॥
केतौ लग्नादिकेन्द्रस्थे दोषश्च ग्रामसंज्ञकः ।
समग्रव्रतिनां वृत्तवित्तविद्या विनाशयेत् ॥
लग्नषष्ठाष्टमान्त्यस्थः करोत्येव निशाकरः ।
व्रतिनो रोगमिथुनं निधनं दुःखसंचयम् ॥ इति ।

## अथ लग्नांशकफलम् ।

तत्र गुरुः,
विद्यान्वितः सदाचारो दानधर्मदयापरः ।
आयुष्मान् धनवांश्चैव सौम्यभृग्वङ्गिरोंऽशके ॥
भवतीति शेषः ।
विद्याहीनं दुराचारं दानधर्मविवर्जितम् ।
आयुःक्षयं सदारिद्र्यं पापांशे व्रतबन्धनम् ॥
बटुं करोतीति शेषः ।

**वसिष्ठोऽपि,**
कुलीरकांशं परिहृत्य सौम्य-
नवांशका मौञ्जिविधौ प्रशस्ताः ।
ते निन्दिताः क्रूरभचराणां
खेटस्य वर्गा अपिचैवमूह्याः ॥
न नैधनं नैधनशुद्धिभयं
न नैधनर्क्षं न च तन्नवांशः ।
न नैधनेशो न तदंशकेशो
लग्ने प्रशस्तो न च रात्रिनाथः ॥

प्रालेयरश्मौ यदि लग्नसंस्थे
वलक्षपक्षेऽपि भवेत्स रोगी ।
व्रती न सौम्यग्रहवर्गगेऽपि
खलोऽतिनिःस्वः श्रुतिकर्महीनः ॥

एवं सत्समयं वीक्ष्य शोभनं तु समादिशेत् ।
मङ्गले दिवसे तस्मिन् चन्द्रताराबलान्विते ॥ इति ।

नवांशकगणनाक्रममाह नृसिंहः,

मेषसिंहधनुषि ह्यजादय-
स्तौलिकुंभमिथुने तुलादयः ।
कन्यकामृगवृषे मृगादयो
मीनकर्क्यलिपु कर्कटादयः ॥ इति ।

## अथ चन्द्रांशकफलम् ।

तत्र वसिष्ठः,

सूर्यांशकगते चन्द्रे महापातककृद्व्रती ।
पुण्योक्तसेवी स्वांशस्थे नीचांशस्थः खलस्सदा ॥
श्रवणादितिकर्कांशसंस्थिते यदि शीतगौ ।
विद्यावान् धनवान् श्रीमान् वृत्तवान् जायते व्रती ॥
कुजांशकगते चन्द्रे शस्त्रजीवी खलो व्रती ।
सौरांशकगते चन्द्रे सदा चण्डालसेवकः ॥
बुधांशकगते चन्द्रे वेदवेदी भवेद् द्विजः ।
जीवांशकगते चन्द्रे साङ्गवेदविशारदः ॥
शुक्रांशके धनी दाता विद्यावृत्तविशारदः ।
स्त्रिभोग्राही यज्ञकृत्स्यात्सत्रदो भोगवान् भवेत् ॥
शुक्ले स्वांशे निशानाथे वित्तवान् यज्ञकृद्भवेत् ।
कृष्णे स्वांशगतश्चन्द्रो जातिभ्रंशं करोतिच ॥ इति ।

## अथ भावफलानि ।

तत्र भरद्वाजः,

सीमन्तजन्मचौलोपनीतियात्राप्रवेशने ।
अभिषेके विवाहे च शस्तं भावफलं विदुः ॥
असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।
शुभयुक्तेऽपिवा तेषां वदेच्छुभफलानि वै ॥

कश्यपोऽपि,

भास्करो लग्नगः कुर्याद्धृष्टं भूपतिसेवकम् ।
वसुस्थः स्वर्णरहितं भ्रातृस्थः सुखिनं सदा ॥
बन्धुगो दुःखिनं नित्यं सुतगो मतिवर्ज्जितम् ।
शत्रुगो रोगरहितं सप्तमो भोगवर्जितम् ॥
अष्टमो दृष्टिरहितं नवमो धर्महारिणम् ।
व्यापारगो भिषग्वृत्तिं दीर्घायुषमथायगः ॥
रिष्फगो हानियुक्तं च फलमेतद्गुरोरपि ।
सिते चन्द्रे लग्नसंस्थे शुभं स्यादसिते ऽशुभम् ॥
वसुगे स्याद्धनप्राप्तिस्तृतीये सुखसंस्थितिः ।
चतुर्थे बुद्धिवैषम्यं पञ्चमे सौख्यमुत्तमम् ॥
षष्ठे तु व्याधिपीडा स्यात्सप्तमे सुखसंगतिः ।
अष्टमे निधनप्राप्तिर्नवमे धर्मसंचयः ॥
दशमे स्यात्सदाचारो लाभे स्याद्धनसंचयः ।
दारिद्र्यं रिष्फगे विद्याच्चन्द्रे फलमुदाहृतम् ॥
मृतिर्नाशः सुखं काणो हानिर्वृद्धिर्मृतिर्गदः ।
अधर्मो दुर्मतिर्वृद्धिर्नाशो लग्नात्कुजे फलम् ॥
बुद्धिर्वृद्धिर्वित्तनाशो लाभः पुत्रो मृतिः सुखम् ।
आयुःक्षयो धर्मसौख्ये कोशलाभः क्षयः क्रमात् ॥

सौम्ये लग्नादिराशीनां फलमेतदुदाहृतम् ।
षष्ठाष्टमे विना जीवः सर्वत्र शुभकृत्सदा ॥
सर्वत्र शुभकृच्छुक्रः षष्ठसप्ताष्टमं विना ।
निन्दां हानिं सुखं रोगं द्यूनं कामं जडं मृतिम् ॥
त्रिपत्क्लेशौ सुखं मृत्युमुदयात् कुरुते शनिः ।
मेखलाबन्धकाले तु सर्वथा पञ्चमं गृहम् ॥
शुभयुक्तं प्रशंसन्ति तदालोकितमेव वा । इति ।

**संहितान्तरेऽपि,**

गृहप्रवेशे हिबुकं मौञ्जीबन्धे तु पञ्चमम् ।
विवाहे वर्जयेद् द्यूनं यात्राकाले तथाऽष्टमम् ॥
क्रूरग्रहयुक्तमित्यनुवर्त्तते ।

**वसिष्ठोऽपि,**

द्वादशस्थं रविं भौमः पश्यन्नाचार्यनेत्रहा ।
बलिनं बलवान्नूनमचिरान्नात्र संशयः ॥
विशेषान्निधनस्थाने ग्रहा नेष्टा व्रतादिषु ।
आचार्यमशुभा घ्नन्ति शिष्यं घ्नन्त्यशुभेतराः ॥
चन्द्रात्स्मरारिरन्ध्रेषु यद्येकस्मिन् शुभग्रहे ।
स्थिरधीयोगसंज्ञोऽयं शुभयोगो द्विजन्मनाम् ॥
केन्द्रत्रिकोणगे जीवे भानुः शुक्रोऽथवा व्यये ।
द्वितीये ज्ञे शुभो योगो द्विजानामुपनायने ॥
लग्नार्थभ्रातृगे जीवे शुक्रे वा ज्ञेऽथ कण्टके ।
त्रिषडेकादशे क्रूरा योगोऽयं व्रतउत्तमः ॥

**श्रीपतिः,**

लग्ने जीवे भार्गवे च त्रिकोणे
शुक्रांशस्थे स्याद्द्विजो वेदवेदी ।

सौरांशस्थे सूरिलग्ने सशुक्रे-
ऽविद्याशीलः प्रोज्झितः स्यात्कृतघ्नः ॥
सार्के जीवे निर्गुणोऽर्थेन हीनः
क्रूरः सारे स्यात्पटुः सत्समेनः ।
भानोः पुत्रेणालसो निर्घृणश्च
स्याच्छुक्रेन्दू जीववत्संप्रकल्प्यौ ॥
शन्यंशे ह्युदयाति मूर्खता ऽर्कभागे
क्रूरत्वं भवति च पापधीः कुजांशे ।
चन्द्रांशे त्वतिजडता बुधे पटुत्वं
यज्वत्वं गुरुभृगुभागयोर्गृणन्ति ॥

दृष्टिस्थानान्युक्तानि बृहज्जातके,

त्रिदशत्रिकोणचतुरस्रसप्तमा-
नवलोकयन्ति चरणाभिवृद्धितः ।
रविजामरेज्यरुधिराः परे च ये
क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ इति ।

निर्दोषलग्नाभावे विशेषमाह श्रीपतिः,

समस्तगुणसंपदां न खलु लब्धिरल्पैर्दिनै-
र्गुणप्रचुरता ततो बहुमता च दोषाल्पता ।
न भूरिगुणसंचये प्रभवतीह दोषोऽल्पको
ह्युदर्चिषि हुताशने सलिलबिन्दुरेको यथा ॥

अल्पैरित्युपलक्षणम् । बहुभिरपि तस्यालभ्यत्वात् ।

तथा च कश्यपः,

निर्दोषं गुणसंयुक्तं देवैरपि सुदुर्लभम् ।

तत्र विशेषमाह वसिष्ठः,

दोषोऽप्येको गुणान् हन्ति तद्विरोधी गुणो न चेत् ।

पञ्चगव्यमयं पूर्णकुम्भं मद्यलवो यथा ॥
दोषोऽप्येको निहन्त्येव सकलं पुण्यसंचयम् ।
लग्नोत्थं शुभखेटोत्थमनृतं सुकृतं यथा ॥
पञ्चाङ्गलग्नलग्नांशशुभग्रहकृतान् गुणान् ।
दोषोऽप्येको गुणान् हन्ति स्वैरिणी स्वजनानिव ॥
निहन्ति सिद्धामृतयोगजातान्
पञ्चाङ्गजातानपि लग्नजातान् ।
शुभग्रहोत्थानखिलान्गुणौघा-
नेकोऽपि दोषो हि यथा वृको ऽजान् ॥
गुणाननेकान् शुभखेटजातान्
पञ्चाङ्गलग्नामृतयोगजातान् ।
एकोऽपि दोषः सुतरां निहन्ति
स्वपुण्यराशीनिव कूटसाक्षी ॥ इति ।

अथ गुणाः ॥

तत्र स एव,

सर्वानिमानतिबलः स्फुरदंशुजालो
लग्नोपगः प्रशमयेत्सुरराजमन्त्री ।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥
एकोऽपि केन्द्रगस्सौम्यः सकलं दोषसंचयम् ।
विनाशयाति घर्मांशुरुदितस्तिमिरं यथा ॥
शुभग्रहः स्वोच्चसंस्थो लग्नं पश्यति चेद्यदा ।
तदा दोषा लयं यान्ति ग्रीष्मे कुसरितो यथा ॥
निरीक्ष्यमाणे लग्ने तु मित्रर्क्षस्थैः शुभग्रहैः ।
दोषा लयं ययुस्सर्वे लग्नलग्नांशसंभवाः ॥

स्वोच्चांशगैः शुभैर्लग्नैर्दृष्टे लग्ने यदा तदा ।
लग्नलग्नांशसंभूताः सर्वे दोषा लयं ययुः ॥
एकोऽपि सौम्यखचरः स्वाधिमित्रगृहस्थितः ।
आलोकयति चेल्लग्नं सर्वदोषविनाशकृत् ॥
मित्राधिमित्रस्वक्षेत्रसंस्थे सति शुभग्रहे ।
वीक्षमाणे यदा लग्नं तदा दोषा लयं ययुः ॥
ये पापखेटप्रभवाश्च दोषा
विलग्नलग्नांशकसंभवा ये ।
केन्द्रे गुरुस्तान्विमलीकरोति
फलं यथा ऽम्भः कतकद्रुमस्य ॥ इति ।

## अथ बटुमातृरजोनिर्णयः ॥

तत्र वृद्धगर्गः,
विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥
विवाहे विधवा नारी जडत्वं व्रतबन्धने ।
चौले चैव शिशोर्मृत्युस्तस्मादेतत्त्रयं सजेत् ॥ इति ।
रजोनुऽवृत्तौ बृहस्पतिरपि,
वैधव्यं च विवाहे स्याज्जड़त्वं व्रतबन्धने ।
चूडायां च शिशोर्मृत्युर्विघ्नो यात्राप्रवेशयोः ॥ इति ।
तच्च मातरि गर्भिण्यामपि न कार्यम् ।
तथा च स्मृत्यन्तरं,
सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् ।
गते तु पञ्चमे मासे गर्भादीनां मृतिर्भवेत् ॥ इति ।
अत्र मौञ्जीचूडयोः साहित्यं न विवक्षितम् ।
सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।

सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥

इतिनारदवचनविरोधात् । किं तु प्रत्येकमेव निषेधः । साहित्यं त्वेकक्रियान्वयित्वेन धवखदिरौ छिन्धीतिवत्, नैककालान्वयित्वेन ।

## अथ मण्डनोत्तरमुण्डननिर्णयः ॥

तत्र कात्यायनः,

पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥
चौलं मुण्डनमेवोक्तं वर्जयेद्वरणात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ॥ इति ।

उभयतः विवाहात्प्रागूर्ध्वं चेत्यर्थः । अत्र मौञ्जीमात्रस्य चोभयतो विधानाद्विवाहात्परं चौलसहितमौञ्ज्यनुष्ठानं न सिध्यति । चौलनिषेधस्यात्राप्यव्याहतत्वात् ।

विशेषान्तरं प्रागेवोक्तमिति नेहोच्यते ॥

## अथ सोदरोपनयननिर्णयः ।

तत्राश्वलायनः,

एकमातृप्रसूते वा कन्ये वा पुत्रकौ तयोः ।
सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनम् ॥

ज्योतिर्निबन्धे,

एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ इति ।

अस्यापवादो भट्टकारिकायम्,

एकस्मिन्वत्सरे चैव वासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥ इति ।

मङ्गलं सर्वोऽपि संस्कारः। विशेषान्तरं विवाहप्रकरणे वक्ष्यते।

## अथोपनेयनिर्णयः ।

तत्र ब्राह्मणक्षत्रियविशामुपनयनं "वसन्ते ब्राह्मणमुपनयीत" "गर्भाष्टमेऽष्टमेवाऽब्दे" इत्यादिश्रुतिस्मृतिभ्यामेव सिद्धम् । शूद्राणां तु तन्न भवत्येव । अशूद्राणामदुष्टकर्मणामुपनयनमिति आपस्तम्बेन शूद्रपर्युदासात् । शूद्र एकजातिरिति गौतमेन तस्यैकजातित्वाभिधानाच्च । तच्च पित्रादिना पुत्रादीनां कार्यमिति वक्ष्यते । ते च पुत्रादयो द्विविधाः । औरसाः क्षेत्रजादयश्च । तांश्चाह

**याज्ञवल्क्यः,**

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता यं वा स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं सुतः ।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ॥ इति ।

औरसा अपि द्विविधाः सजातीया विजातीयाश्च । तत्र सजातीयानामुपनयनं द्विजत्वेन प्राप्तम् । विजातीया अपि द्विविधाः । अनुलोमजाः प्रतिलोमजाश्च । तत्रानुलोमजानामुपनयनमाह

*** मनुः,**

स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः । इति ।

---

* स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः । इति ।
अस्यार्थः ।

स्वजातिजा सवर्णा अनन्तरा ऽनुकल्पत्वेनाम्नाता किंचिदपकर्षवती वा। ब्राह्मणस्य क्षत्रिया वैश्या च, क्षत्रियस्य वैश्या च। एतासु जाताः षट्। शूद्रापेक्षया ऽनन्तरवर्णस्याप्रसिद्धत्वात् स्वपदार्थस्त्रैवर्णिक एव। तेन शूद्रायां शूद्रजातस्य स्वजातिजाजन्यत्वेनाभिधानं न प्रसज्यते। न च

ब्राह्मणक्षत्रियविशां मातुरग्रे विजननम्।

---

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥

इत्यनेनानुलोमजानां यद् द्विजसादृश्यमुक्तं तत्र निमित्ताभिधानायेदमारभ्यते। स्वजातिजेति। स्वजातिजाः सवर्णास्ताभ्योऽनन्तराः पश्चादनुकल्पत्वेनाम्नाताः ब्राह्मणस्य क्षत्रियावैश्याशूद्राः क्षत्रियस्य वैश्याशूद्रे वैश्यस्य शूद्रा, तासु ये जाता मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणा द्विजातीनां षट् सुताः, ते द्विजधर्मिणः। द्विजानां धर्मो द्विजधर्मः सोऽस्ति एषां ते द्विजधर्मिणः द्विजात्युक्तोपनयनादिधर्मार्हा इत्यर्थः। क्षत्रियादिजाता इति वक्तव्ये यत् स्वजातिजानन्तरजा इत्युक्तं, तत् क्षत्रियादिषूरव्यादिसुतानां द्विजधर्मत्वव्युदासाय। तत्परिणयानिषेधेन तदुत्पन्नानां विगर्हितत्वात्। ततश्च सवर्णादिक्रमोढासवर्णासुतानामेव द्विजधर्मित्वमिति सिध्यति। स्वजातय इत्यनेनैव सिद्धौ यत् जेत्युपादानं तत् पत्नीत्वोत्पत्तिं गमयति। ततश्च सवर्णस्वैरिणीपरिग्रहानन्तरोढाक्षत्रियाद्युत्पन्नानामपि न द्विजधर्मत्वमिति सिध्यति। अनन्तरास्वपि पत्नीत्वमनुसन्धेयम्। तथैवोपक्रमात्। षट्संख्योपादानं द्विजातिस्त्र्यपत्यानामेव द्विजधर्मत्वं माभूत्किन्तु शूद्रापत्यानामपि तदास्त्वित्येवमर्थम्। सुत इति पुंस्त्वग्रहणं क्लीबादिव्युदासाय। उपनयनादिविशेषपरिहारेण द्विजधर्मिण इति सामान्योपादानं स-

इति सुमन्तुवचनेन सवर्णापुत्राणामुपनयनस्य प्राप्तत्वात् तदुपनयनविधानं व्यर्थमिति वाच्यम् । तथा सति षट्पदस्थाने त्रय इत्यभिधाने सवर्णापुत्राणां व्यवच्छेदलाभे सुमन्तुवचनविरोधापत्तेः । ऋष्यन्तरोक्तस्य मनुना विधाने वैयर्थ्यप्रसङ्गाच्च ।

अन्ये तु ब्राह्मणक्षत्रियवैश्यैः शूद्रायां जातांस्त्रीनादाय षट्त्वमुपनेयानां वर्णयन्ति । तदयुक्तम् । प्रतिलोमा धर्महीनाः शूद्रायां चेति गौतमवाक्येन शूद्रायां द्विजोत्पन्नस्य द्विजधर्महीनत्वबोधनात् । अत एव

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
तानन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥

---

कल्पद्विजधर्मप्राप्त्यर्थम् । यदा तु स्वजातिजाः सवर्णोत्पन्ना ये त्रयः सवर्णाः पुत्रास्तेभ्योऽनन्तरमसवर्णासु जाता मूर्धावसिक्तादयः षडनुलोमजाः सुतास्ते द्विजधर्मिणः. द्विजात्युक्तधर्मार्हा इति व्याख्यायते तदा क्रमोढास्वपि प्रथमोत्पन्नानां क्षत्रियादिसुतानां द्विजधर्मित्वं न स्यात् । विवाहतुगमनक्रमयोः शास्त्रीयत्वेऽपि पुत्रोत्पत्तिक्रमस्याशास्त्रीयत्वात् । यत्तु कैश्चिन्निषादोग्रकरणपरिहारेण ब्राह्मणक्षत्रियवैश्यैः स्वजातिजैः सहानन्तरजानां मूर्धावसिक्ताम्बष्ठमाहिष्याणां त्रयाणामेव षट्त्वमभिप्रेत्य द्विजधर्मत्वं व्याख्यातं, तन्न सुन्दरम् । ब्राह्मक्षत्रियविशां मातुरग्रे विजननमित्याद्युपदेशत एव द्विजधर्मत्वसिद्धौ द्विजधर्मातिदेशानर्थक्यात् । न चानन्तरजानां द्विजतुल्यताभिधानेन द्विजधर्मप्राप्त्यर्थः सिद्धस्यैवानुवादोऽयमिति युक्तम् । तेनैवार्थसिद्धौ षट् सुता द्विजधर्मिण इति पुनर्विध्यारम्भानर्थक्यात् । उभयस्वीकारे तु एकस्यैव द्विजधर्मिपदस्य मूर्धावसिक्तादित्रये द्विजधर्मविधायकत्वं ब्राह्मणादित्रये तदनुवादकत्वमिति विध्यनुवादविरोधाच्च । किं च

इति वचने "मातृनाम्नो मातृतो जातिकल्पना" इति वचने च मातृवर्णस्यातिदेश उपपद्यते । न च

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

इति वचने द्विजसादृश्यं द्विजानन्तरायां शूद्रायां समुत्पन्ने बोधितमिति मातृनामवर्णातिदेशस्तदीयवृत्तिप्राप्त्यर्थ एवेति वाच्यम् । यतो विगर्हिताभिधानस्वरसेन तस्मिन्नर्धश्लोके मातुरुपस्थितत्वेन च मातृसादृश्यमेव वाक्यस्यार्थो न तु द्विजसादृश्यं शूद्रायाम् । न च त्रैवर्णिकोत्पन्नस्य द्विजधर्मत्वाभावे शूद्रधर्मस्य चानभिधाने उभयतोभ्रष्टत्वप्रसङ्गः मातृनामवर्णातिदेशसादृश्याभिधानत एव शूद्रधर्मत्वप्राप्तेः ।

---

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः ॥

इत्युपक्रमे यत्संख्येयविषया षट्संख्या निर्णीता,

स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः ।

इत्युपसंहारेऽपि तत्संख्येयविषयैव सोपसंहर्तव्येति युक्तम् । अन्यथोपक्रमविरोधापत्तेः । अथ

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥

इत्यनेन शूद्रायां द्विजात्युत्पन्नानामपि शूद्रनामकत्वाभिधानान्न द्विजधर्मत्वं युक्तमिति वाच्यम् । सत्यमस्ति शूद्रनामकत्वं तथाऽपि न तेषां द्विजधर्मतापवादकम् । वचनद्वयस्याप्येककर्तृकस्मृतित्वेन अनुलोमजमात्रविषयत्वेन च तुल्यबलत्वात् । किन्तु विकल्पापादकमेव । न चासावपि वस्तुतः सम्भवति । मातृजातीयदण्डाजिनाद्यङ्गप्रापकात्तज्जातीयवृत्त्यादिदृष्टप्रापकाद्वा मा-

अथ ऋषयो वै सरस्वत्यां सत्रमासत कवषमैलूषं सोमादन यन् दास्याः पुत्रः कितवो ऽब्राह्मणः कथं नो मध्ये ऽदीक्षिष्टेति तं बहिर्धन्वोदवहन् अत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति स बहिर्धन्वोदूल्हः* पिपासया वित्त एतदपोनप्त्रीयमपश्यत्प्र देवत्रा ब्रह्मणे गातुरेत्विति तेनापां प्रियं धामोपागच्छत्तमापोऽनूदायंस्तं सरस्वती समन्तं पर्यधावत्तस्माद्धाप्येतार्हि परिसारकमित्याचक्षते, यदेतं सरस्वती समन्तं परिससार । ते वा ऋषयोऽब्रुवन्विदुर्वा इमं देवा उपेमं ह्वयामहइति तथेति तमुपाह्वयन्त तमुपहूयैतदपोनप्त्रीयमकुर्वत प्र देवत्रा ब्रह्मणे गातुरेत्विति । तेनापां प्रियं धामोपागच्छन्नुपदेवानामुपापां प्रियं धाम-

तृसनामकत्वविधौ प्रधानोपनयनाद्यदृष्टसंस्कारप्रापकस्य द्विजधर्मत्वविधेर्बलवत्त्वेन विपरीतबाध्यबाधकभावसंभवात् । किं च निषादोग्रकरणानां द्विजधर्मतापरिहारे विध्यभावो वा निमित्तमाहोस्वित्तन्निषेधसद्भावो वेति पृच्छामः । न तावदाद्यः । "षट् सुता द्विजधर्मिणः" "सदृशानेव तानाहुः" "आत्मा वै पुत्रनामासि" "आत्मा हि जज्ञे आत्मनः" "स एवायं विरूढः प्लक्षेणोपलभ्यते" "तत्रात्मा जायते स्वयम्" "येषामुभयतो नाब्राह्मण्यं पितृत इत्येके" "पुत्रप्रजनने मातुः प्राधान्यम्" †। किं च स्वजातिजानन्तरजा इत्यत्रानन्तरशब्दोऽव्यवधानवचनः आहोस्वित्पश्चाद्भाववचनः । किं प्राप्तम्, अव्यवधानवचन इति । कुतः,

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥
अनन्तरासु जातानां विधिरेष सनातनः ।
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम् ॥

* उदूढ इत्यर्थः ।

† अत्र ग्रन्थस्त्रुटितो भाति । पुस्तकान्तराभावात्तथैव स्थापितः ।

गच्छत्युपद्देवानां जयति परमं लोकं य एवं वेदेत्यैतरेयब्राह्मणे दासीपुत्रस्य सत्रानुष्ठानश्रवणात्तस्यापि उपनयनं युज्यते । सरस्वतीतीरे सत्रमासीनैः ऋषिभिरिलूषपुत्रः कवषनामा ऋषिः दासीपुत्रः कितवो ऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यतीति मत्या मरुदेशे निपातितः । अत्रैनं पिपासा हन्तु सरस्वत्युदकमप्ययं मा पादिति । तत्रायं पिपासाखिन्नोऽब्दैवतं प्रदेवत्रेति पञ्चदशर्चं सूक्तं सस्मार । तत्प्रयोगप्रभावेन सरस्वत्येव स्वदेशमपहाय तं प्रत्यधावत् । ततस्ते तस्य देवतानुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन्निति हि श्रुत्यर्थ इति चेत् मैवम् । दासीपुत्रः कितवो ऽब्राह्मण इत्याक्षेपमात्रं न तु वस्तुगत्यैव तन्मातुर्दासित्वमिति भाष्यव्याख्यानात् । न च महाभारते दीर्घतमउपाख्याने

तस्यां काक्षीवदादीन्स शूद्रयोनावृषिस्तदा ।

---

इत्युपक्रमे अनन्तरशब्दस्यैकान्तद्व्यन्तरशब्दसमभिव्याहारेणाव्यवहितपरत्वेनाभ्युपगमात् । तथा

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥
यथा त्रयाणां वर्णानां द्वयोरात्मा ऽस्य जायते ।
आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमः ॥

इति मध्येऽव्यवहितपरत्वेन परामर्शाच्चान्तेऽव्यवहितपरत्वस्यैवौचित्यात् । ततश्च ब्राह्मणस्य क्षत्रिया क्षत्रियस्य वैश्या वैश्यस्य शूद्रा चानन्तरा भवतीति तत्पुत्राणां द्विजत्वाभिधाने वैश्याशूद्रोत्पन्नस्य करणस्याप्युपनयनं सिध्येत् । अथानन्तरोत्पन्नस्यापि करणस्य शूद्राप्रसूततया प्रद्वेषेण त्यागस्तर्हि षट्संख्या बाध्येत । अथ तदबाधाय ब्राह्मणावैश्योत्पन्नस्याम्बष्ठस्य ग्रहणं

जनयामास धर्मात्मा पुत्रानेकादशैव तु ।
काक्षीवदादीन्पुत्रांस्तान् दृष्ट्वा सर्वानधीयतः ॥
उवाच तमृषिं राजा ममेमइति भारत ।

इति स्मरणात् शूद्रस्यापि वेदाध्ययनाङ्गभूतमुपनयनमिति वाच्यम् । अध्ययनमात्रस्मरणेऽपि वेदाध्ययनास्मरणात् ।

न च रामायणे

न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज ।

---

तद्यानन्तर्यबाधस्तस्यैकान्तरोत्पन्नत्वादित्युभयतःपाशा रज्जुः । अथ क्वचिदव्यवधानं क्वचिच्चैकान्तरत्वं चानन्तरशब्दार्थस्तर्हि द्व्यन्तरत्वमप्यनन्तरशब्दार्थोऽस्तु । त्रितयसाधारणस्य पश्चाद्भावस्यैवैकस्य लाघवेन प्रवृत्तिनिमित्तत्वौचित्यात् । तथा च प्रक्रान्तानां षण्णामप्यनुलोमजानां द्विजधर्मत्वाभिधानं षण्णामपि प्रतिलोमजानां शूद्रधर्मत्वाभिधानमाञ्जस्येनैव घटते । अन्यथा निषादोग्रकरणाः द्विजशूद्रधर्मत्वाभावादुभयतो भ्रष्टाः स्युः, क्वापि स्मृतौ पृथग्धर्माभिधानाभावात् । अथ

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥

इत्यत्र मातृनामत्वव्यपदेशाच्छूद्रधर्मप्राप्तिरिति वाच्यम् । तर्हि

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

इत्यत्र द्विजसादृश्यनिर्देशेन द्विजधर्मत्वमेव कुतो नेष्यते । नामातिदेशाद्वचनातिदेशस्य बलवत्त्वात् । तस्मात्सिद्धं षण्णामप्यनुलोमजानां द्विजत्वमिति । अत एवैतरेयकब्राह्मणे निषादस्योपनयनलिङ्गं सत्रानुष्ठानं दृश्यते । तद्यथा,

ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने ॥

इत्युक्तवतो मुनिपुत्रस्य दशरथहतस्य पित्रा

कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने ।
श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयतः ॥

इति विलापे शूद्रापुत्रस्य वेदाध्ययनस्मरणात्तस्योपनयनमिति वाच्यम् । कुर्वत इत्यनेनान्वयाय स्वाध्यायपदस्य शोभनाध्ययनपरत्वेन वेदाध्ययनानवबोधात् ।नन्वादिपर्वणि

---

ऋषयो वै सरस्वत्यां सत्रमासत ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवो ऽब्राह्मणः कथं नो मध्ये ऽदीक्षिष्टेति तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति स बहिर्धन्वोदूल्हः पिपासया वित्त एतदपोनप्त्रीयमपश्यत्प्रदेवत्रा ब्रह्मणे गातुरेत्विति तेनापां प्रियं धामोपागच्छत्तमापोऽनूदायं स्तं सरस्वती समन्तं पर्यधावत्तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते, यदेनं सवस्वती समन्तं परिससार।ते वा ऋषयोऽब्रुवन्विदुर्वा इमन्देवा उपेमं ह्वयामहइति तथेति तमुपाह्वयन्त तमुपहूयैतदपोनप्त्रीयमकुर्वत प्रदेवत्रा ब्रह्मणे गातुरेत्विति ततोऽपां प्रियं धामोपागच्छन्नुपदेवानामुपापां प्रियं धाम गच्छत्युपदेवानां जयति परमं लोकं य एवं वेदेति ।

अत्रायं वाक्यार्थः । सरस्वतीतीरे सत्रमासीनैः ऋषिभिरिलूषपुत्रः कवषनामा ऋषिर्दासीपुत्रः कितवोऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यति इति मत्वा मरुदेशे नीत्वा पातितः अत्रैनं पिपासा हन्तु सरस्वत्युदकमप्ययम्मा पादिति । तत्रायं पिपासाखिन्नोऽब्दैवतं प्रदेवत्रेति पञ्चदशर्चं सूक्तं सस्मार तत्प्रयोगप्रभावेण सरस्वत्येन स्वदेशमपहाय तं प्रत्यधावत् । ततस्ते तस्य देवताऽनुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयो-

धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः॥
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः।
इतिहासपुराणेषु नानाशिक्षासु बोधिताः॥
श्रमव्यायामकुशलाः समपद्यन्त यौवनम्।
धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि॥
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः।
वेदवेदाङ्गतत्त्वज्ञास्सर्वत्र कृतनिश्चयाः॥

इति विदुरस्य वेदवेदाङ्गाध्ययनस्मरणात् शूद्रापुत्रस्याप्युपनयनमिति चेत् मैवम्। धृतराष्ट्रादिनिष्ठबहुत्वसामानाधिकरण्यमात्रेण वेदादेरध्ययनं यथायोग्यमुन्नेयमिति विदुरस्य वेदाध्य-

---

गेण सरस्वतीमविन्दन्निति विदुर्वा इमन्देवा इत्यनेनोपनयनकालीनदेवतासंप्रदानकबटुपरिदानमुक्तं भवति। तेन हि ते तं जानतेऽयमस्मदीय इति। तस्मात्सिद्धं निषादस्योपनयनमिति।

रामायणे शरहतस्य ऋषिपुत्रस्य दशरथं प्रति वाक्यमपि,
न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज।
ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने॥
तत्पितुर्वाक्यमपि,
कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने।
श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयतः॥ इति।
महाभारतेऽपि दीर्घतमउपाख्याने,
तस्यां काक्षीवदादीन्स शूद्रयोनावृषिस्तदा।
जनयामास धर्मात्मा पुत्रानेकादशैव तु॥
काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः।
उवाच तमृषिं राजा ममेमइति भारत॥ इति।
तत्रैव धृतराष्ट्राद्युत्पत्तावपि,

यनावाधनात् । अत एव विदुरेण श्रुत्यर्थस्य धृतराष्ट्रं प्रत्युपदेशो न कृत इति भारतेऽभिहितम् ।

वस्तुतस्तु

जातो नार्यामनार्यायामार्यादार्यो भवेद् गुणैः ।
आर्यात् जातोऽप्यनार्यायामनार्य इति निश्चयः ॥
तावुभावप्यसंस्कार्यौ विधिधर्मौ व्यवस्थितः ।
वैगुण्याज्जन्मनः पूर्व उत्तरः प्रतिलोमतः ॥

इति मनुवचनं शूद्रापुत्रस्योपनयनं निषेधति इति तद्विपरीतत्वाद्विध्यश्रवणाच्च रामायणाद्युक्तलिङ्गं न शूद्रापुत्रोपनयनं

---

धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥
धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥
इतिहासपुराणेषु नानाशिक्षासु बोधिताः ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥ इति ।

अस्त्वेवं निषादादीनामुपनयनप्राप्तिः । दण्डाजिनादिप्राप्तिस्तु कुतः स्यात् । तन्मातॄणां शूद्राणां तदभावात् । मातृसनामतया च मातृजातीयतत्प्राप्तेरेव सिद्धान्तितत्वात् । इति चेत् । रथकारस्य वा तत्प्राप्तिः कुतस्त्येति ब्रूहि । तन्मातुः करण्या अपि तदभावात् । अथ तत्र पितुर्माहिष्यस्यैव दण्डादिना तदुपनयनं तर्हि प्रकृतेऽपि तदभ्युपगम्यताम् । युक्तं चैतत् । द्विजोत्पन्नानामनुलोमजानां द्विजसादृश्याभिधानस्य समानमितरच्छ्रये-

साधयितुं प्रभवति। श्वजाघनीभक्षणादिवत् तद्बोधितवेदाध्ययनाद्युपपत्तेरिति रहस्यम् *।

ये त्वनुलोमजा अप्यनूढोत्पन्नाः कुण्डगोलकास्तेषामुपनयनं न सर्वस्मृतिसम्मतं वर्णजातिलक्षणाभावात्।

तथाचादिपुराणे,

सवर्णासु सवर्णैस्तु ये जायन्ते परैरपि।
अवरोढकसंज्ञास्ते व्रतसंस्कारवर्जिताः॥

परैः स्वपत्यतिरिक्तैः। अवरोढक इति कुण्डगोलकयोस्साधारणी संज्ञा।

देवलोऽपि,

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते।
अवरोढ इति ज्ञेयः शूद्रधर्मा स जातितः।

शूद्रधर्मा अनुपनेय इत्यर्थः। तथा

व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः।
उत्पादिताः सवर्णेन व्रात्या इति बहिः कृताः॥

अपिशब्दादसवर्णानुलोमासु जातानां सुतरामसंस्कार्यत्वमुक्तं भवति।

अन्ये तु तयोरप्युपनयनमिच्छन्ति।

तथाच ब्रह्मपुराणम्,

एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डलगोलकौ। इति।

---

नेनेतिवद्वाचनिकातिदेशतया मातृनामातिदेशापेक्षया प्रबलत्वात्। तस्मात्सिद्धं द्विजानुलोमजानां द्विजत्वमिति *।

---

* मनुः, स्वजातिजानन्तरजा इत्यारभ्य वेदाध्ययनाद्युपपत्तेरिति रहस्यमित्यन्तस्य स्थाने, मनुः, स्वजातिजानन्तरजाः इत्यादिः तस्मात् सिद्धं द्विजानुलोमजानां द्विजत्वमितीत्यन्तः पाठः पुस्तकान्तरे उपलभ्यते। स च उपर्युल्लिखितपाठेन विरुद्धः प्रतिभाति। एनयोर्युक्तायुक्तत्वं सुधीभिर्विचारणीयम्।

एवं मूकाद्युपनयनविधिनेसर्थः ।

तत्कर्तव्यमप्युक्तं तत्रैव,

कुण्डो वा गोलको विप्रः संध्योपासनमात्रवित् ।
स्नानभोजनसंध्यासु देवेषु स पठेच्चरेत् ॥
एकान्ते कुटपे भुक्त्वा सदृशैस्सह सङ्गतः । इति ।

संध्या त्रिकालजा । उपासनं गृह्याग्नौ सायंप्रातर्होमः। मात्रशब्देन गायत्रीपुरश्चरणदर्शपूर्णमासस्थालीपाकादिनिवृत्तिः। विच्छब्देन तावन्मात्रोपयुक्तमन्त्राध्ययनमभ्यनुज्ञायते । नैतावदेव किंत्वन्यदपीत्याह । स्नानेति । स्नानं प्रातर्मध्याह्नयोः । भोजनं सायंप्रातः । अत्र संध्याशब्देन सायंप्रातर्विहितो वैश्वदेवो लक्ष्यते । भोजनसन्निधानात् । असंस्कृतान्नभोजननिषेधाच्च । अत्र पाठक्रमो न विवक्षितः । आह्निकक्रमप्रापकसामान्यप्रमाणसद्भावात् । देवो देवपूजा । एतेषु अधिकरणसप्तम्या निमित्तसप्तम्या वा कर्त्तव्येषु तत्तदुपयुक्तान्मन्त्रान्पठेत् । चरेदाचारं शौचाचमनादिकम् । परिगणनं चेदम् इतरद्विजधर्मपरिसंख्यार्थम् । श्राद्धं तु सामान्यधर्मत्वाद्भविष्यति । तदेवं कुण्डगोलकयोर्विधिनिषेधाभ्यामुपनयने विकल्पमेके मन्यन्ते । अपरे तु क्षेत्रजगूढजकानीनपौनर्भवसहोढानां कुण्डगोलकत्वेऽपि नियोगाद्यभ्यनुज्ञानदर्शनादुपनयनविधिं तद्विषयमेवाहुः । यत्युत्पन्नस्य सत्यपि कुण्डगोलकत्वे सगोत्रोढोत्पन्नस्य च नोपनयनम् । चण्डालत्वस्मरणात् ।

तथाच बौधायनः,

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥ इति ।

अथानुलोमजानां संकराणां रथकारनिदर्शनेनोपनयनं व्याख्येयमिति मिताक्षरोक्तिः ।

तथाच शङ्खः, क्षत्रियवैश्यानुलोमानन्तरजोत्पन्नो रथकारः तस्य चेज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठा रथसूत्रवास्तुविद्या ऽध्ययनवर्त्तिता चेति ।

अस्यार्थः । क्षत्रियस्यानुलोमोऽनन्तरो वैश्यः । वैश्यस्यानुलोमोऽनन्तरः शूद्रः । ताभ्यां तयोरुत्पादिते माहिष्यकरण्यौ । तस्यां तस्माज्जातो रथकारः ।

माहिष्येण करण्यां तु रथकारः प्रजायते ।

इति स्मरणात् । तस्य इज्या यागो ज्योतिष्टोमादिः । दानं मन्त्रसाध्यं तुलापुरुषादि महादानम् । उपनयनमुक्तलक्षणम् । संस्कारा उपनयनोत्तरभाविनः जीवतो मृतस्य च । पूर्वसंस्काराणां शूद्रादिसाधारणत्वात् । क्रियाः काम्यनैमित्तिकाः । अश्वप्रतिष्ठा शालिहोत्रादिरथसूत्रं रथनिर्माणयोजनचालनादि । वास्तुविद्या गृहप्रासादादिनिर्माणम् । अध्ययनं वेदादेः । एतद्वर्त्ती एतदनुष्ठातेत्यर्थः । नन्वेवं रथकारस्योपनयनाध्ययनेज्यादिसम्भवे रथकाराधिकरणसिद्धान्तविरोधः । तत्र हि रथकारशब्दस्य रूढ्या उपनयनादिरहितजातिविशेषपरतया तदाधानस्यापूर्वतायाः सिद्धान्तितत्वादिति चेत् । नायं दोषः । तस्य प्रकृतरथकारातिरिक्तस्य ऋभुसुधन्वापरपर्यायस्योपनयनादिरहितस्य व्रात्यापसस्य तत्रोदाहरणत्वात् । तथाच

तन्त्ररत्नोदाहृतं स्मृतिवचनं,

व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव सः ।

भरूषश्च विजन्मा च मैत्रः सात्वत एवच ॥ इति ।

अथ मूकाद्युपनयनं ब्रह्मपुराणे,

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।

तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ॥
जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु ।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ।
मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ॥
कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ।
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ॥
संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु ।
उपनेयांश्च विधिवदाचार्यः स्वसमीपतः ॥
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ॥
एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ । इति ।

अस्यार्थः । अत्र ऊढात्वविशेषणमनपेक्ष्यैव केवलब्राह्मणाब्राह्मणीजन्यत्वेन गोलकादिसाधारणं ब्राह्मण्यमभिप्रेत्येदमुच्यते । ब्राह्मण्यामिति । तेनेदं गौणं ब्राह्मण्यं तन्निमित्तक एवायमुपनयने गुणविकारः । कुब्जवामनादिषु सत्यपि मुख्ये ब्राह्मण्ये कुब्जत्वादिनिमित्तक एवास्योपदेशः । तेन गुणविकारे निमित्तद्वयं सिध्यति । गौणं ब्राह्मण्यं कुब्जत्वादिकं चेति । अन्यथा कुब्जादीनामत्र परिगणनमनर्थकं स्यात् । षण्ढादयोऽत्र जात्यैवावधेयाः । चिकित्सनीयेषु पुनर्यथावदुपनयनं कार्यं न गुणविकारः । मत्तः मद्यादिना । उन्मत्तो ग्रहावेशादिना । शयनस्थ उत्थानाशक्तः । निरिन्द्रियः षडिन्द्रियशून्यः । ध्वस्तपुंस्त्वो दोषविशेषेणाप्रत्यानेयपुंस्त्वः । यथोचितं यस्य यदङ्गोपसंहारसामर्थ्यं नास्ति तस्य तदङ्गपरिहारेण कर्त्तव्यमित्यर्थः । मत्तोन्मत्तयोर्मतान्तरमाह । मत्तोन्मत्तौ न संस्कार्याविति । तत्र हेतु-

माह । कर्मस्वनधिकारादिति । तदपत्यसंस्कारे हेतुमाह । पातित्यं नास्ति चैतयोरिति । ततश्च व्यतिरेकमुखेन पतितापत्यं न संस्कार्यमित्युक्तं भवति । पतितोत्पन्नः पतितो भवति अन्यत्र स्त्रिया इति वसिष्ठस्मरणात् । तदपत्यं तु संस्कार्यमित्यत्र तुशब्देन विवक्षितं विधिं विच्छिद्य प्राकृत एव विधिरनूद्यते संस्कार्यपदेन। अन्यथा अपरे त्वाहुरन्यथेति अन्यथापदेन विवक्षितविधेः पक्षान्तरत्वाभिधानं नोपपद्येत । ततश्च मत्तोन्मत्तापत्यस्य प्राकृतविधिगुणविकारौ वैकल्पिकौ भवतः । तमेव गुणविकारं दर्शयति। संस्कारेति । बटुपठनीयानां दण्डाजिनोपवीतादिग्रहणसंस्कारमन्त्राणामाचार्य्य प्रत्येव पाठो विधीयते । तथा होमः समिदाधानं तन्मन्त्रपाठश्च । नाचार्यपठनीयानाम् । न वा तत्कर्तृकस्य प्रधानहोमस्य, विधिप्राप्तत्वात् । बटूपगमनपरिहारेणाचार्यस्य स्वसमीपेऽग्निसमीपे वा पङ्ग्वादिमाणवकानयनं विधीयते । प्राकृतात् गायत्र्युपदेशात् बटुं स्पृष्ट्वा गायत्रीजपो वैकल्पिको विधीयते । तस्य च श्रवणोच्चारणसमर्थान् प्रत्युपदेशः । मूकबधिरादीन् प्रति स्पृष्ट्वा जप इति व्यवस्था । एवमुपनयनविधिमुक्त्वा विवाहविधिमाह । कन्यास्वीकरणादिति । अनुमन्त्रयेत पाण्यभिमृशेद्पाणि कन्यां चेत्याश्वलायनोक्तयोः कन्यास्पर्शानुमन्त्रणयोरुभयसमर्थं प्रत्युभयम्, अन्यतरसमर्थं प्रत्यन्यतरादिति । एतदुभयातिरिक्तं सर्वमाचार्येण करणीयमिति ।

बौधायनोपि,

अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्याम ऋतुर्यथाकामी स्यात्पुण्ये नक्षत्रे ब्राह्मणान् भोजयित्वा ऽऽशिषो वाचयित्वा केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतिनमप आचाम्य देवयजनमुदानयत्यथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखा-

त्कृत्वा याज्ञिकीं समिधमाज्येनाङ्क्त्वा तूष्णीमभ्याधापयति तूष्णीमश्मानमास्थापयति यथालाभं तूष्णीं वासः परिधापयति तूष्णीं मेखलां मन्त्रवद्ग्रन्थिं करोति तूष्णीमजिनं प्रतिमुञ्चति तूष्णीं दण्डं प्रयच्छति याज्ञिकस्य वृक्षस्य नाम पृच्छत्यथैनं दक्षिणं हस्तं गृह्णाति यस्मिन् भूतं च भव्यं चेत्यथैनं देवताभ्यः परिददाति देवेभ्यस्त्वेत्यथैनमुपनयति । देवस्य त्वेति सर्वं नामग्रहणवर्जमाचार्य एव पक्वाज्जुहोति तत्सवितुर्वरेण्यमित्यथाज्याहुतीरुपजुहोति क्षेत्रियै त्वा निर्ऋत्यै त्वेति षड्भिर्व्याहृतीभिरथाग्रेणाग्निं याज्ञिकस्य वृक्षस्य पर्णेषु हुतशेषं निदधातीति तत्पुरस्ताद्व्याख्यातम् । अथ पक्वादुपादाय प्राश्नाति तूष्णीं सर्वान्मन्त्रानाचार्य एव जपेदित्येके । अन्धजडक्लीबव्यसनिव्याधितोन्मत्तहीनाधिकाङ्गानामामयाव्यपस्मारिश्वित्रिकुष्ठिजङ्गरोगिणश्चैतेन व्याख्याता इत्येके । सद्यो मधुपर्कं ददाति तिसृषु व्युष्टासु मधुपर्कवदावृता तूष्णीमायुर्दा अग्ने हविषो जुषाण इति पिता वा भ्राता वाऽऽत्मजमारोपयेदित्येके । ऋतोर्यथाकामित्वेन वसन्ताद्यनियमोऽभिहितः । उपनयति गायत्रीसंबद्धं करोति उपदेशेन तं स्पृष्ट्वा जपेत वा ।

## अथ स्त्र्युपनयनम् ।

तत्र हारीतः,

द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति । सद्योवधूनां तूपस्थिते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्य इति ।

यमोऽपि,

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥

पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः।
स्वगृहे चैव कन्याया भैक्षचर्या विधीयते॥
वर्जयेदजिनं चीरं जटाधारणमेव च। इति।

पुराकल्पेऽर्थवादविशेषे। तत्रार्थवादिकविधेस्सार्वकालिकत्वे शिष्टस्मृतिविरोधदर्शनात्कल्पान्तरइति स्मृतिचन्द्रिकाकारः। पित्रादिरेवैनामध्यापयेन्न पर इत्यन्वयः।

**मनुरपि,**

प्राङ्नाभिवर्धनात्पुंस इत्युपक्रम्य नामकरणनिष्क्रमणान्नप्राशनचूडोपनयनकेशान्तान्पुरुषसंस्कारान्विधायान्ते पूर्वोक्तसंस्कारेतिकर्त्तव्यतां स्त्रीष्वतिदिशति।

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥ इति।

अत्रेयमिति सर्वनाम्ना बुद्धिस्थपरामर्शात्सप्तानां च संस्काराणां बुद्धिस्थतया उपनयनस्यापि तदन्तर्गतत्वेनातिदेशात्स्त्रीणामप्यमन्त्रकमुपनयनं सिध्यति। ये तु चूडान्तानामेवेदमा परामर्शो नोपनयनकेशान्तयोरिति मन्यन्ते तेषामसंबन्धिव्यवधानेन विच्छिन्नबुद्धीनां परामर्शं वदतां कथमिव लज्जा नाननमानमयति। अथ "तूष्णीमेताः क्रियाः स्त्रीणाम्" इतियाज्ञवल्क्यैकवाक्यतया चूडान्तानामेव परामर्शो नोपनयनादीनामिति वाच्यम्। तर्हि यमहारीतवाक्यैकवाक्यतया उपनयनपरामर्शोऽपि कथं नाङ्गीक्रियतइति। अथ

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया॥

इत्यग्रेतनवाक्ये विवाहस्योपनयनस्थानापत्तिविधानान्यथानुपपत्त्या इदमः संकोच इति न वाच्यम्। तस्य स्मृत्यन्तराभिहि-

तोपनयनाभावपक्षे विवाहस्य तत्स्थानापत्तिविधायकत्वेनापि चरितार्थत्वात् । तस्मान्मनुवाक्ये नेदमः संकोच इति ।

किंचाश्वलायनेनापि मुखमग्रे ब्राह्मणोऽनुलिम्पेतेति समावर्त्तनीयमनुलेपनं प्रस्तुत्योपस्थं स्नातनेन स्त्रीणामनुलेपनं विदधता तासामप्युपनयनमुक्तं भवति । उपनयनपूर्वकत्वात्समावर्त्तनस्य । यत्तु सार्वत्रिकोऽयं स्त्रीणामनुलेपनविधिः न समावर्त्तनीयः उपनयनाभावेन समावर्त्तनासंभवादिति व्याख्यानं, तदसत् । उक्तरीत्योपनयनसद्भावेन प्राग्रजसः समावर्त्तनमितिहारीतोक्त्या च प्राग्रजसः समावर्त्तनसंभवे तदङ्गत्वपरिहारेणोत्कर्षस्यान्याय्यत्वात् । प्रकरणे च संभवन् अपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति इति न्यायात् । अत एव संन्यासब्रह्मजिज्ञासादिकमप्युपनीतानामेव स्त्रीणां घटते । आश्रमसमुच्चयाविकल्पयोरुपनयनपूर्वकत्वात् । तदयं निर्गलितोर्थः।ब्रह्मवादिनीनां गर्भाष्टमादौ मन्त्रवत्तूष्णीं चोपनयनं ततो वेदाध्ययनं प्राग्रजोदर्शनात्समावर्त्तनं प्रागेव रजोदर्शनाद्विवाहश्चेति । सद्योवधूनां तूक्तविवाहकालए वोपनयनं सद्य एव समावर्त्तनं सद्य एव विवाह इति । पुराकल्पइति वचनान्नास्मिन् कल्पइति गम्यते । अत एव

मनुः,

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥

इत्यादिना विवाहस्योपनयनस्थानापत्तिमाह । वैदिको वेदग्रहणार्थः संस्कारः उपनयनं स स्त्रीणां वैवाहिको विधिः विवाहजन्यः संस्कारः स्मृतः पूर्वैरिति मेधातिथिपाठार्थः । मिताक्षरादिपाठस्तु औपनायनिकः स्मृतइति । तत्र औपनायनिक उपनयनकार्यकारी । ततश्च यथा पुरुषस्योपनयनादिस्तथा

स्त्रीणां विवाहादिर्विधिनिषेधाधिकार इत्यर्थः ।

अथानुपनेयाः ।

तत्र गौतमः, शूद्र एकजातिरिति । एकजातिः एकजन्मा न द्विजन्मा । उपनयनाभावादित्यर्थः । आपस्तम्बोऽपि, अशूद्राणामदुष्टकर्मणामुपनयनमिति शूद्रव्यतिरिक्तानामिति वदन् शूद्रस्य तन्नेत्याह । प्रतिलोमजानामपि तन्नास्तीत्याह

मनुः,

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

इति । शूद्रसाधर्म्येणैकजातित्वमुक्तं भवति । अपध्वंसजाः व्यभिचारोत्पन्नाः । प्रतिलोमजेष्विति वक्तव्ये यद्व्यभिचारजत्वेनाभिधानं तत्सवर्णानुलोमजयोरपि व्यभिचारोत्पन्नयोरनुपनेयत्वाभिधानाय । तदेतदुपपादितमधस्तात् । तत्र सूतोपनयनं शास्त्रान्तरेऽङ्गीकृतमिति हरदत्तः । तच्छास्त्रान्तरं,

यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते ।

आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमः ॥

इति मनुवचने मेधातिथिव्याख्या । सा यथा । अस्य ब्राह्मणस्य स्वयोनौ द्वयोः आनन्तर्यात्क्षत्रियवैश्ययोश्च एवं त्रयाणां वर्णानां यथा आत्मा द्विजो जायते तथा बाह्येषु प्रतिलोमजेष्वपि वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योरात्मा द्विजो जायतइति क्रमो वेदितव्यः । ततश्च सूतवैदेहकयोरप्युपनयनं भवतीति । तां च कुल्लूकभट्टनारायणसर्वज्ञौ नाभ्युपगच्छतः । प्रतिलोमास्तु धर्महीना इतिगौतमवचनविरोधात् ।

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

इति मूलवचनविरोधाच्च । न चोक्तवाक्येनात्र सर्वपदसंकोचः, तस्यार्थान्तरत्वात् । तथा हि । यथा त्रयाणां वर्णानां

ब्राह्मणक्षत्रियवैश्यानां मध्येऽस्य ब्राह्मणस्य स्वयोन्यां ब्राह्मण्याम् आनन्तर्यात् क्षत्रियायां चेत्येवं द्वयोरात्मा ब्राह्मण एव भवति। यथा ऽगस्त्यस्य क्षत्रियायां लोपामुद्रायां दृढच्युतादयो ब्राह्मणा एव। तथा ब्राह्मेषु सूतादिप्रतिलोमेष्वस्य सुतस्य स्वयोन्यां सूतायामानन्तर्याद्ब्राह्मण्यां च सूत एवेति वचनार्थो युक्तः। यत्तु

मृषा ब्राह्मणकन्यायां विवाहेषु समन्वयात्।
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः॥
वेदानर्हस्तथा चैषां धर्माणामनुबोधकः।

इत्युशनसो वाक्यं, तस्यायमर्थः। ब्राह्मणकन्यायां मृषा विधिहीनेषु विवाहेषु ऊढायां समन्वयात्सजातीयाज्जातः अत्र शास्त्रे प्रतिलोमविधिः प्रतिलोमधर्मा द्विजो निर्दिष्टः स च वेदानर्हः तथाप्येषां स्मार्त्तानां धर्माणाम् अनु पश्चाद् ब्राह्मणं पुरस्कृत्य ब्राह्मणाभावे वा बोधकः उपदेष्टा भवति। ततश्च विधिश्च विधिविकलविवाहोढब्राह्मणीजातस्य ब्राह्मणस्यैव सूतसंज्ञस्य प्रतिलोमधर्मस्येदमुपनयनं न सूतजातेरिति न विरोधः।

शङ्खलिखितावपि, नोन्मत्तमूकान्संस्कुर्यादिति। प्राकृतेन विधिनेति व्याख्येयम्। अन्यथा ब्रह्मपुराणाद्युक्तोपनयनविधिविरोधापत्तेः।

**विष्णुरपि**। नापरीक्षितं याजयेन्नाध्यापयेन्नोपनयेदिति। अपरीक्षितं कुलवृत्तादिभिः।

तदेतत्स्पष्टीकृतं जाबालगौतमसंवादव्याजेन श्रुतावेव, सत्यकामो वै जाबालो हारिद्रुमतं गौतममियायेत्यादिना।

## अथोपनेतृनिर्णयः।

**तत्र वृद्धगर्गः,**

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः।

उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः ॥ इति ।
भ्राताऽत्र पितुर्भ्रातेति व्याख्येयम् ।
पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः॥

इति पितामहस्मरणात् । ज्ञातयः सपिण्डाः । गोत्रजाग्रजा गोत्रजेषु सपिण्डातिरिक्तेषु अग्रजा माणवकापेक्षया वृद्धाः । यद्यप्यग्रजपदं गोत्रजपदेन समस्तं तथापि बुद्ध्या विभज्य सपिण्डेष्वपि संबन्धनीयम् । अन्यथोपनेयकनिष्ठानामपि तदधिकारापातात् । दारकाचार्यत्वस्योपपातकत्वाच्च । अत्र केचिदाचार्यसमीपनयनमेवोपनयनम् इत्यभिप्रेत्य पितैवोपनयेदिदित्यादिवाक्यानि पितैवाचार्यसमीपं नयेदित्यर्थपरतया व्याचक्षते। सत्यपि पित्रादावुपनेतरि होमगायत्र्युपदेशादिकर्त्ता ऽन्य एवाचार्योऽन्वेष्टव्यः ।

आस्तिको वेदनिरतः शुचिश्चाचार्य उच्यते।

इत्यादिवाक्येष्वाचार्यस्य नित्यवच्छ्रवणात् । पितुरेवाचार्यत्वे आचार्यलक्षणाचार्यशौचाचार्यपत्न्यभिगमनप्रायश्चित्ताभिधानाद्यानर्थक्यापत्तेः । पितृलक्षणाद्यभिधानेनैव गतार्थत्वात् । पितृकुलावस्थितस्य ब्रह्मचारिणः आचार्यकुलप्रत्यावृत्तिरूपसमावर्त्तनासंभवापत्तेश्च । तस्मात्पित्रतिरिक्तः आचार्यः कर्तव्यइति । तन्न सुन्दरम् । बटोराचार्येण गायत्रीसंबन्धकरणस्यैवोपनयनपदार्थत्वेन व्याख्यातत्वात् । तत्र च पित्राचार्ययोः समुदितयोः कर्तृत्वासंभवेन नित्यवच्छ्रुतस्याप्याचार्यस्य विकल्पेनानुकल्पत्वेन वाऽन्वयस्यावश्यमभ्युपेयत्वात् । लक्षणाद्यभिधानं त्वनुकल्पतया प्राप्तस्याप्यपेक्षितमेव।समावर्त्तनं तु नाचार्यकुलान्निवृत्तिरेव किंतु ब्रह्मचारिव्रतसमापनमिति न क्वापि विरोधः । तस्मात्पित्राद्य-

भावे आचार्यः कर्त्तव्य इति स्थितम् ।

तत्राचार्यलक्षणमाह श्रुतिः।तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानितिहि ब्राह्मणम् तस्मिन्नभिजनविद्यासमुदितं समाहितं संस्कर्त्तारमीप्सेदिति। अस्यार्थः।यं माणवकमविद्वान्वेदादिविद्याशून्य आचार्य उपनयते स माणवकः तमसः अज्ञानात्तमोऽज्ञानान्तरं प्रविशति। न केवलमुपनेयस्यैवायं दोषोऽपितूपनेतुरपीत्याह। यश्चाविद्वानिति। यश्चाविद्वानाचार्योऽन्यमुपनयते सोऽपि तमसस्तमः प्रविशति अस्मिन्नर्थे वक्ष्यमाणं ब्राह्मणम्। अभिजनविद्यासमुदितं संस्कर्त्तारमीप्सेदिति। अभिजनो बन्धुसमुदायः, विद्याः वेदाद्याः चतुर्दश। ताभ्यामुत्कृष्टम्। समाहितम् अविक्षिप्तचित्तम्। एतादृशमुपनेतारमुपेयादित्यर्थः।

**व्यासोऽपि,**

वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम्।
स्वशाखाज्ञमनालस्यं विप्रं कर्त्तारमीप्सितम्॥ इति।

श्रोत्रियलक्षणमुक्तं **ब्रह्मपुराणे,**

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया वापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥ इति।

कर्त्तारम्, उपनयनस्येति शेषः।

**यमोऽपि,**

सत्यवाक् धृतिमान् दक्षः सर्वभूतदयापरः।
आस्तिको वेदनिरतः शुचिराचार्य उच्यते॥
वेदाध्ययनसंपन्नो वृत्तिमान् विजितेन्द्रियः।
दक्षोत्साही यथावृत्तजीवनेहस्तु वृत्तिमान्॥

**शौनकोऽपि,**

कुमारस्योपनयनं श्रुताभिजनवृत्तवान्।

तपसा धूतनिःशेषपाप्मा कुर्याद् द्विजोत्तमः ॥ इति ।

**हारीतोऽपि**,

न याजयेद्वृत्तिहीनं वृणुयाच्च न तं गुरुम् ।

नहि मज्ज्ञा करौ दिग्धौ रुधिरेण विशुध्यतः॥ इति ॥

मज्ज्ञेति मज्जन्शब्दस्तृतीयान्तः । उक्तविशेषणानां त्रैवर्णिकसाधारण्येऽपि विशेष्योऽत्र ब्राह्मण एवावधेयः । विप्रं कर्तारमीप्सितमिति व्यासवाक्ये विप्रपदोपादानात् । तस्यैवाध्यापनाधिकाराच्च । तेन त्रयाणामपि वर्णानां पित्राद्यभावे विप्र एवोपनेता न क्षत्रियादिरिति सिध्यति ।

**अथ बटूपनेत्रोरधिकारसिद्ध्यर्थं प्रायश्चित्तम् ।**

**तत्र वृद्धविष्णुः**,

कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत् । इति ।

आचार्यस्य विशेषमाह स एव,

सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरेत् ।

सहस्रं द्वादशावृत्तं सावित्रीं प्रजपेद्बुधः ॥

स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् । इति ।

अग्निपवित्राणि अग्निः शुचिः व्रततम इत्यादीनि । प्रजपेदिति नित्याभ्यासमेवानूद्य संख्याविशेषमाह । सहस्रमिति । तत्प्रयोजनमाह । स्वाधिकारार्थमिति । अस्याः प्रदानार्थं यः स्वाधिकारस्तदर्थमित्यन्वयः ।

**अथ सम्भारसम्भरणम् ।**

**तत्र शौनकः**,

पूर्वेद्युरेव सकलान्सम्भारांश्च यथोचितान् ।

संभृत्याभ्युदयश्राद्धमपि कुर्याद्यथाविधि ॥

अत्रापिशब्दात्स्वस्तिवाचनग्रहमखमण्डपदेवतास्थापनादि गृह्यते ।

तत्रादौ परिधानार्थं कल्पयेन्नववस्त्रकम् ।
शिरोऽवगुण्ठनं चैव नवमन्यत्प्रकल्पयेत् ॥
शिरोऽवगुण्ठनं प्रावरणवासः ।
यथोक्तमजिनं वापि कल्पयेदवगुण्ठनम् ।
उपवीतं च संपाद्य तथा कृष्णमृगाजिनम् ॥
यथोक्तमेखलां दण्डं यथोक्तं च प्रकल्पयेत् ।
एवं संभृत्य संभारान् पूर्वेद्युश्च यथोचितान् ॥ इति ।
**आश्वलायनोऽपि,**
क्रमशश्चाजिनादीनि भिक्षापात्रं जलस्य च ।
कौपीनाच्छादनार्थाय मौञ्जीं कार्पासिकीं द्विजः ॥
संभरेत् त्रिवृतां तावद्वाससी वाऽहते पुनः । इति ।

अत्र कौपीनबन्धसूत्रोपदेशाद् ब्रह्मचारिणः कौपीनधारणमप्युक्तं भवति । तदेतन्मेधाजनने स्पष्टयति स्वयमेवाश्वलायनः,

वाससी ते स्वगुरवे मेधाजनकर्मणि ।
दद्यात्तावत्प्रभृत्येव कौपीनेन प्रवर्तयेत् ॥
तावत्प्रभृति कौपीनेनैवेसन्वयः ।
प्राग्द्वादशाब्दाद् व्रतिनो वासो न बिभृयुस्त्विति ।
केचिदाहुर्द्विजाः केचिदाष्टशब्दाच्च सूरयः ॥
कौपीनमात्रा वर्त्तन्ते तथाऽन्ये ब्रह्मचारिणः । इति ।

अत्र मात्रशब्देन बहिर्वासोव्यावृत्तिः । ततश्च उपनयनदिनमारभ्य यावन्मेधाजननं कौपीनं बहिर्वास * आच्छादनवासः कृष्णाजिनं वा, मेधाजननमारभ्य कौपीनम् आच्छादनवासः कृष्णाजिनं वेसर्थः संपद्यते ।

वाससि विशेषमाहाश्वलायनः,
अहतेन वाससा संवीतमिति ।

---

* आच्छादनकृष्णाजिनयोर्विकल्पो ज्ञेयः । एवमुत्तरत्रापि ।

अहतलक्षणमाह प्रचेताः,

ईषद्धौतं नवश्वेतं सदशं यन्न धारितम् ।

अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ इति ।

वस्त्रेष्वेव विशेषमाहाश्वलायनः,

यदि वासांसि वसीरन् रक्तानि वसीरन्काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्य इति ।

अस्यार्थः । व्यवहितकल्पनया वाक्यद्वयं व्याख्येयमिति हरदत्तः । वासांसि वसीरन्नित्येको विधिः । यदि रक्तानि वसीरन्काषायं ब्राह्मण इत्यादिरपरः । अत्र प्रथमवाक्येन वासांसि वसीरन्परिदध्यादिति परिधानं विधीयते । अपेक्षितत्वात् । द्वितीयेन तु द्रव्यान्तरापादितवर्णान्तराणि वासांसि यदि वसीरन् तदा काषायं ब्राह्मण इत्यादि प्रतिवर्णं परिधानविशेषो विधीयते । शुक्लस्य वर्णान्तरापादनस्यैव रागशब्दार्थत्वात् । यदाह काशिकाकारः । शुक्लस्य वर्णान्तरापादनम् इह रजेरर्थ इति ।

आपस्तम्बः,

वासः शाणक्षौमाविकानि, काषायं चैके वस्त्रमुपदिशन्ति ब्राह्मणस्य, माञ्जिष्ठं राजन्यस्य, हारिद्रं वैश्यस्येति ।

पारस्करः,

वासाꣳसि शाणक्षौमाविकानीति ।

मनुः,

वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च । इति ।

वसिष्ठः,

शुक्लमहतं वासो ब्राह्मणस्य, कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य, पीतं कौशेयं वैश्यस्य, सर्वेषां वा तान्तवमरक्तमिति ।

गौतमः,

वासांसि शाणक्षौमचीरकुतपाः सर्वेषां कार्पासं वा विकृतं काषायमप्येके ब्राह्मणस्य माञ्जिष्ठं हारिद्रमितरयोः ।

शङ्खः,

क्षौमदुकूलसौत्राणि वासांसि त्रयाणां वर्णानाम् ।

यमः,

क्षौमकार्पासकुतपचर्मवल्कलकम्बलाः ।
सर्वं तु धारयेच्छुक्लं वासस्तत्पारिधानिकम् ॥

पैठीनसिरपि,

कमण्डलु यज्ञोपवीतं काषायं वस्त्रमिति समानानि ।

अथाजिनानि ।

तत्राश्वलायनः,

ऐणेयेन वा ऽजिनेन ब्राह्मणं, रौरवेण क्षत्रियम्, आजेन वैश्यमिति ।

अत्र वाशब्दग्रहणाद्वासोऽजिनयोर्विकल्पः । उभयोरपि प्रावरणार्थत्वात् । एतावत्तु सावधारणं यद्यजिनं प्रावरणं तदा ब्राह्मणक्षत्रियविशां यथाक्रममैणेयरौरवाजान्यजिनानि भवन्तीत्यर्थः । एणी बिन्दुरहिता मृगी तत्संबन्ध्यैणेयम् । एणीशब्दात् ढक्प्रत्ययः । रुरुः बिन्दुमान्मृगः । अजः छागः ।

आपस्तम्बः । हारिणमैणेयं वा कृष्णं ब्राह्मणस्य कृष्णं चेदनुपस्तीर्यासीताधःशायी स्यात्, रौरवं राजन्यस्य, बस्ताजिनं वैश्यस्य, आविकं सार्ववर्णिकं कम्बलश्च । ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन्वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणमजिनं चैवोत्तरं धारयेत् । ऐणेयम् एणीसमुद्भवम् । एणी गौरमृगी । यदा हारिणं तदा कृष्ण तच्च नोपस्तीर्यासीत शयीत

वा । बस्तः छागः । आविकं मेषचर्म । सार्ववर्णिकं सर्वद्विजाति-संबद्धम् । उत्तरम् उत्तरीयम् ।

**पारस्करः,**

ऐणमजिनमुत्तरीयं ब्राह्मणस्य, रौरवं राजन्यस्य, आजं गव्यं वा वैश्यस्य, सर्वेषां वा गव्यमसति प्रधानत्वात् ।

अत्रैणमुत्तरीयमिति वचनात् प्रागुक्तानि शाणादीन्युत्तरी-याणीति गम्यते । असति यथोक्ताजिनासंभवे गव्यं प्रधानत्वात् प्रशस्तत्वादित्यर्थः ।

**हिरण्यकेशी,**

कृष्णाजिनं ब्राह्मणस्य, रौरवं राजन्यस्य, बस्ताजिनं वैश्यस्येति ।

**मनुः,**

कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । इति ।

**शङ्खोऽपि,**

कृष्णरुरुबस्ताजिनान्युत्तरीयाणीति ।

**वसिष्ठोऽपि,**

कृष्णाजिनमुत्तरीयं ब्राह्मणस्य, रौरवं राजन्यस्य, आव्यं बस्ताजिनं वा वैश्यस्येति ।

**विष्णुः,**

मार्गवैयाघ्रबास्तानि चर्माणि ।

**पैठीनसिः,**

कृष्णरुरुपृषतानामजिनानीति ।

**गौतमः,**

कृष्णरुरुबस्ताजिनानीति ।

**यमः,**

कृष्णाजिनं ब्राह्मणस्य रौरवं क्षत्रियस्य तु ।

बस्ताजिनं तु वैश्यस्य सर्वेषां रौरवाजिनम् ॥ इति ।

बृहस्पतिरपि,

ब्राह्मणस्याजिनं कार्ष्णं रौरवं क्षत्रियस्य च ।

बास्तं वैश्यस्य वासांसि शाणक्षौमाविकानि च ॥ इति ।

अस्माच्च वासोविकल्पकात्प्रावरणाजिनादतिरिक्तमन्तर्वासःस्थानीयमजिनान्तरं धारणीयमित्याह

शौनकः,

निक्षिप्य ब्रह्मसूत्रं तु वितत्याधः प्रसार्य च ।

वामांसे स्थापयेच्चैतत्तथा कृष्णमृगाजिनम् ॥ इति ।

तत्परिमाणमाह शाकलः,

अखण्डं वा त्रिखण्डं वा ऽष्टाचत्वारिंशदङ्गुलम् ।

चतुरङ्गुलविस्तीर्णं धारयेदजिनं सदा ॥

खण्डत्रयपरिमाणमुक्तं स्मृत्यन्तरे,

अङ्गुलं तु बर्हिर्लोम यद्वा स्याच्चतुरङ्गुलम् ।

अजिनं धारयेद्विप्रश्चतुर्विंशाष्टषोडशैः ॥ इति ।

चतुर्विंशाङ्गुल एकः खण्डः। अष्टाङ्गुलो द्वितीयः। षोडशाङ्गुलस्तृतीयः । त्रिभिः स्यूतैरष्टाचत्वारिंशदङ्गुलं परिमण्डलं संपद्यते ।

## अथोपवीतम् ।

तत्र मनुः,

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।

शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रजम् ॥

त्रिवृन्नवसूत्रकं, नव वै त्रिवृदिति श्रुतेः ।

विष्णुरपि,

कार्पासशाणाविकान्युपवीतानि वासांसि चेति ।

**पैठीनसिरपि,**

कार्पासं चोपवीतं सर्वेषामिति।

**अथोपवीतानुकल्पाः।**

**बौधायनः,**

कौशं सौत्रं त्रिस्त्रिवृद्यज्ञोपवीतमानाभेः। कौशं कृमिकोशोद्भवं पट्टसूत्रमयमिति यावदिति कल्पतरुः। वस्तुतस्तु कौशं कुशपत्रनिर्मितम्।

तथाच **गोभिलः,**

यज्ञोपवीतं कुरुते सूत्रं वस्त्रं कुशरज्जुं वेति। सौत्रं कार्पासम्।

**देवलः,**

कार्पासक्षौमगोवालशणवल्कतृणोद्भवम्।

सदा संभवतो धार्यमुपवीतं द्विजातिभिः॥ इति।

क्षुमा अतसी तत्संबन्धि। वल्कलं तरुत्वक्। तृणोद्भवं कुशादिनिर्मितम्।

**ऋष्यशृङ्गः,**

अपिवा वाससा यज्ञोपवीतार्थं कुर्यात् तदभावे त्रिवृता सूत्रेणेति।

**निगमपरिशिष्टेऽपि,**

वाससा यज्ञोपवीतानि कुरुते तदभावे त्रिवृता सूत्रेण कुशमुञ्जबालत्वक्शणरज्जुमेव वेति।

**आदित्यपुराणे,**

क्षौमजं वाऽथ कार्पासं शणसूत्रमथापिवा।

दध्याद्यज्ञोपवीतं यो न तं हिंसन्ति वायसाः॥

वायसा राक्षसाः। यद्यप्येषु वाक्येष्वसंभवयथासंभववाशब्दाः श्रूयन्ते तथाप्येषां कल्पानां मुख्यासंभवविषयत्वमेव द्रष्टव्यं,

न तुल्यबलत्वम्। कार्पासादीनामुत्पत्तिवाक्यशिष्टत्वेन बलवत्त्वात्।

अथोपवीतलक्षणम्।

तत्र भृगुकात्यायनौ,

त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम्।

त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरुच्यते॥

संग्रहेऽपि,

ऊर्ध्ववृत्तमधोवृत्तं पुनरूर्ध्ववृतं तथा।

एतद्यज्ञोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते॥ इति।

गृह्यपरिशिष्टेऽपि,

उपवीतमयुग्मशरं त्रिषमतन्तुकं त्रिवृद्यज्ञोपवीतमिति।

एकं सूत्रमयुग्मशरं त्रिगुणीकृत्य वलितं पुनस्त्रिवृत् क्रियते त्रिगुणीकृत्य वलयते तन्नवतन्तुकमुपवीतं भवति। तद्विषमन्ततुकं त्रिगुणीकृतम् एकेन ग्रन्थिना बद्धं सद्यज्ञोपवीतमित्युच्यते।

तथाच देवलः,

यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम्।

एकेन ग्रन्थिना तन्तुर्द्विगुणास्त्रिगुणोऽथवा॥ इति

अत्र तन्तोर्द्वैगुण्यं त्रैगुण्यासम्भवे द्रष्टव्यम्। ततश्च द्विगुणस्यैव त्रैगुण्ये षट्तन्तुकतैव संपद्यते।

अत एव पैठीनसिः,

कार्पासमुपवीतं षट्तन्तुकं त्रिवृतं ब्राह्मणस्य क्षौमं राजन्यस्याविकं वैश्यस्येति।

द्विगुणं सूत्रं त्रिवृत्कृतं षट्तन्तुकं भवतीत्यर्थः। तदूर्ध्ववृतं कार्यम्।

तथाच मार्कण्डेयपुराणे दत्तात्रेयः,

अधोवृतैस्त्रिभिः सूत्रैः पुनश्चोर्ध्ववृतैस्त्रिवृत्।

ऊर्ध्ववृतस्य लक्षणमाह

संग्रहकारः,

करेण दक्षिणेनोर्ध्वगतेन त्रिगुणीकृतम् ।

वलितं मानवैः सूत्रं शास्त्रे ऊर्ध्ववृतं स्मृतम् ॥

ऊर्ध्वं गतेन ऊर्ध्ववलितेन दक्षिणेन करेण यद्वलितं तदूर्ध्ववृतमित्यर्थः ।

## अथोपवीतनिर्माणप्रकारः ।

तत्र देवलः,

कार्पासकं समादध्याच्छुचिक्षेत्रे विशोधितम् ।

त्रिवृतं तु तथा कार्यं ब्राह्मण्या सूत्रकं कृतम् ॥

ब्राह्मण्यत्र सधवेति व्याख्येयम् । विधवानिर्मितस्य निषिद्धत्वात् ।

तथाच स्कान्दे,

विधवारचितं सूत्रमनध्याये कृतं च यत् ।

विच्छिन्नं चाप्यधो यातं भुक्तनिर्मितमुत्सृजेत् ॥ इति ।

इदं च सूत्रान्तरसम्भवे द्रष्टव्यम् । असम्भवे तु तस्यापि ग्राह्यत्वात् ।

तदुक्तं स्मृतिसारे,

छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् ।

विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचिः ॥ इति ।

छेदे विनाशे, यज्ञोपवीतस्येति शेषः ।

ग्रामान्निष्क्रम्य संख्याय षण्णवत्यङ्गुलीषु तत् ।

तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिङ्गकैस्त्रिभिः ॥

अब्लिङ्गकैः आपोहिष्ठादिभिः ।

देवागारेऽथवा गोष्ठे नद्यां वा ऽन्यत्र वा शुचौ ।

सावित्र्या त्रिगुणं कुर्यान्नवसूत्रं तु तद्भवेत् ॥
बिल्वाश्वत्थादियज्ञार्थवृक्षस्यान्यतमस्य तु ।
बध्नीयात्तत्सजीवं तु पितृभ्यो नम इत्यथ ॥
अप्रमदावेक्षितव्यं स्यात्पितॄणां तृप्तिदं हि तत् ।
त्रिस्ताडयेत्करतलं देवानां तृप्तिदं हितत् ॥
सव्ये मृदं गृहीत्वाऽस्मिन् स्थापयेद् भूरिति ब्रुवन् ।
पत्रं पुष्पं फलं वापि व्याहृतीभिः प्रतिक्षिपेत् ॥
अभिमन्त्र्याथ भूरग्निश्चेतिवृत्तत्रयं त्रिभिः ।

तत्र मन्त्राः । भूरग्नये च पृथिव्यै च महते च स्वाहा । भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । सुवरादित्याय दिवे च महते च स्वाहेति ।

हरिब्रह्मेश्वरेभ्यश्च प्रणम्य च दधात्यथ ।
यज्ञोपवीतमित्यादिमन्त्रः स्यादवधारणे ॥
यज्ञोपवीतमित्यादिव्याहृत्या वापि धारयेत् ।
अथ प्रतितन्तु देवताः ।

तत्र देवलः,

ॐकारः प्रथमस्तन्तुर्द्वितीयोऽग्निस्तथैवच ।
तृतीयो भगदैवत्यश्चतुर्थः सोमदैवतः ॥
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः ।
सप्तमो वसुदैवत्यो धर्मश्चाष्टम एव च ।
नवमः सर्वदैवत्य इत्येता नवदेवताः ॥ इति ।
एतदज्ञाने निन्दार्थवादमाह

पितामहः,

य एवं नाभिजानाति ब्रह्मसूत्रसमुद्भवम् ।
वेदोक्तं निष्फलं तस्य स्नानदानजपादिकम् ॥

ब्राह्मणो यो न जानाति ब्रह्मसूत्रस्य संस्थितिम्।
मोहात्मा वहेत भारं पशुर्गौरिव सर्वदा॥ इति।

अथ यज्ञोपवीतनिरुक्तिः।

**स्मृतिसारे,**

यज्ञार्थः परमात्मा य उच्यते चैव होतृभिः।
उपवीतं ततोऽस्येदं तस्याद्यज्ञोपवीतकम्॥ इति॥

अथ यज्ञोपवीतोत्पत्तिः।

**तत्राश्वलायनः,**

ज्ञातृविज्ञेययोरैक्यमविजानन् द्विजोत्तमः।
न सृजेदात्मनः सूत्रं ब्राह्मं ब्रह्मविनिर्मितम्॥
सिसृक्षुरेक एवाग्रे समासीनः शिवः स्वयम्।
दृष्ट्वा गुणमयीं मायां सूत्ररूपामिवाकरोत्॥
तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम्।
स्वयं ब्रह्माऽभवद्रुद्रो रुद्रश्चास्य जयाय सः॥
ज्ञानात्मकेन हरिणा ब्रह्मात्मनि शिवेऽव्यये।
तत्सूत्रमुपवीतत्वाद्ब्रह्मसूत्रमिति स्मृतम्॥
यज्ञेन चोपवीतत्वाद्यज्ञसूत्रं विदुर्बुधाः।
तदाज्ञया वृतत्वाच्च ब्रह्मणा ब्रह्मसूत्रकम्॥
तावल्लोकास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः।
शिवसृष्टास्त्रयो वर्णास्त्रिवृत्सूत्रं समाश्रयन्॥
तद्ग्रन्थिमाश्रयत्तारस्त्रिमात्रो नादसंयुतः।
तद्ग्रन्थ्यग्रं च सावित्री देवमाता शिवाज्ञया॥
एवं द्वादशदैवत्यं ब्रह्मसूत्रं द्विजन्मनाम्।
ब्रह्माग्रे कल्पयामास वेदार्हाणामनुत्तमम्॥
येनांसे धृतमात्रेण ब्रह्मसूत्रेण ते द्विजाः।

भवन्ति ब्राह्मणा नाम वेदार्हाश्च त्रयस्त्विह ॥
यावत्प्रभृति वामांसे ब्रह्मसूत्रं द्विजस्य तत् ।
गुरुः प्रतिष्ठापयति कालप्रभृति संयतः ॥
तावत्प्रभृति तस्यैव पिताऽऽचार्यः स उच्यते ।
माता च तस्य सावित्री द्वितीयं जन्म चोच्यते ॥

## अथ यज्ञोपवीतपरिमाणम् ।

तत्र स एव,

आकटेस्तत्प्रमाणं स्याद्दीर्घं तु सुस्थिरं तथा ।
कनिष्ठाङ्गुलवत् स्थूलं तदर्धं वा त्रिवृच्छुभम् ॥
आयुर्हरत्यतिह्रस्वमतिदीर्घं तपोहरम् ।
यशो हरत्यतिस्थूलमतिसूक्ष्मं धनापहम् ॥
पवित्रं परमं शुद्धमायुष्यं च श्रियावहम् ।
ओजस्यं ब्रह्मवर्चस्यं ब्रह्मसूत्रं तथोदितम् ॥ इति ।

कात्यायनोऽपि,

पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥

वसिष्ठः,

नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ इति ।

देवलोऽपि,

स्तनादूर्द्धमधो नाभेर्न कर्त्तव्यं कथं चन । इति ।

मनुः,

रन्ध्रादिनाभिपर्यंतं ब्रह्मसूत्रं पवित्रकम् ।
न्यूने रोगप्रवृद्धिः स्यादधिके धर्मनाशनम् ॥ इति ।

अथाश्रमविशेषेणोपवीतसंख्याविशेषः ।

**तत्र भृगुः,**

उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते ।
एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः ॥ इति ॥

तथाशब्दात्स्नातकग्रहणम् ।

**तथा च वसिष्ठः,**

स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् ।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः ॥ इति ।

इतरयोः गृहस्थवानप्रस्थयोः ।

**देवलोऽपि,**

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्त्ते च कर्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ॥ इति ।

यतीनां त्रिदण्डिनाम् । एकदण्डिनां शिखासूत्रत्यागाभिधानात् ।

**कश्यपोऽपि,**

त्रीणि चत्वारि पञ्चाष्ट गृहिणः स्युर्दशापिवा ।
उत्तमाश्रमिणस्त्वेकं व्रतिनस्त्वेकमेवहि ॥ इति ।

इयं च संख्या नित्यधारणे । काम्यं तु संख्यान्तरमपि ।

**तथा च देवलः,**

बहूनि चायुष्कामस्येत्यादि काम्यं प्रचक्षते । इति ।

बहुत्वं चात्र कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसन्नम् ।

**अन्यत्रापि,**

आयुष्कामैः सदा धार्यं बहुयज्ञोपवीतकम् ।
पञ्चभिः पुत्रकामी स्यात् धर्मकामी तथैवच ॥ इति ।

इदं च ब्रह्मचारिणोऽपि भवति । आयुष्कामनाया आविशेषादित्येके । अन्ये तु गृहस्थस्यैवेत्याहुः । पुत्रकामादित्याहच-

र्यात्। कामनासिद्धिरपि यावज्जीवधारणादेव न सकृद्धारणेन। सदापदश्रवणात्। यस्तु

एकयज्ञोपवीतेन जपहोमादि यत्कृतम्।
तत्सर्वं विलयं याति न पितॄंश्चोपतिष्ठति॥

इति निन्दार्थवादः, सोऽपि गृह्यादिविषय एव न ब्रह्मचारिविषयः। यज्ञोपवीतधारणं च क्रत्वर्थं पुरुषार्थं च।

तदाह कात्यायनः,

सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्॥ इति।

अत्र बद्धशिखत्वं ब्रह्मचारिणः शिखाजटत्वपक्षे। मुण्डत्वपक्षे तु न तन्नियमः। न च यज्ञोपवीतनाशे प्रायश्चित्तश्रवणात् केवलपुरुषार्थत्वं शङ्कनीयम्। विशिखो व्युपवीतश्चेत्यनेन कर्मवैगुण्यप्रतिपादनात्कर्माङ्गत्वसिद्धेः। सदाशब्दश्रवणाच्चोपवीतस्यकण्ठादनुत्तारणं गम्यते।

तथा च भृगुः,

मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम्।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः॥
सकृच्चाधारणात्तस्य प्रायश्चित्ती भवेद् द्विजः। इति।

प्रक्षालनार्थं तु शाखाविशेषेणापवादमाह

स एव,

तैत्तिरीयाः कठाः काण्वाश्चरका वाजसनेयिनः।
कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः॥
बह्वृचाः सामगाश्चैव ये चान्ये यजुःशाखिनः।
कण्ठादुत्तार्य सूत्रं तु पुनरर्हन्ति संस्क्रियाम्॥

संस्क्रियां मन्त्रेण धारणम्।

अभ्यङ्गे चोदधिस्नाने मातापित्रोर्मृतेऽहनि ।
कण्ठादुत्तार्य सूत्रं तु कुर्याद्वै क्षालनं द्विजः ॥ इति ।

केशसंस्पृष्टे यज्ञोपवीते शुद्धिमाह

**देवलः,**

सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ।
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुत्क्षिपेत् ॥ इति ।

यज्ञोपवीतादिभङ्गे प्रतिपत्तिमाह

**मनुः,**

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः ॥ इति ।

**भृगुः,**

पाटितं त्रुटितं वापि ब्रह्मसूत्रं यदा भवेत् ।
नूतनं धारयेद्विप्रः स्नानसंकल्पपूर्वकम् ॥
आचम्य प्रतिसूत्रं तु त्रिगुणीकृत्य यत्नतः ।
यज्ञोपवीतमेकैकं प्रतिमन्त्रेण धारयेत् ॥

**गोभिलः,**

दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं स्कन्धमन्ववलम्बं भवति एवं यज्ञोपवीती भवतीति ।

यज्ञोपवीतधारणे कर्मविशेषेण देशविशेषमाह

**परिशिष्टम्,**

वामस्कन्धे यज्ञोपवीतं दैवे, प्राचीनावीतमितरथा पितृयज्ञे, नाभ्यां द्विकण्ठावसक्तमभिचारे, निवीतम् आपृष्ठदेशावलम्बि ग्राम्यधर्मेष्विति ।

इतरथा दक्षिणस्कन्धे । नाभ्यां, लग्नमिति शेषः । द्विकण्ठावसक्तं कण्ठपार्श्वद्वयलम्बितम् ग्राम्यधर्मो मैथुनम् । बहुवचनान्मूत्रपुरीषादेर्ग्रहणम् ।

---

देवलोऽपि,

ब्रह्मसूत्रेऽपसव्येंऽसे स्थिते यज्ञोपवीतिता ।
प्राचीनावीतिता सव्ये कण्ठस्थे च निवीतिता ॥ इति ।

श्रुतिरपि ।

दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषमिति ।

अथावक्षारणम् ।

तत्राश्वलायनः,

समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते पुरस्तात्प्रत्यङ्मुख इतरोऽपामञ्जली पूरयित्वा तत्सवितुर्वृणीमहइति पूर्णेनास्य पूर्णमवक्षारयन्नासिच्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसाविति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात्सविता ते हस्तमग्रभीदसाविति द्वितीयमग्निराचार्यस्तवासाविति तृतीयम् आदित्यमीक्षयेद्देवसवितरेष ते ब्रह्मचारी तं गोपाय समामृतेत्याचार्यः कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वाकमुपनयते काय त्वा परिददामीति युवा सुवासाः परिवीत आगादित्यर्धर्चेनैनं प्रदक्षिणमावर्त्तयेत्तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेणेति ।

शौनकोऽपि ।

हुत्वैवमुत्थायाचार्यो वह्नेरुत्तरतोऽन्तिके ।
प्रदेशे प्राङ्मुखस्तिष्ठेच्छिष्योऽप्युत्थाय वह्निना ॥
व्यवधानं परिहरन्गत्वाऽऽचार्यस्य पूर्वतः ।
आचार्याभिमुखः स्थित्वा घटयेत्त्वन्यमञ्जलिम् ॥
निदधाति तमप्यन्यो वारिणा पूरयेत्ततः ।
तत्सवितुर्वृणीमहे वयमित्याद्यृचाऽनया ॥

शिष्याञ्जलौ स्वाञ्जलिस्थमवक्षार्योदकं गुरुः ।
शिष्याञ्जलिगताश्चापो ऽवक्षार्य स्वेन पाणिना ॥
देवस्य त्वेति गृह्णामीत्यन्तं यजुरुदीर्य तु ।
शर्मन्ति नाम संबुद्ध्या निर्दिश्य च बटोः पुनः ॥
साङ्गुष्ठं दक्षिणं पाणिं गृह्णीयात्स्वेन पाणिना ।
एवमेव पुनः कुर्यादञ्जल्याः पूरणादिकम् ॥
हस्तग्रहणपर्यन्तं कर्म हस्तपरिग्रहे ।
तत्र मन्त्रस्तु सवितेत्यादिः स्यादितरत्समम् ॥
पुनश्च पूर्ववत्कुर्यादञ्जल्योः पूरणादिकम् ।
मन्त्रस्तत्राग्निराचार्यस्तवेत्यादिपरिग्रहम् ॥
विद्यतेऽतोऽन्यदखिलं तन्त्रं पूर्ववदाचरेत् ।
मन्त्रेण देवसवितरेष तेत्यादिना गुरुः ॥
आदित्यमीक्षयेच्छिष्यमथोभावपि पूर्ववत् ।
तिष्ठेतामुत्तरेणाग्निमन्योन्याभिमुखौ ततः ॥
धात्रे परिददाम्येनमिति संकल्पपूर्वकम् ।
कस्य ब्रह्मादिकं मन्त्रं ददाम्यन्तं गुरुर्जपेत् ॥
युवा सुवासा इत्याद्यमप्यर्धर्चमुदीर्य तम् ।
प्रदक्षिणमुपावर्त्त्य प्रापयेत्प्राङ्मुखं बटुम् ॥
अस्योपरि तदंसाभ्यां पाणी दत्त्वा ऽऽत्मनो गुरुः ।
तन्धीरासः कवय उन्नयन्तीत्याद्यमुत्तरम् ॥
अर्धर्चमुक्त्वोरोदेशं हस्ताभ्यां युगपत्स्पृशेत् ।
ततः पूर्ववदासीत गुरुः शिष्येण चात्मना ॥
व्यवधानं परिहरन्नग्नेर्गत्वाऽन्तिके गुरोः । इति ।

अवक्षारणे कारणमाह

आश्वलायनः,

शुचित्वसिद्धये तस्य सावित्रीग्रहणे गुरुः ।
अभिमन्त्र्य यथा वारि सिञ्चसेत्र तदञ्जलौ ॥
एवं त्रिवारं शिष्यस्य हस्तं गृह्णाति देशिकः ।
सम्बुद्ध्या पावकं यावत् साक्षीकृत्य गुरुस्तदा ॥
हस्तं गृह्णीत शिष्यस्य मन्त्राशिष्यत्वसिद्धये ।
सूर्यात्मा देशिको भूत्वा पावकात्मा च संयतः ॥
शिष्योऽसीति च सम्बुद्ध्या शृण्वन्तमिति निर्दिशेत् ।
कर्मसाक्षिणमादित्यं तर्पयेत्तं यथोक्तवत् ॥
सर्वव्रतानां भगवान् सूर्योऽधिपतिरीश्वरः ।
कालकर्मगुणानां च तस्मात्तं तर्पयेत्तदा ॥
ततो व्रतानां पतये ददाति रवये वटुम् ।
रवेः समानताऽर्थाय रक्षार्थं तद्बटोरपि ॥
असामर्थ्यात्समाहर्तुमात्मनस्तं गुरुः पुनः ।
ददाति मन्त्रवद्गृह्य प्रजानां पतये पुनः ॥
प्रजापतये सूर्याय ताभ्यां दत्त इति स्मरन् ।
गृहीत्वैवानयोः शिष्यं समालभ्यात्मसात्करोत् ॥
कुर्वन्स्येवात्मसात्सन्तः सर्वान्पूर्वमुखस्थितान् ।
तस्मात्पूर्वमुखं कृत्वा गृह्णीयादित्थमेव तम् ॥
गुरोरग्नेः प्रधानत्वात्प्रागग्नौ जुहुयाद्बटुः । इति ।

पारस्करः,

अथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयत्यापोहिष्ठेति तिसृभिरथैनं सूर्यमुदीक्षयति तच्चक्षुरित्यथास्य दक्षिणांसमधिहृदयमालभते मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमित्य-

थास्य दक्षिणं हस्तं गृहीत्वा को नामासीत्यसावहं भो इति प्रत्या-
हार्थैनमाह को नामासि कस्य ब्रह्मचार्यसीति भवत इत्युच्यमाने
इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्यथैनं भू-
तेभ्यः परिददाति प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे
परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा
परिददामि विश्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वेभ्यस्त्वा भूते-
भ्यः परिददाम्यरिष्ट्याइति।

## अथ समिदाधानम्।

तत्राश्वलायनः,

अग्निं परिसमूह्य ब्रह्मचारी तूष्णीं समिधमादध्यात्तूष्णीं वै प्राजापत्यं प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते मन्त्रेण हैकेन।

शौनकोऽपि,

आसित्वा दक्षिणे तस्य वह्निं परिसमुह्य च।
तूष्णीं समिधमादध्यात्प्राङ्मुखो, "यादि वाग्नये"॥
इत्यादिकं खिलं मन्त्रं स्वाहेत्यन्तमुदीर्य तु।
आदध्यादेवमादाय समिधं पाणिना ततः॥
अपः स्पृष्ट्वाऽग्निना वक्त्रं संवृतोऽष्टपुटद्वयम्।
तेजसामासमित्यादिमन्त्रेण परिमृज्य तत्॥
पाणिं प्रक्षाल्य भूयोऽपि स्पृष्ट्वास्पृष्ट्वा ऽनलं, मुखम्।
त्रिर्निर्मृज्य तथा पाणिं क्षालयेच्च पुनःपुनः॥
अथोत्थायाञ्जलिं कृत्वा हृदये परिधाय च।
मयि मेधां मयीत्याद्यैः षड्भिर्मन्त्रैर्विभावसुम्॥
उपतिष्ठेदिति शेषः।

**पारस्करोऽपि,**

अत्र समिदाधानं पाणिनाऽग्निं परिसमूहत्यग्ने सुश्रवः सुश्र-

वसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा अस्येवं माँ सुश्रवस्सौश्रवसं कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्समिधमादधाति अग्ने समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यसे एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासं स्वाहेति ।

अथ गायत्र्युपदेशः ।

तत्राश्वलायनः,

जान्वोच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भो अनुब्रूहीति तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वां यथाशक्ति वाचयीतेति ।

शौनकोऽपि,

इत्येवमभिवाद्यैनं विनयावनताकृतिः ।
भूत्वोपदेशं सावित्र्याः शिष्यो वाञ्छन्नधीहि भोः ॥
सावित्रीं भो अनुब्रूहीत्युक्त्वा आसीत पार्श्वतः ।
अथाचार्योऽपि शिष्यस्य पाणी तु धृतवाससा ॥
पाणिप्रदेशेनाच्छाद्य पाणिभ्यां परिगृह्य च ।
सावित्रीं स्वयमाचार्यः पूर्वं पच्छस्तथैव तम् ॥
शिष्यं च वाचयेत्पश्चादुच्चार्यार्धर्चशः स्वयम् ।
तथैव वाचयेच्छिष्यमथोक्त्वा सकलां स्वयम् ॥
पूर्वं तथैव शिष्यं च वाचयेदित्ययं क्रमः ।
त्रिष्वप्येतेषु योगेषु यथा शिष्यस्तु शक्नुयात् ॥
वक्तुं तथैव आचार्यो वाचयेदवधानतः । इति ।

पारस्करः,

अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठन्, आसीनायेत्येके । पच्छोऽर्धर्चशः सर्वां च । स हि तृतीयेन सहानुवर्त्तयन्संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादिति ।

हारीतः,

तस्मादुपेतायोपसन्नाय समीक्षिताय समीक्षमाणाय ब्रह्मानुब्रुवन्ति नेतरेभ्यस्तान् ब्रह्मचारिण इत्याचक्षतइति । ब्रह्मशब्दोऽत्र सावित्रीपरः ।

यमः,

ॐकारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति ।
चरति ब्रह्मचर्यं च स वै श्रोत्रिय उच्यते ॥

तिस्रः, महाव्याहृतीरिति शेषः ।

मनुः,

एतयर्चाऽपि संयुक्तः काले च क्रिययाऽमुया ।
विप्रक्षत्रियविड्योनिर्गर्ह्यतां याति साधुषु ॥

एतयर्चा तत्सवितुर्वरेण्यमित्यनया ।

लौगाक्षिः,

ॐभूर्भुवःस्वरित्युक्त्वा तत्सवितुरिति सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामन्तत इति ।

तत्सवितुरितीतरयोरप्युपलक्षणम् । सावित्रीत्वाविशेषात् ।

तथाच कात्यायनः,

सावित्र्या ब्राह्मणमुपनयेत् त्रिष्टुभा राजन्यं जगत्या वैश्यं सर्वेषां वा सावित्रीति ।

तत्स्वरूपमाह

शातातपः,

तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य, देवसवितुरिति राजन्यस्य, विश्वारूपाणीति वैश्यस्येति ।

## अथ पाण्याधानम् ।

तत्राश्वलायनः,

हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिं निदधाति मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति ।

शौनकोऽपि,

ततः शिष्योरसि मम व्रतइत्यादिमन्त्रतः ।
निधायोर्ध्वाङ्गुलिं पाणिमथाबध्नीत मेखलाम् ॥
दण्डं चास्मै प्रदायोक्तं ब्रह्मचर्यं च निर्दिशेत् । इति ।

हिरण्यकेश्यपि,

अथास्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति मम हृदये हृदयं ते अस्तु मम चित्तं चित्तेनान्वेहि मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यं मामेवानुसंधत्स्व मयि चित्तानि सन्तु ते मयि सामीच्यमस्तु ते मह्यं वाचं नियच्छतादिति ।

## अथ मेखला ।

तत्राश्वलायनः,

तेषां मेखला मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्यावी वैश्यस्येति। मुञ्जास्तृणविशेषाः तत्कृता मेखला मौञ्जी। धनुर्ज्या धनुषोपनीय ग्राह्या मौर्वी। अविरूर्णायुस्तद्रोमभिः कृता आवी ।

पारस्करोपि,

मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्येति ।

हिरण्यकेश्यपि,

मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य ज्यां र जन्यस्याावीसूत्रं वैश्यस्येति ।

गौतमोऽपि,

मौञ्जीज्यामौर्वीशणसूत्र्यो मेखलाः क्रमेणेति । ज्या चासौ मौर्वी चेति कर्मधारयः । ज्यापदेनैवार्थसिद्धौ मौर्व्युपादानं धनुषोपनीय ग्रहणासंभवे मूर्वानिर्मितरज्जुमात्रग्रहणार्थम् ।

विष्णुरपि,

तेषां मुञ्जज्याबल्वजमय्यो मेखलाः क्रमेणेति ।

वसिष्ठोऽपि,

मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य शणतान्तवी वैश्यस्येति ।

पैठिनसिरपि,

मौञ्जी मेखला ऽश्मन्तकजा वा ब्राह्मणस्य वैल्वजा मौर्वी वा राजन्यस्य शाणी क्षौमी वा वैश्यस्येति ।

मेखला कटिवेष्टनरज्जुः । अश्मन्तकः कुशसदृशस्तृणविशेष इति कल्पतरुः । बैल्वजा विल्वत्वग्निर्मिता । मूर्वा तेजनी मोलेति दाक्षिणात्यानां प्रसिद्धा । मरलेति द्रविडानाम् । तन्निर्मिता रज्जुर्मौर्वी । अयं च विकल्पो यथाशाखं यथासंभवं वा द्रष्टव्यः ।

आपस्तम्बोऽपि,

मौञ्जी मेखला त्रिवृत ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानां, धनुर्ज्या राजन्यस्य मौञ्जी वा, अयोमिश्रा आविकसूत्रं वैश्यस्य सैरी ताम्बूली वेत्येके । शक्तिविषये मुञ्जप्राप्तौ संभवन्त्यां दक्षिणावृत्तानां प्रदक्षिणावर्त्तितानां योग्यत्वान्मुञ्जादिद्र-

व्याणामित्यर्थः। अयोमिश्रा लोहसूत्रयुक्ता। सैरी सीरस्य हलस्य योत्क्रमिति यावत्। ताम्बूली मूलोदकवृक्षकृतेति कपर्दी॥

गोभिलः,

मुञ्जकाशताम्बूल्यो रशना भवन्तीति।

बैजावापोऽपि,

मेखलां त्रिगुणां प्रसलविसृष्टां प्रदक्षिणं त्रिः परिहरन्तीति। प्रसलं प्रदक्षिणं यथा भवत्येवं सृष्टां निर्मितां परि समन्तान्नयान्ति। प्रदक्षिणं यथा भवति तथा त्रिर्वेष्टयन्ति।

## अथ मेखलालक्षणम्।

तत्र मनुः,

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला।

क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी॥

त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेवच। इति।

त्रिवृत् त्रिगुणवलिता। समा मध्ये निम्नोन्नतत्वरहिता। श्लक्ष्णा मृदुलस्पर्शा। त्रिवृता कटौ त्रिवारं वेष्टिता। एकत्रिपञ्चग्रन्थियुक्ता मेखलेति। मेखलायामयं गुणविधिः। तत्र च त्रिवृत्त्वरूपो गुणो विधीयमानो ज्यायां नान्वेति। स्वरूपविनाशप्रसङ्गात्। यत्र त्वविरोधस्तत्रान्वेत्येव। यथा शणतान्तव्याम्। त्रिवृता ग्रन्थिनेति। नायमैच्छिको विकल्पः, किं तु प्रवरसमसंख्यानियमार्थः यथर्षिशिखावत्।

संख्यान्तरमप्याहाश्वलायनः,

त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता।

तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः॥

वेदत्रयेणावृतोऽहमिति मन्येत स द्विजः।

तद्ग्रन्थयस्तदङ्गानि तद्रहस्यानि संस्मरेत्॥ इति।

प्रचेता अपि, त्रिगुणा प्रदक्षिणा मेखलेति ।

अथानुकल्पाः ।

तत्र मनुः,

मुञ्जाभावे तु कर्त्तव्या कुशाश्मन्तकबल्वजैः । इति ।

मुञ्जग्रहणमुक्तद्रव्योपलक्षणम् । प्रतिनिधौ त्रित्वदर्शनात् । तेन मुञ्जमूर्वाशणानामभावे वर्णत्रयस्य क्रमेण कुशादयो ग्राह्या इत्यर्थ इति केचित् । वस्तुतस्तु एकैकस्याः मेखलायास्त्रयस्त्रयः प्रतिनिधयः कुशाश्मन्तकबल्वजाः प्रतिनिधयो मेखलाया इत्याकारकश्रुतिकल्पने लाघवात् । अन्ये तु मुञ्जग्रहणाद् ब्राह्मणं प्रत्येवायं प्रतिनिध्युपदेशो नान्यं प्रति । तथाच क्षत्रियादीनां विहितद्रव्यालाभे तत्तत्सदृशगुणं तृणादि ग्राह्यमित्याहुस्तन्न ।

एतासामप्यलाभे तु कुशाश्मन्तकबल्वजैः ।

इति वाक्येन मुञ्जशब्दस्योपलक्षणपरत्वावश्यंभावात् । वाचनिकात्प्रतिनिधेर्नैयायिकस्य दुर्बलत्वाच्च । वाचनिकस्याप्यभावे नैयायिको ग्राह्यः ।

उक्तं च त्रिकाण्डमण्डनाचार्यैः,

शिष्टस्याभावतस्तुल्यं द्रव्यं प्रतिनिधीयते ।

यावद्यावत्सुसदृशं तत्तदेव हि गृह्यते ॥ इति ।

शिष्टस्य विहितस्येत्यर्थः । अत्र च मुञ्जादिस्थाने विहितानां कुशादीनां प्रतिनिधित्वान्मुञ्जधर्मतत्त्रिवृत्त्वादिधर्मलाभो भवति नीवारेष्विव व्रीहिधर्माणां प्रोक्षणावघातादीनामिति ।

यमोऽपि,

विप्रस्य मेखला मौञ्जी ज्या मौर्वी क्षत्रियस्य च ।

शणसूत्री तु वैश्यस्य मेखला धर्मतः स्मृताः ॥

एतासामप्यलाभे तु कुशाश्मन्तकबल्वजैः ।

मेखलास्त्रिवृतः कार्याः ग्रन्थिनैकेन वा त्रिभिः ॥ इति ।

**पारस्करोऽपि,**

मुञ्जाभावे कुशाश्मन्तकबल्वजानामिति ।

**शङ्खोऽपि,** सर्वेषां वा मौञ्जीति ।

## अथ दण्डाः ।

तत्राश्वलायनः, तेषां दण्डाः पालाशो ब्राह्मणस्यौदुम्बरः क्षत्रियस्य बैल्वो वैश्यस्येति ।

पलाशशब्दोऽत्र वृक्षवचनो न पत्रवचनः । औदुम्बरादिसाहचर्यात् ।

**पारस्करः,**

पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्येति।

**हिरण्यकेशी,**

बिल्वं पालाशं वा दण्डं ब्राह्मणस्य नैयग्रोधं राजन्यस्यौदुम्बरं वैश्यस्येति ।

**मनुः,**

ब्राह्मणो बिल्वपालाशौ क्षत्रियो वटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥

पीलुर्गुडफलः । पीलुर्गुडफलः स्रंसीति त्रिकाण्डीस्मरणात् । तत्संबन्धी पैलवः ।

**विष्णुः,**

पालाशखादिरौदुम्बरा दण्डा इति ।

**भविष्यपुराणे,**

ब्राह्मणे बैल्वपालाशौ तृतीयः प्लक्षजस्तथा ।
न्यग्रोधखादिरौ क्षत्रे तथाऽन्यो वेतसोद्भवः ॥
पैलवौदुम्बरौ वैश्ये तृतीयोऽश्वत्थजस्तथा ।

दण्डानेतान्महाबाहो धर्मतोऽर्हन्ति धारितुम् ॥

**शङ्खः,**

पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्त्तिताः ।

पर्णः पलाशः ।

**पैठीनसिः,**

औदुम्बरो बादरो वारणो वा वैश्यस्य । वारणः वरणवृक्षोद्भवः ।

**मनुः,**

विप्रस्य दण्डः पालाशो बैल्वो वा धर्मतः स्मृतः ।
आश्वत्थः क्षत्रियस्याथ खादिरो वापि धर्मतः ॥
औदुम्बरोऽथ वैश्यस्य प्लाक्षो वा दण्ड उच्यते ।

अथानुकल्पाः ।

**तत्र पारस्कराश्वलायनौ,**

सर्वे वा सर्वेषामिति ।

**गौतमः,**

यज्ञियो वा सर्वेषामिति । यज्ञियो यज्ञार्हवृक्षीयः । स चाभिहितो

**ब्रह्मपुराणे,**

शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥
साल्वश्च देवदारुश्च खदिरश्चेति यज्ञियाः । इति ।

**यमः,**

एतेषामप्यलाभे तु सर्वेषामेव यज्ञियाः। इति ।

**शौनकोपि,**

एतेषामप्यलाभे तु सर्वेषां यज्ञियाः स्मृताः । इति ।

आपस्तम्बोऽप्याह, वार्क्षो दण्ड इत्यवर्णसंयोगेनैकउपदिशन्तीति ।

अथ दण्डलक्षणम् ।

तत्र मनुः,

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नॄणां सत्वचो नाग्निदूषिताः ॥ इति ।

गौतमोऽपि,

अपीडिता यूपवक्रास्सवल्का इति । अपीडिता वल्लिवेष्टनादिभिः । यूपवक्रा यूपवदवनताग्राः ।

तथाच व्यासः,

शिरोललाटनासाग्रप्रमाणा यूपवन्नताः । इति ।

पैठीनसिरपि,

अपीडिता यूपवक्राः सशल्का इति ।

दण्डपरिमाणं चाश्वलायने, केशसम्मितो ब्राह्मणस्य, ललाटसम्मितः क्षत्रियस्य, घ्राणसम्मितो वैश्यस्येति ।

पारस्करोऽपि, केशसम्मितो ब्राह्मणस्य दण्डो, ललाटसम्मितः क्षत्रियस्य, घ्राणसम्मितो वैश्यस्येति ।

मनुः,

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥

केशान्तिको मूर्धप्रमाण इत्यर्थः । अत एव दण्ड इत्यनुवृत्तौ गौतमः, मूर्धललाटनासाग्रप्रमाणा इति । अत्र विशेषमाह

वसिष्ठः,

घ्राणसम्मितो ब्राह्मणस्य, ललाटसम्मितः क्षत्रियस्य, केशसम्मितो वैश्यस्येति ।

**शङ्खः,**

केशावधिललाटान्तास्तुल्याः प्रोक्ताः क्रमेण तु । इति ।

**विष्णुरपि,**

पालाशखादिरौदुम्बरा दण्डाः केशान्तललाटनासादेशतुल्या इति ।

**शङ्खलिखितावपि,** बिल्वपालाशखादिराश्वत्थपैलवौदुम्बरा दण्डाः केशललाटवक्त्रान्ता इति ।

एतेषां नित्यधारणमाह **याज्ञवल्क्यः,**

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् । इति ।

एतेषां धारणकारणमाहाश्वलायनः,

व्रतिनां लक्ष्यसिद्ध्यर्थं मृगाजिनमिहेष्यते ।
मेखला च पवित्रं च रक्षाशुद्ध्यर्थमेव वा ॥
अदान्तं दमयित्वा मां मार्गे संस्थापयन्स्वयम् ।
दण्डः करे स्थितो यस्मात्तस्माद्रक्षा यतोऽभयम् ॥
इति नित्यं स विमृशन् पश्यन् दण्डं करस्थितम् ।
स्वधर्मं न त्यजेद्धीमान्विधर्माणि न चाश्रयेत् ॥ इति ।

## अथ ब्रह्मचारिणां व्रतोपदेशः ।

**तत्राश्वलायनः,**

मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् ब्रह्मचार्यसि अपोशानकर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्व द्वादशवर्षाणि वेदब्रह्मचर्यं ग्रहणान्तं वा सायं प्रातर्भिक्षेत सायंप्रातः समिधमादध्यादिति ।

## अथाद्यभिक्षाचरणम् ।

**तत्राश्वलायनः,**

अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा, भिक्षां भवा-

न्ददात्विसनुप्रवचनीयामिति वा, तद्वाचार्याय वेदयेत तिष्ठेदहः शेषमिति ।

अयं नियमोऽनुप्रवचनीयभैक्षे । कुतः । अनुप्रवचनीये भिक्षां भवान्ददात्विति भैक्षमन्त्रात् । भिक्षापदस्थानेऽनुप्रवचनीयपदं वा पठेत् । स्त्रियं प्रति भिक्षा चेदुभयविधेऽपि मन्त्रे भवतीपद स्यैवादौ प्रयोग इति वृत्तिकृत् । शौनकस्तु स्त्रीपुरुषयोरुभयोरपि भिक्षणे भिक्षाशब्दस्यैवादौ प्रयोगं वक्ष्यति । तल्लब्धं व्रीह्यादि आचार्याय निवेद्याहःशेषं तिष्ठेदेव नोपविशेदित्यर्थः ।

स्मृतिरूपेणाप्याह स एव,

अप्रत्याख्यायिनीं नारीमप्रत्याख्यायिनं नरम् ।
ब्रह्मौदनार्थं विप्रार्थं सुशुद्धान्याचयेत्तदा ॥
पात्रं गृहीत्वा संयाच्य भिक्षामाहृत्य तत्स्वयम् ।
निवेद्य गुरवे दत्त्वा प्रैषं श्रुत्वा समापयेत् ॥
आचारान्संविनिर्दिश्य भवेदाचार्यता गुरोः ।
प्रैषेण प्रेषयेत्तस्माच्छिष्यं गृह्योक्तवर्त्मना ॥
दिनशेषं नयंस्तिष्ठेत्प्रैषप्रभृति तु व्रती ।
सावित्र्या संप्रवृत्त्यर्थं विण्मूत्रोत्सर्जनादृते ॥ इति ।

शौनकोऽपि,

ब्रह्मचारी निशारम्भे पक्तुं ब्रह्मौदनं चरुम् ।
द्विजान् भोजयितुं पश्चाद् द्रव्यं भिक्षेत बान्धवान् ॥
अप्रत्याख्यायिनः पुंसः स्त्रियो वा तादृशीः पुनः ।
भिक्षेत पात्रहस्तः सन्प्राप्य प्राप्य तदन्तिकम् ॥
अग्रे भिक्षेत जननीमप्रत्याख्यायिनी च या ।
पश्चात्पितरमन्येऽपि ये वा स्युर्बान्धवास्ततः ॥
अत्र प्रकारो भिक्षामित्युक्त्वा पूर्वं ततः परम् ।

भवान्ददात्विति ब्रूयात्पुरुषं प्रति भिक्षणे ॥
स्त्रियं तु भिक्षां भवती ददात्विसभियाचितम् ।
लब्धं विज्ञाप्य गुरवे तत्पार्श्वे तन्निधाय च ॥
तत्संन्निधावचपलस्तिष्ठेदादिसंक्षयात् । इति ।

भिक्षास्वरूपमाह ।

सुवर्णं रजतं रत्नं सा पात्रेऽस्य विनिक्षिपेत् । इति ।

## अथ मध्याह्नसंध्यानिर्णयः ।

तत्र जैमिनिः,

यावद् ब्रह्मोपदेशो न तावत्संध्यादिकं नच ।
ततो मध्याह्नसंध्यादि सर्वं कर्म समाचरेत् ॥ इति ।

ब्रह्मोपदेशो गायत्र्युपदेशः । ततः गायत्र्युपदेशानन्तरमित्यर्थः । मध्याह्नसंध्यैवादिर्यस्य तत् तेन मध्याह्नसंध्यात एव सर्वकर्मारम्भोऽवगम्यते ।

**स्मृत्यन्तरे तु,**

उपानयेऽह्नि कर्त्तव्यं सायंसंध्येरुपासनम् ।
आरभेद् ब्रह्मयज्ञं तु मध्याह्ने तु परेऽहनि ॥ इति ।

तद्यथाशास्त्रं व्यवस्थापनीयम् । यद्वा सायंसंध्येरुपासनामिति न मध्याह्नसंध्याव्यवच्छेदकमिति न विरोधः । ब्रह्मयज्ञस्य तु वेदारम्भाभावादेवाप्राप्तावपि वचनात् द्वितीयदिनमध्याह्नमारभ्य गायत्र्यां कर्तव्यतोच्यते । तथाच

**जैमिनिः,**

अनुपाकृतवेदस्य कर्त्तव्यो ब्रह्मयज्ञकः ।
वेदस्थाने तु सावित्री गृह्यते तत्समा भवेत् ॥ इति ।

## अथानुप्रवचनीयः ।

तत्राश्वलायनः, अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयि-

त्वाऽऽचार्याय वेदयीताचार्यः समन्वारब्धे जुहुयात्सदसस्पतिमद्भुतमिति सावित्र्या द्वितीयं यद्यत्किंचात ऊर्ध्वमनूक्तं स्यादृषिभ्यस्तृतीयं सौविष्टकृतं चतुर्थं ब्राह्मणान् भोजयित्वा वेदसमाप्तिं वाचयीतेति॥

अस्यार्थः । ब्रह्मभोजनार्थं ओदनो ब्रह्मौदनः । ब्रह्मशब्दो ब्राह्मणवाचकः ।

वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ।

इत्यभिधानात् । तेन ब्राह्मणभोजनं विधास्यमानमत एव चरोर्भवति । अनुप्रवचननिमित्तमनुप्रवचनीयम् । पाकयज्ञविधानेन ब्रह्मचार्यनुप्रवचनीयं श्रपयित्वाऽऽचार्याय निवेदयेच्छृतः स्थालीपाक इति । सावित्री तत्सवितुर्वरेण्यमित्येषा प्रसिद्धा । द्वितीयग्रहणमुत्तरार्थं यद्यच्चात ऊर्ध्वमित्यादि । अत्र सावित्र्यनूक्तेति कृत्वा सावित्र्या द्वितीयं जुहोति । अत ऊर्ध्वमपि महानाम्न्यादिव्रतेषु यद्यदनूक्तं तेनतेन द्वितीयं जुहोति । एतदुक्तं भवति । महानाम्न्यादिव्रतेषु श्रावणान्तेष्वनुप्रवचनीयहोमः कार्यः । तत्र च सावित्र्याः स्थाने महानाम्नीभ्यः स्वाहा महाव्रताय स्वाहा उपनिषदे स्वाहा इत्येवं द्वितीयं जुहोति । अन्यत्समानमिति । द्वितीयग्रहणं महानाम्न्यादिनामधेयेन होमार्थम् । इतरथा मन्त्रेण होमे क्रियमाणे प्रतिमन्त्रं स्वाहाकारः प्राप्तः स्यात् । स च प्रदानार्थ इति कृत्वा अनेकाहुतयः स्युः । ततश्चोत्तरासां द्वितीयत्वं न स्यात् । तस्माद् द्वितीयग्रहणम् । ऋषिभ्यस्तृतीयमिति तृतीयवचनमृषिभ्य इत्यस्य विधायकत्वं निवर्त्य मन्त्रत्वज्ञापनार्थं, तेन ऋषिभ्यः स्वाहेति जुहोतिसंख्यावचनं नियमार्थम् चतुर्थमेव न षष्ठमिति । तेनाज्यभागौ न भवतः । तयोः सतोरिदं हि षष्ठं स्यादिति । ततश्च सदसस्पतिमित्यृचा प्रथमाहुतिः । तत्सवितुरिति द्वितीया । ऋषिभ्यः स्वाहेति तृतीया । स्विष्टकृच्चतुर्थी । ततः प्रायश्चित्तादि-

होमशेषः। ततो बटुरवशिष्टान्नेन ब्राह्मणान्गुरुं च भोजयित्वा वेदसमाप्तिं वाचयेत्।

स्मृतिरूपेणाप्याहाश्वलायनः,

भैक्षं लब्धं दिवा यत्तत् स्थालीपाकं निरूप्य च।
हुत्वा द्विजान् भोजयित्वा भुञ्जीयाच्च द्विजः स्वयम्॥
उपास्य विधिवत्संध्यां हुत्वाहुत्वा व्रती निशि।

हुत्वाहुत्वेति वीप्सावचनं सायंकालीनमग्निकार्यं कृत्वाऽनुप्रवचनीयहोमः कार्य इत्येवमर्थम्।

शौनकोऽपि,

सायंसंध्याविधिं कृत्वा अथोपनयनानले।
आधाय समिधं पूर्वं ततोऽन्वाधानपूर्वकम्॥
पूर्णपात्रनिधानान्तं तन्त्रं कृत्वा पुरस्तनम्।
ततो लब्धं च तद्भैक्षं द्विजान् भोजयितुं तथा॥
होमं च कर्तुं पर्याप्तं पृथक्कृत्य निरूप्य च।
चरुं पचेत्सर्वथैव पक्तुं स्थाल्यां न शक्नुयात्॥
तदा तदर्थं तद्बन्धुः कश्चित्तत्कृत्यमाचरेत्।
अथ विज्ञापयेच्छिष्यः शृतो ब्रह्मौदनश्चरुः॥
अनुप्रवचनीयो वेत्याचार्यस्तदनन्तरम्।
आज्यसंस्कारमारभ्य शृतावस्थापनावधि॥
तन्त्रं कृत्वाऽथ शिष्येण स्पृष्टः शेषं पुरस्तनम्।
इध्माधानादिकं तन्त्रमाज्यभागद्वयं विना॥
ततोऽवदानधर्मेणाववदाय हविः स्रुचि।
सदसस्पतिमद्भुतं प्रियमित्यादृचाऽऽहुतिम्॥
आद्यां कृत्वाऽथ सावित्र्या द्वितीयाहुतिमाचरेत्।
पश्चादृषिभ्यः स्वाहेति तृतीयाहुतिमाचरेत्।

चतुर्थं स्विष्टकृद्धोमं कृत्वोर्ध्वं तन्त्रमाचरेत् ।
होमावशिष्टमन्नं च ब्राह्मणान् भोजयेदथ ॥
भुक्तवद्भिश्च तैर्वेदसमाप्तिं वाचयेदपि ।
ब्रूयाद्द्विजान्गुरुर्वेदसमाप्तिं वदतेति तान् ॥
समाप्तिरस्त्विति ब्रूयुस्तेऽपि वेदपदात्परम् । इति ।

अयं चोपनयनाग्निरामेधाजननं रक्षणीयः । तथाच शौनकः,

आमेधाजननाद्रक्षेत्तमौपनयनानलम् ।
तत्रैव सायं प्रातश्च समिधं जुहुयादसौ ॥ इति ।

अत एवानुप्रवचनीये औपनायनिकाग्नावेव ततोऽन्वाधानपूर्वकमिति अन्वाधानमुक्तवान् । कारिकाकारमते तूपनयनाग्निरामेधाजननं रक्षणं नास्तीति गम्यते । अनुप्रवचनीये उपलेपादि पूर्ववदिति स्थण्डिलान्तरसंस्काराभिधानात् ।

## अथोपनयनानन्तरं ब्रह्मौदनात् प्राक् गर्जिते शान्तिविशेषः ।

बौधायनीयशान्तिसर्वस्वे,

ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत् ।
तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥
तस्य शान्तिप्रकारं तु वक्ष्ये शास्त्रानुसारतः ।
स्वस्तिवाचनपूर्वं तु हवनं कारयेद् बुधः ॥
प्रधानं पायसं साज्यं द्रव्यं शान्तियजौ भवेत् ।
सूक्तं बृहस्पतेर्विद्वान् पठन्प्रज्ञाविवृद्धये ॥
गायत्री युज्यते मन्त्रः प्रायश्चित्तं तु सर्पिषा ।
धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीम् ॥
शिलां होमविधेः पश्चात् स्थापयेत्तत्र संसदि ।

ब्राह्मणान् भोजयेत्पश्चात्ततो ब्रह्मौदनं चरेत् ॥
संभावनायां गर्जस्य दिवैव श्रपयेच्चरुम् ।
सायं च जुहुयाद्धोममेवं दोषो न कश्चन ॥ इति ।

अथ ब्रह्मचारिणस्त्रिरात्रव्रतादीनि ।

तत्राश्वलायनः,

अत ऊर्ध्वमक्षारालवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा चरितव्रताय मेधाजननं करोतीति ॥

स्मृतिरूपेणाप्याहाश्वलायनः,

अधः शयीत स्वयं च व्रती स्याद्वत्सरावधि ।
द्वादशाहं त्रिरात्रं वा तदन्ते गुरुणाऽऽत्मनः ॥
कारयेद्विधिना कर्म मेधाजननसंज्ञितम् । इति ।

शौनकोऽपि,

अत ऊर्ध्वं हविष्याशी त्रिरात्रं ब्रह्मचर्यवान् ।
अधःशायी च वर्तेत गुरोश्चित्तं प्रसादयेत् ॥
एवं द्वादशरात्रं वा वर्त्तेताब्दमथापि वा ।
शक्त्यपेक्षया कल्पः स्याद्व्रते तु ब्रह्मचारिणः ॥
एवं कृतव्रतस्यास्य चतुर्थे दिवसे गुरुः ।
त्रयोदशे वा ऽब्दान्ते वा मेधाजननमाचरेत् ॥ इति ।

हिरण्यकेश्यपि,

त्र्यहं व्रतं चरत्यक्षारमलवणमशमीधान्यं भुञ्जानो ऽधःशाय्यमृन्मयकांस्यशूद्रोच्छिष्टमधुमांसाश्यदिवास्वाप्युभौ कालौ भिक्षाचर्यमुदकुम्भमित्याहरन्नहरहः काष्ठकलायमुभौ कालौ सायंसायं वा समिधोऽभ्यादधाति पुरस्तात्परिषेचनात् यथाहतद्धसवो गौर्यमिति प्रदक्षिणमग्निं परिमृज्य परिषिञ्चति यथा पुरस्ताद्व्याहृतिभिस्समिधोऽभ्यादधात्येकैकशः समस्ताभिश्चैषातइति मेधां

म इति अप्सरास्विति आमांमेधेतिमन्त्रैः स्वाहान्तैस्तथैव परिमृज्य परिषिञ्चति यथा पुरस्तात् यत्ते अग्ने तेज इत्येतैर्मन्त्रैरुपतिष्ठते मयि मेधां मयि प्रजामिति च त्र्यहे पर्यवेते तथैव त्रिवृताऽन्नेन ब्राह्मणान् परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा व्रतं विसृजतेऽग्ने व्रतपते व्रतमचारिषमित्येतैस्सन्ततैरेतद्व्रतएवेति । त्रिवृताऽन्नेन चरुपक्वापक्वापिष्टात्मकेन ।

## अथ मेधाजननम् ।

तत्राश्वलायनः, अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति सुश्रवः सुश्रवा असीति ।

स्मृतिरूपेणाप्याह स एव,

कुर्याद्विमेखलां वेदिं सर्वतो द्वादशाङ्गुलाम् ।
शुचौ प्रागुत्तरे भागे तस्यां मेधां समर्चयेत् ॥
पलाशशाखां तन्मध्ये पत्राङ्कुरसमन्विताम् ।
आर्द्रां वा ऽथ कुशस्तम्बं समूलं स्थापयेद् गुरुः ॥
मेधामावाह्य मतिमान् मेधायै नम इत्यथ ।
गन्धपुष्पाक्षतैस्सम्यग् धूपदीपादिभिः पुरा ॥
इष्ट्वा निवेदयेदन्नं सक्तुमिश्रं सयावकम् ।
समोदकं निवेद्यान्नं पुनश्चाभ्यर्च्य पूर्ववत् ॥
प्रणम्य तस्यै मेधायै व्रती निस्सारयेज्जलम् ।
उच्चरन् सुश्रवोमन्त्रं जलं गृह्य प्रदक्षिणम् ॥
संस्राव्य तां नमस्कृत्य तथा कुर्यात्पुनः पुनः ।
एवं त्रिवारमावर्त्य दण्डाजिनकमण्डलून् ॥
वेद्यां निक्षिप्य च स्नात्वा वाससी च विनिक्षिपेत् ।
मेखलां चोपवीतं च, धृत्वा ऽन्यानि, विनिक्षिपेत् ॥

वाससी ते स्वगुरवे मेधाजननकर्मणि ।
वेद्यां तावत्प्रभृत्येव कौपीनेन प्रवर्त्तयेत् ॥
पुण्याहवाचनं कृत्वा ब्राह्मणांश्चापि भोजयेत् ।
तमावहति सा मेधा मेधाजननकर्मणः ॥
तत्कर्त्तव्यं प्रयत्नेन व्रतस्य च समाप्तये । इति ।

**शौनकोऽपि,**

स्ववासापेक्षया ऽग्नेर्यां दिशं याम्यां च नैर्ऋतीम् ।
वर्जयित्वा दिशो निन्द्यास्तिस्रोऽन्यस्यां दिशि स्थितम् ॥
पलाशं प्राप्य तत्रास्य मेधाजननमाचरेत् ।
अत्रैकमूलमित्येव पलाशस्य विशेषणात् ॥
मूलप्रभृत्येवोद्भूतशाखाभेदसमन्वितम् ।
सर्वथा यस्य कस्यापि पलाशस्य त्वसम्भवे ॥
कुशस्तम्बमुपागम्य तं कुम्भानीतवारिणा ।
प्रदक्षिणं त्रिः परीतः सिञ्चन्तं ब्रह्मचारिणम् ॥
वाचयेन्मन्त्रमाचार्यः सुश्रवः सुश्रवा असि ।
इत्येवमादिकं भूयः समन्तमवधानतः ॥
प्रतिप्रदक्षिणं मन्त्रमप्यभ्यावर्त्य वाचयेत् ।
ततः पूर्वधृतं वस्त्रं मेखलाद्याखिलं बटुः ॥
पलाशमूले संन्यस्य सर्वाण्यन्यानि धारयेत् ।
गृहान्प्रतीयाद् गुर्वाद्यैः समस्तैर्बन्धुभिः सह ॥
पथि स्वस्त्ययनान्मन्त्रान्वदेयुर्बान्धवाः सह ।
अग्रतोऽस्य नमेयुस्ते वारिधारां च संतताम् ॥
ततः सन्मङ्गलैर्दीपैः पूर्णकुम्भादिभिर्युतः ।
प्रापयेद् गृहमाचार्यः पुण्याहं वाचयेद्द्विजैः ॥ इति ।

**तस्य कारणमाह स एव,**

या सावित्री जगद्धात्री सैव मेधास्वरूपिणी ।
मेधाप्रसिद्धये पूज्या विद्यासिद्धिमभीप्सता ॥ इति ।

**संग्रहेऽपि,**

वेदग्रहणसामर्थ्ययुक्ता मेधाऽनुजायते ।
येन तन्मेधाजननकर्मोपदिशति स्वयम् ॥ इति ।

**अथ ब्रह्मचारिधर्माः ।**

तत्रादौ शौचविधिः ।

**तत्र दक्षः,**

एका लिङ्गे गुदे तिस्रो दश वामकरे तथा ।
उभयोः करयोः सप्त एतच्छौचं प्रकीर्त्तितम् ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥ इति ।

आचमनं तु क्रमप्राप्तम् आह्निके द्रष्टव्यम् । दन्तधावनं तु नास्त्येव । दन्तधावननृत्तगीतादि ब्रह्मचारी वर्जयेदिति गौतमस्मरणात् ।

**अथ स्नानम् ।**

**तत्र गौतमः,**

अपामुपस्पर्शनमिति । उपस्पर्शनं स्नानम् । तदप्यहरहः कर्तव्यम् । तत्र विशेषमाह

**दक्षः,**

प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥ इति ।

विशेषान्तरमाह **विष्णुः,** दण्डवन्मज्जनमिति । दण्डवदित्यनेनाङ्गनैर्मल्यादि न कार्यमिति ध्वनितम् ।

**तदाहापस्तम्बः,**

नाप्सु श्लाघमानः स्नायादिति । इदं तु नित्यं स्नानपक्षे ।

पक्षान्तरमाह **गौतमः**,

एके गोदानादि । गोदानं नाम षोडशे वर्षे कर्त्तव्यं व्रतम्। तद् व्रतेषु चतुर्थमाश्वलायनानां द्वितीयं छन्दोगानाम् ।

एके आचार्याः गोदानादि स्नानमिच्छन्ति न ततः प्राक् । दीक्षितवदस्यापि ब्रह्मचर्यदीक्षानियुक्तत्वात्। नित्यस्नानस्यायमार्थः प्रतिषेधः । नैमित्तिकं तु कर्त्तव्यम् । तत्र दण्डवदाप्लवनमेव ।

## अथ संध्या ।

तत्र **संवर्तः**,

संध्यां प्रातः सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां संध्यामर्धास्तमितभास्कराम् ॥
तिष्ठन् पूर्वां जपं कुर्याद् ब्रह्मचारी समाहितः ।
आसीनः पश्चिमां संध्यां जपं कुर्यादतीव्रतः ॥

न विद्यते तीव्रता त्वरावत्ता यस्यासावतीव्रतः, अत्वरित इति यावत् ।

**मनुरपि**,

पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमाऽर्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥ इति ।

**गौतमोऽपि**,

तिष्ठेत्पूर्वामासीनोत्तरां सज्योतिष्याज्योतिषो दर्शनाद्वाग्यत इति । अत्र विशेषमाह **गौतमः**, बहिः संध्यत्वं चेति। सायंप्रातर्द्वे संध्ये यस्य ग्रामाद्बहिर्भवतस्स बहिस्संध्यः तस्य भावः बहिस्संध्यत्वमिति ।

## अथाग्निकार्यम् ।

तत्र **याज्ञवल्क्यः**,

अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि । इति ।

**संवर्त्तोऽपि,**

अग्निकार्यं च कुर्वीत मेधावी तदनन्तरम् । इति ।

**मनुरपि,**

दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ इति ।

दूरादपरिगृहीतदेशात् ।

**तथाचापस्तम्बः,**

यथाकथंचन परिग्रहं मन्यते स्तेनो भवतीति । विहायसि अन्तरिक्षे ।

केचित्तु सायमेवाग्निकार्यमिच्छन्ति ।

**तदाहापस्तम्बः,**

सायमेवाग्नीन्धनमित्येके इति । अग्नीन्धनमग्निकार्यम् ।

**लौगाक्षिरपि,**

सायमेवाग्निमिन्धीतेत्येकइति ।

समिदाहरणविधिमाह **बैजावापः,**

पुरोऽस्तमयात्प्रातः प्रागुदीचीं दिशं गत्वा अहिंसन्नरण्यात् समिधमाहरेदार्द्रामन्नाद्यकामः शुष्कां ब्रह्मवर्चसकामः उभयामुभयकाम इति । अहिंसन्नुपयुक्तादधिकमच्छिन्दन् । पुरोऽस्तमयादिति वदता अस्तमिते सूर्ये समिदाहरणं निषिध्यते ।

**तथाचापस्तम्बः,**

नास्तमिते समिदाहरणायोपगच्छेदिति ।

अथ समिन्नियमः

**वायुपुराणे,**

पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदलाभे ऽर्कवेतसौ ॥ इति ।

उक्तालाभे यस्य कस्यापि यज्ञियवृक्षस्य ग्राह्या। समाख्याबलात्।
तथा च ब्रह्मपुराणं,
शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खदिरश्चेति याज्ञियाः ।
आपस्तम्बः, नाप्रोक्षितमिन्धनमग्नावादध्यादिति ।
सर्वकर्मसाधारणं समिल्लक्षणमाह कात्यायनः,
नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतरा क्वचित् ।
न विमुक्ता त्वचश्चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका न्यूना तथा न स्याद्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥
विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥ इति ।
अत्र विशेषमाह मरीचिः,
प्रागग्रास्समिधो देयास्ताश्च काम्येषु पाटिताः ।
काम्येषु च सशल्कार्द्रा विपरीता जिघांसतः ॥ इति ।
अग्निकार्यकरणेऽलौकिकं हेतुमकरणे च प्रत्यवायं दर्शयति
हारीतः,
पुरा जग्राह वै मृत्युर्हिंसयन्ब्रह्मचारिणम् ।
अग्निस्तं मोक्षयामास तस्मात्परिचरेद्धि तम् ॥
ब्रह्मचारी यदा त्वग्नावादध्यात्समिधो न हि ।
गृह्णीयात्तं तथा मृत्युरादध्यात्समिधस्ततः ॥ इति ।

## अथाभिवादनविधिः ॥

तत्र गौतमः,
स्वनाम प्रोच्याहमयमित्यभिवादो ज्ञसमवाये इति । ज्ञसमवाये प्रत्यभिवादनविधिज्ञसमागमे ।

अत्र विशेषमाह स एव, स्त्रीपुंयोगेऽभिवादनतोऽनियममेके। स्त्रीपुंयोगे जायापतिसमागमे। अभिवादनतः अभिवादने। सार्वविभक्तिकस्तसिः। एवं च तयोः समागमेऽभिवादने प्राप्ते प्रत्यभिवादनविधिज्ञस्यापि भर्त्तुरभिवादने यथोक्तो नियमो नास्ति किंतु नमस्कारमात्रमित्येकेषां मतम्।

मनुः,

अभिवादात्परं विप्रो ज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्॥
नामधेयस्य ये केचिदभिवादं न जानते।
तान् प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्वास्तथैवच॥
भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥
आयुष्मान् भव सौम्येति विप्रो वाच्योऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥
यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥ इति।

ज्यायांसं वृद्धमभिवादयन्। अभिवादात्परम् अभिवादये इतिशब्दोच्चारणानन्तरम्। असौ अमुकनामाऽहमस्मीति स्वकीयं नाम विशेषमुच्चारयेदित्यर्थः। असाविति स्वं नामातिदिशेदिति हि यज्ञसूत्रे परिभाषितम्। अत्र ज्यायांसमित्यभिधानाद्यवीयसां पितृव्यमातुलादीनामभिवादने नायं प्रकारः। तत्प्रकारस्तु अग्रे वक्ष्यते। अत्र विप्रपदं क्षत्रियादीनामप्युपलक्षणम्।

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेवच॥

इत्यनेन तेनैव क्षत्रियादीनामप्यभिवादकानामभिवाद्यकर्तृका-

नामयादिप्रश्नविधानात् । नामधेयस्येति । ये केचिदविद्वांसो नामधेयस्य पूर्वोक्तसंस्कृतेनोच्चारितस्याभिवादमेतेन वयमभिवादिता इत्येवं रूपमर्थं न जानते तान्, अभिज्ञा अपि नारीश्च प्रति स्वनाम हित्वा ऽभिवादयेऽहमित्येव ब्रूयात्तदपि चेन्नावबुध्यन्ते तदा लौकिकेनापभ्रंशेनाप्यभिवाद्या इति द्योतयितुं प्राज्ञग्रहणम् । आभिवादनं विहितशब्देन नमस्कार इति वृद्धाः । पादसंग्रहणं चाभिवादनाद्भिन्नम् ।

व्यत्यस्तपाणिना कार्यमित्यादिना

विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।

इत्यनेन च तस्य मनुना पृथगभिधानात् । एतदभिप्रायेण कल्पतरुणा 'अथाभिवादनोपसंग्रहणे' इति द्विवचनेन प्रकरणमुपक्रान्तम् । हरिहरोऽपि गुरुषु पादोपसंग्रहणं, वृद्धतरेषु अभिवादनं, वृद्धेषु च नमस्कारं कुर्यादिति भेदमाह । भोःशब्दमिति । अभिवादने यन्नाम प्रयुक्तं तस्यान्तेऽभिवाद्यसम्बोधनार्थं भोःशब्दं कीर्तयेत् । यतो नाम्नामभिवाद्यनाम्नां स्वरूपभावः स्वरूपसत्ता भोभावो भोइत्यस्य शब्दस्य स्वरूपम् ऋषिभिः स्मृतः । तेनाभिवाद्यनामानुच्चारणेऽपि भोःशब्देनैव तत्संबोधनमुक्तं भवति । एवंचाभिवादयेऽमुकनामाहमस्मि भोः इत्येवाभिवादनवाक्यम् । कुल्लूकभट्टस्तु स्वनाम प्रोच्याहमयमस्मीति अभिवाद इति गौतमवाक्ये नामपदोच्चारणस्य कर्त्तव्यतयाऽप्रतीतेर्नामपदोच्चारणं नेच्छति । मेधातिथिस्तु अहमस्मीत्यनयोः समानार्थतया एकतरप्रयोगमेव मन्यते । अत एव गौतमवाक्येऽहमित्येव श्रूयते । तदुभयमपि

असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत् ।

इति मनूक्ताभिवादनवाक्यविरोधादुपेक्षितम् । भवामीत्य-

र्थेऽपि अस्मीत्यस्य क्रियापदरूपस्य साधुतया न वैयर्थ्यम् । आयुष्मानिति । अभिवादने कृते प्रत्यभिवादयित्रा अभिवादको विप्रादिः आयुष्मान् भव सौम्येति वाच्यः । अत्र सौम्यपदं देवदत्तादिपदवदभिवादकतत्तन्नामपरम् । अत एव द्वितीयार्द्धे प्रक्रान्तवाचिना अस्येत्यनेनाभिवादकनामानुवादेन तदन्तिमस्वरे प्लुतत्वं विधीयते । अन्यथा नामोच्चारणप्रापकविध्यन्तरकल्पनं प्रसज्येत । एतेनायुष्मान् भव सौम्यामुकेति प्रत्यभिवादनवाक्यरचनं यत् केषांचित्तत्परास्तम् । अकारश्चेति । अस्याभिवादकनाम्नोऽन्ते योऽकारः स प्लुत उच्चारणीयः । अकारपदमत्र स्वरमात्रोपलक्षणम् । नाम्नामदन्तत्वानियमाभावात् । अन्तत्वं च स्वरापेक्षम् । तच्च व्यञ्जनान्तेऽपि नाम्नि संभवति।अत एव पाणिनिरपि प्रत्यभिवादेऽशूद्रे टेः प्लुतिं स्मरति । टिशब्देन च योऽन्त्योऽच् तदादिशब्दरूपमुच्यते । पूर्वाक्षर इति । अक्षरमत्र व्यञ्जनम् । तेन पूर्वमव्यहितपूर्वमक्षरं व्यञ्जनं यस्येत्यर्थः । तथाच यस्यान्त्यस्वरस्याव्यवाहितपूर्वं व्यञ्जनं तिष्ठाति स ततो विश्लिष्य प्लुतो नोच्चार्य्यः । किंतु तद्व्यञ्जनसंबद्ध एवेति सिद्धम् । प्लुतश्च त्रिमात्रस्य संज्ञा । इयं च व्याख्या मेधातिथ्याद्यनेकानुसारिणी ।

हरदत्तस्तु पूर्वाक्षरप्लुत इति मध्यमविसर्गरहितं पाठं पठित्वाऽस्य नाम्नोऽन्ते पूर्वाक्षरप्लुतो नामाक्षरेभ्योऽधिकोऽकारो वाच्यः। पूर्वाक्षरप्लुत इत्यकारस्य विशेषणम् । यस्मात्पूर्वमक्षरं प्लुतरूपं स तथोक्तः।अक्षरमित्यचोऽभिधानम्। अकारात्पूर्वो योऽच् स प्लुतो वाच्यः । तेन व्यञ्जनव्यवधानेऽपि भवति । तत्राव्यञ्जनव्यवधाने यथा ऽऽयुष्मान् भव सौम्य हरदत्ता ३अ, व्यञ्जनव्यवधाने यथा आयुष्मान् भव सौम्य अग्निची ३द इति प्रयोग इति व्याख्यातवान् । अत्र विप्रपदं क्षत्रियादीनामप्युपलक्षणम् । क्षत्रियवैश्यौ

प्रति प्रत्यभिवादनवाक्येऽन्तिमस्वरप्लुतत्वविकल्पस्य स्त्रीशूद्रौ प्रति प्रत्यभिवादनवाक्ये चान्त्यस्वरप्लुतत्वनिषेधस्य व्याकरणेऽभिधानात् । तेनैवं प्रत्यभिवादनवाक्यम्, आयुष्मान् भव देवदत्ता३इति । व्यञ्जनान्तस्य तु आयुष्मान् भव सोमशर्मा३न् इति । अत्रायुष्मान् भव सौम्येतीतिशब्दः प्रकारे । तेनायुष्मानेधि दीर्घायुर्भूयाश्चिरं जीवेत्येवमादिशब्दपरिग्रहः शिष्टाचारप्रसिद्धः सिद्धो भवतीति मेधातिथिः । यो न वेत्तीति । योऽभिवादनस्यानुरूपं प्रत्यभिवादनं न जानाति स नाभिवाद्यः । अभिवादनानुरूपं प्रत्यभिवादनं च यन्नाम्नाऽभिवादनं क्रियते तन्नामान्त्यस्वरप्लुतिरूपम् । अत्र निषेधोऽपि नामग्रहणपूर्वकाभिवादनस्यैव । नामधेयस्येत्यादिना पूर्ववचनेन अहं भो इति शब्देन तस्यापि समाननीयत्वस्योक्तत्वात् । अत एव यथा शूद्र इति दृष्टान्तोऽपि संगच्छते । तस्यापि नवतिवर्षोत्तरं शूद्रोऽपि दशमीं गत इत्यनेन मानार्हत्वस्य वक्ष्यमाणत्वात् । प्रत्यभिवादनं चाभिवादितेन गुर्वादिना विहितशब्देनाशीर्वचनमिति ।

अभिवादयेदिति वाक्यशेषे वसिष्ठः, यो विद्यादभिवदितुमयमहं भो इति ब्रूयाद्यश्च न विद्यात्प्रत्यभिवादनमामन्त्रिते स्वरोऽन्त्योऽस्य प्लवते संध्यक्षरमप्रगृह्यमायाउभावं च यथा भोभाविति । अस्यार्थः । यो विद्यादभिवदितुमिति । अभिवादने कृते प्रत्यभिवादनं कर्तुं यो जानीयात्तं स्वनामविशेषग्रहणेनाभिवादयेत् । अयमहं भो इति । यत्तु न जानीयात्प्रत्यभिवादनं तं प्रत्यमहं भो इत्येव ब्रूयादित्यर्थः । चकारात् स्त्रियश्च । नामधेयस्येत्यादिपूर्वलिखितमनुवचनैकवाक्यत्वात् । प्रत्यभिवादनवाक्ये अभिवादकनामोच्चारणे विशेषमाह । आमन्त्रिते इत्यादि । आमन्त्रिते संबोधनप्रथमान्ते । अस्यनाम्नोऽन्त्यः स्वरः प्लवते त्रिमात्रः कार्यः ।

अप्रगृह्यं प्रगृह्यसंज्ञारहितं यत्सन्ध्यक्षरम् एकारादिचतुष्टयं तत्र आईभावम् आऊभावं चकारात्प्लुतिं च, प्रपद्यतइति शेषः । तत्र च स्थानेऽन्तरतम इति न्यायात्कण्ठ्यतालव्ययोरेकारैकारयोः कण्ठ्यतालव्यरूप आईभावः । कण्ठ्यौष्ठ्ययोरोकारौकारयोः कण्ठ्यौष्ठ्यरूप आऊभावः । उदाहरणमाह यथा भो भावितीति । आमन्त्रितभोःशब्दस्यौकारस्याप्रगृह्यस्याउभावे कृते भाउपदं निष्पन्नं भवति । इतिशब्दः प्रकारे । यथा आमन्त्रितस्य गङ्गे इत्यस्य गङ्गाइ, तथा आमन्त्रितस्य पटो इत्यस्य पटाउ । प्रगृह्ये तु न भवति। यथोभयामन्त्रणे गङ्गायमुने इत्यत्र ।

आपस्तम्बः, दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेतोरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः प्राञ्जलिः, प्लावनं च नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम् ।

अत्र बाहुपदं पाणिपरम् । तत्प्रसारणं च शिरःसंयोगार्थम् । तेन ब्राह्मणस्य कर्णपर्यन्तं शिरसो नमनं, क्षत्रियस्य हृदयपर्यन्तं, वैश्यस्य नाभिपर्यन्तं, शूद्रस्य ऊर्वादिपादपर्यन्तमिति गम्यते । उरो वक्षः । मध्यं नाभ्युपलक्षितो देशः । नीचैरिति नीचैस्त्वं मध्यापेक्षया । प्राञ्जलिरिति सर्वान्वयि । प्लावनं प्लुतिकरणम् । नाम्नो नाम्नोऽन्त्यस्वरस्येत्यर्थः । अभिवादनस्य प्रत्यभिवादने अभिवादनोत्तरं क्रियमाणे प्रत्यभिवादने इत्यर्थः । अभिवादने इति सप्तम्यन्तपाठेऽप्ययमेवार्थः । अभिवादने व्याकरणे स्मृतौ वा कुत्रापि प्लुतत्वास्मरणात् । चकारस्त्वनर्थकः । एवमेव तद्भाष्ये हरदत्तोऽपि । पूर्वेषां शूद्रात्पूर्वेषां वर्णानाम् ।

ब्राह्मणादीनामभिवादकानां प्रकारान्तरमाहाश्वलायनः,
वामं वामेन संस्पृश्य दक्षिणेन तु दक्षिणम् ।
हस्तेन कर्णौहस्ताभ्यां गुरूणामभिवादनम् ॥

वामोपरि करं कृत्वा दक्षिणं नाम चोच्चरेत्।
जानुप्रभृतिपादान्तमारभ्य पदयोर्नमेत्॥

अथोपसंग्रहणविधिः॥

तत्र मनुः,

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः॥

व्यत्यस्तपाणिना विपरीतस्थापितसव्यदक्षिणपाणिना। सव्यो दक्षिणश्च प्रकरणात्पादः। तथा च सव्येन पाणिना गुरोः सव्यः पादः स्प्रष्टव्यो दक्षिणेन च दक्षिणः पाद इत्यर्थः।

गुर्वधिकारे पैठीनसिः, उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्। दक्षिणोपरिभावेन व्यत्यासोऽयं शिष्टसमाचारात्। अत्र गुरोर्व्यस्तपादत्वे पाणिव्यत्यासो न कार्यः। पाणिव्यत्यासस्य दृष्टार्थत्वादिति वदन्ति।

बौधायनः, दक्षिणं दक्षिणेन सव्यं सव्येन चोपसंग्रहणं दीर्घमायुः स्वर्गं चेप्सतः काममन्यस्मै साधुवृत्ताय गुरुणानुज्ञातोऽसावहं भो इति श्रोत्रे संस्पृश्य मनःसमाधानार्थमधस्ताज्जान्वोरापद्भ्यामिति। दक्षिणं गुरोर्दक्षिणं पादं दक्षिणेन स्वदक्षिणपाणिना। एवं सव्यं सव्येनेत्यत्रापि बोध्यम्। मनःसमाधानार्थम् अभिवाद्यावधानार्थम्। अधस्ताज्जान्वोरापद्भ्यामिति। जानुनी आरभ्य पादपर्यन्तमित्यर्थः। स्पृशेदिति शेषः। अधस्तादित्यादिकं दक्षिणं दक्षिणेन सव्यं सव्येनेत्यनेनान्वयि। तथाचैवं यत्स्पृशेत्तदुपस्पर्शनमित्यर्थः।

आपस्तम्बः, उदितआदित्ये आचार्येण समेत्योपसंग्रहणं सदैवाभिवादनम् उपसंग्राह्य आचार्य इत्येके। दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयादुभा-

भ्यामेवोभावपि पीडयत उपसंग्राह्याविसेके । सदैवेति । अन्यदा सर्वदाऽभिवादनमेव न तूपसंग्रहणम् । अन्यदाऽप्याचार्यस्योपसंग्रहणं कार्यमित्येकेषां मतमाह।उपसंग्राह्य इत्यादि।उपसंग्रहणप्रकारमाह।दक्षिणेनेत्यादि । अध्यभिमृश्येति।अधिशब्द उपरिष्टादित्यर्थे।तेनाधस्तादुपरिष्टाच्चाभिमृश्येत्यर्थः।सकुष्ठिकं सगुल्फम्।साङ्गुष्ठमित्यन्यइति हरदत्तः। उपसंगृह्णीयात् उक्तमुपसंग्रहणं कुर्यादित्यर्थः । अन्येषां मतमाह । उभाभ्यामिति । उभाभ्यां पाणिभ्यामाचार्यस्योभावपि पादौ पीडयत एव माणवकादेः उभावपि पादावुपसंग्राह्यावित्यर्थः । पीडयत इति कृत्यानां कर्त्तरि वेति षष्ठी ।

वसिष्ठः, गुरोः पादोपसंग्रहणं कार्यम् ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवादयेत् ये चैव पादग्राह्यास्तेषां च भार्या गुरोश्च मातापितराविति । ऋत्विगादीन् कनिष्ठान् ये च पादग्राह्याः पादोपसंग्रहणयोग्याः पूर्वोक्तेभ्योऽन्ये स्मृत्यन्तरोक्तास्तानपि कनिष्ठान् तेषां भार्या गुरोश्च मातापितरौ च प्रत्युत्थायाभिवादयेत् । अभिवादनं चात्र संभाषणम् । मनुबौधायनाभ्यां तथाऽभिधानात् ।

तथाह मनुः,

मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।
असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥

गुरूनिति ज्ञानशब्दोऽत्र ज्ञानज्येष्ठादिपरः । भूयिष्ठाः खलु गुरव इत्युपक्रम्य ज्ञानवृद्धतपोवृद्धयोरपि हारीतेन गुरुत्वकथनात् ।

बौधायनः, ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानाभिभाषणमिति । न च संभाषणाभिवादनयोः समुच्चय एवास्त्विति वाच्यम् । गौतमेनाभिवादननिषेधात् ।

यथाह **गौतमः**, ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानमनभिवाद्या इति। ऋत्विगादीनामात्मनो यवीयसां प्रत्युत्थानमात्रेण पूजा कार्या न पुनस्तेऽभिवाद्या इति हरदत्तः। कल्पतरुमाधवाचार्यावप्येवम्। अन्ये तु अभिवादनसंभाषणयोर्द्वयोरपि स्मरणाज्ज्ञानज्येष्ठानां ससंभाषणमभिवादनमन्येषामभिवादनमात्रमिति वदन्ति।

**आपस्तम्बः**,

ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवादयेत्तूष्णीं वोपगृह्णीयादिति। अभिवादयेत् अभिभाषेत। उपगृह्णीयात् उप समीपे गृह्णीयादङ्कपाल्यादिनेति कल्पतरुः।

**गौतमः**,

गुरोः पादोपग्रहणं प्रातरिति।

गुर्वधिकारे **पैठीनसिः**,

उभाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्।

**आपस्तम्बः**,

गुरोस्तिष्ठन् प्रातरभिवादनमभिवादयेदसावहं भो इति। समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक् प्रातराशात्प्रोष्य च समागमे स्वर्गमायुश्चेप्सन्। अभिवादयेत् कुर्यात्। प्रातराशात् प्रातर्भोजनात्।

**गौतमः**,

पादोपसंग्रहणं समवायेऽन्वहमभिगम्य तु विप्रोष्य मातृपितृतत्सबन्धूनां पूर्वजानां विद्यागुरूणां च सन्निपाते परस्येति। वक्ष्यमाणानां मात्रादीनां समवाये संगमे प्रतिदिनं पादोपसंग्रहणं कार्यम्। अभिगम्येति। विप्रोष्य स्वयं विप्रवासं कृत्वा तेषां विप्र-

वासे वा ते मातृपित्रादयो यत्र स्थितास्तत्राभिगम्य पादोपसंग्रहणं कार्यम् । तत्सबन्धूनामिति । मातृपितृसमानजातीयबन्धूनां मातुलमातामहपितृव्यपितामहप्रभृतीनामित्यर्थ इति कल्पतरुः । हरदत्तस्तु तद्बन्धूनामिति पठित्वा तद्बन्धवो मातुलमातृष्वसृपितृव्यपितृष्वस्रादय इति व्याख्यातवान् । पूर्वजानां ज्येष्ठभ्रातॄणाम्, विद्यागुरूणाम् आचार्योपाध्यायादीनाम्, तद्गुरूणाम् आचार्यादीनां सन्निपाते पूर्वोक्तानां मात्रादीनां युगपदेकत्रावस्थाने परस्योत्कृष्टस्य प्रथममुपसंग्रहणं कार्यमित्यर्थः । गुरूणां तारतम्यं चाग्रे वक्ष्यते ।

तथा, नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्याभगिनीनामिति । प्रागुक्तस्य "पादोपसंग्रहणं समवाये ऽन्वह"मित्यस्यापवादोऽयम् । मात्रादीनां त्वविप्रोष्यापि प्रसहं पादोपसंग्रहणं कार्यम्, तद्व्यतिरिक्तानां तु विप्रोष्यैव ।

स्मृत्यन्तरमपि,

उपसंग्रहणं कुर्याद्भगिन्या मातुरेवच ।
तथा पितृव्यभार्याणां समवाये ऽन्वहं द्विजः ॥

तथा, नोपसंग्रहणं भ्रातृभार्याणां श्वश्र्वाश्चेति । विप्रोष्य प्रत्यागतेनाप्यासामुपसंग्रहणं न कार्यम् । अत्र भ्रातृभार्या असवर्णा ज्ञातव्या ।

भ्रातृभार्योपसंग्राह्या सवर्णाऽहन्यहन्यापि ।
विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धयोषितः ॥

इति मनुना सवर्णाया उपसंग्रहणस्याभिहितत्वात् । अत्र श्वश्र्वा उपसंग्रहणनिषेधो युवतिश्वश्रूपरः ।

मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ।
संपूज्या गुरुपत्नीवत्समास्ता गुरुभार्यया ॥

इति मनुना श्वश्र्वा गुरुपत्नीतुल्यत्वाभिधानेन तस्या उपसंग्रहणस्यानुमतत्वात् । युवत्याश्च गुरुपत्न्याः पादोपसंग्रहणनिषेधो मनुनैव दर्शितः ।

यथा,

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः। इति ।

पितृभगिन्यादीनामपि उपसंग्रहणं कार्यं, भ्रातृभार्योपसंग्रहणमुक्त्वा तासामपि मनुना मातृतुल्यत्वाभिधानेनोपसंग्रहणस्यानुमतत्वात् ।

यथा,

पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ।

मातृवद् वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ इति ।

प्रत्युत्थेया नाभिवाद्या इत्यनुवृत्तौ पुनर्गौतमः, तथाऽन्यः पूर्वः पौरोऽशीतिकावरः शूद्रो ऽप्यपत्यसमेनेति । यथा ऋत्विक्श्वशुरेत्यादिपूर्वसूत्रोक्ता यवीयस ऋत्विगादयः प्रत्युत्थेया नाभिवाद्यास्तथाऽयमपि । अन्यः अनन्तरसूत्रोक्तेभ्य ऋत्विगादिभ्योऽन्यः । पूर्वो वयसाऽधिकः । पौरः समानपुरवासी । अशीतिकावरः । अशीतिरेवाशीतिका सा अवरा अवधित्वेन यस्य स तथेत्यर्थः । एवं भूतः शूद्रोऽप्यपत्यसमेन ब्राह्मणादिना प्रत्युत्थेयो नाभिवाद्य इत्यर्थः । अपत्यसमेनेत्यनेन तस्य यवीयस्ता दर्शिता । कल्पतरुस्तु शूद्रो यदि पितृसखो भवति सख्युः पिता वा भवति तदाऽपत्यसमेन ब्राह्मणेन प्रत्युत्थेय इत्यर्थ इत्याह । अत्र शूद्रग्रहणमवरवर्णोपलक्षणम् । ततश्च शूद्रस्त्रिभिरपि वर्णैर्वैश्यो द्वाभ्यां क्षत्रियो ब्राह्मणेनैवेति सिध्यति । ब्राह्मणादिस्तु पूर्वोक्तगुणविशिष्टः क्षत्रियादिना प्रत्युत्थेयो नाभिवाद्यः ।

यदाह स एव,

अवरोऽप्यार्यः शूद्रेणेति । अवरो यवीयान् आर्यस्त्रैवर्णिकः शूद्रेण पूर्वोक्ताशीतिकावरत्वादिगुणविशिष्टेन, प्रत्युत्थेयो नाभिवाद्य इत्यनुषङ्गः । अत्रापि शूद्रग्रहणमवरवर्णोपलक्षणार्थम् । ततश्च शूद्रेण त्रयो वर्णा वैश्येन द्वौ क्षत्रियेणैक इति यवीयांसः प्रत्युत्थेया नाभिवाद्या इति सिध्यति ।

सांख्यायनगृह्यम्,

अहरहराचार्यायाभिवादयेद् गुरुभ्यश्च, समेत्य श्रोत्रियस्य, प्रोष्य प्रत्येत्याश्रोत्रियस्य समेत्य दैववशात्समागमे । अश्रोत्रियस्य तु प्रोष्य प्रत्येत्य न तु दैववशात्समागमेऽपीत्यर्थः ।

पैठीनसिः,

लौकिकं वैदिकं वाऽपि यच्चान्यद्धर्मसंहितम् ।
यतो विद्यागमं कुर्यात्तं पूर्वमभिवादयेत् ॥
धर्मसंहितं धर्मसंबद्धं, विद्यागमं विद्याग्रहणम् ।

मनुः,

लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥
सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥
शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् ।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥
ऊर्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविरआयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि सम्यक् वर्द्धन्ते आयुः प्रज्ञा यशो बलम् ॥ इति ।
लौकिकम् अर्थशास्त्रीयादि । आध्यात्मिकं ब्रह्मप्रतिपादक-

शास्त्रीयादि । पूर्वं बहुमान्यसमवाये प्रथमम् । एतेषां समवाये यथोत्तरं मान्यत्वम् । वरं मनाक्प्रियः ।

देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ।

इत्यमरकोषात् । सुयन्त्रितः शास्त्रनियन्त्रितात्मा । सर्वाशी सर्वविक्रयीति निषिद्धक्रियाशीलोपलक्षणम् । शय्येति । शय्या चासनं चेति शय्यासनं, जातिरप्राणिनामिति द्वन्द्वैकवद्भावः, तस्मिन् । श्रेयसा वित्ताद्यधिकेन गुर्वादिना वा ऽध्याचरिते असाधारण्येनाङ्गीकृते । न समाविशेत् नासीत । अध्याचरिते इति विशेषणसामर्थ्यात्तदङ्गीकारकालपर्यन्तं निषेधोऽयम् । स्वयं शय्यासनस्थश्चेत् श्रेयसि समागते प्रत्युत्थायाभिवादनं कुर्यात् । अनेन च वचनेन प्रत्युत्थानमात्रं विहितम् ।

यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ।

इत्यनेन पुनरासनादित्यागो विधास्यते इत्यर्थभेदादेवापौनरुक्त्यम् । मेधातिथिस्तु अगुरुविषयमिदं वाक्यं, यानासनस्थ इत्यादिवक्ष्यमाणं तु गुरुविषयमित्याह । अत्रार्थवादमाह । ऊर्ध्वमिति । उत्क्रामन्ति देहाद् बहिर्गन्तुमुद्यता भवन्ति । आयति आगच्छति । तान् प्राणान् ।

**भविष्यपुराणे,**

अभीति भगवान् विष्णुर्वादयामीति शंकरः ।
द्वावेतौ पूजितौ तेन यः करोत्यभिवादनम् ॥

**गुर्वधिकारे मनुः,**

दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥
प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंश्रवे चैव गुरोर्न किंचिदपि कीर्त्तयेत् ॥

गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥
गुरोर्गुरौ सन्निहिते गुरुवद् वृत्तिमाचरेत् ।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥
विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्स्वपि ॥
श्रेयःसु गुरुवद् वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु ॥
बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥
उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम् ॥
गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥
अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेवच ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥
गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥
कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥
विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्॥ इति ।

प्रतिवाते इति । गुरुदेशाद्यत्र वायुरायाति स प्रतिवातः । स्वदेशाद्यत्र वायुर्गच्छति सोऽनुवातः । तत्रोभयत्रापि गुरुणा सह नोपविशेत्। असंश्रवइति । यत्रोक्ते सति गुरुर्न शृणोति तत्र

स्थित्वा गुरुमुद्दिश्य न किंचिदपि ब्रूयादित्यर्थः । फलकं काष्ठनिर्मितं दीर्घासनम् । अनिसृष्टोऽनियुक्तः । स्वान् गुरून् पितृव्यादीन्। विद्यागुरवः आचार्यव्यतिरिक्ता उपाध्यायाः । नित्या सार्वकालिकी । स्वयोनिषु पितृव्यादिषु । हितं धर्मतत्त्वम् । श्रेयःसु विद्यादिश्रेष्ठेषु । आर्येषु ज्येष्ठेषु । गुरुस्वबन्धवो गुरुपितृव्यादयः । अध्यापयन् अध्यापनसमर्थः । यज्ञकर्मणि गुरुवन्मानमर्हतीत्यन्वयः । गुरुवत्सर्वपूजायां प्राप्तायामपवादमाह । उत्सादनमित्यादि । गात्रोत्सादनं गात्रोद्वर्त्तनम् । पूर्णविंशतिवर्षेणेति यौवनोपलक्षणम् । अत एवाग्रिमश्लोके युवेति वक्ष्यति ।

शातातपः,

अभिवाद्यो नमस्कार्यश्शिरसा वन्द्य एवच ।
ब्राह्मणः क्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥
नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथंचन ।
ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥
ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः ।
सवर्णैस्तु सवर्णानां कार्यमेवाभिवादनम् ॥
अभिवाद्य द्विजः शूद्रं सचैलं स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुद्ध्यति ॥ इति ।

स्वस्ति कुर्यादिति । आशिषं कुर्यादित्यर्थः । स्वस्त्याशीःक्षेमपुण्यादाविति कोषात् । अत्र ब्राह्मणपदं उत्तमोपलक्षणम् । सर्व वर्णपदं हीनपरम् । सवर्णैः अपकृष्टैः। सवर्णानाम् उत्कृष्टानाम् ।

पठन्ति च

यदि विप्रः प्रमादेन शूद्रमप्यभिवादयेत् ।
प्रणम्य दश विप्रांस्तु ततः पापात्प्रमुच्यते ॥
अप्रणामगते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः ।
शूद्रोऽपि नरकं याति ब्राह्मणस्तदनन्तरम् ॥

देवीपुराणे,

शूद्रोऽपिचाधिकाराढ्यो वादाक्षरमुगर्वितः ।
महापातकतुल्यं तु लभते विनयादृते ॥ वादस्तर्कः ।

हारीतः,

नान्येन कृतप्रणामोऽन्यमभिभाषेताभिभाषेत गुरून् ब्राह्मणांश्च न प्रागाहाराद् वृषलान् इति । अन्यं प्रणामकर्त्तुः ।

आपस्तम्बः। विषमगताय गुरवे नाभिवाद्यम्, अन्वारुह्याभिवादयेत्। तथा अप्रयतेन नाभिवाद्यम्।तथा,अप्रयताय।अप्रयतश्च न प्रत्यभिवादयेत्।प्रतिवयसः स्त्रियश्च। तथा,सोपानद्वेष्टितशिरा अवहितपाणिर्नाभिवादयेदिति। विषमगताय उच्चस्थानगताय नीचस्थानगताय वा । अन्वारुह्य आरुह्य अवरुह्यवा । प्रतिवयसः अनधिकवयसः । सोपानदादिषु त्रिष्वापि नकारः संबध्यते । अवहितपाणिः । वस्त्वन्तरासक्तपाणिः ।

गौतमः, सोपानत्कश्चासनाभिवादननमस्कारान् वर्जयेत् । आसनम् उपवेशनम् । कैश्चित्तु अशनमिति पठित्वा भोजनमिति व्याख्यातम्। नमस्कारोऽभिवादनाद्भिन्नो देवब्राह्मणाद्युद्देश्यकः।

शङ्खलिखितौ, नोदकुम्भहस्तोऽभिवादयेन्न भैक्ष्यं चरन्न पुष्पादिपाणिर्नाशुचिर्न जपन्न देवपितृकार्यं कुर्वन्न परिषन्मध्ये स्वैरवाक् । स्वैरवाक् मन्दवाक् ।

विष्णुः,

सभासु चैव सर्वासु यज्ञे राजगृहेषु च ।
नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत् ॥

बौधायनः, समिद्धार्युदकुम्भपुष्पान्नहस्तो नाभिवादयेत् यच्चान्यदप्येवंयुक्तं न समवाये इति । समिद्धारी समिधो वहन् इति कल्पतरुः । पारिजाते तु समिद्धारीति पठित्वा समिद्धार-

वान् इति व्याख्यातम् । एवंयुक्तं समिद्‌वादियुक्तं, तन्नाभिवादयेदित्यर्थः । यच्चान्यादिति सामान्ये नपुंसकम् । समवाये परिषादि ।

लघुहारीतः,

जपयज्ञजलस्थश्च समित्पुष्पकुशानलान् ।
उदकुम्भं च भैक्ष्यं च वहन्तं नाभिवादयेत् ॥
कुशपुष्पसमिद्वारिमृद्वन्नकृतपाणिकः ।
जपहोमौ च कुर्वाणो नाभिवाद्यः कथंचन ॥

यमः,

अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति ।
यद्दुष्कृतं भवेदस्य तस्माद्भागं प्रपद्यते ॥
तस्मात्पूर्वाभिभाषी स्याच्चाण्डालस्यापि धर्मवित् ।
सुरां पिबेति वक्तव्यमेवं धर्मो न हीयते ॥
स्वस्तीति ब्राह्मणे ब्रूयादायुष्यमिति राजनि ।
वर्द्धतामिति वैश्ये तु शूद्रे त्वारोग्यमेवच ॥
यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम् ।
यस्मिन् सर्वे स्थिताः कामाः सा स्वस्तीत्यभिसंज्ञिता॥इति।

अभिवादे, कृते सति । पूर्वं प्रथमत एव ।
अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति ।
इत्याशिषः प्रस्तुतत्वात् । सा आशीः स्वस्तीत्यभिसंज्ञितेति संबन्धः ।

मनुयमौ,

ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेवच ॥

आपस्तम्बः, कुशलमवरवयसं वयस्यं वा पृच्छेदनामयं क्षत्रियं प्रनष्टं वैश्यमारोग्यं शूद्रं, नासंभाष्य श्रोत्रियमभिव्रजेदरण्ये च

स्त्रियमिति । श्रोत्रियो वेदाध्यायी तदर्थानुष्ठाता च । अरण्ये स्त्रियं भयादिनिवृत्त्यर्थम् ।

यमः,

क्षत्रियस्त्रियुगं हन्ति वैश्यो हन्ति चतुर्युगम् ।
हन्त्येकसप्ततियुगं शूद्रो ब्राह्मणमब्रुवन् ॥

युगं जन्म । अब्रुवन् अवज्ञया ऽसंभाषमाणः ।

आपस्तम्बः,

त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति ।

मनुः,

दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् ।
अब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥

सख्यमिति मान्यताव्यावृत्त्यर्थम् ।

दशभिरब्दैराख्यायते इति दशाब्दाख्यम् । अयमर्थः। एकपुरवासिनामधिकतरविद्यादिगुणरहितानां दशाब्दपर्यन्तं ज्येष्ठत्वे सत्यपि सखेत्येवमाख्यायते न त्वभिवाद्यः । पुरग्रहणं प्रदर्शनार्थं, तेनैकग्रामादिवासेऽप्येवं भवति । गीतादिकलाभिज्ञानां पञ्चवर्षपर्यन्तं, श्रोत्रियाणाम् अब्दपर्यन्तं, सपिण्डेष्वत्यन्तात्पेनैव कालेन ज्येष्ठत्वे सति सख्यम् । अपिरेवार्थे । सर्वत्र उक्तकालादूर्ध्वं ज्येष्ठव्यवहारः ।

तथा,

अवाच्यो दीक्षितो नाम्ना यवीयानापि यो भवेत् ।
भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥

अस्यार्थः।प्रत्यभिवादनकाले अन्यदा च दीक्षणीयाप्रभृति अवभृथस्नानात्पूर्वं कनिष्ठोऽपि दीक्षितो नाम्ना न वाच्यः । किंतु भोभवच्छब्दपूर्वकं दीक्षितादिशब्दैरभिभाषेत । यथा भो दीक्षितेति ।

तथा,

परपत्नी तु या स्त्रीस्यादसंबद्धा च योनितः ।

तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीतिच ॥

विष्णुः,

जन्मप्रभृति यत्किंचिच्चेतसा धर्ममाचरेत् ।

सर्वं तन्निष्फलं याति ह्येकहस्ताभिवादनात् ॥ इति ।

माधवीये श्लोकापस्तम्बः,

समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकः ।

जपं होमं च कुर्वाणो नाभिवाद्यस्तथा द्विजः ॥

अन्यान्यपि वचनानि तत्रैव,

पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ।

नास्तिकं च कृतघ्नं च नाभिवादेत्कथंचन ॥

धावन्तं च प्रमत्तं च मूत्रोच्चारकृतं तथा ।

भुञ्जानमातुरं नार्हं नाभिवादेद्द्विजोत्तमः ॥

वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ।

अभ्यक्तशिरसं चैव स्नास्यन्तं नाभिवादयेत् ॥

स्रुक्पाणिकमनाज्ञातमशक्तं रिपुमातुरम् ।

योगिनं च तपःसक्तं कनिष्ठं नाभिवादयेत् ॥

तत्रैव शातातपः,

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।

अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति ॥ इति ।

एतदनन्तरं निबन्धान्तरे वचनानि दृश्यन्ते ॥

यथा,

क्षत्रवैश्याभिवादे च विप्रस्यैवं विधीयते ।

शूद्राभिवादने कार्यं त्रिरात्रं तु द्विजातिभिः ॥

रजकादिषु चान्द्रं स्यादिति संग्रहकृन्मतम् ।
देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् ॥
नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति ।
सर्वे चापि नमस्कार्याः सर्वावस्थाश्च सर्वदा ॥

त्रिदण्डिनमिति यतिमात्रोपलक्षणम् । सर्वेचापीति । अशुच्यवस्थास्थिता अपि नमस्कार्या भवन्ति । अभिवादनं परं तदवस्थायां निषिद्धमित्यर्थः ॥

मात्स्ये,

पतिता गुरवस्त्याज्या माता चैव कथंचन ।
गर्भधारणपोषाभ्यां तेभ्यो माता गरीयसी ॥

पतितायाः भार्याया गृहवासपरिपोषणविधानं स्त्रीस्वातन्त्र्यनिषेधमूलकतया सर्वस्त्रीधारणमिति स्थितौ वचनमिदं नमस्कारादिविषयमिति वदन्ति ।

पठन्ति च,

मातुः पितुः कनीयांसं न नमस्येद्वयोऽधिकः ।
नमस्येत्तु गुरोर्भार्यां भ्रातृजायां विमातरम् ॥

विद्याऽऽकरवाजपेयिधृतं वचनम्,

अजाकर्णेन विद्वांसं यतिं संपुटपाणिना ।
मूर्खं चैवैकहस्तेन कनिष्ठं नाभिवादयेत् ।

अत्र विद्वांसमित्यादावभिवादयेदित्यस्यान्वयः । एवं च पूर्वलिखितैकहस्ताभिवादनिषेधो मूर्खव्यतिरिक्तपरः । केचित्तु

ज्येष्ठो यदि नमः कुर्यात्कनिष्ठाय तयोः पुनः ।
जन्मप्रभृति यत्पुण्यमायुश्चैव प्रणश्यति ॥

इतिवचनं पठित्वा

ज्यायानपि कनीयांसं संध्याकालेऽभिवादयेत् ।

विना पुत्रं च शिष्यं च तथैव दुहितुः पतिम् ॥

इति पठ्यमानवचनात्तस्य संध्याकालातिरिक्तकालविषयकत्वं वर्णयन्ति।

यत्तु,

प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम्।

इति भागवतवचनं तद्वैष्णवविषयम्।

माधवीये विष्णुपुराणं,

अभिवादे कृते यस्तु न करोत्यभिवादनम्।

आशिषं वा कुरुश्रेष्ठ स याति नरकान् बहून् ॥

अत्राशीर्नमस्कारयोर्हरिहरपद्धतिधृतवचनाद् व्यवस्थितो विकल्पः।

यथा,

आशीर्वाच्या नमस्कार्यैर्वयस्यस्तु पुनर्नमेत्।

एवंच कनिष्ठो नमस्कृतोऽपि प्रतिनमस्कारमेव कुर्यान्नाशिषः।

तथा,

ज्येष्ठे कनिष्ठो यो मोहात्स्वस्तिवाचं करोति वै।

ज्येष्ठस्य हरते सर्वं दुष्कृतं यत्त्रिधा कृतम् ॥

स्वस्तिवाचम् आशीर्वचनम्। अयं च निषेधो नमस्कारानन्तरविहिताशीर्वचनविषयकः। आशीर्वादान्तरे शिष्टाविगानात्। पुत्रादिभिन्नकनिष्ठसवर्णेषु तूभयं विधेयं सदाचारादिति केचित्।

गौतमः,

भोभवन्निति वयस्यः समानेऽहनि जातः। अत्राहःशब्दः संवत्सरवाचक इति हरदत्तः। एकस्मिन् वत्सरे जातो यो वयस्यः स भोभवन्नित्यनयोरन्यतरेण शब्देन संभाष्यः। तथा दशवर्षवृद्धः पौरः, पञ्चभिः कलाधरः, श्रोत्रियश्चारणस्त्रिभिः। पौरः एकपुरवासी। कलाधरः कलाभिज्ञः। चारणः सहाध्यायी। एते

सर्वे भोभवन्निति संभाष्याः नाभिवाद्याः । तथा राजन्यवैश्यकर्मविद्याहीनाः। कर्मशब्दः प्रत्येकमभिसंबध्यते । राजन्यकर्मा वैश्यकर्मा ब्राह्मणोऽपि राजन्यकर्मणा वैश्यकर्मणा वा जीवन्नसन्तवृद्धोऽपि भोभवन्नितिसंभाष्यो नाभिवाद्यः। विद्याहीनो वृद्धोऽपि विद्याधिकेन तथा संभाष्यो नाभिवाद्यः । तथा दीक्षितश्च प्राक् क्रयात्। वयस्यविषयमिदम् । दीक्षितश्च वयस्यः सोमक्रयात् प्राक् तथा संभाष्यः । ततः परं वृद्धवन्मान्यः ।

अथ मान्याः ।

तत्र शंखलिखितौ,

अथ मान्याः पिता माता पितुर्भार्या ज्येष्ठो भ्राता भगिनी ज्येष्ठः श्यालः पितुः सखा गुरुराचार्यः पितृव्यमातुलश्वश्रूश्वशुरवृद्धा इति । पितुर्भार्या विमाता ।

विष्णुः,

इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥

राजर्त्विक् श्रोत्रियो ऽधर्मप्रतिषेध्युपाध्यायपितृव्यमातामहमातुलश्वशुरज्येष्ठभ्रातृसंबन्धिनस्त्वाचार्यवत्प्रतिपूजनीयाः पत्न्यश्च तेषां सवर्णाः मातृष्वसा ज्येष्ठा स्वसा चेति । अधर्मप्रतिषेधी । अधर्माद्यो निवारयति ।

हारीतः,

गुरुशुश्रूषा नाम ज्ञानधर्मार्थं निमित्तं क्रियते । तत्र ज्ञानानि च्क्रयार्थं गुरुशुश्रूषां कुर्यात्। दिविष्ठा भूमिष्ठाश्च खलु गुरवो, ऽग्न्यादयो देवा दिविष्ठास्तेषां जपहोमार्च्चनादिभिः शुश्रूषां कुर्यात् । भूमिष्ठाः खलु गुरवो यथा ब्राह्मणो मातापितरौ ज्येष्ठो भ्राता ज्येष्ठस्य पत्नी उपाध्याय उपाध्यायपत्नी दीक्षितः मन्त्र-

जितो राजा वयोवृद्धो ज्ञानवृद्धस्तपोवृद्धश्चेति। तेषामभिगमनाभिवादनासनार्घातिथ्यादिभिः शुश्रूषां कुर्यात्। एवं ह्याह,

मूलं धर्मस्य गुरवो ज्ञानस्य तपसस्तथा ।
तस्माद्धि गुरवः सेव्याः पुरुषेण प्रयत्नतः ॥
भूमिष्ठा गुरवो येषां तुष्यन्ति सततं नृणाम् ।
देवा हि तेषां तुष्यन्ति नराणां पुण्यकर्मणाम् ॥
अतुष्टा गुरवो येषां प्रणष्टास्ते नराधमाः ।
तुष्टास्तु येषां गुरवस्तेषां सर्वाः समृद्धयः ॥
गुरुमन्युप्रदग्धानां न शुभा विद्यते गतिः । इति ।

दीक्षितः सोमक्रयादनन्तरम्। तत्पूर्वं तु दीक्षितश्च प्राक् क्रयादिति गौतमेन तस्य वयस्यत्वाभिधानात्। राजा चात्र महीपतिर्न तु क्षत्रियमात्रम् । देवलवचनैकवाक्यत्वात् ।

यथाऽऽदेवलः,

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ।
माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः ।

गुर्वी गुरुपत्नी । ज्येष्ठा, भगिनीति शेषः ।

तथा,

इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा ।
अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः ॥
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ।
नैतैरुपाविशेत्सार्धं विवदेन्नात्मकारणात् ॥
उद्दिष्टं साधयेदर्थं प्रतिषिद्धं च वर्जयेत् ।

उद्दिष्टमादिष्टम् । तथा,

तत्पूज्यान् पूजयेन्नित्यं व्यसने न परित्यजेत् ।
क्रोधं वाग्दण्डपारुष्ये उत्सेकं वैकृतान् स्वरान् ॥
नर्म हासं विलासं च वर्जयेद् गुरुसन्निधौ ।
जीवितार्थमपि द्वेषं गुरुभिर्नैव भावयेत् ॥
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ।

व्यसने विपादि। उत्सेको गर्वः। नर्म क्रीडाम्। हासं परिहासम्। विलासं शृङ्गारचेष्टाम् ।

तथा,

गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥
यो भावयति या सूते येन विद्योपदिश्यते ।
ज्येष्ठो भ्राता च भर्ता च पञ्चैते गुरवः स्मृताः ॥
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजितव्या विशेषेण पञ्चैते भूतिमिच्छता ॥
यावत्पिता च माता च द्वावेतौ निर्विकारिणौ ।
तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥
पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रः सकलं धर्मं प्राप्नुयान्नात्र संशयः ॥
नास्ति मातृसमं दैवं नास्ति पित्रा समो गुरुः ।
तयोः प्रत्युपकारो हि न कथंचन विद्यते ॥
सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया ।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवम् ॥

तेषां पञ्चानाम्। तेषां त्रयाणां मध्ये। तान् पञ्चाह । य इत्यादि। भावयति उत्पादयति । भर्त्ता पोषकः । वक्तारम् अध्यापकम् । विसृष्टः प्रस्थापितः । तथा,

यो भ्रातरं पितृसमं ज्येष्ठं मूढोऽवमन्यते ।
तेन दोषेण स प्रेत्य निरयं घोरमृच्छति ॥
तस्मात्पितृवदाराध्यो गुरुर्ज्येष्ठो हितार्थिभिः ।
तस्य प्रसादान्मर्त्यो हि प्रेत्य चेह च नन्दति ॥

पुंसा धर्मनिविष्टेन पूज्यो भर्त्ता हि सर्वदा ।
अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥
ये नरा भर्तृपिण्डार्थं स्वान् प्राणान् संत्यजन्ति हि ।
तेषामथाक्षयान् लोकान् प्रोवाच भगवान् मनुः ॥
यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥

योऽन्तर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ।
तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।
नैतैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत् ॥

तथा,

सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥
यावत्त्रयस्ते जीवेयुस्तावन्नान्यत्समाचरेत् ।
तेषां नित्यं तु शुश्रूषां कुर्यात्प्रियहिते रतः ॥
तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनोवाक्कायकर्मभिः ॥

त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।
एष धर्मः परस्तस्मादुपधर्मोऽन्य उच्यते ॥
विप्र इत्यनुवृत्तौ शातातपः,
अभिवाद्यो नमस्कार्यः पादयोर्वन्द्य एवच ।

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ॥

पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ।

**भविष्यपुराणे प्रथमे मनुश्च,**

ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् ।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥

इत्येवं क्षत्रियपिता वैश्यस्यापि पितामहः ।
प्रपितामहश्च शूद्रस्य प्रोक्तो विप्रो मनीषिभिः ॥

**मनुर्विष्णुश्च,**

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥

वित्तं न्यायार्जितं धनम् । बन्धुः पितृव्यादिः । वयो ऽधिकम् । कर्म श्रौतं स्मार्त्तं च । विद्या तत्त्वज्ञानम् । मान्यस्थानानि । मान्यत्वकारणानि ।

तथा,

पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥

त्रिषु वर्णेषु ब्राह्मणादिषु पञ्चानां पूर्वोक्तानां वित्तादीनां मध्ये यत्र पूर्वमप्यधिकं भवति स एवोत्तरस्मादपि मान्यः । तेन वित्तबन्धुयुक्तो वयोऽधिकान्मान्यः । वित्तादित्रययुक्तः कर्मवतो मान्यः । वित्तादिचतुष्टययुक्तो विदुषो मान्यः । गुणवन्ति प्रकर्षवन्ति । तेन द्वयोर्वित्तादिमत्त्वे प्रकर्षो मानहेतुः । प्रकर्षश्च वित्तस्य न्यायार्जितत्वादिः । बन्धोरन्तरङ्गत्वादिः । वयसः अत्याधिक्यादिः । कर्मणः सर्वाङ्गसंपन्नत्वादिः । विद्याया विधिवद्ग्रहणादिः । दशमीं नवत्यधिकावस्थाम् । शतवर्षाणां दशधा

विभागे दशम्यवस्था नवत्यधिका भवति । एतादृशः शूद्रोऽपि द्विजानां मान्य इत्यर्थः ।

**वसिष्ठः,**

विद्या वित्तं वयः संबन्धाः कर्म च मान्यं तेषां समवाये पूर्वं पूर्वं गरीयः । संबन्धा बन्धवः ।

**गौतमः,**

वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि, श्रुतं तु सर्वेभ्यो गरीयस्तन्मूलत्वाद्धर्मस्य श्रुतेश्चेति । जातिराभिजात्यं आधिक्यापादिका ब्राह्मणत्वादिर्वा । श्रुतं सार्थसाङ्गवेदाध्ययनम् । श्रुतेरविच्छिन्नवेदसंप्रदायस्य । अयमत्र निर्णयः । मनुना वित्तं सर्वजघन्यत्वेनोक्तं वसिष्ठेन तु विद्यामात्रात् । तत्र च वसिष्ठोक्तं वित्तोत्कृष्टत्वं न्यायार्जितधर्मोपयोगिवित्ताभिप्रायम् । एवंच मनुगौतमवसिष्ठेषु कर्मण उत्कृष्टत्वमध्यमत्वजघन्यत्वानि श्रद्धादिकारणोत्कृष्टत्वादित्रैविध्याभिप्रायेण भूयस्त्वाभिप्रायेण वा । गौतमेन तु विद्याया वयोजघन्यत्वेनाभिधानं पाठमात्राभिप्रायम् । तेनैव "श्रुतं तु सर्वेभ्यो गरीय" इत्युक्तत्वात् । वयोऽत्र दशम्यवस्था । मनुवसिष्ठयोश्च वयोमात्रम् ।

**वसिष्ठः,**

स्थविरबालातुरभारिकस्त्रीचक्रवतां पन्थाः समागमे परस्मै परस्मै देयः । राजस्नातकयोः समागमे राज्ञा स्नातकाय देयः । सर्वैरेव वध्वा उह्यमानायाः । भारिको भारवाहः । चक्रवान् शकटादिः । उह्यमानायाः विवाहकाले । पन्था देय इत्यनुवृत्तौ

**मार्कण्डेयपुराणे,**

मूकान्धबधिराणां च मत्तस्योन्मत्तकस्य च ।<br>
पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च ॥

मत्तो मद्यादिना । उन्मत्तक उन्मादवान् । पुंश्चली अभिसारिणी । पन्था देय इत्यनुवृत्तौ

**शङ्खलिखितौ,**

बालवृद्धमत्तोन्मत्तोपहतदेहभारातिक्रान्तेभ्यः स्त्रियै गार्भिण्यै स्नातकप्रव्रजितविद्याशिल्पगुणप्रकृष्टेभ्यः ।

उपहतदेहः पापरोगादिना । गुणोऽत्र वित्तादिः ।

**देवलबौधायनौ,**

पन्था देयो ब्राह्मणाय गवे राज्ञेऽपचक्षुषे ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥

अपचक्षुषे अन्धाय ।

**आपस्तम्बः,**

राज्ञः पन्था ब्राह्मणेनासमेत्य तु ब्राह्मणस्यैव पन्थाः यानस्य भाराभिनिहितस्यातुरस्य स्त्रियाः सर्वैर्दातव्यो वर्णज्यायसे चेतर्वर्णैरशिष्टयतिमत्तोन्मत्तानात्मनः स्वस्त्ययनार्थेन सर्वैरेव दातव्यः ।

**गौतमः,**

चक्रिदशमीस्थानुग्राह्यवधूस्नातकराजभ्यः पथो दानं राज्ञा तु श्रोत्रियाय । अनुग्राह्यो रोगार्त्त इति हरदत्तः । स्नातको विद्याव्रतोभयस्नात इत्यपि स एव ।

**याज्ञवल्क्यः,**

वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः ॥

वृद्धो दशमीस्थः । वरो विवाहयात्रार्थमुपस्थितः ।

**मनुः,**

चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥

तेषां तु समवेतानां मान्यौ स्नातकपार्थिवौ ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥

अथाचार्यादिलक्षणम् ।

तत्र मनुः,

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥
एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥
निषेकादीनि कर्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥
अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

कल्पः प्रत्यक्षवेदमूलकोऽनुष्ठानप्रतिपादको ग्रन्थविशेषः । कल्पग्रहणमङ्गान्तरोपलक्षणार्थम् । रहस्यमुपनिषदः । प्रधानत्वात्पृथगभिधानम्। एकदेशं मन्त्रं ब्राह्मणं वा। वृत्त्यर्थमात्मजीवनार्थम्। निषेको गर्भाधानं, तदादीनि वेददानपर्यन्तानि संस्कारकर्माणि। सम्भावयति संवर्धयति । निषेकमात्रकर्तृत्वादेव गुरुत्वम् , अपरलक्षणयोगस्तु आचार्यापेक्षया मान्यत्वद्योतनार्थ इति शूलपाणिः। अग्न्याधेयमग्न्याधानम् । पाकयज्ञा अष्टकादयः ।

तथा,

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥

याज्ञवल्क्यः,

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥

एकदेशमुपाध्याय ऋत्विक् यज्ञकृदुच्यते ।
एतानि वचनानि मनुसमानार्थतया व्याख्येयानि ।

**यमः,**

सत्यवाग्धृतिमान् दक्षः सर्वभूतदयापरः ।
आस्तिको वेदनिरतः शुचिराचार्य उच्यते ॥
वेदाध्ययनसम्पन्नो वृत्तवान् विजितेन्द्रियः ।
इत्येतैर्लक्षणैर्युक्तो गुरुर्भवति नित्यशः ॥
आचार्यः आचार्यवत्पूज्य इत्यर्थः । गुरुः गुरुवत्पूज्य इत्यर्थः।

**मनुः,**

उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥

**कल्पतरौ भविष्यपुराणे,**

उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥
कृत्वोपाध्यायमादौ तु ये पूज्याः कथितास्तत्र ।
महागुरुर्महाबाहो सर्वेषामाधिकः स्मृतः ॥
अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णं च पञ्चमं वेदं यन्महाभारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ।
एवं विप्रकदम्बस्य वाचकः प्रवरः स्मृतः ॥
चतुर्णामपि वर्णानां स महागुरुरुच्यते ।
यस्त्वेतानि समस्तानि पुराणानीह जानते ॥
भारतं च महाबाहो सर्वज्ञोऽसौ मतो नृणाम् ।

तस्मात्स पूज्यो राजेन्द्र वर्णैर्विप्रादिभिः सदा ॥

किं त्वया न श्रुतं वाक्यं यथाऽऽह भगवान् विभुः ।

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ॥

तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ।

दशोपाध्यायानपेक्ष्य आचार्यः, आचार्यशतमपेक्ष्य पिता, पितृसहस्रमपेक्ष्य माता गौरवेणातिरिच्यते । अत्रोपनयनपूर्वकसावित्रीमात्राध्यापयिता आचार्योऽभिप्रेतः । उपनयनपूर्वकसमस्तवेदाध्यापकस्य तु उत्पादकेत्यादिवक्ष्यमाणमनुवाक्येन पित्रपेक्षया उत्कर्षाभिधानात् । कृत्स्नेत्यादि । उपाध्यायादयो ये पूज्याः कथिताः तदपेक्षया ऽष्टादशपुराणानीत्यादिना वक्ष्यमाणो यो महागुरुः स पूज्यतम इत्यर्थः । कार्ष्णं कृष्णद्वैपायनप्रणीतम् ।

**गौतमः**, आचार्यः श्रेष्ठो गुरूणां मातेत्येके ।

**शङ्खलिखितौ**, न मातापित्रोरन्तरङ्गच्छेत्पुत्रः, कामं मातुरेवानुब्रूयात्साहि धारिणी पोषणी च, न पुत्रः प्रतिमुच्येतान्यत्र सौत्रामणीयागाज्जीवन्नृणान्मातुः । मातापित्रोर्विवादे सति नान्तरं गच्छेदौदासीन्यं कुर्यादित्यर्थः । कामं यदीच्छेदित्यर्थः । अनुब्रूयादनुकूलं वदेत् । अत्र हेतुमाह सा हीत्यादि । मातापित्रधिकारे

**नारदः**,

तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।

अभावे बीजिनो माता तदभावे तु पूर्वजः ॥

अत्र पितुः श्रेयस्त्वमभिवादनमात्रे । निषेकादिसमस्तसंस्कारपूर्वकाध्यापकपितृविषयमिति माधवः ।

**मनुः**,

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।

ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥

कामान्माता पिता चैनं यदुत्पादयतो मिथः ।
सम्भूतिं तस्य तां विद्याद्योनावभिजायते ॥
आचार्यस्तस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साऽजरामरा ॥
ब्राह्मस्य जन्मनः कर्त्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥
अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ।
पुत्रका इतिहोवाच ज्ञानेन परिगृह्य तान् ॥
ते तमर्थमपृच्छन्त देवानागतमन्यवः ।
देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥
अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥

माधवीये पुराणम्,

ज्येष्ठो भ्राता गुरुसमो मृते पितरि भूसुराः ।
कनिष्ठास्तं नमस्येरन्सर्वे छन्दोऽनुवर्त्तिनः ॥
तमेव चोपजीवेरन् यथैव पितरं तथा । इति ।

मनुः,

पितृवत्पालयेत्पुत्रान् ज्येष्ठो भ्राता यवीयसः ।
पुत्रवच्चापि वर्त्तेरन् यथैव पितरं तथा ॥
इति अभिवादनम् ।

अथभैक्षचर्याविधिः।

तत्र मनुः,

प्रतिगृह्येप्सितं दण्डमभिवाद्य च भास्करम्।

प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि॥ इति।

ईप्सितं तत्तद्वर्णविहितम्। भास्करं सौरैर्मन्त्रैरुपस्थाय सम्मुखमवस्थायेति कल्पतरुः। अग्निं प्रदक्षिणीकृत्य। एतत्त्रितयं भिक्षाचरणाङ्गतया विधीयते। यथाविधि वक्ष्यमाणभवत्पूर्वत्वादिप्रकारेण। भैक्षं भिक्षासमूहः। तत्र वाक्यप्रयोगमाह

याज्ञवल्क्यः,

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।

ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम्॥ इति।

गौतमोऽपि,

आदिमध्यावसानेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येणेति।

मनुरपि,

भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।

भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ इति।

अत्रैवं प्रयोगः। भवति भिक्षां देहीति विप्रः, भिक्षां भवति देहीति राजन्यः, भिक्षां देहि भवतीति वैश्यः। ब्रह्मचारिभिः भैक्ष्यं कुतो ग्राह्यमित्याह

याज्ञवल्क्यः,

ब्राह्मणेषु चरेद् भैक्षमनिन्द्येष्वात्मवृत्तये। इति।

तेष्वपि विशेषमाह

मनुः,

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु।

ब्रह्मचार्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम्॥

ब्राह्मणेष्विति सति सम्भवे नियमार्थम्।

असम्भवे त्वाह व्यासः,

ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्ष्यमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव च ॥ इति ।

सर्वशब्दोऽत्र त्रैवर्णिकपरः । सर्वत्वमाधिकारिकमिति न्यायात् । तत्रापि पतितादिवर्जं सार्ववर्णिकं भैक्ष्यचरणम् । अभिशस्तपतितवर्जमिति गौतमस्मरणात् । विशेषान्तरमाह

**भविष्यपुराणम्,**

सर्वं वा विचरेत् ग्रामं पूर्वोक्तानामसंभवे ।
अन्त्यवर्जं महाबाहुरित्याह भगवान् विभुः ॥

अन्त्यः शूद्रः । यत्तु मनुनोक्तम्,

सर्वं वा विचरेद् ग्रामं पूर्वोक्तानामसंभवे ।
नियम्य प्रयतां वाचमभिशस्तांस्तु वर्जयेत् ॥

इति । तदपि पूर्वोक्तेन समानविषयं, न पुनः शूद्रप्राप्त्यर्थम् । वेदैर्यज्ञैरहीनानामिति तेनैवाभिधानात् ।

यदपि भविष्यपुराणेऽभिहितम्,

चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन । इति ।

तदप्यापदि पूर्वपूर्वासंभवे ज्ञेयम् ।

क्षत्रवैश्यगृहेष्वेव क्रियावत्सु साधुषु ।
चातुर्वर्ण्यं चरेद्भैक्ष्यमापत्काल उपस्थिते ॥

इति विष्णुस्मरणात् । यद्यपि चातुर्वर्ण्यं चरेद्भैक्ष्यमित्युक्तं, तथापि शूद्रस्य आमान्नमेव ग्राह्यं न पक्वम् ।

**तथा चाङ्गिराः,**

आममेवाददीतास्मादवृत्तावेकरात्रकम् ।
आमं पूयति संस्कारो धर्म्यं तेभ्यः प्रतीच्छताम् ॥
तस्मादामं ग्रहीतव्यं शूद्रादप्यङ्गिरोऽब्रवीत् । इति ।

अवृत्तौ वृत्त्यन्तराभावे। एकरात्रम् एकाहपर्याप्तम् तेभ्यः शूद्रेभ्यः धर्म्यं पूर्वोक्तम् आमं प्रतीच्छतां गृह्णतां संस्कारो ब्रह्मचर्यं पूर्याति पूर्णं भवति अन्यथा नश्यतीत्यर्थः। यद्यपि

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ।

इति पराशरेण ब्रह्मचारिणः पक्वान्नग्रहणाधिकार एवोक्तो न आमान्नग्रहणाधिकारः, तथापि

कन्दुपक्वं स्नेहपक्वं पायसं दधिसक्तवः।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्॥

इत्यादिवाक्यप्रतिप्रसूतेष्वन्यतमद् ग्राह्यम्। एषामप्यभावे मुद्गचणकाद्याममेव सद्योभक्षणार्हं ग्राह्यम्। एतेषु क्वचिदपवादमाह

मनुः,

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।

गुरुकुले गुरुगृहे। कुलं शिष्यसमूह इत्यन्ये। यदपि

मनुभविष्यपुराणयोः,

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत्॥

इति तदपि प्रथमभिक्षाविषयम्।

तथोपादानात्। अन्यत्रालाभे तत्रापि कार्यमित्याह

गौतमः, आचार्यज्ञातिगुरुगृहेषु स्वेष्वलाभेऽन्यत्रेति। स्वेषु बन्धुषु। अत्रापि उत्तरोत्तरलाभे पूर्वपूर्वं त्याज्यम्। तेषां पूर्वं पूर्वं परिहरेदिति तस्यैव स्मरणात्। भिक्षाचरणकालमाह

आपस्तम्बः, सायंप्रातरमत्रेण भिक्षाचर्यं चरेदिति। सायं सूर्यास्तानन्तरं, प्रातः षोढाविभक्तादिवसाद्यभागे। अयं च कालोऽष्टवर्षन्यूनब्रह्मचारिविषयः।

अश्नीयादष्टवर्षस्तु ब्रह्मचारी प्रगे सदा।

तदूर्ध्वमाद्वादशाब्दादश्नीयात्संगवे सदा ॥
तदूर्ध्वं गृहिवाद्भिक्षां भोजनं च समाचरेत् ।

इति सुमन्तुस्मरणात् । तदूर्ध्वमित्युपकुर्वाणकविषयम् । नैष्ठिकस्य तु यतिवद्वा निवद्वा भोजनकालः ।

तथाच कार्ष्णाजिनिः,

मध्याह्ने गृहिणां भुक्तिर्वनिनामपराह्णके ।
सायाह्ने यतिनां प्रोक्ता प्रातस्तु ब्रह्मचारिणाम् ॥
नैष्ठिकानां तु सायाह्नेऽपराह्णे वापि सा सकृत् । इति ।

अनेन स्मृत्यन्तरस्थोऽपि प्रातःशब्दो व्याख्यातः । यत्तु प्रातःशब्दोऽत्र मध्याह्नपर इति कुसंप्रदायिनां व्याख्यानं, तत्प्रधानविपत्तिरूपन्यायविरोधादुक्तवचनाविरोधाच्चोपेक्ष्यम् । अमत्रं कांस्यव्यतिरिक्तं ताम्रादिपात्रम् ।

ताम्बूलं व्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥

इति प्रचेतःस्मरणात् । पात्रान्तराणि व्यतिरेकमुखेनाह

अत्रिः,

करे कर्पटके चैव शिलायां ताम्रभाजने ।
वटार्काश्वत्थपत्रेषु गृही भुक्त्वैन्दवं चरेत् ॥

इति गृहिणो निषेधादन्येषामभ्यनुज्ञायते ।

हारीतोऽपि, लौहे मृन्मये वा पात्रे भुञ्जीतेति । तत्प्रक्षालनमाह, आपस्तम्बः, भुक्त्वा स्वयममत्रं प्रक्षालयेदिति । भिक्षेति नियमान्नैकस्यान्नमश्नीयादित्याह

मनुः,

भैक्षेण वर्त्तयेन्नित्यं नैकान्नाशी भवेद्व्रती । इति ।

इदमप्यनापादि ।

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।

इति याज्ञवल्क्यस्मरणात् ।

तत्प्रत्याख्याने दोषमाह आपस्तम्बः, स्त्रीणां प्रत्याचक्षणानां समाहितो ब्रह्मचारी इष्टं दत्तं हुतं प्रजां पशून् ब्रह्मवर्च्चसमन्नाद्यं हन्ति। तस्मादुहवै ब्रह्मचारिसंघं चरन्तं न प्रत्याचक्षीतेति । स्त्रीग्रहणं प्राचुर्याभिप्रायेण न परिसंख्यार्थम्। अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वेत्याश्वलायनस्मरणात् । ब्रह्मचारिणां भिक्षाशने फलमाह

मनुः,

भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता । इति ।

अत्रिरपि,

शाकभक्षाः पयोभक्षाः ये चान्ये यावकाशिनः ।

सर्वे ते कृतभैक्षस्य कलां नार्हन्ति षोडशीम् ॥

तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम् ।

पिबेद् द्वादशवर्षाणि न तद्भैक्षसमं भवेत् ॥

यावकं यवौदनः । नचात्र फलश्रवणादनियतं भिक्षाचरणमिति वाच्यम् । अकरणे मनुना प्रायश्चित्तोक्तेः ।

अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।

अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ इति ।

प्रत्याख्यानं न कर्त्तव्यमिति यदुक्तं, तद्व्रताध्ययनादिविशिष्टब्रह्मचारिविषयम् ।

तथाच मनुः,

भिक्षां च भिक्षवे दद्याद्विधिवद् ब्रह्मचारिणे । इति ।

विधिवदित्यनेनाविधिवतां निषेधमाह

वसिष्ठः,

अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ।

तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥ इति ।

हस्तदत्ता भिक्षा न भोक्तव्येत्याह

**मनुः,**

हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च ।
भोक्ता ऽप्यशुचितां याति दाता स्वर्गं न गच्छति ॥

भैक्षमाहारादधिकं नाहर्त्तव्यमित्याह

**मनुः,**

आहारादधिकं वर्णी न कचिद्भैक्षमाहरेत् ।
युज्यते स्तेयदोषेण कामतोऽधिकमाहरन् ॥
माधुकरीयमानीय ब्राह्मणेभ्यः प्रयच्छति ।
स याति नरकं घोरं भोक्ता भुङ्क्ते च किल्विषम् ॥
तस्मान्नोपहरेद्भैक्ष्यमतिरिक्तं कदाचन । इति ।

कामत इति वदता अकामतोऽधिकाहरणे न दोष इत्युक्तं भवति । अकामतोऽधिकाहरणे प्रतिपत्तिरुक्ता ऽऽपस्तम्बेन । नोच्छिष्टं कुर्यादशक्तौ भूमौ निखनेदप्सु वा क्षिपेदाचार्याय वा दद्यादन्तर्दिने वा शूद्रायेति । अन्तर्दिने आचार्यदासाय । अशक्तौ तावद्भोजनाशक्तौ । उच्छिष्टं न कुर्यात्प्रथममेवोद्धृत्य पृथक् स्थापयेत् । नोच्छिष्टं कस्यचिदद्यादिति मनुना तस्य दानप्रतिषेधात् । आहृतं भैक्षं गुरवे निवेद्याश्नीयात् ।

**तथाच मनुः,**

समाहृत्य तु तद्भैक्षं यावदर्थं समाप्नुयात् ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ॥
अपूजितं तु यद्भुक्तमुभयं तु हिनास्ति तत् ।

पूजितं संस्कृतम्। अकुत्सयन् अनिन्दन्। विशेषान्तरमाह **याज्ञवल्क्यः,**

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया।
अपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन्॥ इति।

कृताग्निकार्य इति प्रातः कथंचिदकृतस्याग्निकार्यस्य कालान्तरविधानार्थं न पुनस्तृतीयप्राप्त्यर्थमिति **मिताक्षरा**। अन्ये तु अग्निकार्यशब्देन व्याहृतिभिर्भैक्षात्रिभागेन होममाहुः।

तथाच **शङ्खः,**

याचयेद्याचितं चान्नं त्रिधा कृत्वैकभागकम्।
अग्नौ व्याहृतिभिः स्थाप्य भागमेकं गुरोरपि॥
एकं भुञ्जीत मतिमान्स्वाध्यायं च ततः पठेत्। इति।

**हारीतोऽपि,** भैक्षमवोक्षितं पर्यग्निकृतम् आदित्यदर्शितमनुज्ञातममृतसंमितं प्रातस्तदश्नन् ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोतीति।

**ब्रह्मपुराणेऽपि,**

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः।
अस्माकं नित्यमस्त्वेतादिति भक्त्याऽथ वन्दयेत्॥ इति।

गुर्वसन्निधाने तद्भार्यादिभ्यो निवेदयेत्।

तथाच **गौतमः,** असान्निधौ तद्भार्यापुत्रसब्रह्मचारिसद्भ्य इति। सन्तः श्रोत्रियाः।

तथाचापस्तम्बः, विप्रवासे गुरोराचार्यकुलाय तद्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्य इति। आहृतस्य भैक्षस्य भोजनकालमाह **गौतमः,** सायं प्रातस्त्वन्नमाभिपूजितमानिन्दन् भुञ्जीतेति। सायं प्रातरिति वदता मध्ये भोजननिषेधोऽभिहितः।

अत एव **मनुः,**

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्।

नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ इति ।

अग्निहोत्रसमताभिधानात्कालद्वयेऽपि भोजननियमेनाकरणे प्रत्यवाय इति गम्यते ।

तथा च श्रुतिः, तस्मात्सायंप्रातराश्येव स्यादिति । अयं चान्तरा भोजननिषेधस्समर्थस्यैव, न बालस्य । प्रधानविपत्तिप्रसङ्गात् । "यदि तूपदस्येदोदनं धानास्सक्तूनित्यनुव्रतये" दिति दीक्षाप्रकरणीयलिङ्गात् ।

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥

इति वचनाच्च । तत्र विशेषमाह

**मनुः**,

अष्टौ ग्रासा मुनेर्भैक्षं वानप्रस्थस्य षोडश ।
द्वात्रिंशतं गृहस्थस्य अमितं ब्रह्मचारिणः ॥

नचात्रामितमित्यनेनात्यशनमाशङ्कनीयम् ।

कालेनाद्यं लघु क्षिप्रमल्पमद्याद् द्रवोत्तरम् ।

इति स्मरणात् ।

**मनुरपि**,

नचैवात्यशनं कुर्यान्नचोच्छिष्टं क्वचिद्व्रजेत् ।
अनारोग्यमनायुष्यमस्वास्थ्यं चातिभोजनम् ॥
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् । इति ।

भैक्ष्यस्य क्वचिदपवादमाह

**याज्ञवल्क्यः**,

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ।

व्रतं मधुमांसादिवर्जनं तस्य प्रसिद्धत्वात् ।

**अत एव मनुः**,

प्रतिषिद्धं न भोक्तव्यं मधुमांसं च नित्यशः । इति ।

अकामतो मधुभक्षणे न दोष इत्याह

वसिष्ठः, अकामापन्नं मधु वाजसनेयके न दुष्यतीति । यत्तु विष्णुनोक्तं,

श्राद्धभुग्लवणशुक्तपर्युषितवर्जमिति, तदनभ्यर्थिताभिप्रायम् ।

अत एव मनुः,

काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते । इति ।

इति भैक्षचर्याविधिः ।

## अथ ब्रह्मचारिप्रकीर्णकधर्माः ।

तत्र मनुः,

अग्नीन्धनं भैक्ष्यचर्यमधःशय्यां गुरोर्हितम् ।
आसमावर्त्तनात्कुर्यात्कृतोपनयनो द्विजः ॥

ब्रह्मपुराणेऽपि,

मेखलामाजिनं दण्डमुपवीतं च नित्यशः ।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥ इति ।

इदं च वेदस्याप्युपलक्षणम् ।

तथा च यमः,

दण्डं कमण्डलुं वेदं मौञ्जीं च रशनां तथा ।
धारयेद् ब्रह्मचर्यं च भिक्षान्नाशी गुरौ वसेत् ॥ इति ।

वेदो दर्भमुष्टिः । गुरौ गुरुसमीपे इत्यर्थः ।

व्यासः,

जघन्यशायी पूर्वं स उत्थाय गुरुवेश्मनि ।
यच्च शिष्येण कर्त्तव्यं कार्यं दासेन वा पुनः ॥
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः ।
किंकरः सर्वकाले च सर्वकर्मसु कोविदः ॥

नाभुक्तवति चाश्नीयादपीते चाम्बु नो पिबेत् ।
नच तिष्ठत्युपविशेदासीने प्रस्वपेन्न च ॥ इति ।

याज्ञवल्क्यस्तु विशेषमाह,

गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥ इति ।

उपासनाप्रकारमाह हारीतः, अथोदकुम्भकुशपुष्पसमिन्मूलफलाहरणसंमार्जनोपलेपनाङ्गशुश्रूषाप्रभृतिभिर्गच्छन्तं शयानमासीनं भक्त्याऽनुवर्त्तेत नास्य निर्माल्यशयनासने छायापादुके चाक्रामेदिति ।

आपस्तम्बोऽपि,

आचार्याधीनः स्यादन्यत्र पतनीयेभ्य इति ।

बौधयनोऽपि,

सर्वत्राप्रतिहतगुरुवाक्योऽन्यत्र पातकादिति ।

गौतमोऽपि,

अधःशायी पूर्वोत्थायी जघन्यसंवेशीति ।

यमोऽपि,

गुर्वधीनोऽस्वतन्त्रः स्यात्पूर्वोत्थायी गुरोर्गृहे ।
सदा जघन्यसंवेशी जितस्वप्नो जितोदरः ॥
जितनिद्रो जितालस्यो जितक्रोधो जितात्मवान् ।
शुश्रूषुरनहंता च गुरुदेवार्चने रतः ॥

अनहंता अनहंकारी ।

गौतमः, सत्यवचनमिति । उपनीतेन सत्यमेव वक्तव्यमित्यर्थः । गुरुपूजायां फलमाह शङ्खः,

न स्नानेन न होमेन नैवाग्निपरिचर्यया ।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात् ॥

मनुरपि नियमान्तराण्याह,

नीचशय्यासनं चास्य नित्यं स्याद् गुरुसन्निधौ ।
गुरोश्च चक्षुर्विषये काचिच्चेष्टाऽस्य नो भवेत् ॥

एतच्च गोयानादिव्यतिरिक्तविषयम् ।

तथाच स एव,

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥ इति ।

यद्यप्येतद्यानं निषिद्धं तथाप्यतिक्रान्तनिषेधस्यापद्ग्रस्तस्य वा सहयानाभ्यनुज्ञानार्थं तद्यानाभ्यनुज्ञानम् ।

विष्णुरपि, नास्यैकासनो भवेदन्यत्र शिलाफलकनौयानेभ्य इति । गुरोः परिवादाद्याकर्णननिषेधमाह

मनुः,

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ इति ।

सद्दोषख्यापनं परिवादः । असद्दोषख्यापनं निन्दा ।

गुरोः परिवादादिकरणे दोषमाह स एव,

परिवादात् खरो भवति श्वा वा भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरः ॥

अननुज्ञातगुरुधनोपजीवी परिभोक्ता ।

हारीतोऽपि,

अमृतस्य प्रदातारं गुरुं यस्त्ववमन्यते ।
नचैनं वहति ब्रह्म तिर्यग्योनौ च जायते ॥
ऋचं वा यदि वाऽर्धं वा पादं वा यदि वाऽक्षरम् ।
सकाशाद्यस्य गृह्णीयान्नियतं तस्य गौरवम् ॥ इति ।

गुरुनामोच्चारणे निषेधः

स्मृत्यन्तरे,

आचार्यं चैव तत्पुत्रं दीक्षितं च तथा गुरुम् ।

स्वसारं च पितुश्चैव मातरं मातुलं तथा ॥

हितैषिणं च विद्वांसं श्वशुरं पतिमेवच ।

न ब्रूयान्नामतो विद्वान्मातुश्च भगिनीं तथा ॥

यत्र गुर्वादिनामग्रहणमावश्यकं तत्रोपाध्यायादिशब्देन गृह्णीयादेव ।

तथाच गौतमः, नामगोत्रे गुरोस्समानतो निर्दिशेदिति । समानतो मानेन सहेत्यर्थः । समाननाम्नः पुरुषान्तराद्वा ।

तथाच मनुः,

नोदाहरेदस्य नाम परोक्षमपि केवलम् ।

नचैवास्यानुकुर्वीत गतिं भाषितचेष्टितम् ॥

गुरुवत् गुरुपत्न्यादिरपि सेव्य इत्याह

विश्वामित्रः,

तद्भार्यापुत्रयोश्चैव वृद्धानां धर्मशालिनाम् ।

शुश्रूषा सर्वदा कार्या प्रणामो भक्तिरेवच ॥ इति ।

नारदोपि,

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।

तद्भक्तिं गुरुदारेषु पुत्रपौत्रे तथैवच ॥ इति ।

गौतमोऽपि, तद्भार्यापुत्रेषु चैवमिति । तस्याचार्यस्य भार्याः पुत्राश्च तेषु च एवम् आचार्यवद्वार्त्तितव्यमित्यर्थः । अत्र विशेषमाह स एव, नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षालनोन्मर्द्दनोपसंग्रहणानीति । गुरुभार्यापुत्रेषु, वर्तयेदिति शेषः ।

मनुरपि,

अभ्यञ्जनं स्नपनं च गात्रोद्वर्त्तनमेवच ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥
ब्रह्मचर्यं तपो भैक्ष्यं सन्ध्ययोरग्निकर्म च ।
स्वाध्यायो गुरुवृत्तिश्च चर्येयं ब्रह्मचारिणाम् ॥ इति ।

तपो ब्रह्मचारिनियमः । तथा चापस्तम्बः,

नियमेषु तपः शस्तं तद्व्यतिक्रमे विद्याकर्म निस्रवतीति । अतो नियमानुष्ठानमावश्यकमेव ।

तथाच मनुः,

सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥ इति ।

दृतिश्चर्मकोशः ।

याज्ञवल्क्यः,

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥ इति ।

मधु क्षौद्रम् । मांसं छागादेः । इदं चाव्याधौ । तदपनोद्य-व्याधौ तु गुरूच्छिष्टं कृत्वा भोक्तव्यमेव ।

तथाच वसिष्ठः, स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीयादिति । व्याधीयीत व्याधिमान् भवति ।

तथाच कूर्मपुराणे,

आदर्शं नैव वीक्षेत नाचरेद्दन्तधावनम् ।
गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः ॥ इति ।

अञ्जनं तैलादिना गात्रस्य कज्जलादिना चाक्ष्णोः वर्ज्ज-येत् । एतदपि व्याध्यादौ कार्यम् । औषधस्याव्रतघ्नत्वात् ।

तदाह स्मृतिः,

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

उच्छिष्टं गुरुव्यतिरिक्तस्य । तथा च वसिष्ठः । उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं चेति । अगुरोरभोज्यमिति वदन् गुरोर्भोज्यमित्याह ।

तथा चापस्तम्बः,

पितुर्ज्येष्ठस्य च भ्रातुर्भोक्तव्यमिति । क्वचिदस्यापवादमाह स एव, धर्मविप्रतिपत्तावभोज्यमिति । धर्मविप्रतिपत्तौ गुरोः पापसन्देहे । शुक्तं निष्ठुरवाक्यम् । स्त्री प्रेक्षणालम्भने मैथुनशङ्कायाम् । भास्करालोकनमादित्यावेक्षणम् ।

तदाह मनुः,

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

उपरक्तं राहुग्रस्तम् । अश्लीलमसभ्यभाषणम् । परिवादः सद्दोषख्यापनम् । आदिशब्देनान्येऽपि नियमा लक्ष्यन्ते ।

तथा च गौतमः,

वर्जयेन्मधुमांसगन्धमाल्यादिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादनस्नानदन्तधावनहर्षनृत्तगीतपरिवादभयानीति । अत्र गन्धनिषेधो भोगार्थं न देवनिर्माल्यस्य । तथाच स्मृतिः, देवताशिष्टमेव गृह्णीयाद्ब्रह्मचारीति । एवं माल्यादावपि ।

मनुरपि

वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।

कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥
द्यूतं च जनवादं च परिवादं तथाऽनृतम्।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥ इति।

रसा इक्षुरसादयः। मधुनो रसत्वेऽपि पृथगुपादानमधिकप्रायश्चित्ताभिधानाय।

गौतमः,

गुरुदर्शने कण्ठप्रावृतावसक्थिकाऽपाश्रयपादप्रसारणानिनिष्ठीवितहसितविजृम्भितावस्फोटनानि। कण्ठप्रावृतं दक्षिणबाहुनुद्धरणेन प्रावरणम्। अवसक्थिका ऊरौ पादावरोपणम्, परिकरबन्धो वा। अपाश्रयः पीठाद्यवष्टम्भेनावस्थानम्। निष्ठीवितं थूत्कारः। हसितं हास्यम्। विजृम्भितं जृम्भा। अवस्फोटनं सावष्टम्भेन भुजताडनम्। इदं चाशक्यमपि नयनमुखादि पिधाय कार्यम्।

तदाहापस्तम्बः,

न स्मयेत यदि स्मयेतापिगृह्य स्मयेतेति ब्राह्मणं नोपजिघ्रेत् स्त्रियं मुखेन न हृदयेन प्रार्थयेत् नाकारणादुपस्पृशेदिति।

अत्र विशेषमाह स एव,

दत्त्वा च न नाम कथयेत् कृत्वा च नानुस्मयेदात्मप्रशंसां परगर्हां च वर्जयेदिति।

हारीतः,

हयगजचैत्यवृक्षवृषभारोहणप्रवचनसंधिसंसर्पणमहानद्यर्णवप्रतरणमहासाहसाविरुद्धानि वर्जयेदिति। चैत्यं चिता चयनस्थानं वा। प्रवचनम् अध्यापनम्। संधिसंसर्पणं भित्तिविवरेण गमनम्।

आपस्तम्बः,

स्त्रीभिर्यावदर्थभाषी मृदुः शान्तो दान्तो ह्रीमान् दृढधृतिरिति।

विष्णुः, कृतलवणं ब्रह्मचारी वर्जयेदिति। कृतलवणं कृत्रिमं लवणम्। ऊषरभूमिजमिति यावत्।

मनुरपि,

नैनं सूर्योऽभिनिम्लोचेत्सूर्यो नाभ्युदियात्क्वचित्।
सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः॥
प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा।
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखान्वितः॥ इति।

मुण्डः शिखाविहीनः। मुण्डः शिखी वेति गौतमस्मरणात्।

कात्यायनोऽपि,

सशिखं वपनं कार्यमास्नानाद्ब्रह्मचारिणः।
आशरीरविमोक्षात्तु ब्रह्मचर्यं चरेद्द्विजः॥ इति।

एतत् छन्दोगाभिप्रायम्।

तथाच विष्णुपुराणम्,

एते छूनशिखास्तत्र दशनैराचिरोद्गतैः।
कुशकाशा विराजन्ते बटवः सामगा इव॥ इति।

यमः,

खट्वासनं च शयनं वर्जयेद्दन्तधावनम्।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित्॥

मनुरपि,

एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित्।
कामाद्यः स्कन्दयेद्रेतो हिनस्ति व्रतमात्मनः॥

व्रतं ब्रह्मचर्यम्। अकामतो रेतःस्कन्दने प्रायश्चित्तमाह मनुः,

स्वप्नेऽपि विसृजेद्ब्रह्मचारी शुक्रमकामतः।

स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् । इति ।

कामतस्त्ववकीर्णिव्रतम् । इत्युपनीतधर्माः ॥

## अथोपाकरणम् ।

तत्र याज्ञवल्क्यः,

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।

हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥ इति ।

अधीयन्तइति अध्यायाः वेदास्तेषामुपाकर्म प्रारम्भः, स च श्रावण्यां पौर्णमास्यां श्रवणे हस्ते वा कार्यः । तत्रेयं व्यवस्था । ऋग्वेदिनां श्रवणे, बह्वृचाः श्रवणे कुर्युरिति परिशिष्टात् । तस्य दिनद्वयव्याप्तौ परदिनएव ग्राह्यम् ।

तपो हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे ।

धनिष्ठामिश्रिते कार्यमुपाकरणसंज्ञकम् ॥

इति निगमात् । यजुर्वेदिनां तु श्रवणयुक्तायां श्रावणपौर्णमास्याम् । अथातोऽध्यायोपाकर्म श्रवणेन श्रावण्यां पौर्णमास्यामिति कात्यायनस्मरणात् । श्रवणेन, युक्तायामिति शेषः । तदभावे केवलपौर्णमास्यामिति ।

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्णएव तु ।

इति प्रचेतःस्मरणात् । दिनद्वयेऽपि पूर्वाह्णव्यापित्वे अव्यापित्वे वा तैत्तिरीयैः परेद्युः कार्या ।

पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।

इति विशिष्य तैत्तिरीयकोपादानात् । इतरैर्याजुषैः पूर्वेद्युरेव कार्या ।

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।

पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति सामान्यवाक्यात् । सामगानां तु हस्ते उपाकर्म ।

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम् ॥
शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम् ।

इति गर्गस्मरणात् । तस्य दिनद्वयव्याप्तौ परदिनएव ग्राह्यम् ।

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रर्क्षसमन्वितम् ।
श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

इति परिशिष्टात् । त्वाष्ट्रं चित्रा । पर्वश्रवणहस्तेषु ग्रहणसंक्रमदुष्टेषु उपाकर्म न कार्यम् ।

उपाकर्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥

इति निषेधात् । किं तु तदा श्रावणमासस्यैव हस्तान्विता पञ्चमी केवला वा पञ्चमी हस्तान्विताऽन्या वा तिथिर्ग्राह्या ।

हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ।

इति योगिवाक्ये सर्वशाखासाधारण्येन हस्तेन युक्तेऽहनि पञ्चम्यां वेति व्याख्यानात् । सोऽयं विकल्पो यजुर्वेदिषु वाजसनेयिनामेव ।

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥

इति स्मृतिमहार्णवात् । तैत्तिरीयाणां तु न श्रावणपञ्चम्यनुकल्पः, किं तु भाद्रपदी पौर्णमासी । अथातः स्वाध्यायोपाकर्म श्रावण्यां प्रौष्ठपद्यां वेति विकल्पाभिधायकवासिष्ठवाक्यात् । तैत्तिरीयपरत्वेऽपि पञ्चम्यां वाजसनेयिग्रहणमनर्थकं स्यात् । बौधायनानां तु आषाढी पौर्णमास्यनुकल्पः । श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य छन्दांस्य-

धीयीतेति बौधायनस्मरणात् । सर्वेषामपि स्वगृह्योक्ताः काला अनुकल्पत्वेन व्यवस्थिता ज्ञेयाः । श्रावणे ओषधिप्रादुर्भावाभावे भाद्रपदे श्रुतिपर्वहस्ताः क्रमेण ऋग्यजुःसामशाखिभिर्ग्राह्याः ।

अदृष्टयौषधयस्तस्मिन् मासे तु न भवन्ति चेत् ।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते ॥

इति बह्वृचपरिशिष्टात् । श्रवणः पर्वादीनामुपलक्षणम् ।

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान् ॥

इति मानवात् । अत्रापिशब्देन भाद्रपदीयहस्तपञ्चम्योरुपादानम् । प्रौष्ठपदीं हस्तेनोपाकरणमिति गोभिलीयात् । मलमासे तूपाकर्म न कार्यम् । किं तु शुद्धे ।

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥

इति कात्यायनस्मरणात् । छन्दोगानां तु मलमासएव न शुद्धे ।

दशहरासु नोत्कर्षश्चतुर्थ्यापि युगादिषु ।
उपाकर्ममहाषष्ठ्यौ ह्येतादिष्टं वृषादितः ॥

इति ऋष्यशृङ्गस्मरणात् । यद्यप्यत्र छन्दोगपदं न श्रूयते तथापि "सिंहे रवौ छन्दोगाः कुर्युरिति" गार्ग्यवाक्ये तेषां सिंहार्कनियमेनानुत्कर्षस्य छन्दोगविषयत्वसंभवात् । उपाकर्मानन्तरं पक्षद्वयेऽपि वेदमभ्यसेत् ।

युक्तश्छन्दास्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान् ।
इति मानवात् ।
अथ तत्तच्छाखीयाविशेषनिरूपणाय तत्तत्सूत्राण्युदाह्रियन्ते॥

तत्राश्वलायनसूत्रम्,

अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वेति ।

अथशब्दो मङ्गलार्थः । उपाकरणं प्रारम्भः । अत इति । यतो ब्रह्मयज्ञो नित्यः स चोपाकरणं विना नेत्यर्थः । ओषधीनां प्रादुर्भावे । वर्षर्त्तौ यः श्रवणस्तेन युक्ते काले । न तु ओषधिप्रादुर्भाव एव स्वतन्त्रः कालः । वाशब्दस्याभावेन विकल्पस्याप्रामाणिकत्वात् । श्रावणस्य पञ्चम्यां हस्तेन वेति । श्रावणस्य पञ्चमी यदा हस्तेन युक्तेत्यर्थः ।

अथातः श्रावणे मासे श्रवणर्क्षयुते दिने ।
श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते ॥
दिवसे विदधीतैतदुपाकर्म यथोदितम् ।
अध्यायोपाकृतिं कुर्यात्तत्रोपासनवह्निना ॥ इति
स्मृत्यन्तरात् ।

अथ सांख्यायनसूत्रम् । अथोपाकरणम् । अथशब्दो मङ्गलार्थः । उपाकरणं वक्ष्यमाणं कर्म,उच्यतइति शेषः । ओषधीनां प्रादुर्भावे । ओषधीनां व्रीह्यादीनां प्रादुर्भावे वर्षासु । हस्तेन श्रवणेन वा । हस्तश्रवणाभ्यामन्यतमेन युक्ते काले कुर्यादुपाकरणम् । तस्मात्षट्कर्मनित्येन ब्राह्मणेनाध्ययनाध्यापनयजनयाजनदानप्रतिग्रहप्रधानेन दृष्टादृष्टार्थानां कर्मणां सिद्धिमिच्छतोपाकर्म कर्त्तव्यमिति ।

अथापस्तम्बीयं सूत्रम् । श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत ।

मेषादिस्थे सवितरि योयो दर्शः प्रवर्त्तते ।
चान्द्रमासास्तदन्ताश्चैत्राद्या द्वादश स्मृताः ॥

तेषु याया पौर्णमासी सासा चैत्र्यादिका स्मृता ।

कादाचित्केन योगेन नक्षत्रस्येति निर्णयः ॥

तदेवं सिंहस्थे सवितरि याऽमावास्या तदन्ते चान्द्रमसे मासे या मध्यवार्त्तिनी पौर्णमासी सा श्रावणी । श्रवणयोगस्तु भवतु वा मा भूत् । तस्यां श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य गृह्योक्तेन विधिना उपाकर्म कृत्वा स्वाध्यायमधीयीत । अधीयानश्च मासमेकं प्रदोषे प्रथमे रात्रिभागे नाधीयीत ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात् । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोष इति ।

अथ हिरण्यकेशिसूत्रम्।अथोपाकरणोत्सर्जनं व्याख्यास्यामः। अथानन्तरम्।अभ्यर्हितत्वादुपाकरणस्य पूर्वनिपातः। किमर्थं युगपत्प्रतिज्ञातं क्रियते श्रावणपक्षे तैषीपक्षस्येति पृथग्वचनादेव सिद्धे। उभयोस्संयुक्तत्वख्यापनार्थम्।तेनासम्भवात् अकृतउपाकरणे उत्सर्गस्याप्यभावः।पारायणे चोत्सर्गस्य भावादुपाकरणमपि स्यात्। केचिदपूर्वाध्ययनार्थे उपाकरणोत्सर्जने मन्यन्ते।तेषां गृहीतस्यापि स्मरणार्थेऽभ्यासे न स्यातामुपाकरणोत्सर्जने । तत्र काण्डं प्रथममुपाकृत्याध्ययनमुपाकुर्यात् । असमाप्ते काण्डे उत्सर्गकाले आगते उत्सृज्याध्यायं विरम्य पुनरुपाकृत्याध्यायं काण्डं वा यथाकालमधीत्योत्सृज्य विरन्तव्यम् । अर्थात् प्रथमउपाकरणे अध्यायमुपाकृत्य काण्डमुपाकर्त्तव्यम्।श्रावणीपक्षओषधीषु जातासु हस्तेन पौर्णमास्यां वाऽध्यायोपाकर्म।श्रावण्याः पौर्णमास्याः पक्षः श्रावणपूर्वपक्ष इत्यर्थः । तस्मिन् वृष्टे देवे जातास्वोषधीषु हस्तेन पौर्णमास्यां वा श्रावण्यामध्यायोपाकर्म भवति । यत्राध्यायः क्रियते आरभ्यते तदध्यायोपाकर्म । जातास्वोषधीष्विति सन्दिग्धे

काले लिङ्गेन निर्णयः। अथवा जातास्वेवोत्कृष्यावकृष्य वा प्रौष्ठपदे वाऽऽषाढे वा मासि क्रियार्थमिति ।

अथ पारस्करसूत्रम् । अथातोऽध्यायोपाकर्म । तच्चाग्निमतोऽध्यापनप्रवृत्तस्य । उपाकरणस्यावसथ्याग्निसाध्यत्वान्निरग्नेर्नाधिकारः ।

उपाकर्मणि आचार्यस्याग्नौ
शिष्यकर्तृका समिदाहुतिर्यस्मात् ।
तेनाध्यापयतोऽपि निरग्नेः
साग्नेरप्यनध्यापयतो नाधिकारः ॥

यत्तु लौकिकेऽग्नौ तदनुष्ठानं तत्राचारमात्रमेव मूलम् । ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां श्रवणयुक्तायां श्रावणशुक्लपञ्चदश्याम् ओषधिप्रादुर्भावे । अत्र पौर्णमास्याः प्राधान्याच्छ्रवणाभावेऽपि तस्यां तद्भवति । श्रावणस्य पञ्चमीं हस्तेन वा । श्रावणपञ्चमीं हस्तयुक्तां वा पञ्चमीं, प्राप्येति । तेन कालद्वयम् । अन्ये तु कालचतुष्टयमाहुरिति ।

अथ मैत्रसूत्रम् । वर्षासु श्रवणेन स्वाध्यायानुपाकुरुते । वर्षाग्रहणं भाद्रपदे श्रवणेन यथा स्यादित्येवमर्थम् । तेन प्रथमातिक्रमे कारणाभावाच्छ्रावण्यामेव युक्तम् । यत्र तु प्रथमे श्रवणे अनध्यायनिमित्तं विद्युदादि भवति तदा भाद्रपदे श्रवणेनैव कुर्यात् । प्रकरणात्स्नातकोऽध्यापयिष्यन्निति गम्यते । अन्तेवासिभिर्योगमिच्छन्निति लिङ्गाच्च । प्रथमाध्ययने चैतत् अन्वारम्भणीयेष्टिवत् । न जपे अभ्यासार्थं वा, अतिप्रसङ्गात् । उपाकृतिरपूर्वाध्ययनार्था ब्रह्मयज्ञार्था चेत्यपरे । अन्यस्तु ब्रह्मयज्ञार्थत्वं न युक्तं, विशिष्टनक्षत्रकालश्रवणात् । अत एव प्रत्यध्ययनं न कार्यं किं तु संवत्सरेसंवत्सरे कर्त्तव्यम् । ज्योतिष्टोमवत् ।

शालाग्निकरणात्प्राक् जन्माग्नौ निर्मन्थ्ये वा जन्माग्न्यभावात् । अन्यस्तु जन्माग्नावेव । तस्य नित्यत्वात् । स एव निर्मन्थ्य उच्यते । अरणिभ्यां मन्थनविधानाज्जातकर्मादौ । अर्धपञ्चमा-न्मासानधीत्योत्सृजते । अर्धपञ्चमाः अर्धं पञ्चमस्य येषां मासानां ते अर्धपञ्चमाः । अधीत्य, ब्रह्मचारी । इतरथा अध्याप्येति ब्रूयात् । उत्सृजते कतिचिद्दिवसान्नाधीयीत इत्यर्थः । न पुनः स्वाध्यायमुत्सृजेत् । उत्तरत्राध्ययनविधानात् । अन्यस्तु उत्सर्ग-संज्ञं कर्म करोति । तदुपरिष्टाद्वक्ष्यामि ।

तथा च स्मृत्यन्तरं,

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।

जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ इति ।

ततोऽर्थाद् गृहे उपाकर्मेति ।

अथ खादिरसूत्रम् । प्रौष्ठपदीं हस्तेनाध्यायानुपाकुर्युरिति । प्रौष्ठपदे मासे हस्तेन युक्ते काले अध्यायान्वेदभागान् तदङ्गानि च । आङ् मर्यादार्थे । उपविष्टाः संहता आचार्यः शिष्याश्च नोपन-यादिवत्प्रत्येकम् । उपाकुर्युरधीयीरन् । इति वक्ष्यमाणेन प्रका-रेण । प्रौष्ठपदीमिति सप्तम्यर्थे द्वितीया । पूर्वस्मिन् हस्तइति । यद्येकस्मिन्मासि हस्तद्वयसंभवस्तदा पूर्वस्मिन्हस्ते कुर्यात्, न तत्र पूर्वाह्णनियम इत्यर्थः। श्रावणीमित्येकइति । श्रावण्यां पौर्णमा-स्यामित्यर्थः ।

गोभिलसूत्रम् । प्रौष्ठपदीं हस्तेनोपाकरणम् । गोदनव्रतान्ते वेदपर्वणाम् अध्ययने प्राप्ते वेदारम्भस्य कालान्तरविधानार्थमिद-माह । प्रौष्ठपदो भाद्रपदः तस्य या पौर्णमासी सा प्रौष्ठपदी तां प्रति हस्तेन हस्तनक्षत्रेण उपाकरणम् अधीतस्य ग्रन्थस्योपादानं, कर्त्तव्यमिति शेषः । ननु प्रौष्ठपदे हस्तेनेति सप्तम्यां प्राप्तायां

कस्माद्द्वितीया क्रियते । उच्यते । प्रौष्ठपदीशब्दादनन्तरं प्रतिशब्दाध्याहारार्थं प्रौष्ठपदीं हस्तेनोति । प्रौष्ठपदीं प्राति प्रतिप्रौष्ठपदीमिति । तेन उत्सृष्टस्य छन्दसो भाद्रपदशुक्लपक्षे हस्तेन प्रतिवर्षमनेन वक्ष्यमाणेनोपाकरणं कर्त्तव्यमिति । कथं पुनर्गम्यते यत्प्रतिशब्दमध्याहृत्य प्रतिवर्षमुपाकरणम् । उच्यते । एवं हि श्रूयते आचार्याणामध्यापयतां शिष्याणां चावर्त्तयताम् अज्ञानकृतः प्रामादिको यो दोषस्तेन छन्दसां यातयामत्वं भवति । यातयामैः छन्दोभिः श्रौतस्मार्त्तकर्मकारिणः समग्रफलभाजो न भवन्ति । तत्र यदेतदुपाकर्मोत्सर्जनलक्षणं कर्म तेन पुनः छन्दसामयातयामत्वं जन्यते । तस्मादावृत्त्यर्थं प्रतिशब्दोऽध्याहृत इति । उक्तं च,

अस्थानोच्छ्वासविच्छेदात् घोषणाध्यापनादिकम् ।
प्रामादिकं श्रुतौ यत्स्याद्यातयामत्वकारि तत् ॥
प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम् ॥ इति ।

अथ कौशिकाथर्वणसूत्रम् । अथ वेदस्याध्ययनविधिं व्याख्यास्यामः श्रावण्यां प्रौष्ठपद्यां वोपाकृत्यार्द्धपञ्चमान्मासानधीयीरन्निति ।

## अथ वेदाध्ययनम् ।

तत्र श्रुतिः, स्वाध्यायोऽध्येतव्य इति । अस्यार्थः । अधीयतइत्यध्यायो वेदः । स्वस्याध्यायः स्वाध्यायः । स्वपरम्परागता शाखेत्यर्थः । ततश्च न यत्किञ्चिच्छाखाध्ययने विधिचारितार्थ्यं

किं तु स्वशाखाध्ययनएव ।

उक्तं च भट्टपादैः,

पारम्पर्यागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम् ।
शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे ॥

वसिष्ठोऽप्येतमर्थमाह,

परम्परागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ इति ।

परिबृंहणान्यङ्गानि । अत्र येषां यो वेदः पारम्पर्यागत इति यच्छब्दाध्याहारेण व्याख्येयम् । अन्यथा तच्छब्दानुपपत्तेः । वेदोऽत्रैका शाखा न शाखासमूहः । यत्तु

तपोविशेषैर्विविधैः व्रतैश्च विधिनोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना ॥

इति मनुना कृत्स्न इति वेदविशेषणमुपात्तं तदपि वेदशब्दस्य शाखापरत्वेन तस्या एव कृत्स्नत्वमभिधत्ते, नैकवेदीयानेकशाखासमूहमिति न विरोधः । ततश्च यस्य या पित्रादिक्रमागता शाखा तच्छाखीयेन कर्मणा संस्कृतः प्रथमं तां शाखामधीयीतेत्यर्थः ।

तथाच वसिष्ठः,

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ।
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ॥

परेषां स्ववेदातिरिक्तानां वेदानां शाखा परशाखा तां पठेत् । ततश्च स्वशाखाध्ययनानन्तरं वेदत्रयेऽप्येकैकामेव शाखां पठेदित्यर्थः सिध्यति ।

तथा च मनुः,

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । इति ।

त्रयीसाध्यज्योतिष्टोमादिकर्मानुष्ठानार्थम् ऋग्यजुःसामवेदा-

नु, प्राक्सौमिकहविर्यज्ञमात्रानुष्ठानार्थम् ऋग्यजुर्वेदौ, पाकयज्ञमात्रानुष्ठानार्थं स्वशाखामात्रं पठेदित्यर्थः। वेदान्तरीयाऽपि पूर्वपरिगृहीतैव शाखाऽध्येतव्या। पूर्वपरिग्रहसामर्थ्यात्। न या काचित्।

तथाच भरद्वाजसूत्रं "यजनीयकल्पपरिग्रहे पूर्वपरिग्रहः प्रमाणम्, तत्त्यागे दोषः, तदज्ञाने स्वेच्छया परिग्रह" इति।

कल्पकारिकायामपि,

स्वेन पित्रादिभिर्वापि यः कल्पादिः पुराऽऽहृतः।
स तु नैव परित्याज्य इति वेदानुशासनम्॥

स्वशाखां परित्यज्य शाखान्तराध्ययने दोषमाह
वसिष्ठः,

एकवेदेऽपि शाखानां मध्ये योऽन्यतमां श्रयेत्।
स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते॥
यः स्वशाखां परित्यज्य पारक्यामधिगच्छति।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः॥
आत्मशाखां परित्यज्य परशाखासु वर्त्तते।
उच्छेत्ता तस्य वंशस्य रौरवं नरकं व्रजेत्॥
स्वीया शाखोज्झिता येन ब्रह्मतेजोऽर्थिना परम्।
ब्रह्मघ्नैव स विज्ञेयः सर्वकर्मसु गर्हितः॥

शाखान्तरीयकर्मकरणे दोषमाह स एव,

न जातु परशाखोक्तं बुधः कर्म समाचरेत्।
आचरन् परशाखोक्तं शाखारण्डः प्रकीर्तितः॥
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति॥ इति।

कात्यायनोऽपि,

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।

कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥ इति ।

लौगाक्षिरपि,

यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।

स शूद्रवद् बहिष्कार्यो हव्यकव्येषु दातृभिः ॥ इति ।

स्वशाखानुक्तमप्यविरुद्धं परशाखोक्तं ग्राह्यम् ।

तथाच कात्यायनः,

यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च ।

विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति ।

वेदश्चात्र साङ्गोऽध्येतव्यो न वेदमात्रं,तैर्विना तदर्थज्ञानानिष्पत्तेः।

तथाच श्रुतिः, ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति । ब्राह्मणेनेति त्रैवर्णिकोपलक्षणार्थम् । निष्कारण इत्यन्धत्वादिना कर्मानधिकारेऽप्यध्ययनावश्यकताबोधनाय । अङ्गानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिश्चेति षट् । ज्ञेय इत्यध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वपरिहारेणार्थज्ञानपर्यवसायित्वावगमाय ।

गौतमोऽपि, मन्त्रब्राह्मणयोर्वेदः षडङ्गमेकइति । येषां मते साङ्गस्य वेदत्वं तेषां वेदाध्ययनविधिनैव तदध्ययनं सिध्यतीति न पृथक् तदध्ययनविध्यपेक्षा । येषां मन्त्रब्राह्मणयोरेव वेदत्वं तेषामङ्गाध्ययनविधिः पृथगपेक्षितः । अध्ययनविधेश्चार्थज्ञानपर्यवसायित्वं नाक्षरग्रहणमात्रफलकत्वमित्याह

पराशरः,

ज्ञातव्यः सर्वदैवार्थो वेदानां कर्मसिद्धये ।

पाठमात्रमधीते यः पङ्के गौरिव सीदति ॥

वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैवहि ।

अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥

पाठमात्ररतान्नित्यं द्विजांश्चार्थविवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥ इति ।
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ इति ।

व्यासः,
नान्यतो ज्ञायते धर्मो वेदादेवैष निबभौ ।
तस्मात्सर्वप्रयत्नेन यज्ञार्थे वेदमाश्रयेत् ॥ इति ।

लघुव्यासः,
न वेदपाठमात्रेण सन्तोषं कारयेद्द्विजः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारहारी न तस्य लभते फलम् ।
द्विजस्तथाऽर्थानभिज्ञो न वेदफलमश्नुते ॥

दक्षः,
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव विप्रेभ्यो वेदाभ्यासो हि पञ्चधा ॥
विचारो वेदार्थविचारः ।

लघुव्यासः,
श्रुतहीनमधीतं यत्नेह नामुत्र तद्भवेत् ।
श्रुतं तु केवलमपि संसारान्ताय कल्पते ॥
किं पुनः समुच्चितमिति भावः ।

यदाह व्यास एव,
ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कथितं यथा ।
अधीतं श्रुतसंयुक्तं तथा श्रेष्ठतरं भवेत् ॥
समुच्चितं स्तोकमपि श्रुतोपात्तं विशिष्यते ।
चतुर्णामपि वेदानां केवलाध्ययनादिति ॥

अध्ययनीयानि शास्त्राण्याह

मनुः,

बुद्धिवृद्धिकराण्याशु धन्याणि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥

पुराणेऽपि,

धर्मशास्त्रं तु विज्ञेयं शब्दशास्त्रं तथैवच ।
पुराणानीतिहासांश्च तथाऽऽख्यानानि यानि च ।
महत्मतां च चरितं श्रोतव्यं नित्यमेव च ॥ इति ।

अथ वेदप्रशंसा ।

तत्र मनुः,

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥

याज्ञवल्क्योऽपि,

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥

मनुः,

वेदमेव सदाऽभ्यस्येत्तपस्तप्यन्द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥
आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ इति ।

यः धृतमाल्योऽपि सन् निरन्तरं स्वाध्यायमधीते स आनखाग्रमुत्कृष्टं तपः करोतीत्यर्थः । हेति प्रसिद्धौ । स्रग्ग्रहणं नियमातिक्रमप्रदर्शनार्थम् । ततश्च नियमातिक्रमेणापि कृतमध्ययनमुत्कृष्टफलं भवति किं पुनर्नियमवदिति भावः ।

मनुः,

ऋषिदेवमनुष्याणां वेदश्चक्षुः सनातनः । इति ।

स्मृतिसारसमुच्चये,

वेदो यस्य शरीरस्थो न स पापेन लिप्यते ।
वेदात्मा स तु विज्ञेयः शरीरं किंप्रयोजनम् ॥
वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्त्तितानि न संशयः ॥

अथ वेदार्थज्ञानफलम् ।

तत्र मनुः,

वेदशास्त्रार्थतत्त्वज्ञो यत्रयत्राश्रमे वसेत् ।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥

हारीतोऽपि,

मन्त्रार्थज्ञो जपन् जुह्वत् तथैवाध्यापयन् द्विजः ।
स्वर्गलोकमवाप्नोति नरकं तु विपर्यये ॥

निरुक्तमपि, योऽर्थज्ञ इत्सकलं धर्ममश्नुते नाकमेति ज्ञानविधूतपाप्मेति । वेदानध्ययने प्रत्यवायमाह

मनुः,

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ।

अनेन नित्यकर्मविध्याक्षिप्तेऽप्यध्ययननित्यत्वे शाब्दीयनित्यताऽभिहिता । ततश्चानध्ययने पृथक्प्रत्यवायः सिध्यति । पृथक्प्रायश्चित्तोपदेशात् ।

वसिष्ठः,

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥

मनुरपि,

यथा षण्डोऽफलः स्त्रीषु यथा गौर्गवि चाफलः ।
यथा चाऽज्ञे ऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥
व्यासः,
तथा वेदविहीनस्य क्रियाः सर्वास्तु निष्फलाः । इति ।

वसिष्ठोऽपि,
नानृचो ब्राह्मणो भवति नावर्णो न कृषीवलः ।
न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥

सारसमुच्चयेऽपि,
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥
अनधीत्य द्विजो यस्तु शास्त्राणि च बहून्यपि ।
शृणोति ब्राह्मणो नाशे नरकाणि प्रपद्यते ॥
नाधीतवेदो यो विप्र आचारेभ्यः प्रवर्त्तते ।
नाचारफलमाप्नोति यथा शूद्रस्तथैव सः ॥
अनधीतस्य विप्रस्य पुत्रो वाऽध्ययनान्वितः ।
शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते ॥
अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ इति ।

याज्ञवल्क्योऽपि,
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥

शङ्खः,
न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्य इति ।

तेनोपनयनानन्तरं वेदाध्ययनोपक्रमात्प्राक् स्मृत्यध्ययनमुक्तं भवति।

हारीतः,

वेदो विद्या ब्राह्मणस्य तत्परिज्ञानार्थमङ्गानीति । तत्परिज्ञानं वेदपरिज्ञानम् । वेदज्ञानफलमाह

व्यासः,

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥

मनुः,

तपो विद्याऽपि विप्रस्य निःश्रेयसकरं परम् ।
तपसो कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥
विद्या वित्तं तपश्चेति त्रीणि तेजांसि देहिनः ।
इह चामुत्र च श्रेयस्तदेव प्रतिपादयेत् ॥
विद्यया विमलं ज्योतिर्वित्तत्यागात्सुखोदयम् ।
तपसा विमलां भूतिं प्राप्नुयान्मानवस्त्रिभिः ॥ इति ।

## अथाध्यापकनिरूपणम् ।

तत्र मनुः,

अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः ।
प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः ॥
स्मृत्यधिकारेऽपि स एव,
निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्य चित् ॥
विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचित् ॥ इति ।
विद्यास्थानान्यनुक्रम्याह

शङ्खोऽपि, एतानि ब्राह्मणोऽधिकुरुते स च दर्शयतीतरे-

षामिति ।

पालकाप्यसंहितायामपि,

ब्राह्मणस्त्वथ वर्णांस्त्रीनध्यापयितुमर्हति ।
द्वौ क्षत्रियस्तथा वैश्य एकमध्यापयेत्सदा ॥
गुणवत्स्वपि शूद्रेषु मा बुधं कर्त्तुमर्हसि ।
एषा ह्यनुपमा विद्या वेदवेदाङ्गसंमिता ॥
विद्यां नानुपसन्नाय कथयेन्न ह्यसाधवे ।
अश्रद्दधाना ये च स्युर्नास्तिका येऽभ्यसूयकाः ॥
तेषां विद्यां न कथयेद्ये च विद्याविमानिनः ।
आचार्यस्त्वेव कथयेद्विज्ञानकुशलेष्वपि ॥
नापुत्राय प्रदातव्या नाशिष्यायाहिताय च । इति ।
बुधं व्याख्यातारम् ।
शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम् ।
शूद्राज्ज्ञानागमश्चैव ज्वलन्तमपि पातयेत् ॥

इति पराशरेण शूद्रादध्ययनस्य पर्युदस्तत्वात् । एवं ज्योतिष-वैद्यकादिसंहितास्वप्युदाहार्य्यम् । एतदनापत्कालविषयम् । आपत्काले तु क्षत्रियादेरप्यध्ययनविधानात् ।

तथाच मनुः,

अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या तु शुश्रूषा यावदध्ययनं गुरोः ॥ इति ।

गौतमोपि, आपत्कालेऽब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा समाप्ते ब्राह्मणो गुरुरिति । अनुगमनं च यावदध्ययनम् । अनुगमनग्रहणाच्छुश्रूषान्तरनिवृत्तिः । विद्या रत्नादेरप्युपलक्षणम् ।

तथाच देवलः,

रत्नं नाम स्त्रियो विद्या धर्मः शौचं सुभाषितम् ।
विविधानि च शिल्पानि समादेयानि सर्वशः ॥

**मनुरपि,**

श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ इति ।

अथाध्यापकधर्माः ।

**तत्र यमः,**

सततं प्रातरुत्थाय दन्तधावनपूर्वकम् ।
स्नात्वा हुत्वाऽथ शिष्येभ्यः कुर्यादध्यापनं नरः ॥

**आपस्तम्बोऽपि,** शयनाचाध्यापनं वर्जयेत् नच तस्यां शय्यायामध्यापयेत् यस्यां शयीतेति ।

**मनुः,**

अध्येष्यमाणं तु गुरुर्नित्यं कालमुपस्थितम् ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥

शिष्यशिक्षाप्रकारमाह **गौतमः,** शिष्यशिष्टिरवधेन अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्य इति ।

**मनुरपि,**

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥ इति ।

**ताडनस्थानमाह मनुः,**

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन ।
अतोऽन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्बिषम् ॥

**कूर्मपुराणे,**

एवमाचारसंपन्नमात्मवन्तं सदाऽन्तिकम् ।
वेदमध्यापयेद्धर्मं पुराणाङ्गानि नित्यशः ॥
शुश्रूषोरनध्यापने दोष उक्तस्तत्रैव,
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् ।
हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥ इति ।

**वसिष्ठोऽपि,**
यो विद्यार्थिने न संप्रदद्यात्स कर्महा स्यादिति ।

**लघुव्यासः,**
वेदविप्लावनात्तेन वरं मौनं समाश्रितम् ।
वेदविप्लावनाद्विप्रो नरकं यात्यधोमुखम् ॥
वेदविप्लावनलक्षणमाह यमः,
योऽर्थार्थी मां द्विजो दद्यात्पठेच्चैवाविधानतः ।
अनध्याये च तत्माहुर्वेदविप्लावनं बुधाः ॥ इति ।

**मनुः,**
धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वक्तव्या उप्तं बीजमिवोषरे ॥

**यमोऽपि,**
धर्मार्थौ यत्र न स्यातां शुश्रूषा वा धनागमः ।
विद्यया सह मर्त्तव्यं न विद्यामूषरे वपेत् ।

**श्रुतिरपि,**
विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवे अयताय
न मां ब्रूयात् अवीर्यवती तथा स्याम् ।
यमेव विद्याशुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम् ।

यस्ते न द्रुह्येत्कतमच्च नाहं
तस्मै मां ब्रूया निधिपाय ब्रह्मन् ॥ इति ।
विष्णुः, नापरीक्षितं याजयेन्नाध्यापयेन्नोपनयेदिति ।
मनुः,
अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ॥ इति ।
**अथ विद्यादानप्रशंसा ।**
तत्र यमः,
दशानां तु सहस्राणां युक्तानां धुर्यवाहिनाम् ।
सुपात्रे विनियुक्तानां कन्या विद्या च तत्समम् ॥ इति ।
बृहस्पतिरपि,
सहस्रसंमिता धेनुरनड्वान्दश धेनवः ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं तु तत्समम् ।
भूमिदानात्परं नास्ति विद्यादानं ततोऽधिकम् ॥
मनुरपि,
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
वार्यन्नगोमहीवासास्तिलकाञ्चनसर्पिषाम् ॥
याज्ञवल्क्योऽपि,
सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥
संवर्तोऽपि,
विद्यादानेन सुमतिर्ब्रह्मलोके महीयते । इति ।
**अथाध्येतृनिरूपणम् ।**
तत्र लघुव्यासः,

संस्कारवद्भिः कर्त्तव्यं वेदस्याध्ययनं द्विजैः ।
शुद्धस्य फलवत्तत्स्यादन्यथा निष्फलं स्मृतम् ॥ इति ।
द्विजैस्त्रैवर्णिकैः तदनुलोमजैश्च । तन्नियममाह

स एव,

मेखलाऽजिनदण्डानां धारणं ब्रह्मचारिभिः ।
वेदः कृत्स्नोऽधिगन्तव्यः सर्वज्ञाने द्विजातिभिः ॥
भिक्षाऽशिभिर्गुरोर्नित्यं शुश्रूषायां रतैः सदा ।
आसमाप्तेर्व्रतं कार्यं वेदस्य विधिवद् द्विजैः ॥ इति ।

धारणं, कृत्वेति शेषः । सर्वज्ञाने इति निमित्तसप्तमी । तत्तश्च सर्वज्ञाननिमित्तमित्यर्थः सिध्यति ।

अथाध्येतृधर्म्माः ।

तत्र याज्ञवल्क्यः,

कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ इति ।

मनुरपि,

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुरध्याप्या दश धर्मतः ॥

अथ वेदादिविद्यारम्भकालः ।

विद्याश्चाह वसिष्ठः,

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एवच ।
अर्थशास्त्रमिति ह्येता उपविद्याः प्रकीर्त्तिताः ॥ इति ।

तत्र सर्वसाधारणमुत्तरायणम् । तथाच

ज्योतिर्निबन्धे,

र्माथस्मरगाः शुभा उपचये पापग्रहाः शोभनाः
ग्नं चास्थिरमुत्तरायणमथो नास्तं गतो बोधनः । इति ।
पक्षौ मुहूर्त्तसङ्ग्रहे,
त्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ।
र्वपक्षः शुभः प्रोक्तः कृष्णेचान्त्यत्रिकं विना ॥ इति ।

अथ तिथयः ।

मार्कण्डेयः,
ष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीम् ।
रिक्तां पञ्चदशीं चैव सौरिभौमदिनं तथा ॥ इति ।
संहः,
रिक्तां षष्ठीं प्रतिपदं पर्वाष्टम्यौ च वर्जयेत् ।
अथ वाराः । तत्र वसिष्ठः,
दिवसांशोदया वर्ज्या यत्नेन कुजसौरयोः ।
श्रेष्ठाः सितज्ञजीवानां मध्यमाश्चन्द्रसूर्ययोः ॥ इति ।
अथ नक्षत्राणि । तत्र महेश्वरः,
हस्तादित्रितये तथा निर्ऋतिभे पूर्वान्त्यभेष्वश्विभे
मित्रर्क्षेच मृगादिपञ्चसु शुभः प्रारम्भ आद्यैः स्मृतः ।
विद्यानां हरिभत्रये च दिवसे सूरेर्भृगोर्वा विदो
ऽनध्यायाख्यतदाद्यवर्जिततिथौ केन्द्रस्थितैस्सद्ग्रहैः ॥ इति ।
जमार्त्तण्डोऽपि,
पूर्वात्रये मूलमृगादिपञ्चके
तथाऽश्विनीषु त्रितये च हस्तात् ।
सविष्णुधिष्ण्येष्वपि सर्वविद्या-
प्रारम्भ इष्टः शुभवासरेषु ॥ इति ।
अथ श्रुतिस्मृत्यारम्भासाधारणनक्षत्राणि । तत्र

वसिष्ठः,

हस्ताश्वयुक्श्रवणतिष्यसमीरमित्रं
चित्रादितित्रिपुराजिद्वसुवारुणेषु ।
हस्तोत्तराकमलसम्भवपौष्णभेषु
श्रुत्याः स्मृतेः प्रथममारभणं द्विजानाम् ॥
धर्मशास्त्रेषु विश्वाद्यं त्रितयं पौष्णमेवच ।
अष्टमस्था ग्रहाः सर्वे सर्वविद्यासु वर्जिताः ॥ इति ।
अथ षडङ्गसाधारणानि नक्षत्राणि ।
ज्योतिषाद्यङ्गशास्त्राणां स्वाती हस्तपुनर्वसू ।
पौष्णं तिष्योऽश्विनीमूलवारुणाः स्युः सुपूजिताः ॥

अथ ज्योतिःशास्त्रे,

मूलेज्यवरुणादित्यरेवतीहस्तवारिणी ।
अश्विनी ज्योतिषां शास्त्रे प्रशस्तास्तारका इमाः ॥
अथ गणितविद्यायां राजमार्त्तण्डे,
अधोमुखान्त्यहस्तार्द्राश्राविष्ठामित्रपुष्यभम्,
सौम्येज्यभृगुवर्गाः स्युर्गणितेषु शुभप्रदाः ॥

अथ शब्दशास्त्रे,

अश्विनी रोहिणी सौम्यं पुष्यो हस्तादिपञ्चकम् ।
अदितिर्दश ताराः स्युः शब्दशास्त्रे सुपूजिताः ॥
दीर्घशुद्धिकरं पौष्णप्राजापत्योत्तरात्रयम् ।
वर्ज्यं पूर्वात्रयं याम्यमूलाह्यग्नीन्द्रपैतृकाः ॥
रिक्ताऽष्टमी पञ्चदशी निषिद्धास्त्रयोदशी सप्तमिका च मध्या ।
शब्दशास्त्रपरिज्ञाने शस्तौ हस्तपुनर्वसू ॥

अथार्थशास्त्रे,

वरुणादित्यहस्तेज्यहरिविष्णुध्रुवाः शुभाः ।

अर्थशास्त्रेषु सौम्येज्यभृगुवर्गोदयाः शुभाः ॥

अथ भिषक्शास्त्रे,

मार्त्तण्डाश्विसमीरमित्रवरुणादित्योत्तरारेवती-
चित्राविष्णुशशाङ्कपुष्यवसुषु प्राजेशभे भैषजम् ।
कुर्यादर्कबुधार्किशुक्रशशभृद्वारोदयांशे शुभे
रिक्तायां वरभेऽङ्गनासमुदये शुद्धेऽरिदाराष्टके ॥
केन्द्रत्रिकोणगे जीवे नैधने शुभसंयुते ।
भेरीशास्त्रे च नाट्ये च तथा सामुद्रिकेऽपिवा ॥
गान्धर्वे नीतिशास्त्रे च शस्तावाहिपुनर्वसू ।
आयुर्वेदे धनुर्वेदे धनिष्ठा पूज्यते सदा ॥
शास्त्रे महानसे शिल्पे सूपशास्त्रे विशेषतः ।
खड्गशस्त्राभियोगे च आर्द्राराशिर्विशिष्यते ॥
कौक्कुटे चानुराधा स्यादश्वविद्यासु चाश्विनी ।
चित्रशास्त्रेषु चित्रा स्याद्धर्मशास्त्रेषु वैष्णवम् ॥
ज्योतिःशास्त्रेषु च स्वाती योगशास्त्रेषु वारुणम् ।
मृगशीर्षं षडङ्गेषु विशेषेण प्रशस्यते ॥

संहितान्तरेऽपि,

शास्त्रं प्रति पृथग्भानि तिष्यो हस्तः पुनर्वसुः ।
वाद्यशास्त्रे च नाट्ये च तथा सामुद्रिकेऽपिवा ॥
सर्वशाकुनिकज्ञाने गजशास्त्रे च शान्तिके ।
आयुर्वेदे धनुर्वेदे धनिष्ठा पूज्यते सदा ॥

ज्योतिर्निबन्धे,

मित्रादित्यकराश्विनीस्थिरमरुत्पौष्णं च ताराधनु
र्विद्यायामतिशोभना रविकविक्ष्माजेज्यवारोदयाः ।

दीपिकायामपि,

अदितिगुरुयमार्कस्वातिचित्राग्निपैत्र्य-
ध्रुवहरिवसुमूलाहीन्दुभाग्यान्त्यभेषु ।
विशनिशशिबुधाहे विष्णुबोधे विपौषे
सुसमयतिथियोगे चापविद्याप्रदानम् ॥ इति ।
**राजमार्तण्डः,**
हरौ सुप्ते तथा पौषे चैत्रे वाऽप्यसिते तिथौ ।
शशिसौम्यार्कजस्याह्नि धनुर्वेदो न शस्यते ॥
ध्रुवेन्द्रमृदुमूलाग्निद्विदैवत्याश्च राशयः ।
सूपशास्त्रे शुभाः प्रोक्ताः शुभयुक्तेक्षितोदये ॥
मित्रादितिमरुत्त्वाष्ट्रचित्रशास्त्रे शुभावहाः ।
रुद्रान्त्यध्रुवतारेज्यहरीन्द्रखड्गगन्धयोः ॥
अथ ग्रहसंस्थानम् । तत्र स एव,
शैवागमेषु सर्वेषु क्षिप्रोग्राः शुभदा मताः ।
विद्यागमेषु सर्वेषु प्रशस्ताश्चरमित्रकाः ॥
चरस्थिरं द्व्यङ्गगृहे विलग्ने
कनिष्ठमध्येष्टफला भवन्ति ।
त्रिकोणकेन्द्रायगताः शुभाः स्युः
शुभास्त्रिलाभारिगतास्तु पापाः ॥
शुभलग्ने दशमभवे रवौ कुजे वाऽथ तद्वर्गे ।
आयुर्विद्या कार्या नृपसेवा वैरिविग्रहः कार्यः ॥
**वसिष्ठः,**
विद्यारम्भे द्विःस्वभावा विशिष्टा
मध्याः प्रोक्ता ये चरा राशयश्च ।
शुद्धे लग्ने नैधने पुत्रधर्मे
कुर्यात्प्राज्ञस्सर्वविद्यासमाधिम् ॥
भ्रातृषष्ठायकर्मस्थाः पापाः सर्वे शुभावहाः ।

स्त्रीमृत्युवर्जं शुक्रज्ञौ हीन्दुर्त्रिनिधनोदयौ ॥ इति ।

अथ सारस्वतयोगाः । तत्र स एव,

सावित्रनक्षत्रतृतीयपादे तीक्ष्णांशुशीतांशुशशाङ्कजाश्चेत् ।
तस्योदये ज्ञार्कनिशेशवारे सारस्वतं योगमुदाहरन्ति ॥
आदित्यर्क्षे बुधस्यांशे वर्त्तन्ते ज्ञेन्दुभास्कराः ।
बुधवारे च तल्लग्ने योगः सारस्वतो भवेत् ॥
बुधोत्तरे गुरोरंशे केन्द्रगा ज्ञार्कभार्गवाः ।
त्रयोदश्यां यमे लग्ने योगः सारस्वताह्वयः ॥ इति ।

अथाध्ययनप्रकारः ।

संग्रहे,

आदौ गणपतिं चेष्ट्वा सम्पूज्य च सरस्वतीम् ।
गुरुपूजां ततः कृत्वा विद्यास्सर्वास्समारभेत् ॥ इति ।

मनुः,

ॐकारपूर्विकास्तिस्रो महाव्याहृतयोऽखिलाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥

अत्र विशेषमाह गौतमः, ॐपूर्वा व्याहृतयः पञ्च सत्यान्ता इति । इदं च प्रात्याहिकाध्ययने वेदितव्यम् ।

तथा च संवर्तः,

प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ।
सावित्र्याश्चानुवचनं ततो वृत्तान्तमारभेत् ॥ इति ।

वृत्तस्य पूर्वपठितस्य अन्तं समाप्तिस्थलमारभेदित्यर्थः । प्रणवोच्चारणं च प्राणायामत्रयानन्तरं वेदितव्यम् ।

तथाच मनुः,

प्राक्कूलान्पर्युपासीत पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूर्तं तत ॐकारमर्हति ॥ इति ।

प्राक्कूलान्प्रागग्रान्, दर्भानिति शेषः । पवित्रैः पावनैः ।

गौतमोऽपि,प्राणायामानुपस्पृशन्दर्भैरिति । प्राणानामायामाः स्थानानि शीर्षण्यानि चक्षुरादीनीन्द्रियाण्युच्यन्ते । तानि दर्भैरुपस्पृशेदित्यर्थः । प्राणायामा अपि द्विराचमनानन्तरं वेदितव्याः ।

तथाच मनुः,

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।

प्राञ्जलिस्तु कृतापोशो लघुवाग्विजितेन्द्रियः ॥ इति ।

अत्राचान्तः कृतापोश इत्यनेन द्विराचमनमुच्यते ।

तथाच स एव,

सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः ।

पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥ इति ।

प्रयतः आचान्तः । प्राणायामानप्याह

गौतमः,

प्राणायामास्त्रयः पञ्चदशमात्रा इति । प्राणायामः प्राणसंरोधः । पञ्चदशमात्रा इत्यनेन सव्याहृतिकः प्राणायामो व्यावर्त्यते । वचनारम्भसामर्थ्यात् । एतच्च प्रणवोच्चारणम् अध्ययनारम्भसमाप्त्योः कार्यम् ।

तथाच मनुः,

ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।

स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥

धर्मान्तरमप्याह स एव,

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।

सदा नित्यमध्ययने । पादग्रहणमभिवादनम् ।

तदाहाङ्गिराः,

प्राप्ते वेदानुवचने तद्विसर्गे ऽन्वहं गुरोः ।
उपसंग्रहणं कार्यं विप्रोष्य त्वागतेन च ॥ इति ।
तच्च प्राञ्जलिना कार्यम् ।
तल्लक्षणमाह मनुः,
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः । इति ।
आश्वलायनस्त्वन्यथाऽऽह ।
उत्तानं वामपाणिं चावाङ्मुखं दक्षिणं तथा ।
पाण्योः पृष्ठं दृढं कुर्यादङ्गुलीभिः परस्परम् ॥
अङ्गुष्ठौ च दृढीकृत्य क्रियते या तथाऽञ्जलिः ।
सा ब्रह्मणा कृतत्वात्प्राक् ब्रह्माञ्जलिरिति स्मृता ॥
वेदारम्भे विशेषेण समाधौ च विशिष्यते ।
ब्रह्मयज्ञे च कार्या स्यात्सावित्रीग्रहणे तथा ॥ इति ।
तत्र विशेषमाह संवर्तः,
ततोऽधीयीत वेदं तु वीक्षमाणो गुरोर्मुखम् ।
हस्तौ सुसंयतौ कार्यौ जानुभ्यामुपरिस्थितौ ॥
गुरुमुखवीक्षणविधानेन गुरुमुखादेवाध्येतव्यमिति गम्यते ।
गुरुमुखोच्चारणानूच्चारणस्याध्ययनत्वात् ।
अतएव नारदः,
पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ ।
न राजते सभामध्ये गूढगर्भ इव स्त्रियाः ॥
अननुज्ञाताध्ययने प्रत्यवायमाह
लघुव्यासः,
ऋचमर्धर्चमथवा पादं वा यदिवाऽक्षरम् ।
गृह्णाति योऽननुज्ञातं पुरस्तात्परतो द्विजः ॥
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ।

शूद्रसन्निधावध्ययने प्रत्यवाय उक्तः काशीखण्डे,

श्रावयेद्वैदिकं मन्त्रं न शूद्राय कदाचन ।
ब्राह्मण्याद्धीयते विप्रः शूद्रो धर्माच्च हीयते ॥

लघुव्यासोऽपि,

अनध्यायेष्वधीतं यद्यच्च शूद्रस्य सन्निधौ ।
प्रतिग्रहनिमित्तं च नरकाय तदुच्यते ॥ इति ।

मनुरपि,

नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ ।
न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ॥ इति ।

गौतमोऽपि,

नापररात्रमधीत्य पुनस्संविशेदिति ।

हारीतोऽपि, ब्राह्मे मुहूर्ते प्रतिबुध्य स्वाध्यायमधीत्य न पुनः संविशेदिति ।

विस्वराद्यध्ययने दोषमाह नारदः,

हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥
हस्तेनाधीयमानस्तु स्वरवर्णान्प्रयोजयेत् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोकं च गच्छति ॥

विद्याधिगमोपायमाह मनुः,

यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
एवं गुरुगतां विद्यां शुश्रूषुर्राऽधिगच्छति ॥

नारदोऽपि,

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नोपपद्यते ॥
यो ऽहरिव गणाद्भीतः सौहित्यान्नरकादिव ।

राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥
यत्पदैः पांसुभिः श्लक्ष्णैर्वल्मीकः क्रियते महान् ।
न तत्र बलमाबध्यमुद्योगस्तत्र कारणम् ॥
शनैर्विद्यां शनैरर्थानारोहेत्पर्वतं शनैः ।
शनैः कन्था शनैः पन्थाः पञ्चैतानि शनैः शनैः ॥
सौहित्यं तृप्तिः । विद्याविघ्नानप्याह

स एव,

द्यूतं पुस्तकशुश्रूषा वाटिकासक्तिरेवच ।
स्त्रियः प्रीतिश्च तन्द्री च विद्याविघ्नकराणि षट् ॥

नाटकासक्तिरित्यपि पाठः । द्यूतं प्रसिद्धम् । पुस्तकशुश्रूषा लिखनशोधनादिव्यसनम् । वाटिकासक्तिरारामविहारः । नाटकासक्तिरिति पाठे गीतनृत्याद्यासक्तिः । स्त्रियः स्त्रीव्यसनम् । प्रीतिः स्कन्दनादौ । तन्द्र्यालस्यम् । एतानि व्यस्तानि समस्तानि विद्याविघ्नकराणि भवन्तीत्यर्थः । नियमेन स्वल्पमप्यध्येतव्यं न तदतिक्रमेण बह्वपीत्याह

व्यासः,

ऋक्पादमप्यधीयीत मार्गेणोक्तेन धर्मवित् ।
न त्वेव चतुरो वेदानन्यायेन कदाचन ॥ इति ।

अथ सज्योतिरनध्यायः ।

तत्र मनुः,

प्रादुष्कृतेष्वग्निषु च विद्युत्स्तनितनिस्वने ।
सज्योतिरस्यादनध्यायः शेषे रात्रौ तथा दिवा ॥

इदं च वर्षर्त्तौ । अन्यर्तौ अहोरात्रम् ।

हारीतोऽपि, सायंसंध्यास्तनिते रात्रौ नाधीयीरन्निति ।

अथाहोरात्रानध्यायाः ।

तत्र याज्ञवल्क्यः,

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ इति ।

पौर्णमास्यमावास्ये पञ्चदश्यौ । राहुसूतके चन्द्रसूर्योपरागे । पञ्चदशीग्रहणेनैव सिद्धौ पुनर्वचनमौत्पातिके पर्वणि ग्रहणेऽनध्यायत्वप्रतिपादनार्थम् । ऋतुसन्धिषु प्रतिपत्स्विति मिताक्षरा । वस्तुतस्तु चतुर्मासात्मकऋतुत्रयसन्धिगतासु द्वितीयास्विति व्याख्येयम् । आषाढीकार्तिकीफाल्गुनीसमनन्तरासु द्वितीयास्विति स्मृत्यन्तरात् । श्राद्धिकं भुक्त्वा प्रतिगृह्य चेत्यन्वयः । एतच्च पार्वणविषयम् । एकोद्दिष्टे तु त्र्यहस्य वक्ष्यमाणत्वात् । शक्र इन्द्रध्वजः, तत्पातोच्छ्राययोः । तत्कालोऽभिहितो

ब्राह्मे,

द्वादश्यां भाद्रशुक्लस्य इन्द्रध्वजसमुच्छ्रयः ।
इषे कृष्णचतुर्थ्यां तु सप्ताहात्पात इष्यते ॥ इति ।

वसिष्ठोऽपि,

श्वमार्जारनकुलमूषकशीघ्रगाणामन्तरा गमने त्वहोरात्रमिति ।
अभोजनमित्यनुवर्तते । एतच्च त्रिरात्रोपवासाशक्तौ ।
तथाचोशना, मार्जारान्तरागमने घृतं प्राश्य त्र्यहमुपवसेदिति ।

हारीतोऽपि,

प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । इति ।

अनध्यायानुवृत्तौ मनुः,

अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु । इति ।

अष्टकास्वरूपमाह पैठीनसिः, प्रौष्ठपदप्रभृतयः कृष्णे भ-

बास्तिस्रोऽष्टका मार्गशिरःप्रभृतय इत्येके इति ।

शौनकोऽपि, हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टम्य-ष्टका इत्याह । अष्टमीनां तत्त्वेनैवानध्यायत्वसिद्धौ अष्टकाग्रहणं सप्तमीनवम्योरनध्यायत्वप्राप्त्यर्थम् ।

अधीयीतेत्यनुवृत्तौ शङ्खः, अष्टम्याः प्रदोषे इति ।

पैठीनसिः, शुक्लचतुर्दश्यां सर्वासु चाष्टमीषु नक्तमनध्या-योऽष्टकावर्जमिति ।

नृसिंहपुराणे,

महानवम्यां द्वादश्यां भरण्यामपि चैत्रहि ।

तथाऽक्षयतृतीयायां शिष्यं नाध्यापयेद्बुधः ॥

माघमासे तु सप्तम्यां रथाख्यायां तु वर्जयेत् । इति ।

महानवमी आश्विनशुक्लनवमी । महाद्वादशी कार्तिकशुक्लद्वाद-शी । महाभरणी महालयान्तर्गता ।

स्मृत्यन्तरे, भाद्रपदे मघाभरण्योरनध्यायः सश्रवणयोरे-कादशीद्वादश्योश्च आषाढीकार्त्तिकीफाल्गुनीसमीपस्थद्वितीयासु च अपरपक्षान्ते तथा द्वितीयायां चेति ।

नारदीये,

अयने विषुवे चैव शयने बोधने हरेः ।

अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु ॥ इति ।

महोत्सवेऽप्यनध्यायमाह मनुः,

पञ्चदश्यां चतुर्दश्यामष्टकासु महोत्सवे । इति ।

तथा नारदीये,

सिता ज्येष्ठे द्वितीया तु आश्विने दशमी सिता ।

चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ इति ।

तासामनध्यायत्वं स एवाह, या च सोपपदा तिथिरिति ।

वसिष्ठोऽपि, आचार्यपुत्रशिष्यभार्यास्वहोरात्रमृत्विग्यज्ञयोनिसंबन्धिष्विति ।

योनिसंबन्धिनो मातुलादयः । एवं सब्रह्मचारिष्वपि द्रष्टव्यम् । अत एवाहोरात्रमित्यनुवृत्तौ

गोभिलः,

सब्रह्मचारिणि प्रेते स्वे च भूमिपतौ मृते । इति ।

हारीतोऽपि, प्रातःसन्ध्यास्तानेते त्वहोरात्रमिति ।

गौतमोऽपि, छर्दितश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रमिति ।

अथवा घृतं प्राश्याधीयीत ।

तदाहापस्तम्बः, छर्दित्वा स्वमान्ते सर्पिर्वा प्राश्येति ।

अथ पक्षिण्यनध्यायाः ।

तत्र मनुः,

यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।

विरमेत्पक्षिणीं रात्रिं यद्वा स्वेकमहर्निशम् ॥ इति ।

स्मृत्यन्तरेऽपि, वेदसमापने प्रथमसन्ध्यासु तदाऽहोरात्रं पठेयुरनध्याय इति ।

नारदीयेऽपि,

निशाद्वयं दिवा रात्रौ संक्रमे दिवसद्वयम् ।

अनध्यायं प्रकुर्वीत या च सोपपदा तिथिः ॥ इति ।

दिवा संक्रमे पूर्वोत्तरसंलग्नं निशाद्वयं, रात्रौ संक्रमे पूर्वोत्तरवर्तिदिवसद्वयमित्यर्थः ।

अथाकालिकानध्यायाः ।

तत्र मनुः,

विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे ।

आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥

एतेषु विद्युदादिषु प्रत्येकमाकालिकं निमित्तकालादाराभ्या-परेद्युर्यावत्स एव कालस्तावदनध्याय इत्यर्थः।

गौतमोऽपि, आकालिका निर्घातभूकम्पराहुदर्शनोल्का इति।

एतच्च वर्षर्तुं विना प्रातःसन्ध्यायां निमित्तोत्पत्तौ द्रष्टव्यम्।

तथाच मनुः,

एतास्त्वभ्युदिता विद्याद्यदा प्रादुष्कृताग्निषु।

तदा विद्यादनध्यायमनृतौ वा ऽभ्रदर्शने॥ इति।

अग्निप्रादुष्करणेन प्रातःसंध्या लक्ष्यते। अनध्यायम् आ-कालिकम्।

गौतमोऽपि, स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निष्विति। आकालिकमिति शेषः। प्रातःसन्ध्यायामहोरात्रमिति हारीतस्मरणात्।

मनुः,

निर्घाते भूमिचलने ज्योतिषां चोपसर्जने।

एतानाकालिकान्विद्यादनध्यायानृतावपि॥

निर्घात आन्तरिक्षो ध्वनिः। ज्योतिषामुपसर्जनं सूर्याचन्द्रमसोः परिवेषः, उल्कापातो वा।

याज्ञवल्क्योऽपि,

सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने।

समाप्य वेदं द्युनिशमारण्यकमधीत्य च॥ इति।

भरद्वाजोऽपि,

अग्न्युत्पाते पांसुवर्षे ग्रामेऽनध्ययनं भवेत्।

आपस्तम्बोऽपि, उल्कायामग्न्युत्पाते च सर्वासां विद्यानामाकालिकः।

मनुः,

चौरैरुपद्रुते ग्रामे सन्त्रासे वाऽग्निकारिते ।

आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च ॥ इति ।

अद्भुतेषु रक्तवृष्ट्यादिषु ।

वसिष्ठोऽपि,

दिक्पर्वतानां दाहात्स्वेदभङ्गप्रपातेषूपलाश्मिः पांसुवर्षेष्वाकालिकम् ।

अथ त्र्यहानध्यायाः ।

तत्र गौतमः, अमावास्यायामहोरात्रं द्व्यहं चेति । यदा द्व्यहे अमावास्या तदा द्व्यहमनध्यायः । अमावास्येत्यनध्यायतिथिमात्रोपलक्षणम् । उदयास्तमयान्यतरव्यापिन्योर्द्वयोरपि अध्ययने सम्पूर्णत्वश्रवणात् ।

तथाच स्मर्यते,

यान्तिथिं समनुप्राप्य उदयं याति भास्करः ।

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।

सा तिथिस्सकला ज्ञेया दानाध्ययनकर्मसु ॥ इति ।

एतेनाष्टम्याद्यवच्छेदेनानध्याय इति निरस्तम् ।

अथ त्रिरात्रानध्यायाः ।

तत्र याज्ञवल्क्यः,

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।

उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥ इति ।

गुरुरत्राचार्यः । राहुदर्शने शक्रध्वजप्रपतने आचार्ये प्रमिते त्रिरात्रमिति शङ्खस्मरणात् ।

मनुरपि,

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । इति ।

भरद्वाजोऽपि,

अग्न्युत्पाते पांसुवर्षे ग्रामेऽनध्ययनं भवेत् ।
आकालिकं त्रिरात्रं तु सविद्युत्स्तनयित्नुके ॥

मनुः,

शक्रध्वजनिपाते च उल्कापाते तथैवच ।
अनध्यायस्त्रिरात्रं तु भूमिकम्पे तथैव च ॥ इति ।

व्यासः, उल्काविद्युत्समासे त्रिरात्रमिति । समासे यौगपद्ये ।

मनुः,

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके ॥ इति ।

आपस्तम्बोऽपि, विद्युत्स्तनयित्नुर्वृष्टिश्चानृतौ यत्र सन्निपातो वा त्र्यहमनध्यायः ।

गौतमोऽपि, कार्त्तिकीफाल्गुन्याषाढीपौर्णमासीस्तिस्रोऽष्टकास्त्रिरात्रमिति ।

उक्तपौर्णमासीरारभ्य त्रिरात्रं, ततस्तिस्रोऽष्टकाः सप्तम्यादयः तास्वपि त्रिरात्रमनध्याय इत्यर्थः ।

पुनर्गौतमः, श्वनकुलमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्चेति ।

उपवासः प्रायश्चित्तार्थं, विप्रवासो गुरुशिष्ययोस्सहावासः । सहानवस्थानमिति यावत् । सोऽपि त्रिरात्रम् । श्वगोमायुमार्जारसर्पमण्डूकनकुलमूषकाणामेतेषामन्तराधीयानानामन्तरा गमने त्रिरात्रमुपवासस्त्र्यहं च प्रवसेदिति हारीतस्मरणात् । ततश्च त्र्यहानध्यायोऽर्थ सिद्ध एव ।

अथ मासानध्यायः ।

तत्रापस्तम्बः, श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीतेति ।

अथ षण्मासानध्यायः ।

तत्रापस्तम्बः, चण्डालश्वपाकशशकषण्डव्यवाये षण्मासमनध्ययनमिति । व्यवायेऽन्तरा गमने ।

अथ संवत्सरानध्यायः ।

तत्र स एव, यदि हस्ती संवत्सरं व्याघ्रस्तथैवचेति ।

अथ तात्कालिकानध्यायाः ।

तत्र याज्ञवल्क्यः,

श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसम्प्लवे ।
भुक्त्वाऽऽर्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते ॥
पांसुवर्षे दिशां दाहे संध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ इति ।

बाणः शततन्तुर्वीणा । शर इत्यन्ये । आर्त्तो दुःखितः । अन्त्यश्चण्डालः । नीहारो धूमिका । ईरिणम् ऊषरम् । एवं भेर्यादिशब्देऽपि,

तथाच गौतमः । बाणभेरीमृदङ्गगर्दशब्देष्विति । गर्द इत्यपपाठः । सांप्रदायिकस्तु गर्त इति पाठः । स्तुहि श्रुतं गर्तसदं युवानमिति श्रुतेः । गर्त्तः शकटम् । साम्नि पठ्यगाने ऋग्यजुषोरेवानध्यायः ।

तदाह मनुः,

सामध्वनावृग्यजुषी नाधीयीत कदाचन । इति ।

यमोऽपि,

सामशब्दे नर्ग्यजुषी मारुते चातित्रायति । इति ।

अत्र हेतुमाह मनुः,

ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः ।
सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥

एवमृगादिध्वनावपि साम्नामनध्यायः । शाखान्तरे च साम्नामनध्याय इत्यापस्तम्बस्मरणात् ।

विष्णुः, न शूद्रपतितयोः समीपे न देवतायने श्मशानचतुष्पथरथ्यासु नोदकान्ते नापिहितपादो न वान्तो न विरिक्तो नाजीर्ण इति ।

मनुरपि,

नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा ।
वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥

येन वाससा मैथुनं कृतं तद्वासः परिधाय नाधीयीतेत्यर्थः । एतदधौतवासोविषयम् ।

तथा च मनुः,

वासस्यपि ह्यनिर्णिक्ते मैथुनापतिते सति ।

मैथुनापतिते मैथुनसम्बद्धे ।

वसिष्ठोऽपि, मैथुनव्यपेतायां शय्यायां वाससाऽन्यमिथुनव्यपेतेन वा निर्णिक्तेन स्वप्नान्ते छर्दितस्येति ।

मनुः,

नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ।
धर्मनैपुणकामानां पूतिगन्धे च सर्वशः ॥

धर्मनैपुणकामा अगृहीतवेदाः । गृहीतवेदानां तु ग्रामेऽध्ययनमविरुद्धम् ।

तथा च वसिष्ठः, ग्रामे नगरे तु कामं गोमूत्रपर्युषितपरि-

लिखिते चेति ।

मनुरपि,

अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ ।

अनध्यायो रुद्यमाने समवाये जनस्य च ॥

वसिष्ठोऽपि, सन्ध्यास्वन्तःशवे दिवाकीर्त्यइति । दिवाकीर्त्यश्चण्डालः । अन्तश्चण्डाले ग्रामे नाधीयीतेत्यर्थः । एवं चतुष्पथादिष्वपि द्रष्टव्यम् ।

तथाच प्रचेताः, चतुष्पथमहापुरुषोद्यानेषु देवसमीपेऽधीयीतेति ।

गौतमोऽपि, श्मशानग्रामान्तमहापुरुषाशौचेष्वति ।

श्मशाने विशेषमाहापस्तम्बः, श्मशाने सर्वतः शम्यामासादात् श्मशानवत् । शूद्रपतितौ समानगोचर इत्येके । शूद्राणां तु प्रेक्षणप्रतीक्षणयोर्वाऽनध्याय इति । तथाऽश्वाद्यारूढोऽपि नाधीयीत ।

अत एव मनुः,

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम् ।

न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥

शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ।

नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव वा ॥

न विवादे न कलहे न सेनायां न सङ्गरे ।

न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥ इति ।

प्रौढपादः आसने जान्वां वाऽऽरूढपादः । अवसक्थिका कटिजान्वोर्वस्त्रादिना बन्धनम् । भोजनाचमनानन्तरं यावदार्द्रपाणिस्तावदित्यर्थः ।

उदके मध्यरात्रे च विण्मूत्रे च विसर्जयन् ।

उच्छिष्टः श्राद्धभुक्चैव मनसाऽपि न चिन्तयेत् ॥

बौधायनोऽपि, महतोऽपि जननमरणयोरनध्याय इति ।

मनुः,

पांसुवर्षे दिशां दाहे गोमायुविरुते तथा ।

श्वखरोष्ट्रे च रुवति त्रिसन्ध्यं न पठेद्द्विजः ॥

यमः,

आगतं चातिथिं दृष्ट्वा नाधीयीत ततः पुमान् ।

अभ्यनुज्ञापिते तस्मिन्नध्येतव्यं प्रयत्नतः ॥ इति ।

मनुरपि,

अतिथिं चाननुज्ञाप्य मारुते चातिवायति ।

रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥

गौतमः,

अभ्रदर्शने चानृताविति ।

यमः,

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।

कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ इति ।

यत्तु,

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।

स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥

इति मनुवचनम्, तद्ब्रह्मयज्ञाध्ययनविषयम् ।

अत एव श्रुतिः । तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश इति । एतैश्च वाक्यैर्यत्रैकनिमित्तकेऽनध्याये कालद्वयं कालत्रयं वा विहितं यथोत्सर्जने,

विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् ।

इत्यादि, तत्र सर्वत्र प्राज्ञाप्राज्ञाध्येतृविषयत्वेन गुरुलघुकालानां व्यवस्था ज्ञेया ।

अथानध्यायाध्ययने दोषः ।

तत्र शङ्खलिखितौ,

छिद्रेष्वेवात्रतिष्ठन्ति ये केचित्पुरुषादकाः ।
तत्रस्था घ्नन्ति तद्ब्रह्म ब्राह्मणस्याल्पमेधसः ॥
तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशो बलम् ।
सर्वमादाय गच्छन्ति येऽनध्यायेष्वधीयते ॥
छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितम् ॥
तत्फलं तस्य रक्षांसि श्रियं ब्रह्म यशो बलम् ।
सर्वमादाय गच्छन्ति वर्जयन्तीप्सितं फलम् ॥

यमोऽपि,

आयुः प्रजां पशून्मेधां कृतमाशुकृतं च यत् ।
अनध्यायेष्वभ्यसतो ब्रह्म व्याहरतस्तथा ॥

इन्द्रनारदसंवादेऽपि,

अनध्यायेष्वधीयानान् किं शक्र न निहंसि तान् ।
असुरास्ते दुरात्मानो ब्रह्मघ्ना ब्रह्मदूषकाः ॥
अनध्यायेष्वधीतेन हुतं याति न वैदिकम् ।
मृताः स्वर्गं न गच्छन्ति किं नारद न ते हताः ॥ इति ।

अथानध्यायप्रतिप्रसवः ।

तत्र मनुः,

वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके ।
न निषेधोऽस्त्यनध्याये होममन्त्रेषु चैवहि ॥ इति ।

शौनकोऽपि,

नित्ययज्ञे च नाङ्गे च क्रतौ पारायणेऽपि च ।
नानध्यायोऽस्ति मन्त्राणां ग्रहणे ब्रह्मणा स्मृतः ॥

देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ।
नानध्याये जपेद्वेदान् गृहीतनियमादृते ॥

कूर्मपुराणे,

नैत्यके नास्त्यनध्यायः सन्ध्योपासनएवच ।
उपाकर्मणि कर्मान्तहोममन्त्रेषु चैवहि ॥
एकामृचमथैकं वा यजुः सामाथवा पुनः ।
अष्टकास्वधीयीत मारुते चातिवायति ॥
नानध्यायोऽस्ति चाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥
एष धर्मस्समासेन कीर्त्तितो ब्रह्मचारिणाम् ।
ब्रह्मणा भिहितः पूर्वमृषीणां भावितात्मनाम् ॥
अधीयीत सदा नित्यं ब्रह्मविद्यां समाहितः ।
सावित्रीं शतरुद्रीयं वेदान्तांश्च विशेषतः ॥
अभ्यसेत्सततं युक्तो भस्मस्नानपरायणः । इति ।

अथ प्रदोषाः ।

तत्र पुराणम्,

मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः ।
चतुर्थ्यां च प्रदोषेषु न स्मरेन्न च कीर्त्तयेत् ॥ इति ।

तत्परिमाणमाह प्रजापतिः,

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका ।
प्रदोषे न त्वधीयीत तृतीया नवनाडिका ॥

षष्ठीद्वादश्योरर्द्धरात्रादर्वाक् घटिकैकं सप्तमीत्रयोदशीप्रवेशे प्रदोषः । तृतीयायां सार्धयामादर्वाक् चतुर्थीप्रवेशे प्रदोष इत्यर्थः ।

पक्षान्तरमाहोशना,

चतुर्थी याममात्रेण सार्द्धयामेन सप्तमी ।

त्रयोदशी चार्द्धरात्रात्प्रदोषं जनयत्यलम् ॥ इति ।

त्रयोदश्यां विशेषमाह स एव,

त्रयोदश्याम्प्रथमांश्चतुरो मुहूर्त्तान्नाधीयीतेति ।

## अथोत्सर्जनम् ।

तच्च श्रावण्यामुपाकरणपक्षे पौषशुक्लप्रतिपदि पूर्वाह्ने कार्यम् । प्रौष्ठपद्यामुपाकर्मपक्षे माघशुक्लप्रतिपदि कार्यम् ।

तथाच मनुः,

पौषे तु छन्दसां कुर्याद् बहिरुत्सर्जनं द्विजः ।

माघशुक्लस्य वा प्राप्ते पूर्वाह्ने प्रथमेऽहनि ॥ इति ।

शुक्लस्य पूर्वाह्ने प्रथमेऽहनीति पौषेऽपि सम्बध्यते । साकाङ्क्षत्वात् । मासान्विप्रोऽर्धपञ्चमानिति लिङ्गाच्च । कालान्तरमप्याह

याज्ञवल्क्यः,

पौषमासस्य रोहिण्यामष्टकायामथापिवा ।

जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद् बहिः ॥ इति ।

अष्टका कृष्णाष्टमी । रोहिण्यपि कृष्णपक्षगतैव । अष्टकासाहचर्यात् । तत्रोभयत्रापि पूर्वाह्ण एव । पूर्वाह्ने प्रथमेऽहनीति स्मरणात् ।

बौधायनोऽपि, श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य पौष्यां माघ्यां वोत्सृजेदिति ।

कात्यायनोऽपि,

उपाकृत्योदगयने ततोऽधीयीत धर्मवित् ।

उत्सर्गश्च तथा तिष्यतिथ्यां प्रौष्ठपदेऽपिवा ॥ इति ।

उपाकरणानन्तरम् उदगयनेऽध्ययनारम्भं कृत्वा पौषे भाद्रपदे वा पुष्ययुक्तायां तिथौ उत्सर्जनं कुर्यादित्यर्थः ।

गर्गोऽपि,

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद् बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वच्छन्दसाम् ॥ इति ।
अत्रैव विशेषः परिशिष्टे,
मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा ।
तदा च श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः ॥ इति ।
उक्तकालासम्भवे तूपाकर्मदिनएवोत्सर्जनं कार्यम् ।

तथाच खादिरगृह्ये,

पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा । इति ।

स्मृतिसमुच्चयेऽपि,

उत्सर्जनं पौषमासे उपाकर्मदिनेऽथवा । इति ।
तदेतदुभयं प्रत्यब्दं कार्यम् ।
प्रत्यब्दं यदुपाकर्म सोत्सर्गं क्रियते द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥ इति ।
अत्रोक्तयोस्तिथ्यर्क्षयोर्दिनद्वयव्यापित्वे परेद्युरौदयिकं ग्राह्यम् ।

तथाच निगमः,

श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्त्तकैः ।
विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत् ॥ इति ।

श्रावणीप्रौष्ठपदीग्रहणं पौषीमाघ्योरप्युपलक्षणम् । उत्सर्जनोपादानात् ।

अत एव कालादर्शः,

उपाकर्मणि चोत्सर्गे पौर्णमास्यां परा तिथिः ।
षण्मुहूर्त्तकविद्धा स्यादिति वेधो निरूपितः ॥
इति पौर्णमासीमात्रमेवोपाददौ ।
छन्दोगानां विशेषमाह गोभिलः,
छन्दोगा मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियाम् ।

अपराह्णेऽप्युपाकर्म हस्तपुष्यर्क्षयोर्द्विजाः ॥

हस्ते उपाकर्म पुष्ये उत्सर्जनमित्यर्थः ।

कार्ष्णाजिनिः,

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।

ऋषीन्दर्भमयान्सप्त कृत्वा तान्पूजयेत्ततः ॥ इति ।

ग्रहसंक्रान्त्याद्यत्रापि चिन्तनीयम् ।

अनुप्तबीजे नृपतौ विनष्टे सूते मृते राष्ट्रसमाकुले च ।

उत्सर्जनोपाकरणे न कार्ये ग्रस्तेन्दुसूर्ये च गुरोस्तथाऽस्ते ॥

इति वसिष्ठस्मरणात् ।

स्मृत्यन्तरं,

नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ।

उपाकर्मणि चोत्सर्गे ग्रहवेधो न दोषकृत् ॥

पराशरः,

उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।

मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम् ॥ इति ।

अथ शाखाविशेषेण तत्तत्सूत्राण्युदाह्रियन्ते ।

तत्राश्वलायनगृह्यम्,

मध्यमाष्टकायामेतदुत्सर्जनमिति । मध्यमाष्टकाग्रहणं षण्मासान्तोपलक्षणार्थम् । तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः । शास्त्रान्तरे चैवं दृश्यते ।

पौर्णमासी तु या माघी तस्यामुत्सर्जनं भवेत् । इति ।

आचार्योऽपि,

समाप्यपौर्णमास्यां तु छन्दांस्युत्सृज्य शास्त्रवत् । इति ।

एतदुत्सर्जनमित्यस्यैव संज्ञा । ततः षण्मासान्षडङ्गान्यधीयीत । षण्मासानधीयीतेत्यारभ्य एवमन्ता धर्मा ग्रहणाध्ययनएवेत्से-

के । अन्ये त्वविशेषेणाहुरिति ।

अथ शाङ्खायनगृह्यं,

माघशुक्लप्रतिपदीति । अस्यार्थः । छन्दसामुत्सर्गकर्म भवतीति वाक्यशेषः ! अर्द्धपञ्चमान्मासानर्द्धषष्ठान्वाऽधीयीरन्निति । कृत्वोत्सर्गकर्मेति शेषः ।

अथापस्तम्बसूत्रं, तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति । तिष्येण पुष्येण युक्ता पौर्णमासी तैषी श्रावणीवत् । तस्यां विरमेत् । उत्सर्जनं कुर्यात् । रोहिण्यां वा । अत्र रोहिणी याज्ञवल्क्यवचनानुसारेण पौषमासस्य ग्राह्या । तैषे मासि तिष्यात्पूर्वा या रोहिणी तस्यां वा विरमेत् ।

अथ हिरण्यकेशिसूत्रं, तैषीपक्षस्य रोहिण्यां पौर्णमास्यां वोत्सर्गः । तैषीपक्षस्य तैषमासपूर्वपक्षस्य रोहिण्यां पौर्णमास्यां वा समाप्य त्र्यहमेकाहं क्षम्य अध्ययनाद्विरम्य यथाध्यायं यथाऽधीत्य रोहिण्यां पौर्णमास्यां वाऽध्ययनस्योत्सर्गो भवति । माघ्यामपि पौर्णमास्यामेके विदधिरे । तदप्येतेन विकल्प्यते ।

अथ बौधायनसूत्रं, पौष्यां माघ्यां वोत्सृजेदिति । श्रावण्यामुपाकर्मणि माघ्यामुत्सर्जनम् आषाढ्यामुपाकर्मणि पौष्यामिति व्यवस्था ।

अथ पारस्करसूत्रं, अर्द्धषष्ठान्मासानधीत्योत्सृजेयुरर्द्धसप्तमान्वाऽप्येनामृचं जपति । पौषस्य रोहिण्यां मध्यमायामष्टकायां वाऽध्यायानुत्सृजेयुरिति ।

अथ मैत्रसूत्रम्, अर्धपञ्चमान्मासानधीत्योत्सृजते । अर्धं पञ्चमस्य येषां मासानां तेऽर्धपञ्चमाः । अधीत्य ब्रह्मचारी । इतरथा अथेति ब्रूयात् । उत्सृजति कतिचिद्दिनसान्नाधीयीतेत्यर्थः, न पुनः स्वाध्यायमुत्सृजेत् । उत्तरत्रानध्ययनविधानात् । अन्य-

स्तु उत्सर्गसंज्ञं कर्म करोति तदुपरिष्टाद्वक्ष्यति । तथाचयोगीश्वरः,

पौषमासस्य रोहिण्यामष्टकायामथापिवा ।

जलान्ते छन्दसां कुर्यादुत्सर्गं छन्दसां बहिः ॥ इति ।

ततोऽर्थाद्गृहे उपाकर्म ।

अथ खादिरसूत्रं, तैषीमुत्सर्ग इति । तिष्यः पुष्यस्तेन युक्ता पौर्णमासी तैषी तस्यामुत्सर्जनमिति ।

अथ गोभिलसूत्रं, तैषीमुत्सृजन्ति । तिष्यः पुष्यस्तेन संयुक्ता तिथिस्तैषी । सर्वत्राविगानेनानुष्ठानात् । ग्रन्थान्तरेऽपि । प्रौष्ठपदनिष्येण बहिरित्यादि । अन्ये त्वन्यथा वर्णयन्ति । तिष्यः पुष्यस्तेन युक्ता पौर्णमासी तैषीति । तदयुक्तम् । यदुक्तं तत आपुनरुपाकरणाद्वेदं न व्याहरेयुरन्यत्र ब्रह्मयज्ञादिति । अनेनाष्टौ मासानध्यायः स्यादारण्यकादीनां, तस्माद्यथोक्त एवार्थः ।

अथ कौशिकार्थवर्णसूत्रं, श्रावण्यामुक्तः पौष्यामुत्सर्ग इति ।

श्रावण्यामुक्तः उपाकर्मप्रयोगः पौष्यामुत्सर्गः छन्दसां कार्य इत्यर्थः । यद्वा पौष्यामुक्त उत्सर्गः श्रावण्यामपि भवति पौष्यामकृतश्चेत् ।

तथाच स्मृत्यन्तरे ।

उत्सर्जनं पौषमासे उपाकर्मदिनेऽथवा । इति ।

इति उत्सर्जनम् ।

## अथ पुनरुपनयनम् ।

तत्राश्वलायनगृह्यम्, अनुपेतपूर्वस्याथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं चानिरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमहइति सावित्रीमिति ।

अस्यार्थः । एतदुपनयनविधानमनुपेतपूर्वस्य उक्तमिवक्ष्ययेदमारभ्यते । अनन्तरमुपेतपूर्वस्य विशेषं वक्ष्यामः । कृताकृतमि-

ति वर्त्तते। परिदानमनिरुक्तमिति, न भवतीत्यर्थः। कालश्च उद- गयनादिर्न निरुक्तः। पूर्वस्याः सावित्र्याः स्थाने एतां सावित्रीं प्रयुञ्जीत प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तौ एवं कुर्यादिति। अ- थोपेतपूर्वस्येत्यत्र हरदत्तस्तु अथानन्तरं वेदान्तरोपेतपूर्वो यः इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यते। एवं ब्रुवन् एतत् ज्ञापयति तेन प्रकारेण प्रतिवेदमुपनयनं कर्त्तव्यमिति। अन्ये तु सकृत्कृतमुपनयनं सर्ववेदार्थमिति मन्यन्ते।

यथाहापस्तम्बः, सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यतइति हि ब्राह्मणमिति।

स्मृतिरूपेणाप्याहाश्वलायनाचार्यः,

अध्वर्यूणां सामगानाम् ऋचमध्येतुमिच्छताम्।
क्रिया स्यात्परिदानान्ता दीक्षादिर्न विधीयते॥
ब्रह्मौदनं च मेधा च दीक्षा च न विधीयते।
ऋचमध्येतुकामानां दीक्षामिच्छन्ति केचन॥
कृत्वा क्रियास्तु दानान्ता द्विजानामन्यवेदिनाम्।
ब्रह्मौदने व्रतानां तु सावित्र्याः स्थानइष्यते॥
हुते मार्जनसावित्री ऋषिस्थाने व्रताभिधा।
उत्तरायणकालादिनियतिर्न विधीयते॥
निष्कृत्यर्थोपनयने चालङ्काराश्च सुव्रताः। इति।

शौनकोऽपि,

यो वेदान्तरमध्येतुं तत्सूक्तविधिना ततः।
कृतोपनयनोऽधीत्य तं वेदं सकलं द्विजः॥
द्वितीयमिव ऋग्वेदमध्येतुमभिवाञ्छया।
एतद्गृह्योक्तविधिना पुनरप्युपनीयते॥
केशानां वपनं तस्य न क्रियेत क्रियेत वा।

मेधाजननकर्मापि विज्ञेयं च कृताकृतम् ॥
कर्त्तव्यपक्षाश्रयणे मेधाजननकर्मणः ।
ब्रह्मौदनस्य होमस्य त्रिरात्रादिव्रते तथा ॥
क्रमस्य ब्रह्मादिमन्त्रेण परिदानं च नेष्यते ।
तथोदगयनादिश्च कालो नापेक्ष्यतेऽत्र तु ॥
तत्सवितुर्वृणीमहे वयमित्येवमादिका ।
ऋक् सावित्री परिग्राह्या यद्यदन्यत्समीरितम् ॥
अथोपनयने तत्तदलंकारविवर्जितम् ।
इहापि सर्वं कुर्वन्त्युपनीतः पुनर्भवेत् ॥ इति ।

अथ पुनरुपनयने निमित्तानि ।

तत्र मनुपराशरौ,

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेवच ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ इति ।

विष्णुरपि, विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु च सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यादिति ।

शातातपस्तु,

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनम् ।
उष्ट्रमानुषकेभाश्वरासभक्षीरभोजनात् ॥
उपानयं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः । इति ।

पैठीनसिरपि, अन्युष्ट्रीमानुषीक्षीरपाने तप्तकृच्छ्रः पुनरुपनयनमिति ।

यमोऽपि,

भूसुरो मद्यपाने च कृते गोभक्षणेऽपिवा ।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुद्ध्यति ॥ इति ।

गौतमोऽपि, अमत्या मद्यपाने तप्तकृच्छ्रस्ततोऽस्य संस्कारो

मूत्रपुरीषकुणपरेतसां प्राशने चेति ।

बौधायनोऽपि, अमत्या सुरापाने कृच्छ्राष्टपादं चरित्वा पुनरुपनयनमिति ।

स्मृत्यन्तरेऽपि,

चण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ।
बुद्धिपूर्वं तु कृच्छ्राब्दं पुनः संस्कारमर्हति ॥

वसिष्ठोऽपि, एतदेव चण्डालपतितान्नभोजनेषु ततः पुनरुपनयनमिति ।

बौधायनस्तु,

सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥
हिमवत्कौशिकीं विन्ध्यां पारं पद्मस्य पश्चिमम् ।
तीर्थयात्रां विना गच्छेत् पुनः संस्कारमर्हति ॥

आदिपुराणेऽपि,

सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम् ।
एतान् देशान् द्विजो गत्वा पुनः संस्कारमर्हति ॥

एतच्च तीर्थयात्रां विना गमने द्रष्टव्यम् ।

तथाच तत्रैव,

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
विना यात्रां तु यो गच्छेत्पुनः संस्कारमर्हति ॥
कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति ॥

हारीतः,

गर्दभं महिषं मेषं बलीवर्दं क्रमेलकम् ।
आरुह्य ब्राह्मणो मोहात्पुनः संस्कारमर्हति ॥

दैवज्ञवल्लभः,

प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे ।

मधुं विना चोपनीतः पुनः संस्कारमर्हति ॥ इति ।

पुनः संस्कारोऽत्र पुनरुपनयनम् अजिनादिपर्युदासस्यान्यत्रासंभवात् । स च समाख्याबलेनैव कर्मविशेषेण पूर्वसंस्कारनाशे पुनः संस्काराधायको न तु शोधकः । शुद्धेः प्रायश्चित्तसाध्यत्वात् । अत एव प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यादित्यादिविष्णवादिवाक्येषु द्वयोरपि स्वस्वकार्यप्रतिपादनमुखेनैव समाख्याभ्यां क्रमेणानुष्ठानप्रतिपादनं युक्तम् ।

यत्तु यमेन,

असुरामद्यपाने च कृते गोभक्षणेऽपि वा ।

तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुध्यति ॥

इति मौञ्जीहोमस्य शोधकत्वमुक्तं तद् उत्तरकालानुष्ठेयकर्माधिकाराभिप्रायेण, न तु दोषनिवृत्त्यभिप्रायेण । तस्मात्पुनरुपनयनं पुनः संस्काराधायकं न तु प्रकृतदोषनिवर्त्तकमिति स्थितम् । यत्र तु जातकर्मादीत्यादिविशेषः स्मर्यते तत्र तदादीनां सर्वेषामेवानुष्ठानम् । यथा,

जीवन् यदि समागच्छेत् घृतकुम्भे निमज्ज्य तम् ।

उद्धृत्य स्थापयित्वाऽस्य जातकर्मादि कारयेत् ॥

चिरप्रोषितस्य जीवद्वार्त्ताऽनाकर्णने कृतप्रेतक्रियस्य पुनरागमनेऽयं विधिः । तथा प्रव्रज्यादिप्रत्यावृत्तस्यापि प्रायश्चित्ताचरणानन्तरं जातकर्मादिभिः संस्कारमाह

वृद्धपराशरः,

जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् । इति ।

यद्यपि सर्वैरित्यविशेषेणोक्तं तथाप्युपनयनान्तानामेवानुष्ठानं ते

षामेव नियतत्वात्, अन्यथा ब्रह्मचर्यादेव प्रव्रजेदिति विरुध्येत। किं च सर्वैरित्यविशेषोपादाने संन्यासिनोऽपि विवाहादिः प्रसज्येतेत्यनर्थान्तरापातः । तथाच जातकर्मादीत्यादिशब्देनापि तत्पर्यन्तानामेवोपसंग्रहः ।

हारीतोऽपि,

शिखां छिन्दन्ति ये मोहाद्दैवादज्ञानतोऽपिवा ।

पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ इति ।

तत्र विशेषमाह कश्यपः; चीर्णप्रायश्चित्तः प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्रामपशूनां शब्दो न श्रूयते तस्मिन् देशे अग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनः संस्कारमर्हन्ति ।

पराशरोऽपि विशेषमाह,

अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च ।

निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणः ॥ इति ।

अजिनादि वपनस्याप्युपलक्षणम् ।

तदाह विष्णुः, सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्याद्वपनमेखलादण्डभैक्षचर्याव्रतानि पुनःसंस्कारकर्मणि वर्जनीयानीति ।

व्रतानि सौम्यप्राजापत्यादीनि महानाम्न्यादीनि वा । इति पुनरुपनयनविधिः ।

### अथ नैष्ठिकधर्माः ।

तत्र याज्ञवल्क्यः,

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।

तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपिवा ॥ इति ।

उक्तविधिना निष्ठामुत्क्रान्तिकालं नयतीति नैष्ठिकः, स आ-

चार्यसान्निधौ वसेत् । न समावर्त्ततेत्यर्थः । तदभावे आचार्यपुत्रे वसेत् । तस्याप्यभावे आचार्यपत्न्यां वसेत् । तस्या अप्यभावे वैश्वानरे वसेत् । वैश्वानरे वासस्तु आचार्यसपिण्डाभावे वेदितव्यः ।

तदाह मनुः,

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद् व्रतमाचरेत् ॥
एतेष्वविद्यमानेषु स्थानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ इति ।

स्थानासनविहारवानित्यत्र कालविशेषाश्रवणादुक्तकर्मकालातिरिक्तकाले उत्थानोपवेशनगमनवानित्यर्थः । एतदप्यनूचानब्राह्मणगुर्वादिविषयम् । अन्यथा दोषश्रवणात् ।

तदाह मनुरेव,

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे वाऽननूचाने काङ्क्षंस्तु गतिमुत्तमाम् ॥ इति ।

अत्र वसतो धर्मानाह बृहस्पतिः,

उपकुर्वाणस्य तत्सर्वं समादिष्टं मया व्रतम् ।
अधुना सम्प्रवक्ष्यामि नैष्ठिकस्य समासतः ॥
सन्ध्याऽग्निकार्यं स्वाध्यायं भैक्षाधःशयनं दमः ।
आमृत्योर्नैष्ठिकः कुर्वन् ब्रह्मलोकमवाप्नुयात् ॥ इति ।

वसिष्ठोऽपि, संयतवाक् चतुर्थषष्ठाष्टमकालभोजी भैक्ष्यस्य गुर्वधीनो जटिलः शिखाजटो वा गुरुं गच्छन्तमनुगच्छेदासीनं चेत्तिष्ठेत् शयानं चेदासीन उपासीताहूताध्यायी सर्वं लब्धं निवेद्य तदनुज्ञया भुञ्जीत खट्वाशयनदन्तप्रक्षालनाभ्यञ्जनवर्जं स्थानासनशीलस्त्रिरपोऽभ्युपेयादहनीति ।

अहनि त्रिरपोऽभ्युपेयात्त्रिषवणस्नायी स्यादित्यर्थः ।

देवलोऽपि, ब्रह्मसूत्राक्षमालादण्डकौपीनकुण्डिकामौञ्जीमेखलाधारणं सकृद्भोजनमसकृदवगाहनमुभयकालमग्निहोत्रं सन्ध्योपासनमलुप्तलोमकेशनखः स्रग्गन्धमाल्याभ्यञ्जनवेषालङ्कारवस्त्रोपानद्वाहनलङ्घनप्लवनधावनाध्यापनचिकित्साज्योतिषलक्षणवास्तुविद्यामङ्गलपौष्टिकशान्तिककर्मगान्धर्वसङ्गसमयबन्धलिपिलेखनकारुकर्मवेशमनेत्रद्रव्यधान्यधनपरिच्छेदशस्त्रद्यूतव्यवहारज्ञानविलोपेतिहासप्रणयकुहकविडम्बनविद्योत्सवपरिदेवनरोदनपादोद्वर्त्तनवर्जनमिति ।

हारीतस्त्वग्निपरिचर्यामाह, यज्ञीयाः समिध आहृत्य संमार्जनोपलेपनोद्बोधनसमूहनसमिन्धनपर्यग्निकरणपर्युपस्थानहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपधमेन्नापश्चाग्निं च युगपद्धारयेन्नाजीर्णे भुञ्जे नातिथिभ्यो दद्यान्न धानाभ्यो दद्यान्नाक्रामेन्न तिष्ठेदहरहर्हविर्द्धानविशेषैराग्नेयैरहरहरग्निमिन्धेदामन्त्र्य गच्छेदाहृत्य निवेदयेदिति ।

एवंविधाचरणे फलमाह मनुः,

आसमाप्तेः शरीरस्य यस्तु शुश्रूषयेद्गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः शाश्वतं पदम् ॥

याज्ञवल्क्योऽपि,

अनेन विधिना देहं साधयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेहा जायते पुनः ॥ इति ।

यमोऽपि,

आनिपाताच्छरीरस्य ये चरन्त्यूर्ध्वरेतसः ।
ते यान्ति ब्रह्मणः स्थानं जायन्ते न पुनर्भवे ॥

हारीतोऽपि, मृत्योः परस्तादमृता भवन्ति ये ब्राह्मणा ब्र-

ह्मचर्यं चरन्तीति ।

श्रुतिरपि, तद्ब्रह्म नैकविषयं सर्वएते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेतीति ।

सर्वएते चत्वारोऽप्याश्रमिणः कर्म कुर्वाणाः पुण्यलोका भवन्ति यः पुनरेषां मध्ये ब्रह्मसंस्थो ब्रह्मनिष्ठः सोऽमृतत्वं पुनरनावृत्तिलक्षणमेतीति । इदं च नैष्ठिकत्वं पङ्ग्वादीनां नियतमित्याह

संग्रहकारः,

पङ्ग्वादीनामनंशत्वादसामर्थ्याच्च शास्त्रतः ।
नियतं नैष्ठिकत्वं स्यात्कर्मस्वनधिकारतः ॥ इति ।

कर्मसु विवाहादिषु ।

विष्णुरपि,

कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्त्तरोगिणाम् ।
व्रतचर्या भवेत्तेषां यावज्जीवमनंशतः ॥ इति ।

अनंशतोंऽशाभावादित्यर्थः । नचैवं पङ्ग्वाद्यतिरिक्तानां नैष्ठिकत्वं न स्यादिति शङ्कनीयम् । इतरेषामपि पाक्षिकत्वेन तद्विधानात् ।

तथाच मनुः,

यदिवाऽत्यन्तिको वासो रोचेतास्मै गुरोः कुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥ इति ।

अस्मै अपङ्ग्वादिकाय । नचैवं यावज्जीवाग्निहोत्रादिविरोधः । द्विविधो ब्रह्मचार्युपकुर्वाणो नैष्ठिकश्चेति हारीतप्रतिपादितोपकुर्वाणविषयत्वेन तत्सम्भवात् । उपकुर्वाणो गृहस्थाभिकामः ।

तथाच जाबालश्रुतिः, गृही वनं प्रविशेद्यदि गृहमेव कामयेत्तदा यावज्जीवमग्निहोत्रं जुहुयादिति । युक्तं चैतत् । अन्यथा " यमिच्छेत्तमावसेद्यदि वेतरथा तदा ब्रह्मचर्यादेव प्रव्रजेत् "

इत्यादयोऽपि श्रुतयो बाध्येरन् । नच श्रौतेन यावज्जीवाग्निहोत्रेण स्मार्त्तस्य नैष्ठिकत्वस्य बाधः । तस्यापि ब्रह्मचार्याचार्यकुलवासी अत्यन्तमात्मानमाचार्यकुलेऽवसादयेदित्येतत्प्रत्यक्षश्रुतिमूलत्वेन तुल्यबलत्वात् । नच ब्रह्मचारिद्वैविध्ये चत्वार आश्रमा इत्यापस्तम्बवचनविरोधः । नित्याग्निहोत्रे इन्द्रियफलकस्य दध्न इव ब्रह्मलोकफलकस्य सङ्कल्परूपगुणस्याश्रमभेदकत्वाभावात् । यद्वाऽवान्तरभेदस्य न प्रधानभेदकत्वम् । यथा गार्हस्थ्यस्य शालीनयायावरादिभेदस्य ।

अत एव दक्षः,

द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाश्रमे स्थितः ।

इति तच्छब्दपरामर्शेनाश्रमाभेदं गमयति । तथाचोपकुर्वाणकनैष्ठिकयोर्धर्माणां समानविधिविधेयतां दर्शयति

गौतमः, तत्रोक्तं ब्रह्मचारिण इति ।

तत्रोपकुर्वाणकधर्मविधिभिरेव ब्रह्मचारिणो नैष्ठिकस्यापि कर्त्तव्यमुक्तमित्यर्थः ।

अथ ब्रह्मचारिणो व्रतलोपे विशेषप्रायश्चित्तानि ।

तत्र शातातपः,

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं तथैवच ।
प्राजापत्यं चरेत्कृच्छ्रं मौञ्जीहोमेन शुध्यति ॥
भिक्षाशनमकृत्वा यः स्वेस्वे ह्येकान्नमश्नुते ।
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् ॥
सूतकान्नं नवश्राद्धं मासिकान्नं तथैवच ।
ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुद्ध्यति ॥

ऋग्विधानेऽपि,

एकोद्दिष्टे ब्रह्मचारी प्रजपेद् द्युभिरक्तुभिः ।

पादं भुङ्क्ते लक्षसंख्या मुच्यते किल्बिषात्ततः ॥

लक्षसंख्यया इत्यस्मिन्नर्थे लक्षसंख्या इत्युक्तं छान्दसो विभक्तिलोपः । पादम् ऋचश्चतुर्थांशम् ।

अरिष्टेभिर्जपेत्पादं षोडशे भोजयेद्यदि ।

षोडशे षोडशश्राद्धे ।

पञ्चायुतं ब्रह्मचारी जले वा कल्मषं बहिः ।

तन्नोमित्रो जपेत्पादं वृषोत्सर्गे च भोजयन् ॥

शिवालये ब्रह्मचारी अयुतं चेन्न दुष्कृतम् ।

अग्नओजिष्ठपादं च न्यूने भुङ्क्ते जले तदा ॥

अयुतं चेद्ब्रह्मचारी तदा पापात्प्रमुच्यते ।

अदितिं प्रजपेत्पादं सापिण्ड्ये भोजयेद्यदा ॥

अयुतं चेद्ब्रह्मचारी नरकान्मुच्यते तदा ।

धर्मासमन्तान्मन्त्रं च शतवारं यदा तदा ॥

व्रतलोपे ब्रह्मचारी भुक्तिकाले न किल्बिषम् । इति ।

बृहद्यमोपि,

मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।

त्रिरात्रमुपवासोऽत्र प्रायश्चित्तं विधीयते ॥

प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति । इति ।

इदं चाकामतो भोजने द्रष्टव्यम् ।

कामतस्तु स एवाह,

मधु मांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव वा ।

प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥ इति ।

ब्रह्मचारिणोऽनृतभाषणे प्रायश्चित्तमाह

गर्गः,

त्रिरात्रमेकरात्रं वा ब्रह्मचार्यनृते चरेत् । इति ।

अनृते अनृतभाषणे । उपवासं चरेदिति । त्रिरात्रैकरात्रयोस्तु कामाकामाभ्यां व्यवस्था द्रष्टव्या । ब्रह्मचारिणः स्त्रीसङ्गे अवकीर्णित्वमाह

याज्ञवल्क्यः,

अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् । इति ।

अवकीर्णी भवेत् क्षतव्रतो भवेत् । अवकीर्णी क्षतव्रत इति त्रिकाण्डीस्मरणात् । तत्प्रायश्चित्तमाह

मनुः,

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
स्थालीपाकविधानेन यजेत्तं निर्ऋतिं निशि ॥ इति ।

याज्ञवल्क्योऽपि,

गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति । इति ।

शातातपोऽपि,

ब्रह्मचारी तु यो गच्छेत्स्त्रियं कामेन पीडितः ।
प्राजापत्यं चरेत्कृच्छ्रमब्दमेकमतन्द्रितः ॥
निर्वपेच्च पुरोडाशं ब्रह्मचारी तु पर्वणि ।
मन्त्रैः शाकलहोमीयैरग्नावाज्यं च हावयेत् ॥ इति ।

मैथुनस्याष्टविधत्वात्तद्वर्जनरूपस्य ब्रह्मचर्यस्याष्टविधत्वमाह

दक्षः,

ब्रह्मचर्यं सदा रक्षेदष्टधा वारणं पृथक् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥
विपरीतं ब्रह्मचर्यं ब्रह्मा प्राह प्रजापतिः । इति ।
न ध्यातव्यं न वक्तव्यं न श्रोतव्यं कदाचन ॥

एतैः सर्वैः सुनिष्पत्तौ यतिर्भवति नान्यथा । इति ।

शुना दष्टस्य ब्रह्मचारिणः प्रायश्चित्तमाह

पराशरः,

ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
गृहस्थस्तु द्विरात्रं चाप्येकाहं वाऽग्निहोत्रवान् ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत्त्रिगुणं वक्त्रे मस्तके च चतुर्गुणम् ॥ इति ।

बौधायनः, अत्र शौचाचमनसन्ध्यावन्दनदर्भभिक्षाऽग्निकार्यराहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनादित्यागदिवास्वापच्छत्रधारणपादुकाऽध्यारोहणवनमालाधारणोद्वर्त्तनानुलेपनाञ्जनजलक्रीडाद्यूतनृत्तगीतवाद्याद्यभिरतिपाषण्डादिसम्भाषणब्रह्मचारिव्रतलोपादिसकलदोषपरिहारार्थं ब्रह्मचारी कृच्छ्रत्रयं चरेत् । महाव्याहृतिहोमं च कुर्यात् । प्रथमं व्यस्तसमस्ताभिर्व्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा ॐभूरग्नये च पृथिव्यै च महते च स्वाहा ॐभुवो वायवे चान्तरिक्षाय महते च स्वाहा ॐसुवरादित्याय च दिवे च महते च स्वाहा ॐभूर्भुवः स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ॐपाहि नो अग्न एनसे स्वाहा ॐपाहि नो अग्ने विश्ववेदसे स्वाहा ॐयज्ञं पाहि विभावसो स्वाहा ॐसर्वं पाहि शतक्रतो स्वाहा ॐपुनरूर्जा निवर्त्तस्व पुनरग्न इषायुषा पुनर्नः पाह्यंहसः स्वाहा सहरय्या निवर्त्तस्वाग्ने पिन्वस्व धारया विश्वप्स्न्या विश्वतस्परि स्वाहा ॥ पुनर्व्याहृतिभिर्हुत्वेदिति ।

एतच्चाल्पे निमित्ते । निमित्तबाहुल्ये प्रायश्चित्तान्तरमाह

शौनकः,

त्रयोदश्यां जपेन्मन्त्रं लक्षं चैत्रे शिवालये ।

ब्रह्मचारिणो धर्मं च शून्यं चेत्पूर्णमेवाहि ॥ इति ।

एतत्प्रायश्चित्तजातं नैष्ठिकस्य द्विगुणमित्याह

हारीतः,

उपकुर्वंस्तु यत्कुर्यात्कामतोऽकामतोऽपि वा ।

तदेतद्द्विगुणं कुर्याद्ब्रह्मचारी तु नैष्ठिकः ॥ इति ।

यत्तु,

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।

प्रायश्चित्तं न तस्यास्ति येन शुद्धो भवेत्तु सः ॥

इति शातातपीयं वचनं तदेकगुणप्रायश्चित्तनिन्दया द्विगुणप्रायश्चित्तस्यार्थवादपरं, न सर्वात्मना प्रायश्चित्तनिषेधकम् । द्विगुणप्रायश्चित्तविधिविरोधादित्यलं बहुना ।

इति ब्रह्मचारिणो विशेषप्रायश्चित्तानि । साधारणानि तु प्रायश्चित्तप्रकाशे वक्ष्यन्ते ।

अथ ब्रह्मचर्यकालावधिः ।

तत्र बौधायनः, अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत् । षट्त्रिंशत् चतुर्विंशतिर्द्वादश वा प्रतिवेदमिति ।

अस्यार्थः । वेदान्वेदौ वेदं वा प्रतीति प्रतिवेदम् । तथाच

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।

इत्येतद्वैकल्पिकपक्षाश्रयणेन यदा चतुरो वेदानधीते तदा प्रतिवेदं द्वादशाब्दानीति न्यायेनाष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं भवति । यदा त्रीन् तदा षट्त्रिंशत् । यदा द्वौ तदा चतुर्विंशतिः । यदा त्वेकं तदा द्वादशेति व्याख्येयं, न तु वेदं वेदं प्रतीति शङ्कनीयम् । तथा सत्येकास्मिन् वेदेऽष्टाचत्वारिंशद्वर्षाणीत्येवं न्यायेन चतुर्षु वेदेषु द्विनवत्युत्तरं शतं वर्षाणि ब्रह्मचर्यमापद्येत । तच्चासम्भावि । शतायुष्ट्वविरोधात् ।

अत एव देवलः, अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदचर्यामधितिष्ठेदशक्तश्चेत्षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं द्वादशवार्षिकीं वेति ।

अशक्तश्चतुर्वेदाध्ययनाशक्तः । एवमुत्तरत्रापि व्याख्येयम् । एतच्चाचार्यकुले सता कार्यम् ।

तथाचापस्तम्बः, एतस्याचार्यकुले ब्रह्मचारिणोऽष्टाचत्वारिंशत्पादोनमर्द्धोनं त्रिभिर्वेति ।

पादोनं षट्त्रिंशद्वर्षाणि । अर्द्धोनं चतुर्विंशतिवर्षाणि । त्रिपादोनं द्वादशवर्षाणीत्यर्थः ।

यमोऽपि,

वसेद् द्वादशवर्षाणि चतुर्विंशतिमेव वा ।
षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥ इति ।

अत्र प्रतिवेदशब्दः पूर्ववद्व्याख्येयः । अत्राप्यशक्तस्य पक्षान्तरमाह

मनुः,

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम् ।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥

अस्यार्थः । वेदत्रयाध्ययनपक्षे षट्त्रिंशदाब्दिकं ब्रह्मचर्यं कार्यम् । वेदद्वयाध्ययनपक्षे आर्द्धिकम् । अष्टाचत्वारिंशदाब्दिकस्यार्द्धं, चतुर्विंशतिवार्षिकमितिं यावत् । पूर्वोक्तानेकवाक्यैकवाक्यत्वात् । एवं पादिकमपि व्याख्येयम् । षट्त्रिंशदाब्दिकस्यार्द्धपादविवक्षायां अष्टादशाब्दं नवाब्दं च ब्रह्मचर्यमापद्येत । नच तत्कयापि स्मृत्या संवदति । एतेनार्धिकपदे प्रतिवेदं षट्षड् वर्षाणि पादिकपदे प्रतिवेदं त्रीणित्रीणि वर्षाणि ब्रह्मचर्यं चरेदिति चन्द्रिकाचमत्कृतमपि परास्तम् ।

याज्ञवल्क्योऽपि,

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥ इति ।

## अथाश्वलायनानां महानाम्न्यादिव्रतानि ।

तत्राश्वलायनः, एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातमिति ।

अस्यार्थः । व्रतादेशनं यस्मादेभिर्व्याख्यातं संवत्सरावमं चारयित्वा व्रतमनुयुञ्ज्येति संवत्सरमादिशेदिति च तत्राप्येतेन प्रकारेण वापनादिपरिदानान्तं कर्म कार्यम् । वापनादिग्रहणमलङ्कारनिवृत्त्यर्थम् । काय त्वा परिददामीत्येतत्परिदानान्तम् । परिदानान्तवचनमुपरितनतन्त्रनिवृत्त्यर्थम् । एषां नामानि क्रमं चाह

स्मृतिरूपेण स एव,

प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम् ।
तृतीयं स्यादुपनिषद् गोदानाख्यं ततः परम् ॥
क्रिया व्रतानां कार्याः स्युर्यथाप्रोक्तं मया द्विजैः । इति ।

तत्र तावत्तिथ्यादिनिर्णयमाह नृसिंहः,

तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।
चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥
व्रतानां चरणं त्वेवं कृत्वा स्नानं समाचरेत् ।
द्विजानां व्रतबन्धस्तु स्वाध्यायेषु प्रशस्यते ॥
रिक्ताविष्टिविवर्ज्येषु महानाम्न्यः क्रमेण च ।
चूडाकर्मवदेतत्स्याद् व्रतबन्धस्य कालकम् ॥ इति ।

महानाम्निकमित्यनेन महाव्रतोपनिषद्गोदानव्रतानि गृह्यन्त इति।

आश्वलायनीयं श्रौतसूत्रमपि, एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्यानुक्तोक्षिते मन्त्र-

यादुत्तरमहर्महानाम्नीरग्र उदगयने पूर्वपक्षे श्रोष्यन्बहिर्ग्रामात्स्थाली-
पाकं तिलमिश्रं श्रपयित्वेति ।

स्मृतिरूपेणाप्याह स एव,

सर्वत्र वपनं शस्तं तद्व्रतेषूपनीतिवत् ।
वापनादि प्रदानान्तं कृत्वा कर्म व्रतेषु तु ॥
तद्व्रतं वर्षमात्रं च चरस्वेति विनिर्दिशेत् ।
चरिष्यामीति शिष्यस्तु व्रतनाम्ना वदेद्गुरुम् ॥ इति ।

शौनकोऽपि,

अथोदगयने शुक्लपक्षे शोभनतारके ।
वेदव्रतानि चत्वारि विदधीत यथाविधि ॥
तेषामाद्यं महानाम्नीश्रवणं तदनन्तरम् ।
महाव्रतं ततः पश्चाद्भवेदुपनिषद्व्रतम् ॥
ततो गोदानमित्येवं कार्याण्येतान्यनुक्रमात् ।
तत्रादितो महानाम्नीश्रवणे विधिरुच्यते ॥
तत्र प्रथममाचार्यः शिष्याय व्रतमादिशेत् ।
कर्मोपनयने प्रोक्तं यत्पूर्वं वापनादिकम् ॥
परिदानान्तमेतत्तु व्रतादेशनमीरितम् ।
तस्य व्रतस्यानुष्ठानं पूर्णं वत्सरमादिशेत् ॥
ततः संवत्सरे पूर्णे सम्प्राप्ते चोत्तरायणे ।
पूर्वपक्षे प्रशस्ते च नक्षत्रेऽशे गुरोर्मुखात् ।
ऋचः श्रोष्यन्महानाम्नीर्ग्रामान्निष्क्रम्य शोभने ।
इत्यादि विशदं प्रयोगे वक्ष्यते ।

### अथ गोदानव्रतम् ।

तत्राश्वलायनः, एतेन गोदानं षोडशे वर्षे केशशब्दे तु
श्मश्रुशब्दान्कारयेच्छ्मश्रूणि होन्दन्ति शुन्धि शिरोमुखं मा म

आयुः प्रमोषीरिति केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्वीति संप्रेष्यत्याप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत वरं ददामीति गोमिथुनं दक्षिणा संवत्सरमादिशेदिति ।

अस्यार्थः । एतेन गोदानं व्याख्यातमिति शेषः । एतेनेति कृत्स्नोपदेशः । तत्र विशेषमाह, षोडशे वर्षइति । तृतीयस्यापवादः । अत्र मातुरुपस्थउपवेशनं न भवेत् । अबालत्वात् । केशशब्द इति जातावेकवचनम् । श्मश्रुशब्दानिति व्यक्तिपरो निर्देशः । ते त्रयः श्मश्रुशब्दाः "तत्र अदितिः केशान्वपतु" "वप्ता वपसि केशादीन्" "दक्षिणे केशपक्षा" इति त्रिषु ते कार्याः । मन्त्रगतस्य तृतीयस्य केशशब्दस्याभावाद्विधिगतस्य ग्रहणम् । तेन दक्षिणे श्मश्रुपक्षे इति साधितं भवति । श्मश्रूणीति शिरोमुण्डनस्यापवादः । उन्दन्ति क्लेदयन्ति । शुन्धीति । क्षुरनिमार्जनेऽयं विशेषः । केशेति शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षण्वन्कुशलीकुरु केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति नापितशासनम् । आप्लुत्य स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयन् । स्थित्वेति उपवेशनप्रतिषेधः । एवमहःशेषं स्थित्वा अस्तमिते आचार्यसमीपे वरं ददामीति वाचं विसृजेत् । वरद्रव्यमाह, गोमिथुनं दक्षिणा । ननु भिक्षुरयं कथं गोमिथुनसंभवः । उच्यते । यथाऽस्य प्रावरणादिसंभवस्तथैतस्यापि । एवं गोदानं कृत्वा संवत्सरं व्रतमादिशति वक्ष्यमाणेन विधिना । रात्रौ व्रतातिदेशनानुपपत्तेरपरेद्युः कार्यमिति ।

शौनकोऽपि,

गोदानं नाम यत्प्रोक्तं चतुर्थं व्रतमस्य तु ।
महानाम्न्यादिभिः सार्धं पौर्वापर्यं तु विद्यते ॥
अबालत्वाज्जनन्यङ्के निवेशोऽप्यस्य नेष्यते ।
केशशब्दोक्तिदेशेषु श्मश्रुशब्दमुदीरयेत् ॥

श्मश्रूणामेव सेकोऽत्र न केशानामितीरितम् ।
केशान्वपस्वित्यत्रापि श्मश्रूणीति समीरयेत् ॥
केशपक्षे तु कर्त्तव्ये श्मश्रुपक्षे तदा चरेत् ।
क्षुराभिमर्शने मन्त्रे यत्क्षुरेणादिकेष्वपि ॥
श्मश्रूणि शुन्धीत्युक्त्वाऽथ शिरोमुखमुदीरयेत् ।
यः शीतोष्णाभिरित्यादिमन्त्रो नापितशासनः ॥
तत्र केशश्मश्रुलोमनखानीति पदात्परम् ।
उदक्संस्थानि कुशलीकुर्वित्येवमुदीरयेत् ॥
ततः स्नाते समीपस्थे तस्मिन्स्विष्टकृदादिकम् ।
उपरिष्टात्तनं तन्त्रमाचार्यस्तु समापयेत् ॥
शिष्यः स्नात्वा ततो वाचं नियम्यादिवसक्षयात् ।
तिष्ठेदस्तमिते सूर्ये गुरोरन्तिकमागतः ॥
वरं ददामीत्युक्त्वाऽथ गोवृषौ गुरवे दिशेत् ।
असंभवे गोवृषयोर्भिक्षित्वा वा गुरोर्दिशेत् ॥
उत्तरेद्युर्गुरुस्तस्य वत्सरं व्रतमादिशेत् ।
सर्वासु व्रतचर्यासु प्रसिद्धं केशधारणम् ॥ इति ।
एषां चाकरणे प्रायश्चित्तमाह शौनकः,
व्रतानि विधिवत्कृत्वा स्वशाखाऽध्ययनं चरेत् ।
अकृत्वाऽभ्यस्यते येन स पापी विधिघातकः ॥
प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ॥
व्यासोऽपि,
वेदव्रतानि कृत्वैवं तथैवारण्यकव्रतम् ।
स्वशाखाविहितं सर्वं कृत्वा वेदमुपक्रमेत् ॥
अकृत्वेमानि सर्वाणि वेदो ह्यभ्यस्यते यदि ।

प्रायश्चित्तानि कृत्वैव व्रतान्यपि तथा क्रमात् ॥
गोदानिकं ततः कृत्वा समावर्तनमाचरेत् । इति ।
तत्प्रायश्चित्तस्वरूपमाह देवलः,
कालातिक्रमणे कुर्यात्प्रायश्चित्तं विधानतः ।
कृच्छ्रं द्वादशरात्रं तु हुत्वा चाज्याहुतीः शतम् ॥
अष्टाविंशतिमष्टौ वा क्रमात्कुर्याद्व्रतानि हि ।
अत्यये यावदभ्यस्तं वेदं तावत्पुनः पठेत् ॥ इति ।

अथाश्रमसमुच्चयविकल्पौ ।

तत्र मनुः,
चतुर्थमायुषो भागमुषित्वाऽऽद्यं गुरौ द्विजः ।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥
वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गं परिव्रजेत् ॥ इति * ।
हारीतोऽपि,
अनेन विधिना यो हि आश्रमानुपसेवते ।
स सर्वकामान्निर्जित्य ब्रह्मभूयाय कल्पते ॥
आपस्तम्बोऽपि,
चत्वार आश्रमाः गृहस्थस्याचार्यकुले मौनं वानप्रस्थमिति तेषु यथोपदेशं सम्यग्वर्त्तमानः क्षेमं गच्छतीति ।

जाबालिरपि, ब्रह्मचर्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदिति ।

वसिष्ठः,चत्वार आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राज

---

* एतदनन्तरम् "शतायुष्पुरुषाभिप्रायमेतत् । अन्यत्र यथासंभवं द्रष्टव्यम् आश्रमसमुच्चयस्त्वावश्यक एव इत्यधिकः पाठः पुस्तकान्तरे ।

कास्तेषां वेदमधीत्य वेदान्वा अविशीर्णब्रह्मचर्यो यमिच्छेत्तमाव-सेदिति ।

जाबालिरपि, अथवा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वनाद्वेति ।

भविष्यपुराणेऽपि,

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम् ॥
वैखानसो वापि भवेत्परिव्राडथवा भवेत् ।

गौतमोऽपि, तस्याश्रमविकल्पमेके ब्रुवत इति ।

उशनाऽपि,

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥

एतच्च नैष्ठिकाभिप्रायम् । केचित्तु गार्हस्थ्यस्यैव प्राधान्यमाहुः ।

तथाच गौतमः, ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गा-र्हस्थ्यस्येति ।

तुशब्दो विशेषवाची । सर्वेषु वेदशास्त्रेतिहासपुराणेषु गृ-हस्थधर्मा एवाग्निहोत्रादयः प्राचुर्येण विधीयन्ते । ततस्तत्रैवाचा-र्या गार्हस्थ्यस्यैकाश्रम्यं प्राधान्यं मन्यन्ते । तथाचान्येषामितराश्र-मधर्मा विधीयन्ते । प्रत्यक्षविधानादितराश्रमाणां प्रत्यक्षेणोपजी-व्यत्वादिति ।

तथाच मनुः,

चतुर्णामपि चैतेषां वेदस्मृतिविधानतः ।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ इति ।

वसिष्ठोऽपि,

गृहस्थ एव यजते गृहस्थस्तपते ततः ।
चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥ इति ।
अनाश्रमित्वनिषेधमाह दक्षः,
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥
जपे होमे तथा दाने स्वाध्याये वा ततः सदा ।
नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः ॥
त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।
न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥ इति ।

हारीतोऽपि,
अनाश्रमी व्यपेतश्च आश्रमी च निरर्थकः ।
मिथ्याश्रमी च सर्वे वै निरयं यान्ति मानवाः ॥ इति ।
अयं चाश्रमसमुच्चयो ब्राह्मणस्यैव ।

तथाच मनुः,
एष वो विहितो धर्मो ब्राह्मणस्य चतुर्विधः । इति ।
अन्ये तु त्रयाणमपि वर्णानामाहुः । अत एव काठकगृह्यम्,
त्रयाणां वर्णानां चत्वार आश्रमा इति ।

## अथ समावर्त्तनम् ।

तत्र समावर्त्तनं नाम वेदाध्ययनानन्तरं गुरुकुलात्स्वगृहागमनम् । तथाच

कूर्मपुराणं,
वेदं वेदौ तथा वेदान्वेदान्वा चतुरो द्विजः ।
अधीत्य चाधिगम्यार्थं ततः स्नायाद् द्विजोत्तमः ॥ इति ।

अर्थम् अधीतानां वेदानाम् ।

तथाच स्मृत्यन्तरं, वेदमधीत्य छन्दोविषयार्थान्बुध्वा स्नायादिति ।

लघुव्यासोऽपि,

ऋचं पादमधीत्यातो न्यायतस्तु तदर्थवित् ।
सम्यगु व्रतानि संसेव्य समावर्तनमर्हति ॥ इति ।

न्यायतो गुरुमुखापेक्षाद्युक्तन्यायेनेत्यर्थः । इदं च समावर्त्तनं गुरोर्दक्षिणादानपूर्वकं कर्त्तव्यम् ।

तथाचाश्वलायनः,

चरित्वा चतुरो वेदांस्त्रीन्द्वौ चैकमथापिवा ।
तोषयेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षणः ॥
धनं पित्रादिबन्धुभ्यस्समाहृत्याथवा परात् ।
राजन्यो वा गुरुं सम्यक्तोषयेत्स्नातको व्रती ॥ इति ।

शौनकोऽपि,

अधीत्य वेदशास्त्राणि कृत्वा वेदव्रतानि च ।
चत्वारि गुरवे दत्त्वा यथाशक्ति च दक्षिणाम् ॥
ततस्तेनाभ्यनुज्ञातः समावर्त्तनमाचरेत् । इति ।

तत्र च वेदव्रतयोस्समाप्तिरुत्तमः पक्षः । अन्यतरसमाप्तिर्मध्यमः ।

तथाच याज्ञवल्क्यः,

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ इति ।

तदेतत्स्पष्टमाह हारीतः, त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति ।

दक्षिणास्वरूपमाह मनुः,

क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ।
धान्यवासांसि शाकं वा गुरवे प्रीतिमाहरेत् ॥ इति ।

अनेन सत्यां शक्तौ गुर्वभिलषितमेव देयमित्युक्तं भवति । गुरवे तु वरं दत्त्वेति योगिस्मरणात् । वरमाभिलषितम् । तदसम्भवे गौर्वा । गौर्वा वर इति श्रुतेः ।

व्याससमृतिरपि,

गुरुशुश्रूषया विद्यां समाप्य विधिवद्द्विजः ।
स्नायीत गुर्वनुज्ञातो दत्त्वाऽस्मै दक्षिणां हि गाम् ॥ इति ।

गोर्वरत्वं मात्राहीनत्वात् । गोस्तु मात्रा न विद्यतइति श्रुतेः ! अत एव

लघुहारीतः,

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा त्वनृणी भवेत् ॥ इति ।

छन्दोगश्रुतिरपि, यद्यप्यस्माइइमामद्भिः परिगृहीतां धनेन पूर्णां दद्यादेतदेव ततो भूय इति ।

तापनीयश्रुतिरपि,

सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते । इति ।

एतच्च दक्षिणादानं न केवलं स्नानार्थमेवापित्वाश्रमान्तरपरिग्रहार्थमपीति द्रष्टव्यम् ।

तथाच नरसिंहपुराणं,

गुरवे दक्षिणां दत्त्वा स यमिच्छेत्तमावसेत् ।
विरक्तः प्रव्रजेद्विद्वान्सरागस्तु गृहे वसेत् ॥ इति । दक्षिणादानासमर्थस्तु तदनुज्ञामात्रेणैव स्नायात् ।

तथाच गौतमः, विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञानस्य वा स्नानमिति ।

आश्वलायनोऽपि,

विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञानस्य वा स्नानमिति ।

विद्यान्ते इत्यनेन पूर्वं दक्षिणादाननिषेधं गमयति ।

तथाच मनुः,

न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित् ।

स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥ इति ।

इदं च समावर्त्तनं विवाहार्थमेव, नाश्रमान्तरपरिग्रहार्थमपि ।

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाक्रमम् ।

उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥

इति मनुना समावर्त्तनस्य विवाहकर्तृद्विजविशेषणत्वेनाभिधानात् । नच तदाश्रमान्तरकर्तृविशेषणत्वेन श्रूयते, समावृत्तो वनं प्रविशेत् समावृत्तः संन्यसेदिति वा । प्रत्युत ब्रह्मचर्यादेव प्रव्रजेदित्यत्र ब्रह्मचर्यस्यैवापादानत्वं श्रूयते । नच तत्समावर्त्तने सति घटते । तस्मिन्सति तस्यैवाभावात् । अत एव ब्रह्मचर्यं परिसमाप्य गृही भवेदिति समावर्त्तनरूपब्रह्मचर्यपरिसमापनं गृहाश्रमायैव श्रूयते नान्यत्र । यदपि

गुरवे दक्षिणां दत्त्वा स यमिच्छेत्तमावसेत् ।

इति नरसिंहपुराणे संन्यासाद्यर्थमपि ब्रह्मचारिणो गुरवे दक्षिणादानं विहितं, तन्न विरुद्धम् । दक्षिणादानस्य समावर्त्तनाङ्गत्वेन समावर्त्तनरूपत्वाभावात् । एकस्योभयाङ्गत्वे बाधकाभावाच्चेत्यलं विस्तरेण ।

## अथ समावर्त्तनसम्भाराः ।

तत्राश्वलायनः, अथैतान्युपकल्पयीत समावर्त्स्यमानो मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रगुन्मर्दनमनुलेपनमञ्जनमुष्णीषमित्यात्मने चाचार्याय च । यद्युभयोर्न विन्देताचार्यायैव-

ति । उपकल्पयीतेति शब्दोऽयं छान्दसः । समावर्त्यमानः समावर्त्तनं नाम संस्कारः तेन संस्क्रियमाण इत्यर्थः । अहते वाससी आच्छाद्येत्याद्युत्तरत्र विनियोगादेवोपकल्पने सिद्धे उपकल्पनवचनमात्मने चाचार्याय वैतान्येकादश द्रव्याण्युपकल्पयेदिति विधानार्थम् । यद्युभयोर्न लभेत्तदाऽऽचार्यायैव केवलायोपकल्पयेदिति ।

स्मृतिरूपेणाप्याह स एव,

आत्मने गुरवे च स्यादलाभे गुरवेऽपिवा ।
मण्याद्युष्णीषपर्यन्तद्रव्याणामुपकल्पनम् ॥ इति ।

शौनकोऽपि,

स समावर्त्तमानस्तु पूर्वमेवोपकल्पयेत् ।
मण्याद्युष्णीषपर्यन्तान्सम्भारान्सकलानपि ॥
गोदानेनातिदिष्टत्वात्कर्मणोऽस्योत्तरायणम् ।
पूर्वपक्षादियोगं च प्रतीक्ष्य ह्येतदाचरेत् ॥ इति ।

अथात्र कालनिर्णयः ।

तत्र नारदः,

अथोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः ।
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम् ॥ इति ।

वसिष्ठोऽपि,

सौम्यायने निर्मलयोस्सुरेज्यदैत्येज्ययोर्व्योम्नि वलक्षपक्षे ।
संत्यज्य रिक्तामवमाष्टमीं च वैनाशिकाद्याखिलऋक्षवृन्दम् ॥

इति ।

अत्रोभयोर्वाक्ययोः समावर्त्तनमण्डनं समावर्त्तनमिष्टमुक्तामित्येताभ्यां वाक्यशेषाभ्यामन्वयो बोद्धव्यः ।

अथ तिथयः ।

तत्र देवरातः,

विच्छिद्रासु विरिक्तासु तिथिषु स्नानमाचरेत् । इति ।

नारदोऽपि,

प्रतिपत्पर्वरिक्तामामष्टमीं च दिनक्षयम् ।
हित्वाऽन्यदिवसे कार्य्यं समावर्त्तनमण्डनम् ॥ इति ।

अथ वाराः ।

तत्र देवरातः,

सौम्यानामंशवारेषु शुभाः शेषेषु वर्जिताः । इति । क्रिया इति शेषः ।

अथ नक्षत्राणि ।

तत्र नृसिंहः,

त्रीण्युत्तराणि मैत्रेन्दुरोहिण्यादित्यपुष्यभाः ।
हस्तश्रवणपौष्णाश्च स्नानकर्मणि पूजिताः ॥ इति ।

वसिष्ठोऽपि,

आदित्यसौम्यसावित्रं मैत्रतिष्योत्तरात्रयम् ।
पौष्णश्रवणरोहिण्यः श्रेष्ठाः स्युः स्नानकर्मणि ॥ इति ।

आदित्यः पुनर्वसुः । सौम्यं मृगशिरः । सावित्रं हस्तः । मैत्रम् अनुराधा ।

नारदोऽपि,

मित्रोत्तरादितीज्यान्त्यहरीन्दुरविधातृषु ।
भेष्वर्केन्दुज्ञार्यशुक्रवारलग्नांशकेषु च ॥
अथवा बीजनक्षत्रवारलग्नांशकेष्वपि । इति ।

वसिष्ठोऽपि,

करादिपञ्चस्वादितिद्वयाश्विविष्णुत्रयध्युत्तरधातृभेषु ।
सपौष्णचान्द्रेषु शुभग्रहस्य वारे समावर्त्तनमिष्टमुक्तम् ॥
योगाश्च निषिद्धेतराः ज्ञातव्याः ।

अथ राशयः ।

तत्र देवरातः,

नक्रगोयमकन्याश्च तौलिमीनौ सुपूजिताः ।
शुभयुक्तं यदि स्यात्तु शेषेषु स्नानमाचरेत् ॥ इति ।

अथ ग्रहसंस्थानम् ।

तत्र स एव,

आयारिभ्रातृगाः पापाः शुभाः केन्द्रत्रिकोणगाः ।
अशुभाश्च शुभाश्चैव अष्टमे वर्जिताः सदा ॥ इति ।

राजमार्त्तण्डस्तु चौलोक्तमेवास्यापि कालमाह,

क्षुरकर्मणि प्रदिष्टं यदिष्टफलदायकं दिनाद्यं तु ।
तन्मेखलात्रिमोक्षे भवति हिताय द्विजातीनाम् ॥ इति ।

दुर्गादित्यः,

दिनकरविप्लुतमूर्त्तिषु सुरगुरुदितिपुत्रमन्त्रिचन्द्रेषु ।
कुर्यान्न व्रतबन्धं तथैव गोदानमपि न कार्यम् ॥ इति ।

सुरेश्वरः,

भौमभानुजयोर्वारे नक्षत्रे च यथोदिते ।
ताराचन्द्रविशुद्धौ च स्यात्समावर्त्तनक्रिया ॥

अत्र भौमभानुजयोर्ग्रहणं विवाहोपस्थित्यादिना वारान्तरासंभवे द्रष्टव्यम् ।

दीपिकायामपि,

तृतीयलाभारिगतैरसौम्यैः केन्द्रत्रिकोणोपगतैश्च सौम्यैः ।
क्षौरोदितर्क्षादिविलग्नयोगे मौञ्जीत्रिमोक्षः शुभदो द्विजानाम् ॥ इति ।

अथ स्नातकधर्माः ।

तत्राश्वलायनः, तस्यैतानि व्रतानि भवन्ति न नक्तं स्नायान्न नग्नः स्नायान्न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनाद्वर्षति न धा-

वेन्न वृक्षमारोहेन्न कूपमवरोहेन्न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्येतेति ।

शौनकोऽपि,

न स्नायान्नक्तमित्याद्यं विहितं स्नातकव्रतम् ।
तत्तत्सङ्कल्पपूर्वं तु विधिना स समाचरेत् ॥ इति ।

याज्ञवल्क्योऽपि,

श्रुतिस्मृत्युदितं सम्यग्नित्यमाचारमाचरेत् । इति ।

पारस्करः, स्नातकस्य यमान्वक्ष्यामः । कामादितरो नृत्तगीतवादित्राणि न कुर्यात् । न गच्छेत् । कामं तु गीतं गायति चैव गीते वा रमत इत्यपरे । क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेदिति ।

स्नातकस्य ब्रह्मचर्यात्समावृत्तस्य यमान् व्रतानि वक्ष्यामः । कामत इच्छया नृत्यगीतवादित्राणि न कुर्यात् । न गच्छेत, द्रष्टुमिति शेषः । इतरो ब्रह्मचारी । सोऽपि न कुर्यात् न गच्छेदित्येव । इच्छया गायेत शृणुयात् । यथाऽश्वमेधे दिवा ब्राह्मणो गायतीति यजमानं श्रावयति चेति गाने श्रवणे चाधिकारः, एवमन्यत्रापि यत्र विशेषविधिरस्ति तत्रैवाधिकारो नान्यत्रेत्यर्थः । क्षेमे सति नक्तं ग्रामान्तरं न गच्छेत् । क्षेमे आपदभावे सति । न च धावेत् । क्षेमे सतीत्यनुषज्यते । तथा उदपानावेक्षणवृक्षारोहणफलप्रचयनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्तवदनसन्ध्यादित्यप्रेक्षणमाभीक्ष्ण्येन न कुर्यात् । उदपानं कूपादि । वृक्षाग्रोपरिगमनेन फलप्रचयनं फलग्रहणम् । सन्धिसर्पणं सन्धिभूमिगमनम् । अथवा सन्ध्यायामपमार्गेण गमनम् । विवृते वर्त्मादौ स्नानम् । विषमं गर्त्तादि । शुक्तमश्लीलम् । तच्चिविधं लज्जाकरं दुःखकरम् अमङ्गलसूचकं च । अभीक्ष्णं वारंवारम् आदित्यमण्डलं न पश्येदित्यर्थः । तथा न ह वै स्नात्वा भिक्षेत अपिह

वै स्नात्वा भिक्षां जपतीतिश्रुतेः । वर्षत्यप्रावृतो व्रजेदयं मे वज्रः पाप्मानमपहनत्त्विति । अप्स्वात्मानं नावेक्षेत । अजातलोम्नीं विपुंषीं षण्ढं च नोपहसेन्न च गच्छेद् गर्भिणीं विजन्येति ब्रूयात्सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनुर्गां धयन्तीं परस्मै नाचक्षीतोर्वरायामनन्तर्हितायां च भूमावुत्सर्पास्तिष्ठन्न मूत्रपुरीषे कुर्यात्स्वयं शीर्णेन काष्ठेन लोष्ठेन प्रमृजीत गुदं विकृतं वासो नाच्छादयीत दृढव्रतो वधत्रः स्यात्सर्वत आत्मानं गोपायेत्सर्वेषां मित्रमिव वधात्पापात्त्रायत इति वधत्रः । इत्यादिव्रतलोपे एकरात्रं तिस्रो रात्रीर्वा व्रतं चरेत् ।

बृहस्पतिः,

सख्यं समेधकैः कुर्यादुपेयादीश्वरं सदा ।
वैरं निर्हेतुकं वादं न कुर्यात्केनाचित्सह ॥

वासिष्ठः,

आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्याः ।
वाग्बुद्धि कार्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्ये ॥ इति ।

आहारो भोजनम् । निर्हारो मूत्रपुरीषोत्सर्गः । विहारः स्त्रीसङ्गः । योगः समाधिः । सुसंवृताः गुप्ताः । वाग्गुप्तिः आलापादिपरिवर्जनेन । बुद्धिगुप्तिः अशुभसंकल्पादिपरिवर्जनेन ।

विष्णुपुराणे,

विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः ।
विवादश्च विवाहश्च तुल्यरूपैर्नृपेष्यते ॥
नारभेत कलिं प्राज्ञः शुष्कवैरं च वर्जयेत् ।
अप्यल्पहानिः सोढव्या वैरेणार्थागमं त्यजेत् ॥
जीवेति क्षुवतो ब्रूयाज्जीवेत्युक्तः सहेतिच ।

मनुः,

भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ इति ।
पैठीनसिः,
अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः ।
पृथिवी च षडेतानि यो निन्दति स निन्दितः ॥
मार्कण्डेयः,
वेद एव द्विजातीनां साधुः सत्यं तपस्विनाम् ।
गुरोः पतिव्रतायाश्च तथा यज्ञतपस्विनाम् ॥
परिवादं न कुर्वीत परिहासेऽपि पुत्रक ।
कुर्वतामविनीतानां श्रोतव्यं न कथंचन ॥
हारीतः,
विवादं वर्जयेद्विप्रे सर्वेषां चैव सूचनम् ।
परिभोगं यथोक्तेषु मत्सरं पुत्रशिष्ययोः ॥ इति ।
याज्ञवल्क्योऽपि,
मातृपित्रतिथिभ्रातृजामिसम्बन्धिमातुलैः ।
वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः ॥
ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ।
विवादं वर्जयित्वा तु सर्वान् लोकान् जयेद् गृही ॥
मनुरपि,
ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा वा स्ववर्गेण विवादं न समाचरेत् ॥
एतान् विवादान् सन्त्यज्य सर्वपापैः प्रमुच्यते ।
एभिर्जितश्च जयति सर्वान् लोकानिमान् गृही ॥ ति ।

एतैस्सह विवादवर्जने कारणमाह स एव,

आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ॥
जामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः ।
सम्बन्धिनो ह्यपां लोके पृथिव्यां मातृमातुलौ ॥
आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः ।
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ॥
छाया स्वा दासवर्गस्तु दुहिता कृपणः परः ।
तस्मादेतैरधिक्षिप्तस्सहेतासंज्वरस्सदा ॥ इति ।

पैठीनसिः,

मत्तप्रमत्तोन्मत्तैस्सह सम्भाषं न कुर्वीत न परस्त्रियं रहसि सम्भाषेत ।

मत्तो मदनीयद्रव्येण, प्रमत्तो ग्रहावेशादिना, उन्मत्तो वातादिना ।

सांख्यायनगृह्ये, सूतिकोदक्याभ्यां न संवदेत् ।

गौतमः, न म्लेच्छाशुच्यधार्मिकैस्सह सम्भाषेत, सम्भाष्य पुण्यकृतो मनसा ध्यायेत् ब्राह्मणेन सह सम्भाषेत ।

यमः,

तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि न निर्दिशेत् । इति ।

महाभारते,

सम्पन्नं भोजने ब्रूयात् पानीये तर्पणं तथा ।
सुश्रुतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा ॥
महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित् ।
त्वङ्कारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ॥
अधराणां समानानामुभयेषां न दुष्यति ।

नारदोऽपि,

गुरोर्ज्येष्ठकलत्रस्य भ्रातुर्ज्येष्ठस्य वाऽऽत्मनः।

आयुष्कामो न गृह्णीयान्नामातिकृपणस्य च॥ इति।

कूर्मपुराणं त्वन्यानपि स्नातकधर्मानाह,

यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम्।

छत्रं चोष्णीषममलं पादुके चाप्युपानहौ॥

रौक्मे च कुण्डले वेदं क्लृप्तकेशनखः शुचिः।

स्वाध्याये नित्ययुक्तः स्याद् बहिर्माल्यं न धारयेत्॥

शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः।

न जीर्णमलवद्वासा भवेत्तु विभवे सति॥

न रक्तमुल्वणं चान्यधृतं वासो न कुण्डिकाम्। इति।

कुण्डिकां कटिसूत्रम्।

बौधायनोऽपि, स्नातकोऽन्तर्वासा उत्तरीयं वैणवं दण्डं धारयेत्सोदकं च कमण्डलुं द्वे यज्ञोपवीते उष्णीषमजिनोत्तरीयोपानहौ छत्रं चेति।

वसिष्ठः, नावृतो यज्ञं गच्छेद्यदि गच्छेत्प्रदक्षिणं पुनराव्रजेदिति।

नावृतोऽनिमन्त्रितः।

द्वौ विप्रौ विप्रमग्निं च दम्पत्योः स्वामिनोस्तथा।

अन्तरेण न गन्तव्यं हरस्य वृषभस्य च॥ इति।

पैठीनसिरपि, न गोब्राह्मणाभ्यन्तरे व्यवधेयादनुज्ञाप्य वा व्रजेदिति।

अथानाक्रमणीयानि।

तत्र मनुः,

दैवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।

नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च ॥

बभ्रुः कपिलः।

याज्ञवल्क्योऽपि,

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानिच ॥ इति ।

विष्णुपुराणे,

पूज्यदेवध्वजज्योतिश्छायां नातिक्रमेद् बुधः ।

देवीपुराणे,

न चैव गोः प्रसूताया विश्वसेत्स्त्रीजनस्य च ।
न मुखेन धमेदग्निं न खड्गं लङ्घयेत्तथा ॥ इति ।

याज्ञवल्क्यः,

पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् । इति ।

यमः,

स्वां तु नाक्रामयेच्छायां क्लीबेन पतितेन वा ।
चण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन च ॥ इति ।

अथानधिष्ठेयानि ।

तत्र मनुः,

मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥
उद्वर्त्तनमपस्नानं विण्मूत्रं रक्तमेवच।
श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः ॥
वैरिणं नोपसेवेत सहायं नैव वैरिणः ।
अधार्मिकं वस्करं च परस्यैव च योषितम् ॥

उद्वर्त्तनं विलेपनम् ।

अपस्नानं स्नानादधः पतितं जलम् । निष्ठ्यूतम् उद्गीर्णं

थूत्कारादि ।

विष्णुः, न चतुष्पथमधितिष्ठेत् न रात्रौ वृक्षमूलं शून्यालयं न तृणं न बन्धनागारम् ।

तृणं तृणकूटः । आसनार्थे तु न निषेधः ।

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥

इति मनुना आसनत्वेन तस्य विधानात् ।

शङ्खलिखितौ, नोद्धतकुहकैः सहैकत्र तिष्ठेत् ।

उद्धतोऽविनीतः । कुहकः वशीकरणादिनिष्ठः ।

हारीतः, आत्रपनापमार्जनापस्नानतुषभस्मास्थिकपालसंचयं नाधितिष्ठेदिति ।

आत्रपनं गोपादिभाण्डम् । अपमार्जनं संमार्जनी । कपालसंचयः खर्परसमूहः ।

याज्ञवल्क्यः,

विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ इति ।

विरुद्धम् आर्याचारविरुद्धम् ।

तथाच मार्कण्डेयः,

म्लेच्छभाषा न वक्तव्या म्लेच्छवेषं न कारयेत् ।
नासंवृतमुखः कुर्याद्धास्यं जृम्भां तथैवच ॥
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ।
शूर्पवातं नखाग्राम्बुस्नानवस्त्रघटोदकम् ।
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुरा कृतम् ॥ इति ।

क्रिया स्नानाहरणादिः । घटोदकं स्नानघटावशिष्टम् ।

शातातपोऽपि,

अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते ।
श्वकाकोष्ट्रखरोलूकशूकरग्राम्यपक्षिणाम् ॥ इति ।

वसिष्ठः, नेष्टकाभिः फलानि शातयेदिति ।

विष्णुः,

न संहताभ्यां पाणिभ्यां शिर उदरं च कण्डूयेदिति ।

अथानीक्षणीयानि ।

तत्र मनुः,

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥ इति ।

विष्णुरपि, नोद्यन्तमादित्यमीक्षेत नास्तं यान्तं नोपरक्तं न वाससा तिरोहितं नचादर्शजलाद्युपगतं न मध्येऽह्न ।

याज्ञवल्क्यः,

नेक्षेतार्कं न नग्नां स्त्रीं नच संसृष्टमैथुनाम् ।
नच मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ इति ।

विष्णुः, न क्रुद्धस्य गुरोर्मुखं न तैलोदकयोः स्वां छायां मलवत्यादर्शे, न पत्नीं भोजनसमये, न स्त्रियं नग्नां, न किंचन गृहमानां, न बालां, न भ्रष्टं कुञ्जरं, न वा विषमस्थो वृषादियुद्धं, नोन्मत्तं न मत्तमिति ।

मनुः,

नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवतीं जृम्भमाणां च न चासीनां यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे नचाभ्यक्तामनावृताम् ।
न पश्येत्प्रसवन्तीं च तेजस्कामो द्विजोत्तमः ॥ इति ।

मार्कण्डेयपुराणे,

देवतापितृसच्छास्त्रयज्ञसत्यादिनिन्दकैः ।

कृत्वा स्पर्शनमालापं शुद्ध्येतार्कावलोकनात् ॥
अवलोक्य तथोदक्यामन्त्यजं पतितं शठम्।
विधर्मसूतिकाषण्ढविवस्त्रान्त्यावसायिनः ॥
मृतानिर्यातकांश्चैव परदाररतांस्तथा।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥

स्कान्दे,

कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि कुत्सितम्।
शुद्ध्यर्थं देवि द्रष्टव्यास्सोमानलदिवाकराः ॥ इति।

सोमादीनां यथासंभवो विकल्पः। अत्र चार्काद्यवलोकनरूपप्रायश्चित्तविधानादेतेषामप्यनवलोकनीयत्वं सिद्ध्यति। एवमन्येऽपि स्नातकधर्माः स्मृत्यन्तरेषु द्रष्टव्याः, विस्तरभयान्नेहोच्यन्ते। एषां च स्नातकधर्माणां गृहस्थादिसाधारण्यमवगन्तव्यम्। स्नानादारभ्य प्रवृत्तत्वात्।

## अथैषां लोपे प्रायश्चित्तम्।

तत्र मनुः,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम् ॥ इति।

एतच्च स्नातकव्रतानुष्ठानं ब्राह्मणक्षत्रिययोरेव। गौतमेन पूर्वाध्याये प्रक्रान्तौ ब्राह्मणक्षत्रियौ उत्तराध्याये तच्छब्देन परामृश्य स्नातकव्रताभिधानात्।

स्नातकव्रतलोपे तु प्रायश्चित्तं विधीयते।
राजब्राह्मणयोरेव नेतरेषां कथञ्चन ॥
इति स्मृत्यन्तराच्चेति हरदत्तः।

अन्ये तु मन्वादिस्मृतिषु त्रैवर्णिकोपक्रमात्तद्विषयाणीत्याहुः।

अथ क्षत्रियस्य कच्छबन्धः ।

तत्र दीपिका,

त्रीण्युत्तराण्यदितिपौष्णमघाधनिष्ठा
पुष्याश्विनी हिमकरादपि पञ्च भानि ।
एतानि कच्छविधिबन्धनसंमतानि
सौम्यग्रहस्य दिवसे च सिते च पक्षे ॥

अथ छुरिकाबन्धनम् ।

तत्र नारदः,

छुरिकाबन्धनं वक्ष्ये नृपाणां प्राक्करग्रहात् ।
विवाहोक्तेषु मासेषु शुक्लपक्षेऽप्यनस्तगे ॥
जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते ।
मौञ्जीबन्धनऋक्षेषु कुजवर्जितवासरे ॥
व्रतलग्नोदये कर्तुरष्टमोदयवर्जिते ।
धनत्रिकोणगैः सौम्यैः पापैर्भवरिपुत्रिगैः ॥
छुरिकाबन्धनं कार्यमर्चयित्वाऽमरान्पितॄन् ।
अर्चयेच्छुरिकां सम्यक् देवतानां च सन्निधौ ॥
व्रतलग्ने च बध्नीयात्कट्यां लक्षणसंयुताम् । इति ।

इति छुरिकाबन्धः ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजित-
चरणकमल
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज
श्रीमन्महाराजमधुकरसाहसूनु
श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीक-
विकासदिनकर
श्रीवीरसिंहोद्योजित

श्रीहंसपण्डितात्मज

श्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणजगद्दारिद्र्यम-

हागजपारीन्द्रविद्वज्जनजीवातु

श्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयनिबन्धे संस्कारप्रकाशे उपनयनप्रकरणं समाप्तम् ।



THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

NOS. 103, 108, 114, 122, 129, 137.

---

# वीरमित्रोदयः ।

संस्कारप्रकाशस्य पूर्वार्धम् उपनयनप्रकरणान्तम्
महामहोपाध्यायश्रीमित्रमिश्रविरचितम् ।
पर्वतीयनित्यानन्दशर्मणा संशोधितम् ।

VÎRAMITRODAYA;

BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT MITRA MÎSRA;

EDITED BY

Parvatîya Nityânanda Sarmâ.

---

*PUBLISHED AND SOLD BY THE SECRETÂRY*
CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT.
BENARES:
AGENTS: OTTO HARRASSOWITZ, LEIPZIG:
PAṆḌITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON
*Printed by Harikrishna Dâs, Proprietor*
AT THE VIDYÂ-VILAS PRESS,
BENARÈES.

---

## अथ विवाहप्रकरणम् ॥

तत्र विवाहशब्दो वहप्रापणे इत्यस्माद्धातोर्भावे घञि कृते वहनं वाहः विशिष्टो वाहो विवाह इति व्युत्पत्त्या निष्पद्यते । वैशिष्ट्यं च प्रतिग्रहाद्यष्टविधोपायान्यतमोपायेन स्वीकृतायां होमादिसप्तपदनयनान्तकर्मभिस्संस्कृतत्वम् । तथाच विवाहपदार्थो द्विदलः सिध्यति, स्वत्वोत्पादनं संस्काराधानं चेति । तदेतत्स्पष्टीकृतं

**पारस्करेण,** पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीत्युपक्रम्य प्रदक्षिणमग्निं पर्याणीयैके इत्यादिनाऽऽचार्याय वरं ददातीत्यनेन सूत्रेण । आदाय प्रतिगृह्य । गृहीत्वा हस्ते धृत्वा ।

**परिशिष्टेऽपि,**

गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये ।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥ इति ।

परिणयः स्वीकरणम् । एवं च स्वीकृताऽप्यसंस्कृता संस्कृताऽप्यस्वीकृता वा न भार्या भवतीति निश्चीयते । विशिष्टस्य विवाहपदार्थत्वात् । तत्रोत्तरदलार्थं स्पष्टयति

**वसिष्ठः,**

बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

अपहारोऽत्र प्रतिग्रहादिसप्तविधस्वत्वोपायानामुपलक्षणम् ।
पूर्वदलार्थं स्पष्टयति यमः,

नोदकेन विना चार्यं कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

उदकम् उदकपूर्वकं दानम् । अलङ्कृत्य कन्यामुदकपूर्वां दद्यादित्यापस्तम्बस्मरणात् । एतेन ब्राह्मादिपञ्चके नित्यवद्दानश्रव-

णादासुरादित्रये

गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ।

इति नारदेन पाक्षिकदानविधानाच्च दानमपि तृतीयं दलं सिध्यति । वस्तुतस्तु उदकपदं स्वीकारपरम् । अतश्च दलद्वयमेव विवाहपदार्थः । अन्यथा दानस्यापि तत्त्वे आसुरादिष्वव्याप्तिः । ततश्चानुत्पादितस्वत्वायाः कन्यायाः पाणिग्रहणसंस्कारात् पतिः स्वामी स्वत्ववान् । सप्तमे पदे पतित्वं पतिसंस्कारश्च न । ततश्च स्वीकृतायामेव संस्कारोत्पत्तिरित्यर्थः । नन्वत्र भार्यात्वं सप्तमे पदे इति वक्तव्यम् । उद्वहेत द्विजो भार्यामित्यत्र द्वितीयया भार्याया एव संस्कार्यत्वाभिधानात् । न तु पत्युः । तस्य द्विज इति प्रथमया संस्कारकर्तृत्वप्रतीत्यैकस्य कर्तृकर्मभावाविरोधेन संस्कार्यत्वायोगाच्चेति चेत् । नैवम् । पतित्वस्य उद्वाहविधिभाव्यभार्यात्वनान्तरीयकत्वेन तद्बोधकपतित्वशब्दोपादानेऽपि बाधकाभावात् । ननु पतित्वं भार्यात्वानुनिष्पादीति न वक्तव्यम् । विन्देत सदृशं पतिमित्यादिस्वाविधिप्रयुक्तत्वात् । यथोद्वाहेन वरो भार्यां कुर्यादिति विध्यर्थः तथा कन्याऽप्युद्वाहेन वरं कुर्यादिति विध्यर्थस्तुल्य एव । तस्मान्नानुनिष्पादि पतित्वमिति चेत् । सत्यम् । अस्ति विधिः, परं तु नोद्वाहविषयः । उद्वाहस्य मन्त्रसाध्यत्वात् । स्त्रीणां चामन्त्रत्वात् । नच प्रधानविधिबलादेव मन्त्रकल्पनम् । प्रधानविधेरेव वराभ्युपगममात्रविषयत्वेनोद्वाहविषयत्वाभावात् । नचाभ्युपगमो विवाहं लक्षयिष्यति । विधौ लक्षणानङ्गीकारात् । किंच । दात्रभावे ऋतुदर्शनादिनिमित्तकोऽयं विधिः न सर्वकालं कन्याकर्तृकतां पतित्वस्य गमयितुमीष्टे । तस्मात्सिद्धं भार्यात्वानुनिष्पादि पतित्वमिति । वस्तुतस्तु शाखान्तरे तासां मन्त्रविधानाद्विनिगमनाविरहेण च पतित्वस्यैव

भार्यात्वानुनिष्पादकत्वे प्रमाणाभावादुभयथाविधिदर्शनाच्चोभयमपि उद्वाहभाव्यम् । अतश्च पतित्वं सप्तमे पदे इति युक्तमेवोक्तमिति । नचैवं कर्तृकर्मविरोधः । एकस्मिन् वाक्ये उभयोरनुपादानेन शाब्दबोधे तस्याभावात् । वास्तवस्य च कर्तृकर्मभावस्य यजेत स्वर्गकाम इत्यत्र स्वर्गकामे गुणप्रधानभावस्येवाविरोधः । तच्च यथोक्तविधिना सप्तमपदप्रापणात्सिध्यति ।

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥

इति मनुस्मरणात् । यद्वा कन्यायाः पितृगोत्राद्यथोक्तविधिना भर्तृगोत्रप्रापणं विवाहः । तदपि सप्तमपदप्रापणेनैव ।

स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।

इति स्मरणात् । इदं च शाखान्तरविषयम् । आश्वलायनानां तु त्रिरात्रादिव्रतान्ते पितृगोत्रनिवृत्त्या भर्तृगोत्रप्राप्तिर्भवतीति वेदितव्यम् । अत ऊर्ध्वमक्षारालवणाशिनावित्युपक्रम्य त्रिरात्रं द्वादशरात्रं संवत्सरं वैकर्षिर्जायतइत्याश्वलायनस्मरणात् । नियमान्ते एकर्षिकल्पः संपद्यते । पितृगोत्रं विहाय सा पतिगोत्रं भजतइत्यर्थ इति वृत्तिकृद्व्याख्यानाच्च । उद्वाहशब्देऽप्ययमेवार्थः । यद्यपि परिणयनशब्दे परिणीयपरिणीयाश्मानमारोहयतीत्यादिस्मृत्या अग्निप्रदक्षिणीकरणमेवार्थः प्रतीयते तथाप्यङ्गशब्दोऽव्यभिचरिताङ्गसंबन्धिप्रधानमेवाभिधत्ते । यथा वसन्तेवसन्ते ज्योतिषा यजेतेत्यत्र ज्योतिःशब्दो ज्योतिष्टोमम् । एवं पाणिग्रहणादिशब्देऽप्यूह्यम् । तथाचैते शब्दाः यौगिकन्यायेन कर्मनामधेयानि भवन्ति । स च विवाहः पुरुषार्थतया पुरुषं प्रति विधीयते । यथाऽऽह मनुः,

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।

उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ इति ।

अत्र द्विजोपादानम् उक्तविशेषणविशिष्टस्यैव तस्य उद्वाहाधिकारप्रतिपादनार्थम् । न पुनर्द्विजमात्रस्य तदधिकारप्रतिपादनार्थम् । उपनीतस्यासमावृत्तस्य तदधिकारापत्तेः । नापि परिसंख्यार्थम् । शूद्रादीनामविवाहापत्तेः । तस्मात्कर्तृविशेषविशिष्टकर्मविधिरयमभ्युपगन्तव्यः । भार्यामिति भाविसंस्कारनिमित्ता संज्ञा । यूपं तक्षतीत्यादिवत् । ततश्चोद्वाहेन भार्यां कुर्यादित्यर्थः संपद्यते । भार्यादिशब्दस्य संस्कारनिमित्तत्वात् । सवर्णामिति मुख्यत्वप्रतिपादनार्थम् । नासवर्णपरिसंख्यार्थम् । तदुद्वाहस्याप्यभ्यनुज्ञानात् ।

याज्ञवल्क्योऽपि,

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । इति ।

अविप्लुतब्रह्मचर्य इति विशेषणं ब्रह्मचर्यस्खलने कृतप्रायश्चित्तस्यैव विवाहाधिकार इति बोधयितुम् । अन्यथा ऽनधिकारिणा कृतेनापि विवाहेन भार्यात्वानुत्पत्तेः ।

व्यासोऽपि,

स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम् । इति ।

दक्षोऽपि,

वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्त्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत् ॥ इति ।

अथ उद्वाहस्य कुलपरीक्षापूर्वकत्वात्कुलपरीक्षा तावन्निरूप्यते ।

तत्राश्वलायनः, कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तादिति ।

अत्राग्रइति वचनं समस्तेषु वधूवरगुणेषु कुलस्य प्राधान्यं बोधयितुम् ।

तथाच विष्णुः,

ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः ।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम् ॥ इति ।

ये मातृतः पञ्चभिः पुरुषैः पितृतश्च पञ्चभिः पुरुषैः प्रसिद्धाः विद्याचारादिसंपन्नास्तेषां कुलं ग्राह्यमिति शेषः । यथोक्तं पुरस्ताद् दशमे येषामुभयतो नाब्राह्मण्यं पितृत एके इत्यादिना । यद्यप्येतत् बुद्धिमते कन्यां प्रयच्छेदिति वाक्यशेषाद्वरकुलविषयमिति प्रतीयते, तथाप्यपेक्षातौल्येन सामर्थ्यात्कन्याकुलविषयमपीति गम्यते ।

तथाच याज्ञवल्क्यः,

लक्षण्यां स्त्रियमुद्वहेदित्युपक्रम्य
दशपूरुषविख्याताद् श्रोत्रियाणां महाकुलात् । इत्याह ।

मनुरपि,

उत्तमैरुत्तमो नित्यं संबन्धानाचरेत्सदा ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ इति ।

उत्तमानाह स एव,

विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः ।
अविप्लुतब्रह्मचर्या महाकुलसमन्विताः ॥
महाकुले ये संबद्धा महत्त्वे च व्यवस्थिताः ।
संतुष्टास्सज्जनहितास्साधवः समदर्शिनः ॥
लोभरागद्वेषामर्षमानमोहादिवर्जिताः ।
अक्रोधनाः सुप्रसादाः कार्यास्संबन्धिनः सदा ॥

अधमानाह स एव,

ये स्तेनाः पिशुनाः क्लीबा ये च नास्तिकवृत्तयः ।

विकर्मणा च जीवन्तो विकृताकृतयस्तथा ॥
प्रबद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा ।
ब्रह्मस्वादननित्याश्च कदर्याश्च विगर्हिताः ॥
अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा ।
पतिघ्न्यश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत् ॥ इति ।

याज्ञवल्क्यः,

स्फीतादपि न सञ्चारिरोगदोषसमन्वितात् । इति ।

मनुरपि,

महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ इति ॥

हीनक्रियं यागादिक्रियारहितम् । निष्पुरुषं स्त्रीमात्रशेषम् । निश्छन्दो वेदाध्ययनवर्जितम् । शेषं प्रसिद्धम् ।

यमोऽपि,

चतुर्दश कुलानीमान्यविवाह्यानि निर्दिशेत् ।
अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत् ॥
अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् ।
हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च ॥
श्वित्रिकुष्ठिकुलादीनां कुर्याद्धि परिवर्जनम् ।
सदाकामकुलं वर्ज्यमागमानां च यत्कुलम् ॥
अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत् । इति ।

अनार्षेयम् अवरणीयार्षेयं चतुरार्षेयादि । न चतुरो वृणीते न पञ्चातिवृणीते इति श्रुतेः । इदं चेत्थमेव व्याख्येयम् । अन्यथा गोत्राणाम् ऋष्यपत्यत्वेनानार्षेयत्वासंभवात् । प्रवररहितगोत्रासंभ-

वाच्च। अनार्षेयमविज्ञातप्रवरमिति चन्द्रिकाकारः। ब्राह्मणोपादानं क्षत्रियादीनां स्वभावतोऽनार्षेयत्वेऽप्यपरिहारार्थम्। ऋत्विजां कुलपरम्परावृत्तानाम्। अत्युच्चमतिदीर्घपुरुषम्। अतिह्रस्वम् अतिह्रस्वपुरुषम्। अतिवर्णं वर्णमतिक्रान्तम् अतिगौरातिकृष्णादि। सदाकामाः कामप्रधानाः तेषां कुलम्। आगमानां श्रौतस्मार्त्तकर्मपरित्यागेन केवलागमविहितकर्मानुष्ठातॄणां, वामागमवर्त्तिनां वा। हीनक्रियादिकुलपरिहारे प्रयोजनमाह

हारीतः, कुलानुरूपाः प्रजाः सम्भवन्तीति।

व्यासोऽपि,

मातुलान् भजते पुत्रः कन्यका भजते पितॄन्।
यथाशीला भवेन्माता तथाशीला भवेन्नृप॥

मनुरपि,

पितुर्वा भजते शीलं मातुर्वोभयमेव वा।
न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति॥ इति।

विष्णुः,

अश्वं पित्रा परीक्षेत मात्रा कन्यां परीक्षयेत्।
तृणाद् भूमिं परीक्षेत आचारेण कुलं तथा॥

कुलापकर्षणनिमित्तान्याह

मनुः,

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः॥ इति।

कुलोत्कर्षनिमित्तमाह स एव,

मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ इति ।

### अथ गोत्रप्रवरपरीक्षा ।

तत्र शातातपः,

आदौ गोत्रविशुद्धिः स्यात्ततस्सप्तमपञ्चमम् ।
राशिकूटं ततश्चैव त्रेधासम्बन्धलक्षणम् ॥ इति ।

गोत्रविशुद्धिरसमानगोत्रत्वेन । असगोत्रा च या पितुरिति मनुस्मरणात् । तस्याश्चादावित्यनेनावश्यकत्वमुक्तम् । तदभावेऽपत्यस्य चण्डालत्वस्मरणात् ।

तथाच बौधायनः,

आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः ।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥ इति ।

गोत्रमिति प्रवरस्याप्युपलक्षणम् । असमानार्षगोत्रजामिति याज्ञवल्क्यस्मरणात् । आर्षं च गोत्रं चार्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रः, न समानार्षगोत्रः असमानार्षगोत्रः, असमानार्षगोत्राज्जाता असमानार्षगोत्रजा । ततश्च गोत्रप्रवरयोः पृथक्पृथक् कन्यापर्युदासे निमित्तत्वं सिध्यति ।

तथाच गौतमः, असमानप्रवरैर्विवाह इति प्रवरमात्रस्यैव पर्युदासनिमित्ततां प्रकटयति । ततश्च गोत्रभेदेऽपि प्रवरैक्ये न विवाहः । तद्यथा, यस्कवाधूलमौनमौकशार्कराक्षिदार्ष्टिसावर्णिशालङ्कायनदैवत्यायनानां गोत्राणां भेदेऽपि भार्गववैतहव्यसावेतसेति प्रवरैक्ये । तथा प्रवरभेदेऽपि गोत्रैक्ये । तद्यथा, तित्तिरिकपिभूमिस्वन्दितखण्डितानां गोत्राणामाङ्गिरससैन्यगार्ग्येति आङ्गिरास्तित्तिरिः कपिभूमिरितिचेति गोत्रैक्येऽपि वैकल्पिकप्रवरभेदे ।

यत्तु हरितुकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति मान्धात्रम्बरीषयौवनाश्वेति वैकल्पिकप्रवरभेदादसमानार्षत्वेन विवाहप्रसक्तौ गोत्रैक्येन तन्निषेध इत्याधुनिकैरुदाहृतम् । तन्न सुन्दरम् । आङ्गिरसमान्धात्रोर्विकल्पेन भेदेऽपि अम्बरीषयौवनाश्वयोर्द्वयोरभेदेन विवाहाप्रसक्त्या प्रकृतोदाहरणत्वासम्भवात् ।

तथाच प्रवरनिर्णयकाराः स्मरन्ति,

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥ इति ।

यत्तु समानम् आर्षं यस्य तत्समानार्षं, समानार्षं च तद्गोत्रं च समानार्षगोत्रं, समानार्षगोत्रे जाता समानार्षगोत्रजा, न समानार्षगोत्रजा असमानार्षगोत्रजेति प्राचां समासकरणम् । तन्न सुन्दरम् । विशिष्टनिषेधे गोत्रैक्येऽपि प्रवरभेदे विवाहप्रसङ्गात् । यथा त्तित्तिरिकपिभूम्याद्युक्तोदाहरणे । नचेष्टापत्तिः । "न सगोत्राय दुहितरं प्रयच्छेदिति" गौतमेन गोत्रमात्रस्यैव पृथक् निषेधात् ।

## तत्र गोत्रलक्षणम् ।

अगस्त्याष्टमसप्तर्ष्यन्यतमापत्यं साक्षात्परम्पराजातं यत्तद्गोत्रमुच्यते ।

तथाच स्मृतिः,

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते । इति ।

गोत्रकारिणो गोत्रप्रवर्त्तका इत्यर्थः । यत्प्रवर्त्तकतैषां तानि कानि गोत्राणीत्यत आह, एतेषां यान्यपत्यानीति । अत्र गोत्रभूतमपत्यमनन्तरमपि, न तु पाणिनेरिव पारिभाषिकं पौत्रप्रभृत्येव ।

त्वे प्रमाणाभावात्। नच कृत्रिमाकृत्रिमन्यायस्यात्र प्रसङ्गोऽस्ति।
त्रिमपरिभाषायास्तथाविधाया बौधायनाश्वलायनादीनां केषा-
ददर्शनात्। सत्त्वे वा पाणिनेरिवापत्याधिकाराभावेन तस्य नि-
नाग्रहणात्। किञ्च व्याकरणेऽप्यपत्याधिकारस्यासत्त्वे लौकि-
ोत्रस्यापत्यमात्रस्य ग्रहणमेव युक्तम्। अपत्याधिकारादन्यत्र
किकस्यैव गोत्रस्य ग्रहणमिति भाष्यकैयटपदमञ्जर्यादिषु स्थित-
त्। दृश्यतेऽपि तत्क्वचित्। अत्र गोत्रभूता एव केचित्प्रवरास्ते च
यार्षेयशब्दवाच्या इति ऋषिभूतं सर्वं तदिति न भ्रमितव्यम्।
तु वंशपरम्पराप्रसिद्धमेव। यच्च सूत्रादिषु गोत्रपरिगणनं
पि प्रसिद्धिमूलकमेव। एतदेवाभिप्रेत्य निबन्धेषु गोत्रम् ऋषि-
परम्परेति व्याख्यातम्।

अत्र केचिदेवं व्याचक्षते। गोत्रशब्दः सम्बन्धिशब्द इति
केषां गोत्रमिति जिज्ञासायामगस्त्याष्टमसप्तर्षीणां यान्यप-
नि तेषां गोत्रमेते सप्त ऋषय इति। एवं च भरद्वाजादिषु शि-
ां गोत्रव्यवहारोऽप्युपपद्यते भरद्वाजगोत्रा वयं वसिष्ठगोत्रा
मित्यादि। तन्न। सन्दर्भविरोधात्। न हि घट इति वक्तव्ये अ-
ः इति विद्वांसो वदन्ति। तेषां च गोत्रत्वे गोत्राण्यष्टसंख्याका-
स्युः। ततश्च

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च।

इति सूत्रविरोधः। कथं तर्हि विश्वामित्रादिषु गोत्रव्यवहारः।
ोपात्। सर्वेषां तेषां गणानां परस्परं विवाहो नास्तीत्यवान्तर-
षु गोत्रत्वाविवक्षायां प्रयोजनाभावात्। यत्र तु प्रयोजनमस्ति
ष्वेव गोत्रविवक्षा यथा जमदग्निव्यतिरिक्तभृगुगणेषु केवला-
ोगणेषु च केषु चित्। अन्यथा तत्र गोत्रप्रवरसाम्याभावाद्वि-
ः प्रसज्येत। तस्मादगस्त्याष्टमसप्तर्ष्यपत्यमेव गोत्रम्।

तत्केषामिति जिज्ञासायां केचिदेवमाहुः । पूर्वेषां परेषां चेति । तेषामुत्पादकत्वेनोत्पाद्यत्वेन चोपस्थितत्वात् । एवं च वत्सगोत्रा वयमित्यादिव्यवहारो बहुव्रीहिणा भविष्यति । वत्सादिषु तु जमदग्निगोत्रा इत्यादिव्यवहारः षष्ठीतत्पुरुषेण । गोत्रशब्दः पुल्लिङ्गोऽपीति । तदसत् । जमदग्निगोत्रा इत्यत्र गोत्रपदस्य सप्तर्ष्यपत्ये शक्तत्वेन प्रतिसम्बन्ध्यपेक्षायां सप्तर्षिभिरेव शान्तत्वाज्जमदग्नेस्तत्र प्रतिसम्बन्धित्वेनान्वयायोगात् । गोत्रशब्दे पुल्लिङ्गस्यानुशासनाभावाच्च । कथं तर्हि जमदग्निगोत्रत्वादिव्यवहारो वत्सादिषु । इदानींतनेष्विव बहुव्रीहिणा भविष्यति । अनादौ हि संसारे जमदग्नेरपि पूर्वपूर्वजमदग्न्यपत्यत्वम् । तथाच जमदग्निर्गोत्रं सप्तर्ष्यपत्यं जनकतया येषामिति व्युत्पत्त्या वत्सादिष्वपि जमदग्निगोत्रसम्बन्धो निर्बाधः । तस्मादगस्त्याष्टमसप्तर्ष्यपत्यतदपत्यभूतानां परेषामेव गोत्रम् । तथापि जमदग्न्यपत्यव्यतिरिक्तभृगुगणेषु केवलाङ्गिरोगणेषु च कथं गोत्रव्यवहारः । तेषामगस्त्याष्टमसप्तर्ष्यपत्यत्वाभावात् । किञ्च

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।

तावत्समानगोत्रत्वमित्युक्ते एक एव अगस्त्याष्टमसप्तर्ष्यन्यतम एव तिसृभिः कोटिसंख्याभिः संख्यातानां वक्ष्यमाणानां गोत्राणां मध्ये यावत्संख्याकानां गोत्राणाम् एकद्वित्रिपञ्चसंख्यान्यतमसंख्याकेषु प्रवरेष्वनुवर्त्तते तावतां गोत्राणां तत्समानगोत्रत्वम् । तत्रान्यत्र भृग्वङ्गिरसां गणादिति पर्युदासः श्रूयते, स कथं स्यात् । तेषु गोत्रसामान्याभावे तद्वाच्यस्य समानगोत्रत्वस्य सुतरामप्रसक्तेः । न चायं पर्युदासो जामदग्न्यभृगुगणगौतमभरद्वाजाङ्गिरोगणविषय एव स्यात्, सप्तर्ष्यपत्यत्वेन तेषां गोत्रत्वसम्भवात् । समानगोत्रता चास्ति अन्यगोत्रवदेकमात्रप्रवरानुवृत्त्याऽपि क्रियमाणतया वेति

वाच्यम्। एवं हि तत्र प्रक्रियाऽस्ति, त्रिपञ्चार्षेयाणां द्वित्रिप्रवरसाम्ये एव समानगोत्रत्वम्। एवं सति क्वचिद् द्वित्रिप्रवरसाम्याभावेन समानगोत्रत्वाभावे प्रवरसाम्यमेवाविवाहप्रयोजकमङ्गीकर्त्तव्यम् । प्रवराणामपि त्रिपञ्चार्षेयाणां द्वित्रिसंख्यानामेव साम्यं तथा वाच्यं, न त्वितरवदेकमात्रस्यापि ।

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

इति वचनात् । एवं चापस्तम्बादिसूत्रानुरोधात्केषुचित् त्र्यार्षेयेषु जमदग्निगणेषु पञ्चार्षेयेषु गौतमभरद्वाजगणेषु केषुचित् भृग्वङ्गिरोगणेषु द्वित्रिप्रवरसाम्याभावात्सगोत्रत्वसप्रवरत्वयोर्द्वयोरप्यभावाद्विवाहप्रसङ्गः । अस्त्विति चेन्, न। गौतमानां सर्वेषां भरद्वाजानां सर्वेषां वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाह इति-बौधायनेन निषिद्धत्वात् । तस्मात्तेषु सगोत्रत्वादेव अविवाहः । स्मृत्यर्थसारादिभिरप्येवमेवोक्तम्। तस्मादन्यत्रभृग्वाङ्गिरसादिति पर्युदासो जामदग्न्यगौतमभरद्वाजभृग्वङ्गिरोगणविषय इति पूर्वोक्तानुपपत्तिस्तदवस्थैव ।

अत्राश्वलायनसूत्रवृत्तिकाराः समादधुः । जमदग्निगौतमभरद्वाजानां भृग्वङ्गिरोगणानां पूर्वापरीभूतगोत्रमध्यपाठाद्गोत्रत्वात्तत्साहश्यादासन्नत्वेन विवेकाग्रहात्तद्भिन्नानामपि तद्गणानां गोत्रत्वभ्रान्तिर्भवति । तथैवच मित्रयुगोत्रा वयं मुद्गलगोत्रा वयमित्येवमादिप्रयोगोऽपि भवति । एवंविधभ्रान्तिरूपां प्रसक्तिमादायायं पर्युदासः। यथा श्राद्धे कुण्डगोलकादीनां प्रतिषेधः ।

स्मृतिचन्द्रिकायां तु गोत्रशब्दः प्रवरपरतया व्याख्यातः । युक्ता च प्रवरलक्षणा गोत्रशब्दे । प्रवरभूतानाम् ऋषीणां गोत्रापत्यत्वात् । दृष्टा च । यावतोऽनन्तरिताः समानगोत्रास्तावतां स-

कादित्याश्वलायनसूत्रे समानगोत्राः समानप्रवरा इति व्याख्यानात् । युक्तं चैतद्व्याख्यानम् । प्रवराणां पूर्वमुपक्रमेण तत्साम्यस्यैवावगमात् । गोत्रलक्षणस्य त्वन्तेऽभिधास्यमानत्वात् । अग्रे च भृग्वङ्गिरसो भिन्नाविवाहं कुर्वते नचेदित्यादिना समानप्रवरत्वविषयतयैव पर्युदासाभिप्रायप्रकाशनात् । अत्र पक्षे एक एवेत्यत्र नागस्त्याष्टमसप्तर्ष्यन्यतमस्यैव ग्रहणं, किं तु प्रवरऋषिमात्रस्य । व्रियमाणतया वापीत्यभियुक्तगोत्रलक्षणे तु तस्यैवेति गमयितव्यम् । अग्रे चेदं स्पष्टयिष्यते । यत्तु न पर्युदासस्य प्राप्त्यपेक्षा यथा प्रतिषेधस्य । अन्यथा "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यादौ पर्युदासेऽपि विकल्पः प्राप्नोति । तन्निवृत्तये "नार्षेयं वृणीते" "नानुयाजेषु" इत्यादिषु पर्युदासे लक्षणाऽङ्गीकारो न स्यादिति । तन्न मनोरमम् । निषेधे प्रापकस्य निवर्त्तकस्य च वाक्यस्य भेदात् अनुवादार्थं वाक्यान्तरकृता निश्चयरूपा प्राप्तिर्यथाऽपेक्षिता न तथा पर्युदासे इति यद्यपि, तथापि यदीदं विशेषणं न स्यात्तदा प्राप्नुयादिति सम्भावनारूपा प्राप्तिर्वाच्यैव । नच तादृश्यप्यत्र प्राप्तिरस्ति ।

अत्र गोत्राणां समानत्वं क्वचिदेकत्वं क्वचित्सादृश्यम् । तत्राद्यम् एकैकगणान्तःपातिनां गोत्राणाम् । यथा मूलभूतस्य वत्सादेः प्रसिद्धस्य गोत्रस्यैकत्वम् । गणात्रान्तरऋषीणामपि यत्र गोत्रत्वं तत्रापि तेषां स्वपरम्परां प्रत्येकत्वमप्रतिहतमेव । द्वितीयं तु गोत्ररूपाणामृषीणां भिन्नभिन्नगणनिविष्टानां तन्मूलभूतानामवान्तराणां वा । तदप्यगस्त्याष्टमसप्तर्ष्यन्यतमैकऋषेरपत्यत्वरूपयाऽनुवृत्त्या । तदनुवृत्तिज्ञानं च बहुधा प्रवरान्तर्भावादेव । सूत्रादिगतानुक्रमणेषु तु क्वचित्तथाविधपूर्वापरीभूतगोत्रपाठान्तर्भावात् ।

**तथाचोक्तं,**

व्रियमाणतया वापि सत्तया वाऽनुवर्त्तनम् ।

एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥ इति ।

तद्गोत्रं तस्य ऋषेरपत्यं कथ्यते इति। तेन रूपेण तेषां गोत्राणां समानत्वमित्यर्थः। सत्तयेति वदता क्रियमाणतयेत्यस्य बौधायनोक्तैतन्मूलभूते एक एव ऋषिरिति लक्षणे प्रवरोऽन्वित्यस्य चोपलक्षणत्वेन यथाकथञ्चिदेकस्यानुवर्त्तनं सूचितं भवति । उत्पाद्योत्पादकभावः सत्ता । भू सत्तायामिति स्मृतेः । क्वचित्तु स्वतयेति पाठः । तत्रापि यमधिकृत्य ये पठितास्ते तस्य स्वे आत्मीया इत्यक्षरानुसारेण तत्रैव पर्यवस्यति। एतदुक्तं भवति। यथा पारिभाषिकं गोत्रं तथा समानगोत्रत्वमपि । इतरथा तस्यानिर्वचनात् ।

तथाहि । यदि समानं गोत्रं येषामिति व्युत्पत्तिस्तदा येषु गोत्रभूतस्य वत्सादेरनुवृत्तिस्तेषामेव वात्स्यमार्कण्डेयादीनां स्वे-स्वे गणे प्रत्येकमन्योन्यं वा सगोत्रता स्याद् न तु परस्परं वत्सविदयोः। नच क्वचिदेकगोत्रत्वं क्वचित्सदृशगोत्रत्वं समानगोत्रत्वमित्यननुगम इति वाच्यम् । अगस्त्याष्टमसप्तर्ष्यन्यतमापत्यरूपऋषिगोत्रकत्वस्यानुगतत्वात् ।

ननु सूतकादावेकगोत्रत्वेनैव शिष्टानां समानगोत्रत्वव्यवहारादत्रापि तदेवास्तु । नचैवं भिन्नभिन्नगणनिविष्टानामेकगोत्राभावेन समानगोत्रत्वाभावात्परस्परं विवाहः प्रसज्येत । एकैकगणनिविष्टानामपि सप्तर्ष्यपत्यभिन्नभृग्वङ्गिरोगणानां गणप्रवर्त्तकस्य ऋषेरगस्त्याष्टमसप्तर्ष्यपत्यबाह्यत्वेन गोत्रत्वाभावात्सगोत्रत्वाभावेऽपि समानप्रवरत्वादेव परस्परं यथाऽविवाहस्तथाऽत्रापि भविष्यति ।

अत्र वदन्ति। यत्र न गोत्रैक्यं न वा प्रवरैक्यं तथाविधान्यपि कानिचिद् गोत्राणि सन्ति । यथा भरद्वाजगणेषु केषुचिच्च विश्वामित्रगणेषु, नच तत्र विवाहः, तदर्थं सदृशगोत्रत्वमपि समा-

नगोत्रत्वं वाच्यम्। अन्यथा तत्र विवाहः स्यात् । नच तत्र समानप्रवरत्वादेव न भविष्यति, यतः सप्तर्षेर्विश्वामित्रस्य सर्वेषु विश्वामित्रगणेषु भरद्वाजस्य च कपिव्यतिरिक्तभरद्वाजगणेषु च त्रियमाणतया त्र्यादिप्रवरसंख्यापूरकतया च प्रवरत्वस्याप्यावश्यकत्वादिति वाच्यम् ।

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।

तावत्समानगोत्रत्वमिति समानगोत्रत्वलक्षणं बौधायनेन कृतम् । तच्चागस्त्याष्टमसप्तर्षीनधिकृत्य । तत्प्रयोजनं च अगस्त्याष्टमसप्तर्ष्यनुवृत्तिरत्र यथा स्यादिति समानगोत्रलक्षणस्यैतद्घटितत्वेनाभिधानात्समानप्रवरलक्षणेऽगस्त्याष्टमसप्तर्षिभिन्नतदपत्यरूपऋषेरेव त्रियमाणत्वेनानुवृत्तिरवगम्यते । तथाचाविवाहहेतुत्वेन ऋषिभिर्निबन्धृभिर्वा गोत्रेण सङ्कीर्णमसङ्कीर्णं वा समानप्रवरत्वं तत्रैवोच्यते यत्रैकादिसंख्यस्यागस्त्याष्टमसप्तर्ष्यतिरिक्तऋषेरेव त्रियमाणत्वेनानुवृत्तिर्दृश्यते । एतदभिप्रायेणैव यद्यपि विश्वामित्रगणमध्ये सर्वत्र विश्वामित्रानुवृत्तिरस्ति तथापि तेष्वेव केषु चिद्गणेषु आश्वलायनसूत्रे माधुच्छन्दसप्रवरानुवृत्तिदर्शनात्कचिदेव प्रवरैक्यमविवाहकारणत्वेन स्मृत्यर्थसारे उक्तम् । ननु महर्षेर्यत्र सत्तयैवानुवृत्तिस्तत्र तस्य न प्रवरत्वमिति स्वापत्यभूतेषु तस्याविवाहप्रयोजकता गोत्रनिमित्तैव, यत्र पुनर्त्रियमाणत्वं तत्र प्रवरनिमित्तैवेति चेत् । मैवम् । यद्यपि महर्षेस्तत्र प्रवरत्वं नास्ति तथापि तदपत्यानामवान्तरऋषीणां त्रियमाणत्वेन प्रवरत्वाङ्गीकारात् तत्र तद्भेदादेवाविवाहस्य निष्पत्तेस्तत्स्थले सगोत्रताया अविवाहनिमित्ततैव न स्यात् । न च महर्षेः सत्तयाऽनुवृत्तावपि न त्रियमाणैक्यमित्येवंविधो विषयः कश्चिदस्ति । किञ्च महर्षेः सत्तामात्रानुवृत्त्या सगोत्रत्वे उच्यमाने भिन्नगणान्तःपातिभिस्तस्य

विवाहः प्रसज्येत । तस्य सत्तयाऽपि तत्रानुवृत्त्यभावेन गोत्रत्वाभावात् । अतः सदृशगोत्रत्वं सगोत्रत्वमवश्यं वाच्यमेव । तदयं निर्गलितोऽर्थः । यत्र महर्षिर्व्रियमाणस्तत्र तस्य वरणेनानुवृत्त्या प्रवरत्वात्प्रवरसंख्यापूरकत्वाच्च स्वापत्यभूतेषु ऋषिषु झटिति साम्यस्योपस्थितत्वादविवाहनिमित्तं सगोत्रत्वमेव, सप्तर्षिभिन्नस्य वरणानुवृत्तौ सप्रवरत्वमपीति ।

एवं गोत्रस्वरूपं समानगोत्रत्वं च निरूपितम् । इदानीं प्रवरस्वरूपं तत्समानत्वं च निरूप्यते ।

तत्र प्रवरान्व्याख्यास्यामः, समानप्रवराः, त्र्यार्षेयः प्रवरः, पञ्चार्षेयः प्रवर इत्यादिषु प्रवरशब्दः प्रव्रियतइति कर्मव्युत्पन्नः । प्रवरणं प्रवर इति भावव्युत्पन्न इति भार्गवच्यावनाप्नवानौर्वजामदग्न्येति जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति तद्धितवत्प्रत्ययान्तप्रयोगेणाग्नेः प्रकर्षेण वरणानि । प्रार्थनापर्यायः प्रवरशब्दो भावव्युत्पन्न इति प्रवरमञ्जरीकारः । ननु गोत्रत्वेन परिगणिताः केचिदृषय एव गोत्रसम्बन्धिनः पितृपुत्रपौत्रक्रमेणावस्थिताः प्रवरास्तथैव दर्शपूर्णमासाङ्गभूतहोत्रध्वर्य्वादिवरणविधानाल्लिङ्गादवसीयते ।

तथा मत्स्यपुराणेऽपि,

भृगुः पुलोम्नश्च सुतां दिव्यां भार्यामविन्दत ।
यस्यामस्मात्ततोऽपत्यभूता द्वादशदेवताः ॥
पौलोम्यजनयद्विप्रान् देवानां तु कनीयसः ।
च्यवनं तु महाभागमप्नवानं तथाऽप्यसौ ॥
आप्नवानात्मजश्चैव जमदग्निस्तदात्मजः ।
इति तदपत्यभूता ऋषय इत्युक्तम् ।

तद्गोत्रप्रवरान्वक्ष्ये इत्युपक्रम्य च्यवनादीनुक्त्वा इत्येते प्रव-

रा मता इत्युपसंहृतम् ।

तथा विष्णुपुराणेऽपि, पुरुवंशानुकीर्त्तने दुष्यन्ताच्चक्रवर्ती भरतो नाम बभूवेत्युपक्रम्य यन्नामानो यत्क्रमका यावन्तश्च भरद्वाजानां प्रवरर्षयः प्रवरसमाम्नाये श्रुतास्तन्नामानस्तत्क्रमकास्तावन्तश्च पराशरेणोपदिष्टा वंशानुपूर्व्या। तत्र प्रथमोऽङ्गिरास्ततो बृहस्पतिः ततो भरद्वाजस्तत आमहव्यस्तत उरुक्षयस्ततः कपिरुत्पन्न इति । तस्माद् गोत्रीभूतानामेव वंश्याः केचिदृषयः प्रवराः कर्मकरणव्युत्पत्त्या उक्ता इति चेत् । सत्यमुक्ताः, परं तु विशेषणविधया न विशेष्यतया । तथाहि, होत्रा पूर्वमग्ने महाँ असि ब्राह्मण भारतेत्युक्त्वा यजमानार्षेयवरणं भार्गवच्यावनादिशब्दसहितं क्रियते । पश्चाद्देवेद्धो मन्विद्ध इत्यादीनि निवित्पदानि प्रयुज्यन्ते । तत्र चाग्निरेव पूर्वोत्तरपदैः प्रकाश्यते । तन्मध्यपतितैर्भार्गवादिपदैरपि सम्बुद्ध्यन्तैरग्निरेवावश्यं वक्तव्यः पूर्वोत्तरपदान्वयार्थम् । कथमित्यपेक्षायां भार्गवादिना यजमानेनोत्पादितत्वात्तत्साहश्याद्वोपचारात्तैः पदैः सम्बोध्यते । तस्य चैतत्प्रयोजनं, यथा देवानुद्दिश्य भार्गवादिभिस्त्वयि प्रक्षिप्तं हविस्त्वया हव्यवाहनाम्ना देवानामुह्यते, स्वीक्रियते च तद्देवैः, तथा तदपत्यभूतेन भोज्यान्नेन तव चोत्पादकत्वेन मातृपितृरूपेणातएव त्वयि प्रक्षेपयोग्येनानेनापि यजमानेन प्रक्षिप्तं त्वयि हविस्त्वया देवेभ्यो वोढव्यं तैश्चाङ्गीकर्त्तव्यमित्येवं होत्रा हवनीयोऽग्निः प्रार्थ्यते प्रार्थ्यते । एवमध्वर्युप्रवरेऽपि स एवाहवनीयोऽग्निः प्रार्थ्यते । एवं चात्राग्निरेव प्रार्थनारूपवरणविशेष्यः ऋषयस्तु तत्र विशेषणभूता एव ।

अध्वर्युप्रवरमन्त्रश्चाग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवत् इत्येतदनन्तरं यथायोग्यं प्रवरानुक्त्वा ब्रह्मण्वदाच वक्षत् ब्राह्मणः अस्य यज्ञस्य प्रावितार इत्युक्त्वा यथायोग्यममुक-

शर्मा मानुष इति ।

अस्यार्थः । भो अस्य यज्ञस्य भावितारो ब्रह्मप्रभृतयो ब्राह्मणा यथा अग्निर्दैवसंबन्धी होता चिकितमनुभरतानामेतद्यजमानपूर्वजानां जमदग्न्यादीनां ब्रह्मणश्च देवताः यजमानाश्चाधिकारिणो विद्वान्देवानिन्द्रादीन् यक्षच्च तथाऽमुकशर्माऽयं मानुपोऽपि होता तदपत्यत्वेन तत्सदृशस्य यजमानस्यापि यज्ञे देवहोत्रग्न्याधिष्ठानबलेनैव विद्वान्यजतु आवहतु चेति मानुषहोत्रधिष्ठितो गिरेवानेन प्रकारेण प्रार्थ्यते । अत एवावाहनमन्त्रे होताऽग्नेरेवावाहने सत्कारं करोति । तथाचात्राप्यग्नेरेष प्राधान्येन वरणम् ।

नन्वेवं बहुसूत्रविरोधः प्रसज्यते । तथाहि । इत एवोर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाञ्चो होता वृणीत इति आपस्तम्बः । अथातोऽत ऊर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाञ्चो होतेत्येष एवोभयोः सर्वत्रोदेश इति बौधायनोक्तेः । अस्यार्थः । पुत्रः पिता पितामहः प्रपितामह इत्युत्पाद्योत्पादकतयाऽवस्थितेषु प्रवरसङ्कीर्त्तनमियन्त एव कीर्त्तनीया इति नियमाय तत्र क्रमविशेष उच्यते इतः प्रत्यक्षाद्यजमानादूर्ध्वानारोहेणावस्थितान् जमदग्निवदूर्ववदप्नवानवच्च्यवनवद् भृगुवदित्येवमध्वर्युर्वृणीते होता तु अदसो विप्रकृष्टार्थत्वादमुतो यजमानविप्रकृष्टाद् भृग्वादितः प्रभृति अर्वाञ्चोऽवरोहेण भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्येव वृणीतइति । तत्रापि होता तद्धितवदामन्त्रितवच्चेति कातीयसूत्रात्तद्धितान्तसम्बुद्ध्यन्तेन होतुर्वरणम् । अध्वर्योस्तु वत्यन्तेनेति । नचौर्ववदित्यादिर्वतुपो निर्देशः । तथात्वे जमदग्निवदित्यादाविकारान्ते व्रीहिमदितिवद्वादेशो न स्यात् । मवर्णावर्णान्तान्मवर्णावर्णोपधादेव "मादुपधायाश्च मतोर्वोऽयवादिभ्य" इति वादेशस्य विधानात् । एवं भृगुवदित्यादावपि । अत्र सर्वत्र मन्त्रदृशामेव एकद्वित्रिपञ्चसंख्यानामृषीणां वरणकर्मता

प्रतीयते । तेषां द्वितीयानिर्दिष्टत्वात् । नाग्नेराहवनीयस्य । अग्निर्देवो दैव्यो होता देवान्यक्षदित्यत्रापि होतुरेव वरणकर्मता प्रतीयते नाग्नेः । किञ्च यद्यपि प्रवरपदानां पूर्वोत्तरपदैकवाक्यतया स्वसामर्थ्येन चाग्न्यभिधायित्वं प्रतीयते तथापि यजमानस्यार्षेयान्वृणीते इत्युक्त्वा मन्त्रकृतो वृणीते यस्य यावन्तः स्युरिति श्रुतौ स्वार्थे तद्धितमङ्गीकृत्य गोत्रभूतऋषेरिमे आर्षेया इति व्युत्पत्त्या सप्तर्ष्यपत्यत्वेन वा ऋषीणामेव वरणकर्मत्वं श्रुतितः प्रतीयते । तदनुरोधेन प्रवरपदानामपि तत्परत्वमेव कथञ्चित्कल्प्यमिति चेत् ।

अत्र प्रवरमञ्जरीकारः । सर्वैः सूत्रकारैर्वृणीतइत्युक्त्वा केन प्रकारेणेति प्रकारचिन्तायामग्निप्रकाशकमन्त्रमध्ये तद्धितवत्प्रत्ययान्ततया तत्प्रकार उक्तः । नच तत्र ऋषीणां प्रवरकर्मत्वं प्राधान्येनावगम्यते किं तु गुणभावेन । अपत्यत्वसादृश्यनिरूपकत्वात्, पूर्वोत्तरपदैकवाक्यत्वस्यावश्यम्भावाच्च । अग्निप्रकाशनार्थसामिधेनीमन्त्रलिङ्गात्प्रवरविधायकब्राह्मणेभ्यश्चायमर्थोऽवगम्यते । तत्राग्निं दूतं वृणीमहे वृणीध्वं हव्यवाहनमित्यादिभिर्मन्त्रलिङ्गैराहवनीयस्याग्नेर्वरणकर्मत्वमुच्यते । द्वितीयानिर्देशात् । तथा दर्शपूर्णमासयोः प्रवरविधिपरं तैत्तिरीयब्राह्मणं " वृणीध्वं हव्यवाहम् " इत्यस्यैतमेवार्थमाह । त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणां तएतर्ह्याशंसन्ते मां वरिष्यन्ते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीते आर्षेयं वृणीते बन्धोरेव नैत्यथो सन्तत्याइति । अत्राप्याहवनीयाग्निरेव वरणकर्म । देवानां यो हव्यवाहनस्तमार्षेयमिति द्वितीयानिर्देशात् । वाजसनेयिब्राह्मणमप्येतमर्थमाह । अथार्षेयं वृणीते ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति । अस्यार्थो मञ्जर्यामुक्तः । आर्षेयमृष्यपत्यमाहवनीयमग्निं यजमानेनो-

त्पादितत्वाद्यजमानस्य च ऋषिसन्तानत्वात्तं वृणीते । किमर्थमित्याशङ्क्य प्रयोजनमाह । ऋषिभ्यश्चैवैनं यजमानं देवेभ्यश्च निवेदयत्ययं महावीर्यो ब्राह्मणो यज्ञं प्रापदिति । यस्मादेवं सप्रयोजनः प्रवरस्तस्मादार्षेयं प्रवृणीतइति । तस्मात्तदविरोधाय सूत्रकारवचनानि किंचिदध्याहृत्य व्याख्येयानि ।

तथाहि । इतो यजमानादूर्ध्वान् यजमानस्यार्षेयान् सङ्कीर्त्य यजमानद्वारा तदपत्यत्वादेव तत्सादृश्येन हे अग्ने त्वं भृगुवदसीति वृणीते । तथा अमुतोऽर्वाञ्चो होतेत्यत्रापि तानेव सङ्कीर्त्य यजमानद्वारा तदपत्यत्वादाहवनीयमेव योग्यत्वाद् वृणीते प्रार्थयते । भार्गव भृगोरपत्य देवेभ्यो हव्यं वहेति । ननु "ऐन्द्र्या गार्हपत्यमुपतिष्ठत"इत्यनेन "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्येषा ऋगैन्द्री गार्हपत्योपस्थाने विनियुक्ता । तत्रेन्द्रपदेन गौण्या वृत्त्या गार्हपत्यप्रकाशनं क्रियते । नच मन्त्रे यथा वृत्त्यन्तरं कल्प्यते तथा गार्हपत्यमिति द्वितीयाश्रुतेर्लक्षणयाऽधिकरणपरत्वेन गार्हपत्यसमीपे इन्द्रमुपतिष्ठते इति किं न स्यादिति वाच्यम् । मन्त्रब्राह्मणयोर्विरोधे मन्त्रएव ब्राह्मणप्रापितार्थप्रकाशके तदधीनप्रामाण्ये च वृत्त्यन्तरं कल्पनीयं न ब्राह्मणे इति ऐन्द्र्यधिकरणे सिद्धान्तितम् ।

तदाहुराचार्याः,

गौणत्वं नाम यत्र स्यान्मन्त्रब्राह्मणयोः क्वचित् ।

तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥ इति । तन्न्यायेन विध्यनुरोधान्मन्त्रस्यैवान्यथात्वमुचितं न तु मन्त्रानुरोधेन विधिवाक्यस्येति चेत् । सत्यमेतत्,तथापि भार्गवादिपदानां तद्धितप्रत्ययान्तानामग्निप्रकाशकमन्त्रमध्यपतितानामृषिप्रधानत्वं न कथञ्चित्सम्भवतीति

आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ।

इति न्यायेन विधेरेवान्यथात्वमाश्रयणीयम् । एतदेवाभिप्रेत्य प्रवराणामाहवनीयसंस्कारत्वं, प्रवरावृत्तिकारणत्वे यजमानानां प्रतिगोत्रं प्रवरा आवर्त्तेरन् । कुतः, आवापधर्मित्वात् । उप्यन्ते इत्यावापा आहवनीयाः, अग्निं समावपेयुरिति वचनात् । अथवा उप्यन्ते हवींषि येष्वित्यावापाः आहवनीयाः । तेषामाहवनीयानामावापानां प्रवरान्प्रति धर्मित्वात् । तेषां चाहवनीयधर्माणां प्रवराणां प्रतिप्रधानमावृत्तिर्युक्ता । प्रधानवशवर्त्तित्वादङ्गानाम् । अथवा माऽस्त्वध्याहारः । प्रार्थनात्मकवरणं प्रति ऋषीणामग्निविशेषणत्वेनानीप्सितकर्मत्वम् । एवं च ऋषिपरप्रवरपदप्रयोगोऽप्युपपन्न इत्यग्नेरेवेप्सितकर्मत्वम् । ऊर्ध्वमासीनं होतारमित्यत्रापि होतृशब्देनाग्निरेवाभिप्रेतो न ऋत्विग्विशेषः । अग्निर्देवो होतेत्यादिषु होतृशब्दस्याग्निपरत्वं ब्राह्मणेन विवृतम् । तस्मादग्नेरेव प्रार्थनं सङ्कीर्त्तनं कथंचिदृषिसंबन्धेन प्रवरा इति कर्तृभेदेन तेष्वेव क्रमविशेषे नियमः, इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाञ्चो होतेति । शब्दप्रयोगप्रकारनियमोऽपि जमदग्निवदूर्ववदित्यादिः भार्गवच्यावनेत्यादिः । नन्वेतावता प्रबन्धेन यत्राहवनीयोऽस्ति दर्शपूर्णमासादौ तदङ्गभूतएव वरणे तद्धितान्तत्वेन वत्यन्तत्वेन च होत्रध्वर्य्वोः प्रवरोच्चारणं नियतं स्यात्, न कन्यादानऋत्विग्वरणादौ । तत्राहवनीयाभावात् । शिष्टास्तु होतृवदेव सङ्कीर्त्तयन्ति, तत्कथमुपपद्यतइति चेत् । अत्र केचित् । द्वितीयाध्यायारम्भे बौधायनेन अथात उद्देश इत्युक्त्वा अत ऊर्ध्वानध्वर्युर्वृणीते अमुतो ऽर्वाञ्चो होतेति दर्शपूर्णमासयोर्वरणे क्रमविशेषमुक्त्वा "एष एव सर्वत्रोद्देश" इति सूत्रमुक्तम् । तद्यत्र प्रवरसंकीर्त्तनं विहितं क्रमविशेषश्च नोक्तः कन्यादानऋत्विग्वरणादौ तत्रापेक्षितत्वात्स विधिः प्रवर्त्तत इत्युन्नीयते । तत्रापि होतृक्रमं विधत्तेऽनन्तरं, नाध्वर्युक्रमं व्यवहितम् । तथाचाहवनीयाभावेऽपि भा-

र्गवच्यावनाप्नवानौर्वजामदग्न्येतिपञ्चप्रवरः पञ्चप्रवराय कन्यां संप्रददे इत्यादौ पञ्च प्रवरा यस्येति बहुव्रीहिणा पञ्चप्रवरतया कीर्त्तनीयाहवनीययोग्यत्वात्तत्सम्बन्धी तद्वान्वरादिरभिधीयतइति होतृप्रत्ययासिद्धिः । प्रवरप्रजयां त्विदं सूत्रमेवं व्याख्यातम् । एष एव क्रमविशेषो होतुरध्वर्योश्चाध्यायपरिसमाप्तेः सर्वत्रोपदेष्टव्य इति । अत्र केचित् । पूर्वमत ऊर्ध्वानिति सामान्येनोपदेशात्प्रत्यध्यायं चाग्रे भृगूणामादितो व्याख्यास्याम इत्याद्युपक्रम्य मार्कण्डेया माण्डव्या इत्यादिना तत्तत्संख्याकं गणमुक्त्वा इत्येते विदाः तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता विदवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युरित्येवंजातीयकसन्दर्भवद्भिः सूत्रकाण्डशेषैर्विशेषतोऽपि क्रमविशेषविशिष्टप्रवरवरणस्योपदेक्ष्यमाणत्वादेष एव सर्वत्रोदेश इत्यस्यानुवादमात्रतया प्रवृत्तिविशेषकरत्वाभावादानर्थक्यापत्तेः । तस्मात्सुष्ठूक्तं यत्र यत्र प्रवरकीर्त्तनं स्मृतितः प्राप्तं तत्र तत्र होतृप्रत्ययतासिद्ध्यै प्रवृत्तमिदं सूत्रम् । परिभाषारूपत्वाच्च न प्रकरणेन नियम्यते । यथा,

अमन्त्रस्य तु शूद्रस्य विप्रा मन्त्रेण गृह्यते ।

इति श्राद्धप्रकरणाधीतमपीति ।

ते च प्रवरा द्विविधाः, समाना असमानाश्च । तत्र समानत्वं नामैकद्व्यादिसंख्यैकऋषिसम्बन्धित्वम् । यथा सावर्णिजीवन्तिजाबालस्यैतिशायनवैरोहित्यावटमण्डूकमाण्डूकमाण्डव्यप्राचीनयोग्यमार्कण्डेयादिगोत्रभेदानां भार्गवच्यावनाप्नवानौर्वजामदग्न्यानाम् । असमानास्तु नामसंख्याक्रमाणामन्यतमेनैकेन द्वाभ्यां त्रिभिर्वा भिन्नाः । तत्राप्यगस्त्याष्टमसप्तर्ष्यन्यतमैकऋषिसम्बन्धादेव यथा गोत्राणां समानत्वं न तथा प्रवराणां, किं तु तदन्यैकऋषिसम्बन्धादपि ।

ततश्च जामदग्न्यभिन्नभृगुगणेषु केवलाङ्गिरोगणेषु च समानप्रवरत्वं भवति, तेषामगस्त्याष्टमसप्तर्ष्यपत्यबाह्यत्वात् । इदं चैतेष्वेकप्रवरमात्रसाम्ये न प्रवरसाम्यं, किं त्वेकगणस्थेषु सर्वप्रवरसाम्यादेव । भिन्नभिन्नगणस्थेषु तु पञ्चप्रवरेषु प्रवरत्रयसाम्येन, त्रिप्रवरेषु प्रवरद्वयसाम्येन । अत एव ये सप्तर्ष्यपत्यबाह्या वीतहव्यशुनकवाध्र्यश्ववैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धास्तद्विषयं सूत्रत्रयं बौधायनेनोक्तम् । भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवः स्युरिति, त्र्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणाम्, त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणामिति । तत्राद्यं सूत्रं मञ्जरीकृता द्वेधा व्याख्यातम् । एकं तावत् एतेषु परिगणितेषु गोत्रेषु भृगवोऽङ्गिरसश्च जमदग्निगौतमभरद्वाजव्यतिरिक्ता वीतहव्यशुनकमित्रयुवैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धादयो भृगुत्वेनाङ्गिरसत्वेन चाभिन्ना अपि सन्तो भिन्नविवाहं कुर्वते । भिन्नवद्विवाहो भिन्नविवाहः भिन्नश्चासौ विवाहश्चेति वा भिन्नविवाहः । यथाऽगस्त्याष्टमसप्तर्षिगोत्राः परस्परं भिन्नगोत्रीयाः स्वसमानगोत्रमेव हित्वा भिन्नगोत्रैः सह विवाहं कुर्वते एवं भृग्वङ्गिरसोऽपीत्यर्थः । अपरः प्रकारः अभिन्नमिति छेदः । भृगवो भृगुत्वेनाभिन्ना अपि स्वंस्वङ्गणन्त्यक्त्वा गणान्तरीयैर्भृगुभिरेवाभिन्नविवाहं कुर्वते । अभिन्नानां विवाहोऽभिन्नविवाहः । एवमङ्गिरसोऽपि । तत्र भृग्वङ्गिरसोः सप्तर्षिबाह्यत्वेन तत्पक्षीयाणां गोत्रत्वाभावेन समानगोत्रत्वाभावान्मिथो विवाहे नास्ति दोषः । असमानप्रवरत्वादसमानगोत्रत्वाच्च । अस्यापवादः, न चेत्समानार्षेया बहवः स्युरिति । विदार्ष्टिषेणानां पञ्चानाम् ऋषित्रयसाम्यं समानर्षिबहुत्वम् । त्र्यार्षेयाणां हरितकुत्सानामृषिद्वयसाम्यं समानर्षिबहुत्वम् । तदुभयं येषां नास्ति भृग्वङ्गिरसां ते परस्परं विवाहं कुर्वते कुर्युरि-

ऽर्थः । सङ्ग्रहेऽप्युक्तम्,

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।

भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥ इति ।

इदं च जमदग्निगौतमभरद्वाजरूपेष्वपि भृग्वङ्गिरोगणेषु समानप्रवरत्वे समानम् । अत एव तेष्वविवाहप्रयोजकत्वेन समानप्रवरत्वमेतद्विशेषसहितमेव प्रवरमञ्जरीकृता अभिहितमिति तत्रैवायं विशेषो यद्यपि वक्तुं युक्तः तथापि नैकैकमात्रप्रवरसाम्येऽपि सर्वेषामसाम्येऽपि वा सगोत्रत्वादेवेतरगोत्रवदविवाहसम्भवान्नैतस्य विधानस्य तत्र व्यतिरेकतः किञ्चित्प्रयोजनमस्तीति तद्भिन्नभृग्वङ्गिरोगणविषयतया व्याख्यातम् । यत्र विशेषविधिर्नास्ति तत्रैकप्रवरसाम्येऽपि समानप्रवरत्वं, यथा भृग्वङ्गिरोगणभिन्नेषु । शेषेष्वेकोऽपि वारयेदिति वचनात् । एवं च केवलभृग्वङ्गिरसां गोत्रत्वाभावादसङ्कीर्णः प्रवरसाम्यादेवाविवाहः ।

नन्वेतेषां गोत्रत्वाभावे हरितमुद्गलादीनां सकलार्यावर्तवर्त्तिशिष्टादृताविगीतगोत्रत्वस्मृतिः कथमपलपितुं शक्या कथं वा गोत्रस्य प्रवरोपपत्तिः । द्वयोर्मुद्गलयोर्हरितयोरेव वा विवाहे सगोत्रविवाहनिमित्तं प्रायश्चित्तं च कथं स्यात् । कन्यादाने च हरितमुद्गलादीनां वरत्वे हरितगोत्रायेत्याद्यभिलापः शिष्टैश्च कथंकारं क्रियेतेति चेत् ।

यदि बहुतरशिष्टानां निबन्धकृतां वाऽत्राभिनिवेशस्तदैवमुपपाद्यम् ।

तथाहि । सत्याषाढसूत्रे परिभाषायां प्रवरान्व्याख्यास्याम इत्युक्त्वा तैर्गोत्राणीति वचनादिति स्वरूपतः समानतया च गोत्रज्ञाने प्रवराणां हेतुत्वोक्त्या प्रवरत्वमेव गोत्रलक्षणमुक्तं भवति । ततश्च यमेवैकमधिकृत्य प्रवराम्नानं सोऽधिकृतो गोत्रम् । तस्यैव चा-

धिकृतस्य येषु स्वस्वगणान्तर्गतेषु अनुवृत्त्याख्यं साम्यं ते सगोत्रा इत्युक्तं भवति। तथाच हरितादिषु गोत्रव्यवहारः समञ्जसो भवति। अतोऽन्यत्र भृग्वङ्गिरसां गणादिति पर्युदासोऽप्युपपन्न इत्याहुः।

अन्ये त्वाहुः। यदुक्तं प्रवरत्वं गोत्रत्वं, यच्च तत्रोपपादकमुक्तं, तत्सर्वं स्मृतिचन्द्रिकास्मृत्यर्थसाराश्वलायनापस्तम्बकात्यायनादिसूत्रभाष्यादिसर्वप्रामाणिकनिबन्धादृतबौधायनोक्तलक्षणविरोधादुपेक्षणीयमेव। सत्याषाढवचनं तु क्वापि निबन्धे अदर्शनादनाकरमेव। साकरत्वेऽपि बौधायनोक्तगोत्रलक्षणाविरोधाय एक एव ऋषिर्यावदित्येतद्वचनसमानार्थतया सूत्रं व्याख्येयम्। तैः प्रवरैः समानैर्गोत्राणि समानानि अविवाहकारकाणि। अवश्यं चैवमेव सूत्रं व्याख्येयम्। कथमन्यथाऽगस्त्याष्टमानाम् इत्यं गोत्रमित्यग्रिमसत्याषाढोक्तिविरोधः परिह्रियेत। अननुष्ठानात्मकत्वेन च लक्षणविकल्पायोगात्। तथैव तद्विवरणे व्याख्यातं च, प्रवरैः गोत्राणां गणव्यवस्था समानता चेति। तेषां गोत्रत्वाभावेऽप्यन्यत्र भृग्वङ्गिरसां गणादिति पर्युदासोऽप्युपपादित एव। तथा गोत्रव्यवहारोऽपि। यत्तु भ्रान्तिप्रसक्त्या पर्युदासोऽयं न घटते। जमदग्निर्भरद्वाज इत्यादिपूर्वग्रन्थेन सप्तर्ष्यपत्यमेव गोत्रमित्यवधारिते पुनरुत्तरग्रन्थे भ्रान्त्युत्पादके प्रमाणाभावात्। न हि लोकान्वेष्यं गोत्रत्वं येन भ्रान्त्युत्पत्तिः स्यादिति। तदेतदनवधाननिबन्धनम्। यद्यपि लोकान्वेष्यं न गोत्रं किं तु सप्तर्ष्यपत्यमेव तथापि वस्तुतो गोत्ररूपाणां भृग्वङ्गिरोगणानां गोत्रमध्ये पाठात्तत्सादृश्यमेवात्र भ्रान्त्युत्पादकमस्तीति न प्रमाणाभावः। अत्र पक्षे दृष्टान्तासङ्गतिः।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मण इति शास्त्रीयलक्षणात्कुण्डगोलके ब्राह्मण्यप्रसक्तेर्निषेध उपपन्नः। नचास्मादेवास्वरसात्समान-

प्रवरत्वमिति पक्षान्तरम्। सर्वत्र ह्यन्यथाऽनुपपत्तिप्रसूता लक्षणा। अत्र चोक्तरीत्योपपत्तौ सत्यां किमर्थं लक्षणास्वीकारः। तात्पर्यानुपपत्त्या लक्षणेत्याश्रयणेऽपि दृष्टान्तवैषम्यम्। यावन्तोऽनन्तरिताः समानगोत्रास्तावतां सकृदिति आश्वलायनसूत्रे आर्षेयाणि गृहपतेः प्रवरित्वा ब्रह्मादीनां मुख्यानामेवं द्वितीयतृतीयचतुर्थानामिति ग्रन्थेन वरणं क्रमेणोक्त्वा वरणे पक्षान्तरं तन्त्रमुक्तं यावन्तोऽनन्तर्हिता इत्यादिना ग्रन्थेन। वरणं तु प्रवराणामेवातः समानप्रवरेषु तन्त्रमुपपद्यतइति कृत्वा लक्षणा युक्ता। केवलभृग्वङ्गिरोगणेषु गोत्रताऽनाश्रयणेन प्रयाजाप्रीसूक्तव्यवस्था न स्यात्। कुतः, आश्वलायनेन सर्वे समानगोत्राः स्युरिति गाणगारिमतमुपन्यस्य कथं ह्याप्रीसूक्तानि भवेयुरित्यादिना तत्रानुपपत्तिं प्रतिसन्धाय नानागोत्राः स्युरिति शौनकमतमुपन्यस्तम्। अतश्चैवं गम्यते,गोत्रप्रयुक्ता प्रयाजादिव्यवस्था भृग्वङ्गिरसादौ तु गोत्राभावादित्याद्यनुष्ठानवैकल्यं प्रसज्येतेत्याहुः। यदि तत्रापि गोत्रशब्दस्य प्रवरपरत्वं सप्रमाणकं तदा न चाशङ्का नचोत्तरम्। कपीनां भरद्वाजगर्गादिभिः सहाविवाहे सगोत्रत्वमेवासङ्कीर्णं प्रयोजकं न प्रवरसाम्यम्। कपीनां हि प्रवरा आङ्गिरसामहीरुक्षय्येति भरद्वाजानामाङ्गिरसबार्हस्पत्यभारद्वाजेति। गर्ग्याणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यसैन्येति आङ्गिरसगार्ग्यसैन्येति वा। ऋक्षाणामाङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति। एवं शौङ्गशैशिरप्रभृतीनां द्व्यामुष्यायणानामपि प्रवरा उदाहर्त्तव्याः। यद्यपि कपिप्रवरेष्वङ्गिराः समानो नेतरप्रवरस्तथाऽप्यङ्गिरोगणस्थत्वान्नैकमात्रप्रवरसाम्येनाविवाहप्रयोजकं सप्रवरत्वं भवति। नन्वगस्त्याष्टमसप्तर्ष्यन्यतमानुप्रवेशेन सगोत्रत्वं पूर्वमभिहितं तत्र कपिप्रवरेषु भारद्वाजस्य वरणाभावो त्रियमाणतया भारद्वाजस्यानुप्रवेशाभावात्कथं कपीनां भारद्वाजग-

र्गादिभिः सगोत्रत्वम् । न च क्रियमाणतयाऽनुप्रवेशाभावेऽपि सत्तयाऽनुप्रवेशस्य सत्त्वात्तत्स्यात् । सत्तयाऽनुप्रवेशस्याविवाहाप्रयोजकत्वात् । अन्यथा ऽतिप्रसङ्गात् ।

अत्रेरेव परं वंशं तव वक्ष्यामि भारत ।
अत्रेः सोमः सुतः श्रीमान् तस्य वंशोद्भवो नृपः ॥
विश्वामित्रः सुतपसा ब्राह्मण्यं समवाप्तवान् ।
तस्य वंशमहं वक्ष्ये तन्मे निगदतः शृणु ॥

इति मत्स्यपुराणे विश्वामित्रस्यात्रिवंश्यत्वाभिधानाद्विश्वामित्रप्रवरेष्वत्रेः सत्तयाऽनुवृत्तेर्विश्वामित्राणामत्रिभिरप्यविवाहः स्यात् । किञ्च । भरद्वाजस्य पुत्रो भवमन्युस्तस्य महावीर्यनरगर्भाद्याः पुत्राः । तत्र महावीर्यादुरुक्षयः उरुक्षयात्कपिप्रभृतयः । तथा नरात्सङ्कृतिः सङ्कृतेर्गुरुवीतिरन्तिदेवप्रभृतयः । तथा गर्भात्सिनिः सिनेः सैन्यः सैन्याद्गर्गाद्याः । तत्र यथा भरद्वाजस्य कपिप्रवरेषु सत्तयाऽनुवृत्तिस्तथा सङ्कृतिप्रवरेष्वपि तस्य सत्तासम्भवाद्भारद्वाजानां सङ्कृतिभिरपि विवाहो न स्यात् । अपिच । सत्तयाऽनुवृत्तेरविवाहनिमित्तत्वे प्रवरविकल्पव्यवस्था न स्यात् । सत्तयाऽनुवृत्त्या प्रवराणां सर्वत्र साम्याद्विकल्पस्यैवाभावात् । यदि तु क्रियमाणतयाऽनुवृत्त्या विकल्पव्यवस्थोच्यते तर्हि तादृश्या एवानुवृत्तेरविवाहनिमित्तत्वं वक्तुमुचितम् । अन्यथाऽतिप्रसङ्गस्य दुर्वारतापत्तेः । अन्यच्च । भरद्वाजादीनामनुवृत्तिर्न सप्तर्षित्वेन प्रमाणाभावात्, किं तु प्रवरत्वेनैव वाच्या । तथाचोक्तम्,

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वमिति ।

तथाच क्रियमाणतयैव प्रवराणामविवाहनिमित्तत्वं न स-

त्तथा । अन्यथा ऽस्यार्षेयसन्निपाते पञ्चार्षेयाणामविवाहः स्या-र्षेयसन्निपाते ऽस्यार्षेयाणामविवाह इति नियमो न स्यात् । सत्तयाऽनुवृत्त्या प्रवराणां सर्वत्र साम्यात् । तथाच सगो-त्वेऽपि म्रियमाणतयैवानुवृत्तिरङ्गीकार्येति । अथ यस्मिन्वंशे य उत्पन्नस्तस्य तेन सहाविवाह इति तद्वंशोत्पन्नत्वमेवाविवाहप्रयोजकं, तर्हि भरद्वाजवंशोत्पन्नत्वात्सङ्कृतीनामपि भरद्वाजैर्विवाहो न स्या-त् । तथाऽङ्गिरसो बृहस्पतिस्तस्माद्भरद्वाज इति आङ्गिरोवंश्यैर्गौत-माद्भिरपि भरद्वाजानां विवाहो न स्यात् । विश्वामित्राणाम-त्रिभिरपि विवाहो न स्यात् । किमपरमाङ्गिरसानां सर्वेषां भार्गवा-णां च सर्वेषां परस्परमविवाहः स्यात् । तस्मात्सत्तयाऽनुवृत्तिर-विवाहे न निमित्तमिति ।

अत्र वदन्ति,

भरद्वाजाश्च कपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ॥

तथा,

भरद्वाजर्क्षकपयो गर्गा रौक्षायणा द्विजाः ।
पञ्चैते हि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ॥

तथा,

कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः ।
नोद्वहेयुः सगोत्रत्वात्प्रवरैक्याच्च न क्वचित् ॥

एवमादीनि स्मृत्यर्थसारकारादीनामतिप्रामाणिकशिष्टपरि-गृहीतानां वचनानि कपिभरद्वाजयोर्विवाहनिषेधबोधकानि सन्ती-ति तयोरेव परस्परमविवाह इति निर्णीयते । सङ्कृत्यादिभिस्तु तथा निषेधाभावाद्भवति । नचास्मादेव निषेधबलात्तयोरविवाहे सिद्धे सत्तयाऽनुवृत्तिकथनमभियुक्तानां व्यर्थं स्यात् । नानेन वाक्येन

निषेधः कपिभरद्वाजत्वेनोच्यते किं तु सगोत्रत्वेन । तस्य च त्रियमाणतयाऽनुप्रवेशाभावेनासम्भवान्निषेधोऽनर्थकः स्यात् । अतस्तदन्यथाऽनुपपत्त्या तद्धेतुभूते सगोत्रत्वेऽपि परमशिष्टैर्यथा त्रियमाणतयाऽनुवृत्तिरनपभ्रष्टस्मरणपरम्परामूलककल्पसूत्रानिबद्धैव सगोत्रत्वनिमित्तमङ्गीक्रियते तथा सत्तयाऽनुवृत्तिरपि तादृश्येव तथेति विज्ञायतइति नास्त्यतिप्रङ्गः । अस्ति च भरद्वाजस्य कपिषु तादृशी सा । भरद्वाजानां सर्वेषामविवाह इति बौधायनसूत्रमप्येतदभिप्रायमेव । तत्र सत्तयाऽनुवृत्तिः

स्मृत्यर्थसारे

उक्ता,

जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ।
त्रियमाणतया वापि सत्तया वाऽनुवर्त्तनम् ॥
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते । इति ।

प्रवरमञ्जरीकारेणापि,

गर्गा अपि भरद्वाजा भारद्वाजानुवर्तिनः ।
पञ्चप्रवरगर्गेभ्यो भिन्नेष्वस्यानुवर्त्तनम् ॥
सत्तयाऽस्त्येव सैन्यस्य त्रिमुनिष्वपि दर्शनात् । इति ।

तथाऽनपभ्रष्टस्मरणपरम्परापि । तथाहि । आपस्तम्बेन भरद्वाजद्व्यामुष्यायणशौङ्गशैशिरिऋक्षान् क्रमेणोक्त्वा गर्गात्पूर्वम् अथ कपीनामित्यादिग्रन्थेन भारद्वाजमध्ये कपीनामुक्तत्वात् तथा कात्यायनेन भारद्वाजान् द्विप्रकारान् गर्गानुक्त्वा तत्संलग्नतयैव कपीनामुक्तत्वाद्भरद्वाजापत्यत्वनिर्णयात् । अत्रार्थे पुराणानामप्यविप्रतिपत्तिः । तथैव भगवता मात्स्येन भरद्वाजगर्गौ क्रमेणोक्त्वा गर्गसं-

लग्नतयैव कपिरुक्तः। विष्णुपुराणं त्वत्यन्तमत्रार्थेऽनुकूलम्। अङ्गिरसो बृहस्पतिस्ततो भरद्वाजस्तत आमहय्यस्तत उरुक्षय्यस्ततः कपिरिति वंशानुपूर्व्यास्तत्राभिधानात्। ननु स्मृत्यर्थसारादिषु गर्गादिभिः सह यो विवाहनिषेधः स गर्गान्तर्गतकपिविषयो भविष्यति। तथाहि। इह द्वौ कपी एको गर्गवंशीयः स सर्वात्मना गर्गसादृश्याद्गर्गान्तर्गतत्वात्तैः सह विवाहं नार्हति। अपरः केवलाङ्गिरोमध्यवर्त्ती उरुक्षय्यरूपविलक्षणप्रवरो भिन्नगणः सर्वभरद्वाजादिभिः सह विवाहमर्हति। अत एव

पृषदश्वा मुद्गला विष्णुवृद्धाः
कण्वोऽगस्त्यो हरितः सङ्कृतिः कपिः।
यस्कश्चैषां मिथ इष्टो विवाहः
सर्वैरन्यैर्जामदग्न्यादिभिश्च॥

इति वचनेऽपि आदिपदेन चकारेण वा गौतमभरद्वाजानामपि ग्रहणम्। अत एव आश्वलायनसूत्रे भरद्वाजकुले केषां चिद्विवाहाभावमुक्त्वा कैश्चिदिदं वचनं पठ्यते।

एतेषां तु विशेषो ऽयमामहय्याभिधानकैः।
उरुक्षय्यैश्च कपिभिर्विवाहस्त्रिषु इष्यते॥

इति स्वतन्त्रकपीनां भारद्वाजैः सह विवाहः कण्ठरवेणैवोक्त इति चेत् न। गर्गवंशे कपिभूमिगोत्रमस्ति न तु कपिगोत्रमिति न निषेधस्य तद्विषयत्वम्। अथवा गर्गवंशे एककपिव्यक्तिसत्त्वेऽपि न तन्मात्रेण निषेधस्यान्यथा सिद्धिर्वक्तुं युज्यते। निषेधवाक्येषु तुल्यकक्षयोः कपिभरद्वाजगणयोरेव निषेधप्रतीतेः। यदि च स्वतन्त्रः कपिगणो न स्यात्तदा गर्गवंशीयकपिगोत्रव्यक्तिमात्रेण निषेधस्यान्यथासिद्धिः कल्पयितुमपि शक्येत, न त्वन्यथा। किञ्च गर्गान्तर्गतपरतन्त्रकपेर्गणवाचकगर्गपदेनै-

व भरद्वाजैर्विवाहनिषेधसिद्धेः कपिपदं कथं न व्यर्थं स्यात् । कथंतरां चापस्तम्बादिप्रवरग्रन्थविरोधश्च न स्यात् । तस्मात्पृषदश्वेत्यादिवाक्यद्वयं पूर्वोक्तदोषकलापादनादरणीयमेव । नच बौधायनेन भरद्वाजगणमध्ये तस्यापाठो भरद्वाजत्वाभावसाधकः । ऋक्षेष्वतिप्रसङ्गात् । न हि सर्वे सर्वैर्निबध्यन्ते । नच पूर्वोक्तं श्लोकद्वयमाश्वलायनीयम् । भाष्यकारादिभिरव्याख्यातत्वात् । प्रत्युत तैः कपीनां भरद्वाजत्वस्यैवोक्तत्वात् । गोत्रप्रवरानुक्रमणसमाप्त्यनन्तरमभिधानात् अनन्वितार्थत्वेनासङ्गतेश्च । यच्चोक्तं सत्तया तु प्रवेशस्याविवाहनिमित्तत्वे प्रवरविकल्पव्यवस्था न स्यादिति । तदपि न । प्रवरेषु सत्तयाऽनुप्रवेशानङ्गीकारात् । तस्मात्कपिषु सत्तया भरद्वाजानुवृत्त्या भरद्वाजगोत्रत्वात्प्रवरभेदसत्त्वेऽप्यसंकीर्णात्सगोत्रत्वादेव तदन्यैर्भरद्वाजैः सहाविवाह इति सिद्धम् ।

तथाच प्रवरमञ्जरीकारः

शिष्टसंमतिमाह,

शुद्धाङ्गिरोगर्गमध्ये कपयः पठिता अपि ।
आचार्यैरुपवर्षाद्यैर्भरद्वाजाः स्युरेव ते ॥
भरद्वाजगणे यस्मादापस्तम्बोऽपठत्कपीन् ।
पराशरश्चतुर्थेऽशे भरद्वाजान्वये कपीन् ॥
नामसंख्याक्रमेणैव पुराणे वैष्णवेऽवदत् ।
मत्स्यो हरिरिदं मात्स्ये पुराणे स्पष्टमब्रवीत् ॥
मार्गमेनमजानन्तो मूढा मन्वादिभाषितम् ।
भरद्वाजकपीनां तु प्रवदन्ति मिथोऽन्वयम् ॥
निबन्धिनो हि नेच्छन्ति सर्वे नारायणादयः ।
अविगीतसमाचारविरोधोऽपि भवेदिह ॥
गणभेदभ्रमान्मूढा विवाहं कारयन्ति चेत् ।

भरद्वाजत्वगर्गत्वकपित्वैः सहगोत्रताम् ॥
त्रयो मौख्यांश्च संवीक्ष्य गुरुतल्पगमन्वयम् ।
प्रयोक्तृवक्तृकर्त्तारः प्राप्नुवन्त्यन्वये स्फुटम् ॥
गर्गा अपि भरद्वाजा भरद्वाजानुवर्त्तिनः ।
पञ्चप्रवरगर्गेभ्यो भिन्नेष्वस्यानुवर्त्तनम् ॥
सत्तयाऽस्यैव सैन्यस्य त्रिमुनिष्वपि दर्शनात् ।
द्वित्रिधानपि गर्गांस्तानुपवर्षो महामुनिः ॥
अनुक्रम्य त्ववैवाह्यान्भरद्वाजमया जगौ ।
किंचित्त्रिमुनिगर्गाणां भरद्वाजर्क्षवर्णिनाम् ॥
अविवाहं स्तुवन्गार्ग्यो भरद्वाजत्वमिच्छति ।
अतो यथा सगोत्रत्वादत्र्यादौ वर्गपञ्चके ॥
न विवाहस्तथा सर्वभरद्वाजगणेष्वपि ।
सप्तर्षित्वादनुद्वाहः सिद्ध इत्युपरम्यते ॥

एवमन्यदप्येवंजातीयकमसङ्कीर्णं सगोत्रत्वस्योदाहरणमूह्यम् । स्मृतिचन्द्रिकाकारस्त्वाह । एकस्यैव गोत्रस्य यत्र विकल्पेन प्रवरभेदः भृग्वङ्गिरोगणान्तर्गतस्य वा त्र्यार्षेयस्य द्विप्रवरभेदः पञ्चार्षेयस्य त्रिचतुरप्रवरभेदस्तत्र भिन्नभिन्नप्रवरपरिग्राहिणां प्रवरभेदे सत्यप्यसंकीर्णात्सगोत्रत्वादेव परस्परमविवाह इति ।

अत्रेदं सिद्धम् । जामदग्न्याभिन्नभृग्वपत्येषु गौतमभरद्वाजभिन्नाङ्गिरोऽपत्येषु चैकैकगणान्तःपातिनामविकल्पितैकरूपप्रवराणां सर्वप्रवरैक्यादविवाहः । येषां तु विकल्पिता अभिन्नरूपा भिन्नभिन्नगणस्थाश्च प्रवरास्तेषां परस्परं त्र्यार्षेयपञ्चार्षेयभेदेन द्वित्रिप्रवरसाम्यात्, एकैकगणान्तःपातिनामगस्त्याष्टमसप्तर्ष्यपत्यानां गोत्रसाम्यात्, अविकल्पितप्रवराणां सर्वप्रवरसाम्याच्चाविवाहः । भृग्वङ्गिरसां तु विकल्पितप्रवराणां द्वित्रिप्रवरसाम्यात्, इतरेषामेकप्रवरैक्याद-

पि । भिन्नभिन्नगणनिविष्टानां तु गोत्रसाम्यात्प्रायशः प्रवरैक्या-च्च । भृग्वाङ्गिरोगणतदतिरिक्तभेदेन प्रवरसाम्यं प्राग्वत् । क्वचि-त्समानगोत्रत्वादेवेति ।

इदानीं गोत्राणि तद्गणाश्च संख्याविशेषविशिष्टास्तथा तत्प्रवराश्च स्वरूपतत्संख्याविकल्पविशिष्टा निरूप्यन्ते ।

ननु गोत्रप्रवराणां शाखोपशाखाभेदेनानन्त्याद् बौधायनापस्तम्बकात्यायनाश्वलायनकल्पसूत्रमत्स्यपुराणादिषु चैकत्राश्रुतानामप्यन्यत्र श्रवणादानन्त्यावगमात्तत्तन्महर्षिगणान्तर्गतानां गोत्राणां प्रवराणामपि स्वरूपक्रमविशेषेषु गोत्रप्रवरऋषिनामधेयवर्णेषु च संवादाभावाच्चाशक्यं सामस्त्येन निरूपणमिति चेत्, न ।

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥

इति बौधायनोक्तप्रवरसंख्यानुसारेणैव निरूपणात् । अत एव स्मृत्यर्थसारकृता बौधायनानुसरणमेव कृतम् ।

मुनिप्रणीतप्रवरैरूनपञ्चाशता वयम् ।
अनन्तान्यपि गोत्राणि वर्गीकृत्याभिदध्महे ॥

इत्यादिना बौधायनवाक्यस्यार्थो मञ्जर्यां कृतः । दशगुणितं सहस्रमयुतमुच्यते । दशगुणितमयुतं लक्षात्मकं नियुतमुच्यते । दशगुणितं नियुतं प्रयुतमुच्यते । दशगुणितं प्रयुतमर्बुदं कोट्यपरपर्यायमुच्यते । सहस्रप्रयुतार्बुदशब्देषु बहुत्वविशेषविवक्षायां त्रिष्वपि त्रिगुणीकृतेषु तदर्थेषु गोत्राणां तिस्रः कोटिसंख्या भवन्ति । तदविवक्षायां पुनरधिकान्यपि तानि भविष्यन्तीति कियत्यः कोटिसंख्या इति नावधारयितुं शक्यते । अत्र संख्याविवक्षायां गोत्राणां सान्तत्वेऽप्यनन्तानीत्यभ्युपेत्यत्वादतया ऽपिशब्दो व्याख्ये-

यः । मुनिप्रणीतेत्यनेन ऋषिदर्शनादित्यस्यार्थ उक्तः । ततश्च यद्यपि अपत्यापत्यवद्भावेन साक्षात्परम्परयाऽवस्थितेषु ऋषिषु एतान्येतावन्ति च गोत्राणि एते एतावन्तश्च प्रवरा इति विवेकेन शीघ्रं निरूपयितुं न शक्यन्ते तथापि प्रवराध्यायकर्तृभिर्ऋषिभिर्ये प्रणीताः प्रणयनेन नियमिताः ऊनपञ्चाशत्संख्यया भार्गवादिरूपेण स्वरूपविशेषतश्च परिच्छिन्नाः प्रवराः तैर्वर्गीकृत्यावान्तरभेदभिन्नानि कृत्वाऽनन्तान्यपि गोत्राणि अभिदध्महे इति स्मृत्यर्थसारवचनस्यार्थः । वर्गाः वंशा गणा इति पर्यायाः । ननु प्रवराणामूनपञ्चाशत्त्वं न नामतो नियन्तुं शक्यम् । अष्टनवतिसंख्ययाऽऽश्वलायनेन प्रतिपादनात् । आपस्तम्बकात्यायनसत्याषाढादिभिर्न्यूनाधिकसंज्ञाभिरप्यभिधानादिति चेत् । नैष दोषः । बौधायनक्रममाश्रित्यैवोनपञ्चाशदिति संख्योच्यते । तत्क्रमे च वक्ष्यमाणगणानां मध्ये तत्तद्गणे त्रियमाणत्वेन समुदायीकृत्योक्तानां प्रवराणां तादृशान्समुदायानाश्रित्येति अन्यत्र गणानां न्यूनाधिकसंख्ययाऽभिधानेऽपि न काचित् क्षतिरिति बहवः । अस्माभिस्त्वाश्वलायनादिप्रणीतानां सर्वेषामपि गोत्रप्रवरनिबन्धनानां प्रामाण्याविशेषात्प्रसिद्ध्यविशेषाच्च बौधायनेनानुक्तमपि क्वचित्क्वचिद् गोत्रतद्गणप्रवरविकल्पादिकमाश्वलायनादिसूत्रान्तराद्युक्तोपसंहारेण गोत्राणि प्रवराश्चोच्यन्ते ।

तत्र पूर्वं भृगुगणाङ्गिरोगणौ महागणौ निरूप्येते । तत्र भृगवो द्विविधाः जामदग्न्या अजामदग्न्याश्च । तत्र जामदग्न्येषु वत्सविदौ द्वौ गणौ । द्वितीये तु पञ्च गणाः । ते च आर्ष्टिषेणाः यस्काः मित्रयुवो वैन्याः शुनका इति । एते एव केवलभृगव इति व्यवह्रियन्ते । तत्रास्मिन् गणसप्तके पञ्चार्षेयं गणत्रयं, ततस्त्र्यार्षेयं गणत्रयं, तत एक एकार्षेयः । तत्र जामदग्न्याः मार्कण्डेयाःमाण्डव्या माण्डूके-

याः काशेयाः कासयः आलेखनाः हार्भायणाः शार्कराक्षा देवन्तायनाः* शौनकायनाः माधूकेयाः पार्षिकाः साङ्काः 'कासा इत्यपि क्वचित्' प्रभायनाः पैलाः पैङ्गलायनाः दाभ्रेषकयो बाभ्रकयो वैश्वानरयो वैहीनरयो विरोहिता बाभ्रा प्रभ्रा इत्यपि गौञ्जायणाः ष्टैकयः काशकृत्स्ना वादूभूतकाः कृतभागाः ऐतिशायना जानायनाः पाणिनिः वाल्मीकिः स्थौलापिण्डयः सैषातथा जिहीतयः सावर्णिकायनाः वालायनाः सौकृतयो मण्डविद् सौविष्टयो हस्त्यश्नयो हस्ताग्नयः शौद्धकयः शौद्धाकयः वैकर्ण्या द्रोणाजिह्वयः औरसयः काम्बरोदरयः कम्बोरकद्वहलिर्विरूपाक्षा वृकाश्वा उच्चैर्मन्यवो हैमत्याः आर्यायणा मार्कायणाः काहायना बापवाः दैवमत्याः आर्कयणाः काङ्कायनाः यावनीनः शार्ङ्गरवाः करवचन्द्रमसो गाङ्गेयाः नौपेयाः याज्ञियाः जाबालिः बाहुमित्रायणाः आपिशलयः वैष्टपुरेयाः लोहितायनाः उष्ट्राक्षाः मालायनाः शारद्वतायनाः राजतवाहाः वासाः वात्स्यायना नालायना यागायना तुसातकयो जैवातिजीवन्तयः काम्बलोदरयो वैहीनरिवैरोहित्या रेखायनिपार्षतिवैश्वानरिवैरूपाक्षिपाणिलिवृकाश्वकानामुच्चयमानसात्यकर्णिवैष्टपुरेयिवालाकितौलकेशिनामृतभागार्षभागाजिहीतिथयः स्थौमाङ्गिरयः स्थौलसौखा बर्हिषः क्षेमतयः गार्ग्यायणा गार्भायणा गोष्ठायना वैशम्पायनाः गालवाः साङ्कृत्यः रैतिकायणाः भ्राष्ट्रेयाः भ्रास्नेया लाक्षेया लाकुचयो ललाटयः पारिमण्डलयो वयो गौवयः सौष्मिकयः सात्यकायनाः कौचहस्तयः अनुलोमिनः कोठाः श्रौक्षाः क्रौश्वाक्षयः स्मरध्वजयः वासा लेपना नैकर्षयः शाकल्याः पाकानुमतयः जैकजिह्वयः जैह्वाष्मनय आश्मक्रमा निराणयो वासयः सादनाः स्योषाः स्यन्दनयः क-

* देवतायना इति प्रवरमञ्जर्यां पाठः ।

ण्ठेरणयो भवेरणयः सौगोलयो माध्योदा दार्भिर्नडायनो वैराय-णो वैन्यो रौहित्यायनिः कपानील्लुः सार्वर्णिर्विकस्वरुर्विष्णुस्तौ-लकेशिर्जहतो वीजिनः फेनपाः स्थलिनः शिखापत्त्रिर्जलधिः सेन-जित् कृत्स्नः पौङ्गल्यायनिर्दिवपतिः ऋषभः सुतलवः कोपियज्ञो मित्रयज्ञो हायनिर्नैकर्णेयिर्भाल्लिकायनिर्लाक्षण्यः शाल्यायनिः मा-ल्यायनिः कौटिलिः सौक्तिः कोटरः साक्षी सान्द्रमणिः जैकशून्यः केयलेढिः हिकश्वरिः सारध्वजिर्नैमिश्यो लोष्टाक्षिर्गवेरणिः पौर्ण-सौगन्धिः काशकृत् विलभृत् सौमदायना वैरायणाः स्वानुमतयो मण्डवित्राः शौक्रायणास्त्राष्ट्रेयाः कौवहुण्डयः शौनायनाः शाकपौ-र्णयः व्रीहमतयः मायामतिराध्रेवकिः कौशनोऽशोकन इत्यपि क्व-चित् मौद्गल्यः कारवचः सान्तपनायना गेह्ला भेहिकिकिरुपस्त-स्त्वत औल्यग्निर्वारार्गिराणिः श्येनपा गतिर्नैकर्षिः (नैकर्षिः) शौ-द्धकर्णिर्निडायनश्रीवत्समण्डूका इत्यादयो वत्साः ।

तत्र ये जामदग्न्या वत्सास्तेषां पञ्चार्षेयः प्रवरो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता, जमदग्निवदूर्ववदप्नवा-नवच्च्यवनवद् भृगुवदित्यध्वर्युरिति । लौगाक्ष्यापस्तम्बाश्व-लायनबौधायनानुसारिणां भृगुवच्च्यवनवदप्नवानवदूर्ववज्जमद-ग्निवदित्यध्वर्युरिति । कात्यायनानुसारिणां भार्गवौर्वजाम-दग्न्येति त्र्यार्षेयोऽपि क्वचित् । अत्र जामदग्न्यस्य सप्तर्षेः प्रवरे-ष्वनुवृत्त्या परस्परं सगोत्रत्वाज्जामदग्न्यैस्तथोत्तरैः परस्परं स्वेस्वे गणे न विवाहः, समानर्षिबहुत्वात् । अजामदग्न्यानां वत्सानां त्र्यार्षेय एव भार्गवच्यावनाप्नवानेति ।

विदाः शैला अवटाः शैलाः प्राचीनयोग्याः अ-भयदानाः काण्डरथयो वैतभृताः पुलस्तयः ताम्राय-णाः नाष्ट्रयणाः क्रौञ्चायणाः कामलाः पौलस्त्या वेदभृतः

अभयजाताश्चैकायनाः भ्राजोत्याः भादन्त्याः छैकायनाः भृञ्जायना इत्यादयो विदाः । तेषां भार्गवच्यावनाप्नवानौर्ववैदेति होतुः पञ्च प्रवरा भवन्तीति बौधायनाश्वलायनौ । विदवदूर्ववदप्नवानवच्च्यवनवद् भृगुवदित्यध्वर्युः । भार्गवौर्वजामदग्न्येति त्र्यार्षेयोऽपि क्वचित् । द्विविधा अप्येते विदा जामदग्न्या एव । पञ्चार्षेयेष्वपि और्वशब्दसमन्वयात् जमदग्नेः सत्तयाऽनुवृत्तिप्रतीतेस्तस्य जामदग्न्येष्वेव दृष्टत्वात् । तथाचौर्वजामदग्न्यशब्दौ जामदग्न्यत्वप्रयुक्तावित्याश्वलायनसूत्रवृत्तिकारेणोक्तम् ।

अथाजामदग्न्याः । आर्ष्टिषेणाः नैरथयो ग्राम्यायणयः काण्वायनाः क्वचित्कार्णायनाः क्वचित्कात्यायना इति वा पाठः चान्द्रायणाः पौटकलायनाः सिद्धाः सुमनायनाः गौराम्भिर्भृग्वन्दीयो मार्गपथो नैकसिरापस्तम्बिर्माल्विः कार्दमायनिः गार्दभिरनूपश्चट्टायनिः कविराश्वाभिराधितापिरित्यादय आर्ष्टिषेणाः । तेषां पञ्चार्षेयः प्रवरः भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति होता, अनूपवदार्ष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । भार्गवार्ष्टिषेणानूपेति त्र्यार्षेयोऽपि क्वचित् । वत्साविदार्ष्टिषेणानां परस्परमाविवाहः । कुतः, पञ्चार्षेयाणां भार्गवच्यावनाप्नवानेति त्र्यार्षेयसाम्यात् । त्र्यार्षेयाणां त्र्यार्षेयसाम्यात् । वत्सविदयोर्जामदग्न्यत्वेन सगोत्रत्वात्पञ्चप्रवरे त्रिप्रवरसाम्येन च न विवाहः । तत्रागस्त्याष्टमसप्तर्षेर्जमदग्नेर्वत्सेषु क्रियमाणतयाऽनुवृत्तेर्जमदग्निमुपक्रम्य विदानामप्युक्तत्वात्सत्तया तस्यैवानुवृत्तेः तेषां सगोत्रत्वम् । ननु वत्साविदाभ्यामार्ष्टिषेणस्यानुद्वाहनिमित्तं न सगोत्रत्वमस्याजामदग्न्यत्वात् । नापि प्रवरसाम्यं, वत्साविदयोर्भार्गवौर्वजामदग्न्येति, आर्ष्टिषेणानां भार्गवार्ष्टिषेणानूपेति त्रिप्रवरपक्षे भेदादिति चेत् न । वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाह इति बौ

यनोक्तेः । अजामदग्न्यत्वेऽप्येषामेते पञ्चावर्त्तिन इति बौधायनोक्त्यैव पञ्चावर्त्तिनो भवन्ति । यस्त्वार्ष्टिषेणेष्वपि केषांचि ज्जामदग्न्यत्वव्यवहारः स पञ्चावर्त्तित्वसाम्यादविवाहसाम्याच्च । न त्वेषां वस्तुतस्तत्त्वम् । तथात्वे मानाभावात् । स्वेस्वे गणे सर्वत्राविवाह इति स्पष्टमेवेति न विचारार्हम् । भार्गवच्यावनाप्नवानेति वात्स्यानां त्रिप्रवराःभार्गवच्यावनाप्नवानवत्सपुरोधसेति वत्सपुरोधसकयोः पञ्च प्रवरा भवन्ति । बैजवनिमथितयोर्भार्गवच्यावनाप्नवानबैजवनमथितेति पञ्च प्रवराः । क्वचिदिदं त्रयम् । त्र्यार्षेयसाम्यात्त्रयाणामेषां परस्परं वत्सादिभिश्च पूर्वोक्तैस्त्रिभिः परस्परमविवाहः ।

यस्को मौनो मूको वाधूलो वर्षपुष्पो भागलेयो भागविक्षेयो दुर्दिनो भास्करो देवन्तायनो वार्कलयो माध्यमेया वासयः कौशाम्बेयाः कौटिल्याः सत्यकयः चित्रसेनाः भागुरिकयो वीतहव्याः माधुला मौसलाः जीवन्त्यायनाः अर्थलेखयो वृकाश्मकयो मदोकयो वरेयो गौरीक्षिता दैर्घचिताः पञ्चालवाः पौवला गोदायनाश्चण्डमोदनो भागालिर्भागवित्तिः पिलिङ्क्लिः काश्यपिः वालेयिः समदागेयिः सौरिङ्ग्वरिः भागन्तयः सानुष्टयो मादायनाः शालङ्कायनाः तर्काः प्रावारेयाः शार्कराक्षिः कौटिल्यो विलेभिर्वाह्लयो हालेयो दीर्घचितः सार्ष्टिः सावेतस इत्येते यस्कास्त्रिप्रवराः ।

भार्गववैतहव्यसावेतसेति होता, सवेतसवद्वीतहव्यवद्भृगुवदित्यध्वर्युः । यस्कादिगणानामुक्तैर्मित्रयुवादिभिः पूर्वैर्वत्सादिगणैश्च विवाहः, असगोत्रत्वात् । क्रियमाणतया सत्तया वैकस्यानुप्रवेशाभावात् । न च भार्गवैकप्रवरसाम्यादविवाहः ।

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।

भृग्वाङ्गिरोगणेष्वेवमिति नियमाद्द्वितीयप्रवरसाम्याभावेन स-

मानार्षत्वाभावात् । परं तु तेषां सर्वप्रवरसाम्यात्स्वगणे एव परस्परमविवाहः । स्वगणान्तःपातिनां हि यस्कमौनमूकवाधूलादीनां गोत्राणां भार्गववैतहव्यसावेतसेति प्रवरैक्यमिति स्पष्टमेव ।

मित्रयुवो रौष्ट्यायनाः सापिण्डनाः सुरभिनेयाः भाल्याया वाल्याया बाल्याया महाबाल्याः ताक्ष्यायणा रौक्यायणा वाजायनाः उक्षायणाः कैतवायनाः खालायनाः शकटाक्षा मैत्रेयाः साचर्या द्रैनायनाः आपिशलाः आठिकायनाः हंसजिह्वा रौप्यायणाः सापिण्डिनः पिकाक्षा मोदायनाः कापिशायनाः शाण्डेयाः सक्षिता मैत्रयुज आपिशायनाः पाठिकायना माध्न्यश्वो वाध्न्यश्व इत्यपि क्वचित् दिवोदास इत्येते मित्रयुवाः । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गववाध्न्यश्व दैवोदासेति होता, दिवोदासवद्वाध्न्यश्ववद् भृगुवदित्यध्वर्युः । दिवोदासा एते इत्यपि केचित् । एतएव प्रवराः । वाध्न्यश्वेत्येकार्षेयो वा । एतेषां परस्परमविवाहः समानर्षिबहुत्वात् । पूर्वोक्तैश्च विवाहः सगोत्रत्वाभावात् । एवमुत्तरत्र भृगुगणसमाप्तिपर्यन्तं ज्ञेयम् ।

वैन्याः पार्थाः बाष्कलाः श्यैताः एते वैन्याः । ते त्रिप्रवराः । भार्गववैन्यपार्थेति होता, पृथुवद्वेनवद् भृगुवदित्यध्वर्युः ।

शुनकाः गार्त्समदाः यज्ञपयः सौगन्धयः खार्दमायना गार्भायणा भार्गायणा इति क्वचित् क्वचिदाग्रायना इत्यपि मत्स्यगन्धाः मत्यूषाः कार्दमायनाश्चौक्षाः श्रोण्याः शाक्त्यायना राजबन्धकयाः एते शुनकाः

तेषामेकः प्रवरः । शौनकेति होता, शुनकवदित्यध्वर्युः । गार्त्समदेति होता, गृत्समदवदित्यध्वर्युरिति वा । द्विप्रवरो वा । भार्गवगार्त्समदेति होता, भृगुवत् गृत्समदवदित्यध्वर्युः । त्रिप्रवरो वा । भार्गवशौनकगार्त्समदेति होता, भृगुवच्छुनकवत्

गृत्समदवद् इत्यध्वर्युः । भार्गवशौनहोत्रगार्त्समदेति त्रिप्रवरा इति केचित् । अत्र केचित् । शुनकानां जनकभेदेन चतुर्विधत्वात्तत्तच्छुनकवंश्यानां तत्तत्प्रवरकल्प इत्येवं व्यवस्थितविकल्प इति । शुनकादेवोत्पन्नाः केचिद् गृत्समदादेव केचिद् भृगोः केचित्, भृगोरपत्यं शुनहोत्रस्तदपत्यं गृत्समद इति। तत्र शुनकनामधेयमात्रमेकं वंशास्तु भिन्ना एव। नन्वेवं भृगोरपत्यं शुनकस्तदपत्यं गृत्समदस्तदपत्यं शुनका इत्येक एव वंशः कस्मान्न कल्प्यते। नैतत्सुष्ठूच्यते। सत्याषाढवचनविरोधात् । तथाहि। सत्याषाढो वदति त्रीननन्तरानत ऊर्ध्वान्मन्त्रकृतो ऽध्वर्युर्वृणीते अमुतोऽर्वाञ्चो होतेति । अत्रानन्तरानित्यस्यायमर्थो व्याख्यातो भाष्यकारेण मातृदत्तेन, मन्त्रदृग्भिरन्यैरव्यवहितानिति। तत्रैकवंशत्वे सति मन्त्रदृग्भिरेव व्यवधानं कल्पितं स्यात् । तस्माद्युक्तो व्यवस्थितविकल्पः। एवं वक्ष्यमाणानामपि गर्गहरितकण्वरथीतरशाण्डिल्यादीनां वंशभेदकल्पनया प्रवरविकल्पा व्याख्येया इति । तदसत्। तत्र हि वंशभेदः कल्प्यते यत्रानादिपरम्परया ऽविगीता स्मृतिः। यथा वत्सानां, वयं जामदग्न्या वत्साः वयमजामदग्न्या इति। नैवं शुनकेषु तादृशी स्मृतिरस्ति। न च प्रवरभेद एव तत्कल्पकः। तस्य प्रयोगभेदादेवोपपत्तेः व्रीहियवयोरिव। न च तत्कल्पकमन्यत्प्रमाणमस्ति। तस्मादव्यवस्थित एवायं विकल्प इति वृत्तिकारः। इदानीन्तनैस्तु पूर्वपूर्वपरिग्रहवशाद्व्यवस्था युक्ता। एतेन सर्वे विकल्पा व्याख्याताः। एते चत्वारोऽपि भिन्नगोत्राः स्वस्वगणे सगोत्राः सर्वप्रवरसाम्यादविवाह्याः। प्रवरविकल्पेऽप्येकत्र द्विप्रवरसाम्यं सर्वत्राविवाहप्रयोजकम् । विकल्पाभिधायिभिरपि कात्यायनादिभिरेतेषामविवाह इत्युक्तत्वाच्च । अत एव साम्यादेवंजातीयकेष्वपि गोत्रत्वप्रसिद्धिर्लौकिकानाम्। वैदविश्वज्योतिषां त्र्यार्षेयः प्रवरः। भार्गववैदविश्व-

ज्योतिषेति । शाठरमाठराणां त्र्यार्षेयः प्रवरः, भार्गवशाठरमाठरेति । क्वचिदेतद्गणद्वयम् । इति बौधायनोक्तो भृगुगणनिर्णयः ।

अथापस्तम्बेनोक्तो भृगुगण उच्यते । स षड्गणो विदवर्जितः । यथा जामदग्न्या वत्सास्ते पञ्चप्रवराः । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता, जमदग्निवदूर्ववदप्नवानवच्च्यवनवद् भृगुवदित्यध्वर्युः । त्र्यार्षेयमुहैके । भार्गवौर्वजामदग्न्येति होता, जमदग्निवदूर्ववद् भृगुवदिति अध्वर्युः एष एवाधिकृतः सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डप्राचीनयोग्यानाम् । अथार्ष्टिषेणानां पञ्च प्रवराः । भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति होता, अनूपवदृष्टिषेणवदप्नवानवच्च्यवनवद् भृगुवादिति अध्वर्युः । त्रिप्रवरा इत्येके । भार्गवार्ष्टिषेणानूपेति, अनूपवदार्ष्टिषेणवद् भृगुवदिति ।

अथ वीतहव्याः । यस्कवाधूलमौनमौकास्त्रिप्रवराः । भार्गववैतहव्यसावेतसेति होता, सावेतसवद्वीतहव्यवद् भृगुवदिति अध्वर्युः । अथ गार्त्समदाः शुनकास्ते एकप्रवराः । गार्त्समदेति होता, गृत्समदवदिति अध्वर्युः । अथ वाध्र्यश्वा मित्रयुवा एकप्रवराः । वाध्र्यश्वेति होता, वध्र्यश्ववदित्यध्वर्युः । अथ वैन्याः पार्थास्त्रिप्रवराः । भार्गववैन्यपार्थेति होता, पृथुवद्वेनवद् भृगुवदिति अध्वर्युः । अत्र त्रिप्रकारा अपि ये वत्सास्तेषां बौधायनेनोक्ताः कियन्तो ये सावर्ण्यादिभेदास्तदतिरिक्ताश्चोक्ताः आर्ष्टिषेणाः पुनर्निर्भेदाः केवलाः । यस्कगणः पुनर्वीतहव्यगणत्वेन व्यवहृतः । शुनकादयश्च पुनरेकैकभेदा एव । तत्रापि मित्रयुववैनगणावेकप्रवरौ एव न बौधायनवत्त्रिप्रवरौ । अत्र गोत्रप्रवरेषु क्वचित्काचिद्वर्णक्रमभेदेऽपि प्रत्यभिज्ञानात् स्वरूपं निर्णेयं शाखान्तरीयमन्त्रवत् । इत्यापस्तम्बोक्तो भृगुगणः ।

अथ लौगाक्षिप्रणीतो भृगुगण उच्यते । सप्तविधोऽयं गणः ।

तत्र जामदग्न्यौ द्वौ पञ्चाजामदग्न्याः । भृगवो जमदग्नयो वत्सा दार्भिनौलायना वागायना नुसातार्किजैह्वतिपौलपौनकापनिजीवन्तिकाम्बलोदरिवैहीनरिवैरोहित्या रेखायनिपार्षतिवैश्वानरिवैरूपाक्षिपार्णिलिहकाश्वकानामुच्चयमानसात्यकर्णिवैष्टपुरेयिवालाकितौलकेशिनामृतभागार्त्तभागमार्कण्डेयमाण्डूकेयमाण्डव्यमाण्डकेयाजिह्वीतातिथीनां स्थौमाङ्गिरिस्थौलसौखवर्हिशार्कराक्षिदेवमतीनां मार्कायणा ह्वायना गार्भायणा गोष्ठ्यायनवैशम्पायनशार्ङ्गरवगालवचापूकेयवैकर्णिसाङ्कृत्येतिकाण्वायनानां पाङ्गेयभ्राष्ट्रेयभ्रास्त्रेयलाक्षेयलाक्षविलालाटिपारिमण्डलीनां मालायनौलुन्धिपौपिसोलिमकानां पैङ्गलायनसात्यकायनकोचहस्तिचान्द्रमसानुलोमिक्रौञ्चक्रौञ्चाक्षिकांससारध्वजिवाल्यालेपायनैकर्षिशाकल्योष्ट्राक्षिपाकानुमार्जैकजिह्विजैह्वाष्मन्याष्मजमनिराणिवासिमादनस्योपस्यन्दनिकण्ठेरणिसौगोलिकाशकृत्स्नमाध्योदा इत्येतेषामविवाहः ।

तेषां पञ्चार्षेयः प्रवरो भवति। भार्गवच्यावनाप्नवनौर्वजामदग्न्येति होता, भृगुवच्च्यवनवदप्नवानवत् ऊर्ववत् जमदग्निवदित्यध्वर्युः । प्रथमो गणः ।

अथ जमदग्नयो विदाः प्राचीनयोग्याः पौलस्त्याः वैदभृतः क्रौञ्चायनाः अभयजातास्त्रैकायना अवटाः भ्राजन्त्याः । एते न बौधायनवत्पञ्चार्षेयाः, किन्तु त्र्यार्षेयाः । भार्गवौर्वजामदग्न्येति, भृगुवदूर्ववज्जमदग्निवदिति । एतेषामविवाहः । द्वितीयो गणः ।

अथाजामदग्न्याः वात्स्या निर्भेदास्त्रिप्रवराः । भार्गवच्यावनाप्नवानेति, भृगुवत् च्यवनवदप्नवानवदिति । तृतीयो गणः ।

भृग्वन्दाया मार्गपथा ग्राम्यायणिरध्वनैकशिरापस्तम्बिर्वाल्विः कार्दमायनिःआर्ष्टिषेणिर्गर्दभिरानूपा इत्येते पञ्चप्रवराः।भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति,भृगुवत् च्यवनवदप्नवानवदार्ष्टिषेणवदनूपवदिति।

एतेषामविवाहः । इति चतुर्थो गणः ।

आश्वलायनाः साकिताक्षा मेक्रया असांचर्या द्रोणायना गोग्गायना आपिशलाः पाटिकायना हासजिह्वाः इत्येते त्रिप्रवराः । भार्गवदैवोदासबाध्र्यश्वेति, भृगुवद्दिवोदासवत् बाध्र्यश्ववत् इति । एतेषामविवाहः । इति पञ्चमो गणः ।

वीतहव्या यस्का वाधूला माधूला मौद्गला वन्यायना अर्थ-छेम्नि भागलेयभागवित्तेयजैवन्त्यायनिजैमिनिकौशाम्बेयहृकाश्वविम-दोकिवारेयिमैरेक्षितदीर्घचितपञ्चालवपौष्णावतारमौदायना इत्ये-ते त्रिप्रवराः । भार्गववैतहव्यसावेतसेति, भृगुवत् वीतहव्यवत् सावेतसवदिति । एतेषामविवाहः । इति षष्ठो गणः ।

याज्ञपयः सौकराः मासगन्धाः कर्दमायनाः श्रौक्षाः श्रो-त्रियाः मत्यूषाः गृत्समदाः इत्येते एकप्रवराः । गार्त्समदेति, गृत्समदवत् इति। द्विप्रवरा वा। भार्गवगार्त्समदेति,गृत्समदवद्भृगुव-दिति । अविवाहस्त्वेषाम् । इति सप्तमो गणः ।

अत्र कात्यायनपाठक्रमेणाध्वर्युप्रवरक्रम उक्तः । लौ-गाक्षिपाठे तु बौधायनादिभिरुक्तेऽध्वर्युप्रक्रमेऽनुरक्ता द्रष्ट-व्याः । कात्यायनमते तु भृगोर्द्वादश गणाः। तत्र जामदग्न्याः च-तुर्विधाः अजामदग्न्यास्त्वष्टैव। तत्र चत्वारो जामदग्न्याः । वात्स्या-यनाः पञ्चप्रवराः भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । आ-र्ष्टिषेणास्त्रिप्रवरा भार्गवच्यावनाप्नवेति । वैजवा निर्भेदाः पञ्चप्र-वराश्च । भार्गवच्यावनाप्नवानवैजवनैमथितेति। शाठरमाठरास्त्रिप्रवरा निर्भेदाश्च । भार्गवशाठरमाठरेति । अजामदग्न्यास्त्वष्टौ । तत्र वि-दास्त्रिप्रवरा, भार्गवच्यावनाप्नवानेति । आर्ष्टिषेणास्तु पञ्चप्रव-रा बौधायनवदेव । वत्सपुरोधसा निर्भेदाः पञ्चप्रवरा, भार्गव-च्यावनाप्नवानवात्सपौरोधसेति । त्रिप्रवरा वा । भार्गववत्सपु-

रोधसेति । वैन्दा विश्वज्योतिषा निर्भेदास्त्रिप्रवरा, भार्गववैन्दवैश्व-ज्योतिषेति । पार्थवैन्या निर्भेदास्त्रिप्रवराः, भार्गववैन्यपार्थेति । आपिशायनास्त्रिप्रवरा, भार्गववाध्र्यश्वदैवोदासेति । वीतहव्यास्त्रिप्रवराः, भार्गववैतहव्यसावेतसेति । गार्त्समदा एकप्रवरा, गार्त्समदेति । द्विप्रवरा वा । भार्गवगार्त्समदेति । इति लौगाक्षिकात्यायनप्रणीतो भृगुगणः ।

अथ आश्वलायनोक्तो भृगुगण उच्यते । स च सप्तविधः । तत्र वत्साः निर्भेदाः द्विविधाः । जामदग्न्या अजामदग्न्याश्च । तत्र जामदग्न्याः पञ्चप्रवराः, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । अजामदग्न्याः त्रिप्रवराः, भार्गवच्यावनाप्नवानेति । षट् तु अजामदग्न्या एव । तत्र आर्ष्टिषेणा विदाश्च निर्भेदाः पञ्चप्रवराः, भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति । विदानां तु भार्गवच्यावनाप्नवानौर्ववैदेति । यस्कानां भार्गववीतहव्यसावेतसेति । वैन्यानां भार्गववैन्यपार्थेति । मित्रयुवा एकप्रवरा, वाध्र्यश्वेति । त्रिप्रवरा वा, भार्गवदैवोदासवाध्र्यश्वेति निर्भेदाः । शुनका अपि निर्भेदा एकप्रवरा, गृत्समदेति । त्रिप्रवरा वा । भार्गवशौनहोत्रगृत्समदेति । सत्याषाढोऽपि सप्त गणा इत्याह किंचिद्भेदेन । तत्र वत्सा द्विविधा आश्वलायनवत् । षट् त्वजामदग्न्या एव । शुनकास्तु भार्गवशौनहोत्रगार्त्समदेति त्रिप्रवराः । गृत्समदभार्गवेति द्विप्रवरा वा । गार्त्समदेत्येकप्रवरा वेति । तदेवं द्विविधानामपि भृगूणां द्यामुष्यायणत्वाभावात्तान्विनैव सप्त भृगोर्वंशा उक्ताः ।

इदानीमङ्गिरस उच्यन्ते । अंङ्गिरसस्त्रिविधाः, गौतमाः भरद्वाजाः केवलाङ्गिरसश्च । तत्र गौतमाः सप्त, भरद्वाजाश्चत्वारः, केवलाङ्गिरसः षडिति । गौतमास्तावत्, आयास्या आणिचेया मूढरथाः काचाक्षयः स्वैदेहाः कौमारवत्याः ताडिः तौडेत्यपि

कचित् दर्भिर्देवाकिः सासमुग्निको बाह्याः बौभ्याः नैकरुष्टिर्नैकरिरित्यपि कचित् स्तैषकिः किरालयः कारुणिः कठोरिः काशीषाः काक्षीवाः पार्थिवा इत्येते आयास्या गौतमाः त्रिप्रवराः । आङ्गिरसायास्यगौतमेति होता, गौतमवत् आयास्यवदाङ्गिरोवदित्यध्वर्युः । प्रथमो गणः ।

शरद्वन्ता अभिजिता रोहिण्याः क्षीरकरम्भाः सौमुचयः सौयामुनाः औपबिन्दवो रहूगणा गणयो माषण्याः तौलेयाः नेकरयः करभोगिण्याः चाडूकराः सैन्धवा गतवाः साङ्कराः सौमिनयः पौष्यण्डयो भागलाः कुण्डवाः कारोढाः काशवारयो माधर्षा इषवो रोहितायना अङ्गारकाः क्रोलायनाः कास्तोष्णयो रुणयः पार्थिवा मौदहायनाः स्कान्दाः सराकाः कौटिल्या वासमूलयो वासपुष्ययो वासस्तेवयो वासधूपयः काचाक्षयः क्षया वारषयः करेलयः करालय इतध्या बौधयो नगाः सुगोमाक्षयः क्षीरटाष्टिकयो राहुकर्णयः सौपुत्रयः सामलोमकयः पौष्काजितयो भागलाश्चण्डाहुका सुतपा सुरौषिणो रौहिणायनयः क्रौष्णा आरुणायनयः सौदामनयः कासोरवः कौशल्या रौहिणेयाः कारेधनयो मूलयो वासवाः पुष्पवन्तः पपविका रैवयः औपमा न्याष्टिकाः शौनरयो शालायनाः वार्शयः सोरवः स्वारिका नैकषयः तौलेयाः बाल्योदा इत्यादयः शारद्वन्ता गौतमाः ।

ते त्रिप्रवरा भवन्ति । आङ्गिरसगौतमशारद्वन्तेति होता, शरद्वत् गौतमवत् अङ्गिरोवदित्यध्वर्युः । औतथ्या गौतमा इति केचित् । तेषामाङ्गिरसौतथ्यगौतमेति होता, गौतमवदौतथ्यवदङ्गिरोवदित्यध्वर्युः । द्वितीयो गणः ।

कौमण्डाः मामन्त्रेषणा मासुराक्षाः काष्ठरेषयः आश्रायनाः वाजायनाः काक्षीवताः औशिजा मासुरेपयो बाशरय इत्येते कौमण्डास्ते

पञ्चप्रवराः। आङ्गिरसौतथ्यकाक्षीवतगौतमकौमण्डेति होता, कुमाण्ड-वद्गौतमवत्कक्षीवतवदुतथ्यवदङ्गिरोवदित्यध्वर्युः। एते काक्षीवता गौत-मास्तेषां चाङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति प्रवरा इत्याश्वलाय-नः। आयास्यौशिजा इति केचित्। तेषामाङ्गिरसायास्यौशिजगौतम-काक्षीवतेति पञ्चार्षेयप्रवरः। औशिता इत्यपि केचित्। तेषामा-ङ्गिरसौशितकाक्षीवतेति त्र्यार्षेयः प्रवरः। इति तृतीयो गणः।

दीर्घतमसो गोतमाः पञ्चप्रवरा भवन्ति। आङ्गिरसौतथ्य-काक्षीवतगौतमदीर्घतमसेति होता, दीर्घतमोवद्गोतमवत्कक्षीवतवदुत-थ्यवत् अङ्गिरोवदित्यध्वर्युः। त्र्यार्षेया वा। आङ्गिरसौतथ्यदै-र्घतमसेति। इति चतुर्थः।

वामदेवास्त्रिप्रवराः आङ्गिरसगौतमवामदेवेति होता, वामदे-ववद् गौतमवदङ्गिरोवदित्यध्वर्युः। इति पञ्चमः।

औशनसा दिश्याः प्रशस्ताः सुरूपाक्षा महोदयः विकं-हताः सुबुध्या निहताः इत्येते औशनसा गौतमास्ते त्रिप्रवराः। आ-ङ्गिरसगौतमौशनसेति होता, उशनोवत् गौतमवदङ्गिरोवदित्य-ध्वर्युः। इति षष्ठः।

करेणुपालयो वास्तव्याः श्वेतीयाः पौष्ठिष्ठा औदजायना मान्धुक्षाराः अजगन्धयः इत्येते करेणुपालयो गौतमास्ते त्रिप्र-वराः। आङ्गिरसगौतमकारेणुपालेति होता, करेणुपालवद् गो-तमवदङ्गिरोवदित्यध्वर्युः। इति सप्तमः।

सप्तानामपि गौतमगणानां सप्तर्ष्यन्यतमगौतमापत्यत्वेन सगो-त्रत्वात्कचित् द्वित्रिप्रवरसाम्याच्च सर्वेषां परस्परमविवाहः। गौ-तमानां सर्वेषामविवाह इति बौधायनोक्तेश्च। इतरैः सर्वैरपि पूर्वोक्तैरसमानगोत्रत्वादसमानप्रवरत्वाच्च विवाहः।

आपस्तम्बेन तु गणचतुष्टयमुक्तम्। आङ्गिरसायास्या गौतमास्ते

त्रिप्रवराः । आङ्गिरसायास्यगौतमेति, गौतमवदायास्यवद-ङ्गिरोवदिति । औतथ्यास्त्रिप्रवराः । आङ्गिरसौतथ्यगौतमेति, गौतमवदौतथ्यवदाङ्गिरोवदिति । औशिजा अपि त्रिप्रवराः । आङ्गिरसौशिजकाक्षीवतेति होता, कक्षीवतवदुशिजवदाङ्गिरोवदिति अध्वर्युः । वामदेवा अपि त्रिप्रवराः । आङ्गिरसवामदेव्यबार्हदुक्थेति, बृहदुक्थवद्वामदेववदङ्गिरोवदिति ।

कात्यायनो गणचतुष्टयमाह । तत्रौतथ्यास्त्रिप्रवरा आङ्गिरसौतथ्यगौतमेति, अङ्गिरोवदुतथ्यवद् गौतमवदिति । एतेषामविवाहः । इति प्रथमः ।

दीर्घतमसस्त्रिप्रवराः । आङ्गिरसौतथ्यदीर्घतमसेति, अङ्गिरोवद्दीर्घतमोवदुतथ्यवदिति । इति द्वितीयः ।

आयास्या गौतमास्त्रिप्रवराः । आयास्यगौतमाङ्गिरसेति, गौतमवदायास्यवदङ्गिरोवदिति । अविवाह एषाम् । इति तृतीयः ।

औशिजाः पञ्चप्रवराः । आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति, कक्षीवतवद्गौतमवदुशिजवदायास्यवदङ्गिरोवदिति । इति चतुर्थः ।

आश्वलायनस्त्वष्ट गणानाह । गौतमानामाङ्गिरसायास्यगौतमेति, उतथ्यानामाङ्गिरसौतथ्यगौतमेति, रहूगणानामाङ्गिरसराहूगण्यगौतमेति, सोमराजकानामाङ्गिरससोमराजगौतमेति, वामदेवानामाङ्गिरसवामदेव्यगौतमेति, बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति, पृषदश्वानामाङ्गिरसपार्श्वदश्ववैरूपेति, ऋक्षाणामाङ्गिरबार्हस्पत्यभारद्वाजवान्दवनमातवचसेति, कक्षीवतामाङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति पञ्च प्रवराः, दीर्घतमसामाङ्गिरसौचथ्यदीर्घतमसेति त्रिप्रवराः । ननु कथमष्टगणत्वं ऋक्षपृषदश्वाभ्यां दशगणीत्वात् । नैष दोषः । आपातत इदमुक्तं न तु वस्तुतोऽनयोर्गौतमत्वम् । असाधारणप्रवरानुवृत्त्यभावात् । आङ्गिरसत्वं तु न नियतं

गौतमलिङ्गम् । भरद्वाजादिसाधारण्यात् । अतो यत्रान्योर्नियतं लिङ्गं तत्रोत्कर्षो भविष्यति । तत्र ऋक्षाणां भरद्वाजत्वमवसीयते । आद्य-भरद्वाजगर्गाभ्यां निश्चितभरद्वाजाभ्यामाङ्गिरसबार्हस्पत्यभारद्वाजेति त्रिप्रवरसाम्यात् । किञ्च बौधायनोऽप्येकदेशविकृतमनन्यवद्भ-वतीति न्यायमाश्रित्य ऋक्षानेव रौक्षायणशब्देनैतत्प्रवरपञ्चकेना-ह । पृषदश्वास्तु केवलाङ्गिरसेषूत्कृष्यन्ते । बौधायनेनोक्तैः केवलाङ्गि-रसै रथीतरैः सार्द्धमाङ्गिरसवैरूपेति प्रवरद्वयसाम्यात् । आपस्तम्बेन तु आङ्गिरसवैरूपपार्षदश्वेति रथीतराणां प्रवरविकल्पाभिधानात् प्रवरत्रयस्यापि पक्षे साम्यस्य सत्त्वात् । अतोऽन्येषां केवलाङ्गि-रसां स्वस्वगणएवाविवाहः प्रवरसाम्यात् । गणानां तु परस्परं विवाह एव । रथीतरपृषदश्वयोस्तु स्वेस्वे गणेऽपि परस्परमवि-वाहः । केवलाङ्गिरसत्वेऽपि पाक्षिकप्रवरसाम्यादिति । सत्याषाढे-नापि बृहदुक्थं त्यक्त्वाऽष्टादंष्ट्रं प्रक्षिप्य दश गणा निर्भेदा उक्ता-स्तत्रापि पूर्ववदृक्षपृषदश्वयोरुत्कर्षो बोध्यः । अन्यत्समानम् । तदे-वं गौतमाङ्गिरसो निरूपिताः । द्व्यामुष्यायणास्तु तेषां न सन्ति ।

इदानीं भरद्वाजा निरूप्यन्ते ।

ते च चतुर्विधाः । केवलभरद्वाजा रौक्षायणाः गर्गाः कपय इति । तत्र प्रथमे सप्ततिगोत्राणि, अष्ट द्वितीये, त्रिंशतिस्तृतीये, चतुर्थे द्वादश । तद्यथा भरद्वाजाः क्षा-म्यायणाः मण्डा देवाश्वा उद्वहव्याः माग्वंशयः वाहलभावाः व्यागवसितायनाः स्तैदेहा आत्रा औक्षा भूरयः परिणद्धेयाः केशस्वे-याः शौद्धयः उरूढाः स्वारिग्रीवयः औषसयः वयोक्षिभेदाः आ-ग्निवेश्याः व्ययाः वेशा इत्यपि क्वचित् शठाः गौरिवायनाः ले-खायनाः खेलका इत्यपि क्वचित् स्तनकर्णा स्तनवर्णा इत्यपि क्वचित् ऋक्षा माणभिस्ता कण्ठोदकाः स्ताञ्ज्वलय वैलाश्वाः रुद्रा देवयो

भ्र रुण्डयो भाद्रपद्मयः सौरभराः शुङ्गा देवमतयः इषुमताः औदमेघयः मत्राहणेयाः कुल्माषाः राजस्तम्भयः सुधूकृतयः वाराहयः वलभीकयः रुद्राङ्गपथाः शालाहलयः वेदवेलाः भृत्यायनाः शालालयः शार्दूलयः शाकलाः बाष्कलाः सैंहिकेयाः क्रौडायनाः क्रौण्डिल्याः ब्रह्मस्तम्भाः राजस्तम्भाः वायुस्तम्भाः सूर्यस्तम्भाः सोमस्तम्भाः विष्णुस्तम्भाः इन्द्रस्तम्भा आपस्तम्भा ये चान्ये स्तम्बशब्दान्ताः स्तम्भशब्दान्ताश्च तेऽपि आरणाः सिन्धवः कौमुदगन्धयः शिखायनाः आत्रेयायणाः भामान्याः कुक्षाः कौकाक्षयो नेतुन्तयो दार्भयः श्यागेयाः मत्सक्राथाः कारुणायनाः कारुपथयः कारिषायणाः काम्बाल्याः बालिशायनयः सौद्धयो वाराहयो विधिपयः शिलालयः पैलाः शालङ्कायनयो जैह्मलायनयः साष्टिकयो लभायनयः आपस्तम्बयो धौताम्बकयो जिह्मद्रोणयो वाह्यगच्छयो व्यढाकयः स्वारग्रीवयो वाजवृष्टयः प्रत्राहयो दशादीकयस्तूर्णकर्णयः काम्बयो देवगारयो हारिकर्णयः सपौलयः सौगेया मालोहराः शाङ्खायनाः सौविष्टा हालोहराः सात्यमुग्रयो लेखायनाः कारुणायनाश्चेला रूक्षाः किकायनाः वालक्षला गौरिवाः सौपयाः सौभराः सौबुद्धयः धौरयः कुलिकाः विकाजाः कुपिना मालहरयाः श्रीपथा निद्राङ्गवथाः शोखेया माधूकर्ण्याः काण्डण्या औवेया मैथुनमतयः कौरुक्षजयः खारणादयो देवस्थानयः शालुहयो वालुहयो गोस्त्रपिङ्गलयो गङ्गोदकयोऽधिकारग्रीवयो यवकयो माषायणाः शक्ताः काजाः सौविश्वाः कामुकायनाः सिन्धनः सारात्ररयो वाहयः सामस्तम्बयः सोमस्तम्बयः सोपस्तम्बयः ब्रह्मस्तम्बयः आश्वलायना मार्कण्डेयाः कुक्काः सौगय और्जायना इत्येते भरद्वाजाः ।

ते त्रिप्रवराः । आङ्गिरसबार्हस्पत्यभारद्वाजेति होता, भार-

द्वाजवद् बृहस्पतिवदङ्गिरोवदित्यध्वर्युः । इति प्रथमः ।
रौक्षायणाः कपिलाः शिफिलाः शैफिलाः वैफिडाः कौ-
थुमा अग्निजिह्वाः चक्राणिः सूतिश्चेति रौक्षायणाः । ते पञ्चप्रवराः ।
आङ्गिरसबार्हस्पत्यभारद्वाजवान्दवनमातवचसेति होता, मतवचोवद्-
न्दवनवद्भरद्वाजवद् बृहस्पतिवदङ्गिरोवदित्यध्वर्युः । इति द्वितीयः ।
गर्गाः साम्भरायणाः सांख्यायनाः गन्धरायणाः वा-
लुकयो भ्राष्टकाः भ्राष्टबिन्दवाः क्रोष्टयः सौयामुनिः भ्रा-
जिनाक्षयः होत्रापचयः सत्यापचयः जवा नवपलाशाः
शाखावतयः सङ्कृहकुल्याः वेणुभिरिः सौदग्रकारिः रौ-
तिः कौश्वालया राजवस्यो लवा इत्येते गर्गाः पञ्चप्रवराः । आङ्गि-
रसबार्हस्पत्यभारद्वाजगार्ग्यसैन्येति होता, सिनिवद्गर्गवद्भरद्वाजव-
द् बृहस्पतिवदङ्गिरोवदित्यध्वर्युः । त्रिप्रवरा वा । आङ्गिरससैन्यगा-
र्ग्येति होता, गर्गवत्सिनिवदङ्गिरोवदित्यध्वर्युः । तित्तिरिः कपिभू-
मयः खण्डिता इत्येतेषां तु गर्गाणां त्र्यार्षेय एव प्रवरः । आङ्गिरससै-
न्यगार्ग्येति, आङ्गिरसतैत्तिरिकापिभुवेति वा । इति तृतीयः ।
कापिवैतलायनपतञ्जलीनां तारस्विनां ताडिनां भोजसीनां सारङ्ग-
रवाणां खराशिखण्डिनां मौशितकिः शंशयः पौष्पयः मैतिशाय-
नाः इत्येते कपयः । ते त्रिप्रवराः । आङ्गिरसमहीयवौरुक्षय्येति
होता, आङ्गिरसामहीवयौरुक्षयसेति आश्वलायनपाठः । उरु-
क्षयोवद्महीयववदङ्गिरोवदित्यध्वर्युः । इति चतुर्थः । इति बौधा-
यनोक्तो भारद्वाजगणः ॥

अथापस्तम्बोक्ता भरद्वाजाः । ते च विभिद्व्यामुष्यायणैः सह
निर्भेदा दश गणाः । तत्र भरद्वाजास्त्रिप्रवराः । आङ्गिरसबार्हस्पत्यभार-
द्वाजेति होता, भरद्वाजवद् बृहस्पतिवदङ्गिरोवदिति अध्वर्युः । कुत्सा-
ग्निवेश्योद्गयनानां सर्वेषां च स्तम्बस्तम्भशब्दानामेष एवाधिकारः ।

द्व्यामुष्यायणा यथा, शौङ्गशिशिरयो, भरद्वाजाः शुङ्गाः, कताः शैशिरयः। तेषां पञ्चार्षेयः। आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति, अक्षीलवत्कतवद्भरद्वाजवद् बृहस्पतिवदङ्गिरोवदिति। अथ ऋक्षाणां पञ्चार्षेयः, आङ्गिरसबार्हस्पत्यभारद्वाजवान्दवनमातवचसेति, मतवचोवद्वन्दवनवद्भरद्वाजवद् बृहस्पतिवदङ्गिरोवदिति। त्र्यार्षेयमुहैके, आङ्गिरसवान्दवनमातवचसेति, मतवचोवद्वन्दवनवदङ्गिरोवदिति। कपयस्त्रिवराः, आङ्गिरसामह्यौरुक्षय्येति, अङ्गिरोवदमहीयवदङ्गिरोवदिति। गर्गास्त्रिप्रवराः, आङ्गिरसगार्ग्यसैन्येति, सिनिवद्गर्गवदङ्गिरोवदिति प्रवरमञ्जरीकृता उक्ताः। अत्र शुङ्गकतशिशिरीणां भरद्वाजवंशोत्पन्नशुङ्गादुत्पन्नविश्वामित्रवंशस्थकतगणान्तर्गतशिशिरस्य क्षेत्रे उत्पन्नत्वात् द्व्यामुष्यायणत्वम्। तेषां च चतुर्विधैर्भरद्वाजैर्दशविधैश्च विश्वामित्रैरविवाहः। सगोत्रत्वात्, कप्यन्यैस्त्रिभिर्भरद्वाजैः कतैश्च विश्वामित्रैः सह समप्रवरत्वादिति।

अथ कात्यायनलौगाक्षिप्रणीता भरद्वाजाः। ते च संकृतिशौङ्गशिशिरिभिः सहाष्टगणाः। आद्या भरद्वाजाः, ततो गर्गाः पञ्चप्रवराः, ततो गर्गगण एव तृतीयस्त्रिप्रवरः, ततः कपयः, ततः संकृतयः, ततो हिरण्यस्तम्बयः, ततो भेरुण्डाः, ततः शौङ्गशिशिरयः। आत्रेयायनयस्त्रिप्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजेति, अङ्गिरोवद् बृहस्पतिवद्भरद्वाजवत् इति। एतेषामविवाहः। कालायनाः, पञ्चप्रवराः आङ्गिरसभारद्वाजबार्हस्पत्यसैन्यगार्ग्येति, अङ्गिरोवद्भरद्वाजवद् बृहस्पतिवत्सिनिवद्गर्गवत्। एतेषामविवाहः। तैत्तिरीयास्त्रिप्रवराः, आङ्गिरससैन्यगार्ग्येति, अङ्गिरोवत्सिनिवद्गर्गवत्। एतेषामविवाहः। स्वतन्त्रकपयस्त्रिप्रवराः आङ्गिरसामह्यउरुक्षय्येति, अङ्गिरोवदमहय्यवदुरुक्षय्यवत्। सङ्कृतीनां त्रिप्रवराः, आङ्गिरससांकृत्यगौरवीत्येति। एतेषामविवाहः। अङ्गिरोवत्सङ्कृतिवद्गुरुवीतिवत्। हिरण्यस्तम्बयास्त्रिप्रवराः,

आङ्गिरसभार्म्याश्वमौद्गल्येति । एतेषामविवाहः । अङ्गिरोवत् भर्म्याश्ववत् मुद्गलवत् । भेरुण्डास्त्रिप्रवराः आङ्गिरसाजमीढकाण्वेति । एतेषामविवाहः । अङ्गिरोवदजमीढवत्कण्ववत् । अथ शौङ्गशैशिरयो भरद्वाजा द्व्यामुष्यायणाः । ते पञ्चप्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति । एतेषामविवाहः । अङ्गिरोवत् बृहस्पतिवत् भरद्वाजवत् शुङ्गवच्छिशिरिवत् । सङ्कृत्यादीनां त्रयाणां यद्यपि भरद्वाजसन्दंशोऽस्ति तथापि ते केवलाङ्गिरसेषूत्कृष्टव्याः । भरद्वाजस्य प्रवरेष्वननुवृत्तेः । न च कपिषु भरद्वाजा इत्युपक्रमोपसंहारो भरद्वाजत्वनिर्णायको यथाऽस्ति तथैषां भरद्वाजत्वनिश्चायकं किञ्चिदस्ति । या तु कात्यायनादीनां भरद्वाजोक्तिः सा वरणमात्राभिप्रायिका । किञ्चैषां भरद्वाजत्वे बौधायनेन सङ्कृत्यादिभिः सह विवाहोक्तेर्बौधायनविरोध आपद्येत । लौगाक्षिसूत्रमप्येवमेव वर्णनीयम् ।

अथाश्वलायनोक्ता भरद्वाजगोत्रप्रवरा उच्यन्ते ।

भरद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वाजेति । मुद्गलानामाङ्गिरसभार्म्याश्वमौद्गल्येति । तार्क्ष्यं है के ब्रुवतेऽतीत्याङ्गिरसं, तार्क्ष्यभार्म्याश्वमौद्गल्येति । विष्णुवृद्धानामाङ्गिरसपौरुकुत्स्यत्रासदस्यवेति । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यसैन्येति, आङ्गिरससैन्यगार्ग्येति वा । हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति । मांधातारं हैके ब्रुवतेऽतीत्याङ्गिरसं, मान्धात्राम्बरीषयौवनाश्वेति । सङ्कृतिपूतिमाषतण्डिशम्बुशैवगवानामाङ्गिरसगौरिवीतसाङ्कृत्येति । शाक्त्यो वा मूलं शाक्त्यगौरिवीतसाङ्कृत्येति । कण्वानामाङ्गिरसाजमीढकाण्वेति । घोरमु हैके ब्रुवतेऽवकृष्याजमीढम्, आङ्गिरसघौरकाण्वेति । कपीनामाङ्गिरसामहय्यवौरुक्षय्येति । एतेषां सर्वेषां भर-

द्वाजगणानां परस्परमविवाहः । म्रियमाणतया सत्तया वा भरद्वाजानुवृत्तेः सगोत्रत्वात्क्वचिच्च प्रवरसाम्यादपि भरद्वाजानां सर्वेषामविवाह इति बौधायनवचनाच्च । इति भरद्वाजाः ।

अथ केवलाङ्गिरस उच्यन्ते ।

तत्र पञ्च गणाः विष्णुवृद्धकण्वहरितरथीतरमुद्गलाः । तत्राद्यो गणस्त्रयोदशविधः, द्वितीय एकादशविधः, तृतीयो विंशतिधा, चतुर्थो दशधा पञ्चमोऽष्टधा । तत्र हरितास्त्रिप्रवराः, आङ्गिरसाम्बरीषयौवनाश्वेति, युवनाश्ववदम्बरीषवदङ्गिरोवदित्यध्वर्युः । मांधात्राम्बरीषयौवनाश्वेति, युवनाश्ववदम्बरीषवन्मान्धातृवदिति वा । कुत्सानामाङ्गिरसमान्धात्रकौत्सेति, कुत्सवन्मांधातृवदङ्गिरोवदिति वा । कण्वास्त्रिप्रवराः । आङ्गिरसाजमीढकाण्वेति, कण्ववदजमीढवदङ्गिरोवदिति । आङ्गिरसघौरकाण्वेति, वा कण्ववद्घोरवदङ्गिरोवदिति । रथीतरास्त्रिप्रवराः। आङ्गिरसवैरूपरथीतरेति, रथीतरवद्विरूपवदङ्गिरोवदिति । आङ्गिरसवैरूपपार्षदश्वेति, पृषदश्ववद्विरूपवदङ्गिरोवदिति वा। अष्टादंष्ट्रवैरूपपार्षदश्वेति, पृषदश्ववद्विरूपवदष्टादंष्ट्रवदिति वा । विष्णुवृद्धास्त्रिप्रवराः,आङ्गिरसपौरुकुत्सत्रासदस्यवेति,त्रसदस्युवत्पुरुकुत्सवदङ्गिरोवदिति । मुद्गलास्त्रिप्रवराः, आङ्गिरसभार्म्यश्वमौद्गल्येति, मुद्गलवद्भर्म्याश्ववदङ्गिरोवदिति । तार्क्ष्यभार्म्याश्वमौद्गल्येति, मुद्गलवद्भर्म्याश्ववत्तार्क्ष्यवदिति वा । आङ्गिरसताण्डिमौद्गल्येति, मुद्गलवत्ताण्डिवदङ्गिरोवदिति वा । सङ्कृतयस्त्रिप्रवराः, आङ्गिरससाङ्कृत्यगौरवीत्येति, गुरुवीतिवत्सङ्कृतिवदङ्गिरोवदिति । कपयस्त्रिप्रवराः, आङ्गिरसामह्यौरुक्षयेति, उरुक्षयवदामह्यवदङ्गिरोवदिति । हरितकण्वरथीतरविष्णुवृद्धमुद्गलानां स्वस्वगणे सर्वप्रवरसाम्यादविवाहः । परस्परं तु विवाहो भवत्येव । द्वित्रिप्रवराणां

समानत्वाभावात् । सगोत्रताऽप्यङ्गिरोऽपत्ये नास्ति । आङ्गिरसोऽगस्त्याष्टमसप्तर्षिबाह्यत्वात् । सङ्कृतीनां वसिष्ठैरपि न विवाहः । द्विवंश्यत्वात् ।

तथोक्तं,

सङ्कृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः ।
स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वियुः ॥

ते चत्वारो गणाः । तत्राद्यगणेऽष्टपञ्चाशद् गोत्राणि, द्वितीयतृतीयगणौ निर्भेदौ, चतुर्थे द्वादश गोत्रभेदा इति ।

आपस्तम्बमते केवलाङ्गिरस उच्यन्ते । हरितास्त्रिप्रवराः, आङ्गिरसाम्बरीषयौवनाश्वेति । आङ्गिरसं त्यक्त्वा मान्धातारं प्रवेश्य तएव वा कुत्सास्त्रिप्रवराः, आङ्गिरसमांधात्रकौत्सेति । अथाजमीढकण्वाः । तेषां त्र्यार्षेयः प्रवरः आङ्गिरसाजमीढकाण्वेति । विरूपा रथीतरास्ते त्रिप्रवराः, आङ्गिरसवैरूपपार्षदश्वेति । आङ्गिरसस्थाने अष्टादंष्ट्रमित्यप्याहुः । मुद्गलास्त्रिप्रवराः, आङ्गिरसभार्म्यश्वमौद्गल्येति । विष्णुवृद्धास्त्रिप्रवराः, आङ्गिरसपौरुकुत्सत्रासदस्यवेति । सङ्कृतयस्तु नोक्ताः । कात्यायनलौगाक्षिभ्यां मुद्गलाः कण्वाः सङ्कृतयश्च द्व्यामुष्यायणा इति त्रय एवोक्ताः । आश्वलायनमते मुद्गलास्त्रिप्रवराः । आङ्गिरसभार्म्यश्वमौद्गल्येति, तार्क्ष्यभार्म्यश्वमौद्गल्येति वा । विष्णुवृद्धा आङ्गिरसपौरुकुत्सत्रासदस्यवेति । गर्गा आङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यसैन्येति, आङ्गिरससैन्यगार्ग्येति वा । हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति, मान्धात्राम्बरीषयौवनाश्वेति वा । सङ्कृतिपूतिमाषतण्डिशम्बुशैवानामाङ्गिरसगौरिवीतसाङ्कृत्येति, शाक्त्यगौरिवीतसाङ्कृत्येति वा । कण्वानामाङ्गिरसाजमीढकाण्वेति, आङ्गिरसघौरकाण्वेति वा । कपीनामाङ्गिरसामहीयवोरुक्षयसेति । इत्यङ्गिरसः ।

अथात्रयः ।

अत्रयास्त्रिप्रवराः आत्रेयार्चनानसश्यावाश्वेति, अत्रिवदर्चनानसवच्छ्यावाश्ववदित्यध्वर्युरिति कात्यायनानाम् । श्यावाश्ववदर्चनानसवदत्रिवदित्यध्वर्युरिति लौगाक्ष्यादयः। एवमन्यग्रथाप्रवरमितरत्समानमावंशसमाप्तेः । धनञ्जया अप्येतन्मध्ये, आत्रेयार्चनानसधानञ्जयेति च प्रवर इत्यपि कश्चित् । वादुभूतकाः त्रिप्रवराः, आत्रेयार्चनानसवादुभूतकेति । गविष्ठिरास्त्रिप्रवराः, आत्रेयार्चनानसगाविष्ठिरेति बौधायनाश्वलायनापस्तम्बमतेन । आत्रेयगाविष्ठिरपौर्वातिथेति कात्यायनलौगाक्षिमतेन । मुद्गलास्त्रिप्रवरा आत्रेयार्चनानसपौर्वतिथेति । एतएव पूर्वातिथयः अतिथयश्च आपस्तम्बमतेन, आत्रेयार्चनानसातिथेति चेति प्रवरः । वामरथ्यसुमङ्गलबीजवापा एतएवेति केचित् । सुमङ्गलानामात्रेयसुमङ्गलश्यावाश्वेतीत्यपि कश्चित् । वादुभूतकपुत्रिकापुत्रावधिकाविति केचित्।तत्र वादुभूतकाः पूर्वमुदाहृताः । बालेयादयस्तु अत्रेः पुत्रिकापुत्रास्त्रिप्रवराः । आत्रेयवामरथ्यपौत्रिकेति । एतेषां चात्रीणां परस्परं सप्तर्षेरत्रेरनुवृत्तेः सगोत्रत्वात्समानप्रवरत्वादविवाहः। अत्रीणां सर्वेषामविवाह इति बौधायनवचनाच्च । वैश्वामित्रधनञ्जयेन वासिष्ठजातूकर्ण्यैश्चाविवाह इति केचित्। इतरैः पूर्वोक्तैः सर्वैरपि विवाहा भवन्ति ।

अथ विश्वामित्राः ।

तेषां दश गणाः। तत्र प्रथमे गणे पञ्चत्रिंशद्गोत्राणि, द्वितीये षट्, तृतीये त्रीणि, चतुर्थे षट्, पञ्चमे दश, षष्ठे सप्त, सप्तमे एकम्, अष्टमेऽप्येकं, नवमे द्वे, दशमे एकम् ।

कुशिकास्त्रिप्रवराः, वैश्वामित्रदैवरातौदलेति होता, विश्वामित्रवद्देवरातवदुदलवदित्यध्वर्युरिति कात्यायनानुसारिणाम् ।

उदलवदेवरातवद्विश्वामित्रवदिति बौधायनानुसारिणाम् । एवम-न्यद्यथाप्रवरमावंशसमाप्तेः ।

लोहितास्त्रिप्रवराः, वैश्वामित्राष्टकलौहितेति । एतएवा-ष्टका वा त्रिप्रवराः वैश्वामित्रलौहिताष्टकेति । वैश्वामित्रमा-धुच्छन्दसाष्टकेति वा । वैश्वामित्राष्टकेति ह्यार्षेयो वा ।

रौक्षकास्त्रिप्रवराः, वैश्वामित्ररौक्षरैवणेति, वैश्वामित्रगा-थिनरैवणेति वा ।

दैवश्रवसाः त्रिप्रवराः, वैश्वामित्रदैवश्रवसदैवतरसेति । का-मकायना अप्येतएव तेषामप्येतएव प्रवराः । श्रौमता एते इत्यपि केचित् । प्रवरास्तूक्ता एव ।

अजास्त्रिप्रवराः, वैश्वामित्रमाधुच्छन्दसाजेति ।

आघमर्षणास्त्रिप्रवराः, वैश्वामित्राघमर्षणकौशिकेति ।

पूरणा द्विप्रवराः, वैश्वामित्रपौरणेति ।

इन्द्रकौशिका द्विप्रवराः, वैश्वामित्रैन्द्रकौशिकेति ।

कतास्त्रिप्रवराः, वैश्वामित्रकात्याक्षीलेति। रौहिणास्त्रिप्रवराः, वैश्वामित्रमाधुच्छसरौहिणेति, वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा।

धनञ्जयास्त्रिप्रवराः, वैश्वामित्रमाधुच्छन्दसधनञ्जयेति, वैश्वा-मित्रमाधुच्छन्दसाघमर्षणेति वा ।

काथकास्त्रिप्रवराः, वैश्वामित्रकाथकक्राथकेति ।

आश्मरथ्याः त्रिप्रवराः, वैश्वामित्राश्मरथ्यवाधुलेति ।

साहुलास्त्रिप्रवराः, वैश्वामित्रसाहुलमाहुलेति ।

गाथिनास्त्रिप्रवराः, वैश्वामित्रगाथिनरैणवेति ।

रैणवास्त्रिप्रवराः, वैश्वामित्रगाथिनरैणवेति ।

वैणवास्त्रिप्रवराः, वैश्वामित्रगाथिनवैणवेति ।

हिरण्यरेतसो द्विप्रवराः, वैश्वामित्रहैरण्यरेतसेति ।

सुवर्णरेतसो द्विप्रवराः, वैश्वामित्रसौवर्णरेतसेति ।
कपोतरेतसो द्विप्रवराः, वैश्वामित्रकपोतरेतसेति ।
कौशिकास्त्रिप्रवराः, वैश्वामित्रशालङ्कायनकौशिकेति ।
घृतकौशिका द्विप्रवराः, वैश्वामित्रघृतकौशिकेति ।

विश्वामित्राणां सर्वेषामपि परस्परमविवाहः । विश्वामित्रस्य सप्तर्षेः प्रवरेष्वनुवृत्तेः सगोत्रत्वात्, स्वस्वगणे समानप्रवरत्वाच्च । स्ववंशान्तर्भूतैः शिशिरिक्षेत्रोत्पन्नैः शौङ्गशैशिरिभिर्द्व्यामुष्यायणैश्चाविवाहः । देवरातस्य शुद्धजामदग्न्यैरप्यविवाहः । तथा शुद्धविश्वामित्राणां गर्गवर्गगतकपिधनञ्जयेन जातूकर्ण्येन अत्रिभिश्चाविवाह इति केचित् । अन्ये तु तन्नेच्छन्ति ।

धनञ्जयस्य भिन्नत्वात् प्रवराणां तु भेदतः ।
पूर्वोक्तैर्विवाहः स्यात्सगोत्रत्वाद्यभावतः ॥ इति ।

तेषां त्रयो गणाः निध्रुवा रेभाः शाण्डलाश्चेति । तत्र प्रथमगणे एकाशीतिर्गोत्रभेदाः, द्वितीयगणो निर्भेदः, तृतीयस्तु त्रिशत्प्रकारः । इतिं विश्वामित्रस्य गणाः ।

अथ कश्यपाः ।

आपस्तम्बस्तु पञ्चाह गणान्माषांस्तु रोहितान् ।
कात्यायनश्च लौगाक्षिः पञ्चाहाथ च शैशिरान् ॥
वैश्वामित्रगणानाह द्वादश त्वाश्वलायनः ।
सत्याषाढो द्वादशैव आश्वलायनवत्त्विमान् ॥

कश्यपास्त्रिप्रवराः, काश्यपावत्सारनैध्रुवेति होता, निध्रुववदवत्सारवत्कश्यपवदित्यध्वर्युरिति बौधायनलौगाक्ष्यादयः । कश्यपवदवत्सारवन्निध्रुववदित्यध्वर्युरिति कात्यायनादयः । एवमन्यद्यथाप्रवरमितरत्समानमावंशसमाप्तेः ।

रेभास्त्रिप्रवराः, काश्यपावत्साररैभेति ।

शाण्डिलास्त्रिप्रवराः, काश्यपावत्सारशाण्डिलेति, काश्यपासितदेवलेति वा, दैवलासितेति ह्यार्षेयो वा ।

द्व्यामुष्यायणा लौगाक्ष्यादयस्त्रिप्रवराः, काश्यपावत्सारवासिष्ठेति । लौगाक्षिसहितानां सर्वेषामपि कश्यपानां परस्परमविवाहः । कश्यपस्य सप्तर्षेर्भ्रियमाणतया सत्तयोत्पादकतया च शाण्डिलानां चतुर्थप्रवरविकल्पपक्षे सत्तयैवैकस्य प्रवरेष्वनुवृत्तेः सगोत्रत्वात्, स्वगणे समानप्रवरत्वाच्च । चतुर्थप्रवरवतां शाण्डिलानामन्यैः सहाविवाहे समानप्रवरत्वं न कारणं, किं तु सगोत्रत्वमेव, तद्भिन्नानां सप्रवरत्वमपीति विवेकः । लौगाक्ष्यादीनां द्व्यामुष्यायणत्वेन सर्वैरपि वसिष्ठैः सङ्कृतिपूतिमाषादिभिश्चाविवाहः । अन्यैः सर्वैरपि विवाहा भवन्ति । इति कश्यपस्य ।

अथ वसिष्ठस्य ।

ते चतुर्विधाः । तत्राद्यगणो द्वात्रिंशद्गोत्रः, द्वितीय एकोनविंशतिः, तृतीयश्चतुर्विंशतिः, चतुर्थस्त्रिंशत् ।

वसिष्ठा एकप्रवराः, वासिष्ठेति होता, वसिष्ठवदित्यध्वर्युः । एवमन्यद्यथाप्रवरमावंशसमाप्तेः । वासिष्ठभरद्वास्विन्द्रप्रमदेति त्रिप्रवर इत्येके ।

कुण्डिनास्त्रिप्रवराः, वासिष्ठमैत्रावरुणकौण्डिन्येति ।

उपमन्यवस्त्रिप्रवराः, वासिष्ठभरद्वस्विन्द्रप्रमदेति ।

पराशरास्त्रिप्रवराः, वासिष्ठशाक्त्यपाराशर्येति ।

जातूकर्ण्यास्त्रिप्रवराः, वासिष्ठात्रिजातूकर्ण्येति । अयमेकोऽधिकः । वसिष्ठानां जातूकर्ण्यसहितानां सर्वेषामपि परस्परं संकृतिभिर्लौगाक्षिभिश्चाविवाहः । वसिष्ठस्य सप्तर्षेः सर्वत्रानुवृत्तेः सगोत्रत्वात्स्वस्वगणे समानप्रवरत्वाच्च । जातूकर्ण्यानामत्रिभिरप्यविवाहः । अन्यैः पूर्वापरैः सर्वैरपि विवाहः । इति वसिष्ठस्य ।

अथागस्त्यस्य ।

आगस्त्यास्त्रयः । तत्राद्यगणे विंशतिगोत्राणि, द्वितीयतृतीयगणौ निर्भेदौ ।

आगस्त्यास्त्रिप्रवराः, आगस्त्यदार्ढच्युतेध्मवाहेति होता, इध्मवाहवद् दृढच्युतवदगस्तिवदित्यध्वर्युरिति बौधायनादयः। अगस्तिवद् दृढच्युतवदिध्मवाहवदित्यध्वर्युरिति कात्यायनः। अन्यथाप्रवरमितरत्सगानमावंशसमाप्तेः । एकार्षेयो वा अगस्त्येति ।

साम्भवाहास्त्रिप्रवराः, आगस्त्यदार्ढच्युतसाम्भवाहेति । अगस्त्यविस्तारेऽप्येते वक्ष्यन्ते ।

सोमवाहास्त्रिप्रवराः, अगस्तिदृढच्युतसोमवाहेति ।

यज्ञवाहास्त्रिप्रवराः, अगस्तिदृढच्युतयज्ञवाहेति ।

भिन्ना अप्यगस्तय उक्तास्तेऽपि त्रिप्रवराः, आगस्त्यमाहेन्द्रमायोभुवेति ।

तदाद्या इध्मवाहाः पौर्णमास्याः पारणाश्च त्रिप्रवराः, आगस्त्यपौर्णमासपारणेति ।

अक्राणामागस्त्यहैमवर्चिहैमोदकेति ।

विमलीनामागस्त्यपैनायकपाणिकेति त्रिप्रवराः । एतौ गणौ क्वचित।एतेषां सर्वेषामगस्तीनां परस्परमविवाहः । अगस्तेरनुवृत्तेः सगोत्रत्वात्स्वस्वगणे समानप्रवरत्वाच्च । अन्यैः सर्वैरपि विवाहो भवति ।

आपस्तम्बस्त्वाद्यभेदमेवैकार्षमपीहते ।
कात्यायनश्च लौगाक्षिस्त्रीनेवाह गणानिह ॥
आहाश्वलायनस्त्वाद्यमेकमेव गणं परम् ।
सत्याषाढोऽप्याद्यमाह आर्षेयं चापि पाक्षिकम् ॥

इत्यगस्त्यस्य ।

ननु बौधायनेन जामदग्न्यगणद्वयमुक्तं वत्सविदाविति, कात्यायनेन तु चत्वारो जामदग्न्यगणा उक्ताः आर्चाव्यादयस्ते कुतो नोक्ता इति चेत् सत्यम् । ये प्रसिद्धास्तइहोक्ताः, अप्रसिद्धास्त्विहैवान्तर्भूता इति ज्ञेयम् ।

तदाहुः,

वर्गा एकोनपञ्चाशत्प्रसिद्धा मुनिभिः स्मृताः ।
अप्रसिद्धाः परे वंशा अन्तर्भूता इहैव ते ॥ इति ।

अथ द्विगोत्राः ।

तत्र शैङ्गशिशिरयः पञ्चप्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति वा । त्रिप्रवरो वा आङ्गिरसकात्यात्कीलेति । स च भारद्वाजाच्छुङ्गाद्वैश्वामित्रस्य शैशिरेः क्षेत्रे उत्पन्नः, उभयतो गोत्रलक्षणत्वाद्गोत्रमिति । सर्वैर्भरद्वाजैर्विश्वामित्रैश्चैपामविवाहः । सगोत्रत्वात् । कैश्चित्सप्रवरत्वाच्च ।

तदुक्तं स्मृत्यर्थसारे,

भरद्वाजेन शुङ्गेन वैश्वामित्रस्य शैशिरेः ।
क्षेत्रजातो द्विगोत्रर्षिः प्रोच्यते शौङ्गशैशिरिः ॥
विश्वामित्रभरद्वाजै तज्जानां तेन नान्वयः । इति ।

एवं वक्ष्यमाणेष्वपि द्रष्टव्यम् । यत्तु कश्चिदाह, एवं कापिला अपि ।

तदुक्तं तत्रैव,

कापिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः । इति ।

तदसत् । कापिलानां क्वचिदपि सूत्रे पुराणे वा प्रवरमञ्जर्यादिषु वा द्व्यामुष्यायणत्वेनानभिधानात् । प्रक्षिप्तमिदं श्लोकार्द्धमिति वदन्ति । संकृतीनां कात्यायनेन प्रसिद्धद्विगोत्रशौङ्गशिशि-

रिणा सह पाठाद्विगोत्रत्वं, गणद्वयमध्ये पठितत्वाच्च । वसिष्ठगणे आपस्तम्बादिभिः पठितत्वाद्वासिष्ठस्य शक्तेर्विकल्पेन वरणाच्चो-भयथापि वसिष्ठस्यानुवृत्तेः प्रतिसन्धानात् । तथा आङ्गिरसत्वमपि, केवलाङ्गिरसां मध्ये पाठात् । बौधायनाङ्गिरसप्रवरसाम्याच्च । तेनै-तेषां वसिष्ठगणैः सर्वैः स्वस्वगणस्थैः सह वसिष्ठैर्लौगाक्षिभिश्च सह परस्परमविवाहः । स्वगणे सगोत्रत्वात् सर्वप्रवरसाम्यादन्यत्र किञ्चित्प्रवरसाम्याच्चेति । नैषां भरद्वाजता, तथा पाठाभावात् । क्वचित् पाठेऽपि वरणाभावात् । न च सत्तानुवृत्तिज्ञापकः सर्वैक-वाक्यतया कपिवत् प्रसिद्धभरद्वाजसन्दंशपाठोऽप्यस्ति । प्रत्युत केव-लाङ्गिरससन्दंशपाठस्यैव दृष्टत्वात् । पुराणगतवंशमध्यपाठस्य कल्प-भेदेन नाममात्रसाम्येन वाऽवश्यमुपपत्तेः । अन्यथा तस्याव्यवस्थि-तत्वेन बहुविप्लवः स्यात् । एवं सति केवलाङ्गिरसमध्यपाठस्य प्रयो-जनं चिन्त्यमित्याहुः ।

त्रिकाण्डमण्डनस्तु दिवोदासा वीतहव्या लौगाक्षिणा सधर्मिण इत्याह । तदसंबद्धम् । संबन्धलेशस्यापि तत्राभावात् । द्व्यामुष्यायणानां प्रयाजादिव्यवस्थैवं, शौङ्गशैशिरेस्तनूनपात्प्रयाजः तस्य तु द्वयो-रपि सत्त्वाद्विश्वामित्रभरद्वाजयोराप्रीसूक्तमिति विकल्पः, संकृत्या-दिषु बौधायनादिभिर्नराशंसस्योक्तेः स्वीयाप्रीसूक्ते नराशंसाभा-वादाप्रीसूक्तं वसिष्ठस्यैव । एवञ्चाश्वलायनसूत्रमप्युपलक्षणविधया बौधायनादिभिरेकवाक्यतया व्याख्येयमिति केचिदाहुः । यथा तनूनपाद्देवतायुक्ता ऋक् तथा नाराशंसदैवतयुक्ताऽपि ऋगस्ति कण्वाङ्गिरसाप्रीसूक्तयोः अत उपांशुयाजदेवतावद्विकल्पः । स च व्य-वस्थितो ज्ञेयः । तत्तत्सूत्रकारपरिग्रहवशात् । तथाच येन सूत्रकारेण संकृतेर्नराशंस उक्तः तस्य वसिष्ठोक्ताप्रीसूक्तमेव, येन तनूनपादु-क्तस्तस्याङ्गिरसोक्तमेवेति व्यवस्थितविकल्पः । एवमन्येषां प्रयाज-

क्त्व्यवस्थेत्यन्ये । यद्गणान्तर्वर्ती यः स्या·
तस्येति, सूत्रकारैर्द्व्यामुष्यायणत्वेनानुक्तत्वा-

ायनलौगाक्षिमणीतभरद्वाजगोत्रप्रवरानुदाहरि-
तमार्कण्डिवालिशायनिसौपिष्टसौगेयाग्निवेश्या-
वरिवाहिसौङ्गितूणकर्णिनूपाकर्णिप्रावाहणेया-
प्रौगिन्यधिकारग्रीविणां मैथुनमातिसाष्टाङ्क्का-
रिषौरिधैताश्वकीनां सामस्ताम्बिब्रह्मस्ताम्बि-
द्रेषीणां साल्लुहिवाल्लुहिसौबुद्धिकाभारद्वाजौ-
ारिदेवस्थानिहारिणकार्णिध्वाङ्गाविध्रौगपकौमु-
स्यक्षीकमालोहरहालोहरगङ्गोदकिकौरुक्षेत्रि-
मानां कार्ण्यविजालिरापस्ताम्बिसौजपृश्नि-
ना इत्येते आत्रेयाः ।
ामथा वाच्यतमरायणा भ्राष्टकृद्भ्रष्टुभिवि-
ः कौलाश्वाक्रियाश्वाक्रीवकालकृन्मातुयावक्र-
गपैगलायनश्यामायना गार्ग्याः सांपरिवाराः

मिः खण्डितः खन्दिनः गर्ग इत्येते तित्तिरयः ।
चिदिवण्डिः शक्तिः पतञ्जलिः भूयसीतिवर-
कैशिकलासिकाङ्कोरिरयो वान्यायनाः का-
।
ण्डसैथयनजानाकितैराघतरव्यक्राषिभिचारा-
ागनहीत्येते संकृतयः ।
समुग्रिमुद्गलायना इत्येते मुद्गलाः ।
ाश्च तृतीयः शाकटायनः ।

ततः प्रमादसौनारी मर्कटो रमणः सणः ॥

कण्वो मार्कटयो रमणा इत्येते भेरुण्डाः । शौङ्गशिशिरा द्व्यामुष्यायणाः ।

इति भरद्वाजाः ।

अथ केवलाङ्गिरसः ।

हरिताः शङ्खदर्भयः सौभगा भैमगवाः मनायवो बालोदरा महोदराः नैमिश्रयो मिश्रोदकाः कौतमाः कारीषयः कौलयः पौलयः पोटलाः मत्स्या मान्धातारो माण्डकाररयः खण्डायनाः माण्डसालयो गवेरणयो मात्स्यमालयो गाणगारयो भद्रगारयो कुत्साहसा हस्तिवासाः पैङ्गलाः पिङ्गाः पलाशिनो दार्दुला हस्तिनः कौमारहारिताः इलाः आम्बरीषा इत्यादयो हरिताः ।

काण्वा औपमर्कटायना वाकलाः पौलाहालिनो मौञ्जिमाजयो मौञ्जिगन्धा विजिवाजया वाजश्रवसो भारुण्डा भरुण्डा रमणाः मर्कटा गर्धभाः प्राकाराः शाकटायना गोदायनाः शालायना रामायणाः शौवेरिणो नारिणः आर्यादयश्चतुराः श्यामायनय इत्यादयः कण्वाः ।

रथीतरा हस्तिदासिका हायना नैतिरक्षयः शैलालयो भैलयो भिलीभायनाः सावहा भैक्षवाहा हेगवा वैरूप्या विरूपा अङ्कुष्ठा अष्टादंष्ट्राः पृषदश्वा इत्यादयो रथीतराः ।

विष्णुवृद्धाः शठाः मरणाः मद्रणा भद्रणाः भद्रयो बादरायणा वात्सप्रायणाः सात्यकयः सात्यकायना नैतुण्ड्याः स्तुत्या भारुण्याः वैहोढा दैवस्थानयः क्षत्रिणाः छत्रिणा होत्रिणाः पुत्रिणाः जन्त्रिणाः वज्रिणाः कर्तृणाः शाम्बरायणाः औपमीतयः इत्यादयो विष्णुवृद्धाः ।

मुद्गलाः सात्यमुग्रयः हिरण्यस्तम्बयो हंसजिह्वा देवजिह्वा आलवालत्रा विडादयः आयाग्नयः स्तनयः छत्रहयाः स्तरणाः कार्थभासिता हिरण्याक्षा दीर्घजङ्घा हिरण्यदर्भाः भिन्दयः इत्यादयो मुद्गलाः।

संकृतयो मलकाः पौलस्तण्डिशम्बुशैभवयः परिभत्रास्तारकाद्या हरिग्रीवाः शेशयाः श्रौतायना आग्रायणाः आग्रापयः पूतिमाषाः इत्येते संकृतयः।

कपयः स्वस्तिरयो विन्दवो दाण्डिनो दिक्स्वशक्तयः पतञ्जलयो भूयसिनः स्तैवरन्धयश्चैतकयः ऊर्ध्वास्ता राजकेशिनः कलशिनः कण्ठाः कारीरयाः वान्यायना आमावास्यानाः कपेतराः स्वदायितराः जलसिञ्चयः कुसीदरयः स्तौजटयः सासवयः सङ्घयः क्षण्याः सावस्यायनयः रूक्षेयाः इत्यादयः कपयः।

अथात्रेयाः।

अत्रयो भूरयः छान्दयश्छन्दोगेयाः पौष्पिकाः मौद्गलयः सौपाञ्चालाः छागलास्तृणबिन्दवः भार्गतयो मालरुचो व्यालयः सांवच्यानयः कामर्यायणयो दाक्षयः स्तैदेहाः गाधिपतयः औद्दालकयो द्रोणभात्रा गौरिग्रीवयो माविच्छिराः शिशुपालाः कृष्णात्रेया गौरात्रेया ऋक्षात्रेया नीलात्रेयाः श्वेतात्रेयाः श्यामात्रेयाः महात्रेयाः गालेयाः बालेयाः शौभ्रेयाः वामरथ्याः श्वेतभावाः शौद्रेयाः कौद्रेयाः गोपवनाः कालापचयो नीलायना आनङ्ग्यो दौरङ्गयः सौरङ्ग्यो गौरङ्गयः पुष्पयः सौपुष्पयः साकेतायनाः भारद्वाजायनाः इन्द्रातिथयः शाम्बरय आहायनाः पवनाशाः किंविदिकयः शौनकर्णयः सौश्रुतयः गौरग्रीवयः कैरञ्जयो जैत्रायणाः श्वेतकयो बाहुतन्त्रा वाहमित्राः जानुकयः एनञ्जना भागमादनाः सांख्येयाः सारायणाः सौक्तचराः अर्धपन्थाः

गौपन्याः कानजिह्वाः उदरग्रीवयो वैडालयः शाकलायनाः आत्रे-याः गौणीपन्थाः जलदाः भगपादाः शाकटायनाः अर्घ्यायणाः बादर्यायणाः माङ्गलाः बाहुपयाः शामलयो बाहुदन्तयो भागलयो रुणात्रेया दत्तात्रेयाः स्वस्त्यात्रेयाः शेखयः कीरायणाः नीशायनाः दार्भ्या दुलादुपा भावरथा गणपतयो वैश्वानकेयशैलूषकयो निकला इत्यादयोऽत्रयः।

दक्षयो भलन्दना और्णनाभयश्चन्द्रात्रेयाः बैजवापयो मौञ्ज-केशा गविष्ठिराः पूर्वातिथयः श्यामपुष्पयः शिलन्दलयो ब्रह्मपु-ष्पयो व्याघ्रपुष्पयः सौपुष्पयः कृष्णशीर्षका हिरण्यपुष्पयः का-लासयः काकशीर्षयः पक्षयो बलयो धृतयः पार्ष्णयः कटुकयो मैत्राण्या शिरीषका इत्येते गविष्ठिराः ।

मुद्गला व्यालिमन्धयः अर्णवा बौधाक्षा वैतवाहाः शिरीषयः शालिमताः मौरिताः गौरकयो वाजवना इत्येते मुद्गलाः ।

बालेया हालेयाः कौद्रेयाः शौभ्रेयाः वामरथ्याः गोपवना इत्येते अत्रेः पुत्रिकापुत्राः ।

अथ विश्वामित्राः ।

कुशिकाः पर्णजङ्घाः वारक्याः औदलयो माणयो बृहद-ग्नयः आजवयः आग्रहयः आमस्तय्याः कामन्तकाः बद्धक-थाः शित्रकिताः लामकायनाः शालङ्कायनाः स्याङ्कायनाः लौ-कागाराः सौगन्तव्याः यमदूताः आनभिम्लारुतारकायणाः श्रौव-ला जाबालयो याज्ञवल्क्याः वितण्डा नुवलयः सौश्रुतयः औपग-हनयः उदुम्परयः भ्राष्ट्रक्याः श्यामेयाश्चैत्रेयास्तालोचता मयूराः सौमत्याश्चित्रमतयः स्येतन्तायनाः मनवस्तन्तवो मान्तवो पक्षान्यत्व-शब्दा बाभ्रव्याः कालाया उत्सरयो देवराताः औलूकयः उलू-काः बभ्रवः शाला विशाशालाः कालववाः सैन्धवायनाः सौर-

रथयः कारीषयः संसृत्याः औलोप्याः पार्योदरयः पाडलयो गालवा वैन्दतयो वतण्डाश्वशङ्कवः श्यामायनाः काला वालखिल्याः पाञ्जयः सौमेयाः आश्वलायनाः आवाहाः उलूखला जैमिनयः संकृतयः औधेयाः आर्जुनाक्षय इत्यादयः कुशिकाः ।

लोहिता दण्डकयश्चाक्रवर्णायना तञायना वासयोऽष्टका इत्येते लोहिताः ।

रौक्षकाः स्वोत्वहला रेवणा इत्येते रौक्षकाः ।

देवश्रवसो देवतरसाः श्रौमता ज्यामकायना कामकायना इत्येते देवश्रवसः ।

मार्गमित्रा माधुच्छन्दसा अजा इत्येते अजाः ।

अघमर्षणाः कुशिका इत्यघमर्षणाः ।

पूरणा वारिधय इति पूरणाः

इन्द्रकौशिका विश्वामित्रा इति इन्द्रकौशिकाः ।

औदुम्बरयः शैशिरयः तैकायनयः तौकायनयः ताक्ष्यायणयः कात्यायनयः करीराभयो लावकयः शालङ्कायना मौजहायणाः कताः गङ्गायनयः कालवो वेदायनयो गोदायनयो मोदायनयश्चोदायनयो वेनायनयो रावणयो रातयो मौजायणय इत्यादयः कताः ।

धनञ्जयाः पार्थिवा मदकबन्धुलाः पाणिनाश्चैत्रेयाः परिकुटय इत्यादयो धनञ्जयाः ।

कथकक्राथका आदृषया उद्गूर्णया इत्येते कथकाः ।

आश्मरथ्याः घोरमुखाः कामुकायनाः कामलायनाः बन्धुलाः पाणिनयो नेतुलाङ्कुलवः कौशिका इत्येते आश्मरथ्याः ।

साहुला राहुला माहुलाः काहुलाः कागुला औमिला औहलाः द्वैहलाः शातातयः कोमलायनाः सातवयो जातवय इत्येते सा-

हुलाः ।

औद्दालकयः उदवासा रौक्यका आज्योद्वहा रेणुका गाथिन इत्येते गाथिनः ।

शालङ्कायनाः शालाक्षाः लोहिताक्षा लोहिता जह्नव इत्येते कौशिकाः ।

अथ कश्यपाः ।

काश्यपाश्चाङ्गिरयो मङ्गरा ऐतिशायना आभूत्या वैशिप्रा धूम्रा धूम्रायणाः सौम्या धर्म्यायणा सौवत्क्षा राप्रायणाः वैत्रकयः प्रावर्याः हृद्रोगा आमयाः पाश्वायनिकाः मेषान्तकयः सागसयो माघसरावयः सैन्धवयः सायस्या आसुरायणाः छागव्याः सौनद्यः स्थौलकेशयः वार्धकय औपव्या लाक्षायणाः क्रोष्टुजीवनयः स्वाद्रायणा रौहितायना मितकुम्भाः पिङ्गलाक्षयः औदुलयो मारायणाः पौलयो वैकर्णेयाः कौशीतकेयाः धूमलहाणयः सुरा गौरिवायनाः महाचक्रेयाः पैठीनस्याः यानस्या विषगणा दाक्षमाणयो भालन्दनाः शाङ्खमित्रेयाः हरित्या जारमात्स्या रमाणयः साविश्रवसो वैशम्पायनाः खरङ्कयः कासेलय उल्कायणयो मार्जनायनाः कांसलायना देवाहोतारः सुवयः खरेभाः अयःस्थूणाः भागुरयः पाथिकपाटलयो गोमायना हिरण्यवायाः अग्नयो देवयः सौर्या मुसला आविश्रेण्या उत्तरतोगण्डेपत्रः उदरामन्त्रिता वैकर्णयः स्थूलबिन्दवः आयायणा मौषका रीतिकायना औषप्रतिमाः सरागोजा वीराध्वारायणयः साराहरेयाः कैरजाश्चैकेता मातृत्याश्चैकयो भौवनाश्चैवगाव्या हगायकाः देवयाताः सोमयागाः उपस्वाया वयश्चेदुर्गव्यायनाः भक्तुहयो हृद्योगः काचायणाश्चक्रधर्मिणो महाचक्रधर्मिणः श्रेपयणाः हार्करयो दाक्षायणयो हास्तयो दासयो वात्स्या

थानयो हास्तलायनाः त्यक्ततत्रः स्वत्रभ्रष्टा आश्ववतायनाः कौसीदकाः स्वगादाः अग्निशर्मायणाः मौरूड्याः कैकसेयाः काश्वहायना द्विहायना हस्त्याः सानुश्रुना हरितायना मातङ्गाः सोमभुत्रो ज्ञानराधाः श्यामा यक्षाः सामिसाः स्ववशान्ताः हास्तिदाः स्वासोवजत्रो वाजिहायना बहुकायना भौमनयो मौष्ठायना मौषरयो वात्स्यायनाः शेरकाः काष्ठायनाः नागशिरसः शौकयाः पाचामनयो ज्ञालहस्तयो भत्रनन्दयो भृयोगराः प्रतिश्रवाः प्रीतिथेयाः कैजालयः काण्डवायनयः कैरिह्या पैलमैलयश्चाक्रायणाः पद्गोडलायनाः कौषीतका मारीचा कामेया नक्रयो वेलणीभिक्षया भूताशत्र इत्यादयो निध्रुवाः ।

शाण्डिलाः कोहलाः पाषकाः वापिका मेघाः सौरानत्रः सावणाः कारेयाः कौकुण्डयस्तैक्षिमाहकया महोदयकयः कोशयो मौजायना भाणत्रंशाः स्वांत्रमानया गङ्गायना वात्सभालयो गोभिला वेदायना वात्स्यायना वद्रूहरयो भागुरयः स्वादन्तीमुखा हिरण्यबाहवस्तैदेहा योमूत्रा त्राक्यशठो जानन्धरयो धन्वन्तरयो तृकस्तण्डा गर्मदा मुखा जात्रंशास्तृणबिन्दवः कौकिलाः पैपल्यादयो जलन्धरा गोशालाः शत्रुतापनाः जीमाविप्यलाः शाज्ञाः केशिलाः मुञ्जमयूराः वैदानत्राः कौवलयः कौरुण्डजा उत्तराः सुजातपूराः पर्णामाः गर्दभाश्चेरलाः सुकेनत्रः कुहकाः संपचाश्चुलुभयो बहुमिण्डा द्रेपुराश्चटायना महाकौरलयाः कुहला मगला भगला कैराताः पर्यश्त्रा भुजाजलयः पारावारिण इत्यादये शाण्डिलाः ।

वैतालकवरा रसाखला गौरिश्रवस आश्वलायनाः कपिष्ठलाः सात्रिवृक्षाः व्याघ्रपादा वाह्यकायनयो गायनयो नयाव्या जातूकर्ण्या औभ्रामयः कोभोजयः कौलायना सुन्दरहारीताः काण्डेदृद्धयः सोपत्रस्सायनाः आलम्भायनाः लोमायन्याः स्वस्त्याक-

ष्ठिताः देवत्राः पार्णकायनाः पार्णवल्का देवनीगौरव्या विश्वायना वाहकथयः अवकितयो वस्वयाजयाः पूतिमाषाः सप्तवेलाः वासिष्ठाः औपगवा वैष्णवाः प्लावनायना औडिलोमा गोपायनाः यौवयो बाह्यकृतः कालोहवयः पालिसया वाग्रथयः आपस्थूणेयाः ब्रह्मपुरेयाः स्वस्तिकाः पाण्डुलयो गौधिलयो चौविलयो मालोहयः सौमनसायना ब्रह्मवलयः श्वौलयः पौहिश्रवसो याज्ञवल्क्याः रावणयो मौलयः कौलयो औपलोमाः अध्वदा वसदाकराः आश्वलायना मिथोवलयाश्चण्डाद्यौ गौडिलयो व्यालोहपयः स्यामुनाश्वाः सुपाचयो विदयो दासव्या भालिसव्या आर्जनाक्षय इत्यादयो वसिष्ठाः ।

कुण्डिना लौहायना गुगुलयोऽश्वत्था नैकर्णयः औपस्वस्थाः अश्वरथाः बाहवः कौङ्कोल्याः साङ्कतिनः कापटवः पेटकानयः आमा हिरण्याक्षायणाः पैप्पलादयः सौगयोक्षिता माध्यन्दिनाः सोमपक्षयः स्वस्थयो धृतयः आकोहालादयः त्रैश्रृङ्गाः लोभायमना गोपना विधकृषयो मैत्रावरुणा इत्यादयः कुण्डिनाः ।

उपमन्यव औदलया माण्डलेखयः कापिञ्जलाः जङ्कागतास्तपोलोकास्त्रैवर्णाः पार्शगिरयः साराक्षरा मौलाल्या महाकण्वायना बालशिखा औद्वाहयानयः आश्वलायना भागवित्तायनाः कुण्डोदरायणाः लाक्ष्मणेया बाह्यकयो वार्कयः आलवचाः कापिकेशाः शौलालवः शाकाधियो दाकायना बलेखला लम्बायना ब्रह्मचयाः शाकोहयाः सरावणाः काण्वायनाः कालाक्षा दक्षेरकाः कृष्णास्तरायणाः पालङ्कायनाः उद्वाहाः कौरव्याः क्रोधिनो मानेया ब्रह्मवलयो माषशवयाः सांख्यायनाः कालाक्षाः आलम्बायना गोरथाः सुहकाः श्यामयो रास्पेया औपलेखयो गोपो-

दन्तयः कौमाश्चः काण्डोदरयः चक्रदर्भयः कारपुरेयः कौलकलेयः शाब्यायना रौक्षहेमणयो नाहुलयो बाहुलयो काजपायना भागुरायणाः शाक्कूर्या मुञ्जकायनाः पादकायनाः स्काम्भायनाः पार्थश्रवसो मारायणा घातुहयो भागहयः कौरक्षतः कशानेयाः इत्यादय उपमन्यवः ।

काण्डूशयो वाजयो वाजिमन्तयो भैमतायना गोवालयः प्रागेहयाः वैकलय लाक्षयः कौकुचादयो हार्यश्वयः कलपायनयो गोपयः स्पातयो वारुणयो भालुक्या वाजरयः काहयनाः क्रौकुलयः क्रौमतयः कृष्णासिताः कापिमुखाः स्वास्यायनयः श्वेतयूपयः पौष्णरसादयो गार्ग्यायनयः स्तार्णेयाः श्मामेयाः श्रोतहयः सहचौलया वादनयो नेमयः पार्थेयाः कौरुजायनाः कार्ष्णायनाः शेकयो वार्ष्यायणाः कपितोताः स्कम्भिन्या माण्डिक्यः श्यानयातयः पटिका वधिका तिल्वयूपयः खाव्यायनाः क्षौमयो हर्यवयः शितयः उषीकहस्ता इत्यादयः पराशराः ।

जातूकर्ण्या अर्थबोधाः पाटलादयो लवसौक्तिकाः ख्नगा इत्येते जातूकर्ण्याः । इति वसिष्ठाः ।

अथागस्तयः ।

अगस्तयो विशालाद्याः सालायनाः औपदहनयः कुल्माषा दण्डयो लावणयो लाव्या वरण्डयो वैरणयो बुदोदरयः सैवपथयः शाल्यातपाः मौञ्जिकयः पार्थोहिता हारिग्रीवाः रौहिष्या मौसलयः सैवकाः सौभरायणाः वैकर्णायनाः मार्गायणाः प्राचार्याः शालङ्कायनय उपकल्मकायनयो वारिणयो बाह्वायनया बाह्वकयः क्षौमितया लाशयः साकक्षयस्तन्द्रयो लाज्यामनयो हृद्रोगयः प्रादुराक्षयो रम्याक्षयः पण्डोद्धृताः कुब्ज्याक्षयः उप-

कुला अर्बुदाः शैवायुधाः पटहस्ताः वैह्योरन्भयः औकुला वैरण्डयो गोव्यादयो दामोष्णीषास्तन्नराः सौम्यानयाः ब्राह्मण्याः पुत्रयो वाशिषायणाः शारङ्गराः फाण्टावता इत्येते अगस्तयः ।

अन्ये निर्भेदाः अगस्तयः ।

करम्भयः कौशल्याः सुमेधसो मयोभुवो गान्धरायणाः पुलस्तयः पुलहाः क्रतवः कार्णाटा माहेन्द्रा इत्यादयो वा अगस्तयः ।

इध्मवाहास्तदाद्याः । अक्राः शक्राः शुका हंसाः श्वासा भासा हिमोदकाः हेमचर्चयः इत्येते अक्राः ।

विमलयो मामभितकयः पाणिकाः पिनायकाः नन्दयो विलयाश्विलय इत्येते विमलयः । इत्यगस्तयः ।

लौगाक्षयो दार्भायणाः मैत्रवादयो देहकालेयाः कापुटयः कलयाः कंसपत्राः भालकायनया नित्यरास्ताचयः नुदकयः कानामकयः सौनयः सेतिकपष्ठिमेरा निष्ठयः छोपिकयः सौसुकयः सैरन्धयः श्रोष्यमाणा योधकालकयो राजवाहय आनष्टयो भुकुरयो राजवन्तयः सौरयः सैकयः सासुचयः शरद्वन्ता औपपत्त्यकयः सौतया इत्यादयो लौगाक्षयः ।

लौगाक्षायणानां सर्वैः कश्यपैः सर्वैश्च वसिष्ठैः सङ्कृतिभिश्च सह परस्परमविवाहः सगोत्रत्वात् । समप्रवरत्वाच्च ।

तदुक्तं स्मृत्यर्थसारे,

वसिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः ।
सङ्कृतीनां द्विवंश्यत्वाद्वासिष्ठैश्च चतुर्विधैः ॥
स्ववर्गीयैः सगोत्रत्वात् प्रवरैक्याच्च नान्वयः ।
एते त्रयो द्विगोत्राः सर्वसंमताः ।
धनञ्जयाः सर्वैर्विश्वामित्रैरात्रिभिश्च सगोत्रत्वादविवाह्याः ।

उक्तं च स्मृत्यर्थसारे,

विश्वामित्रात्रिगोत्रेण नोद्वहेयुर्धनञ्जयाः। इति।

जातूकर्ण्यानां वसिष्ठैरत्रिभिश्च सर्वैः परस्परमविवाहः। यद्यपि सूत्रकारैर्द्विगोत्रत्वेनैते त्रयो नोक्तास्तथापि केषुचित्सूत्रेषु गणद्वये पाठाद्विगोत्रत्वत्राचोयुक्तिः अत्रिपुत्रिकापुत्राणाम्। वामरथ्यादीनां सर्वैरत्रिभिर्वसिष्ठैरत्रिभिश्च परस्परमविवाहः। जमदग्निसगोत्रिणां देवरातादीनां विश्वामित्रगणे उत्पन्नत्वाद्विश्वामित्रैः सहाविवाहः।

तथाच प्रयोगपारिजाते,

जमदग्निगणस्यापि विश्वामित्रगणस्य च।

न देवरातगोत्रेण विवाहः स्यात्परस्परम्॥ इति।

वस्तुतस्तु बह्वृचब्राह्मणे सहोवाच शुनःशेपः स वै यथा नो ज्ञपयेत्यस्या गाथायाः पूर्वैः सङ्क्षिप्याभिप्रायो दर्शितः।

पुरात्मानं नृपं विप्रं तपसा कृतवानसि।

एवमाङ्गिरसं मां त्वं वैश्वामित्रमृषे कुरु॥ इति

देवरातेनोक्ते स होवाच विश्वामित्रो ज्येष्ठो मे त्वमित्यादिना विश्वामित्रेण स्वपुत्रत्वसंपादनानुरूपाशीर्वादं दत्त्वाऽन्ते उपसंहृतम्।

अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः।

जह्नूनां चाधिपत्ये दैवे वेदे च गाथिनाम्॥ इति।

अयमेवार्थः सर्वानुक्रमणीकारेण श्रुत्यर्थं संगृह्योक्तः। कश्यपं घोनाजीगर्तिः शुनःशेपः स कृत्रिमो विश्वामित्रो देवरात इति। भाष्यकारेणाप्येतदेवं व्याख्यातम्। तेनायमङ्गिरोगणोत्पन्नः। तत्रापि सह देवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवा इत्यस्य यतोऽयं विश्वामित्र आस अतोऽस्यैकतः कापिलगोत्रोत्पन्ना एकतो बभ्रुगोत्रोत्पन्ना बन्धवो ऽभवन्निति भाष्यकारव्याख्यानेन

कपिलस्य भरद्वाजगणे दर्शनात् बभ्रोर्विश्वामित्रगणदर्शनाद्भरद्वाजगणोत्पन्नोऽयं, तेनायं देवरातो भरद्वाजेन विश्वामित्रेण चाविवाह्य इति । पुराणे तु देवरातस्य जमदग्निसंबन्धकीर्त्तनं तत्कल्पान्तरविषयं द्रष्टव्यम् । पुराणानामन्यत्रास्थितत्वात् इत्याहुः ।

अत्रानुक्तानामपि कतानामाश्वलायनसूत्रे शौङ्गशैशिरमध्यपाठाद्बौधायनादिषु विश्वामित्रगणे यावद्भिश्वामित्रैर्भरद्वाजैरविवाहः।

अन्ये तु एतेषां गणद्वयपाठाभावेऽपि स्मृत्यर्थसारसंग्रहे चोक्तत्वाद् द्विगोत्रत्वम् । एतेनैतदुक्तं भवति न केवलं पाठमात्राद् द्विवंश्यता किं तर्हि द्विवंश्यत्वेन गणितानामेवेति ।

लौगाक्षयस्त्रिप्रवराः काश्यपावत्सारवासिष्ठेति होता, वसिष्ठवद्वत्सारवत्कश्यपवदिति अध्वर्युर्वासिष्ठावत्सारकाश्यपेति होता, कश्यपवदवत्सारवद्वसिष्ठवदित्यध्वर्युः ।

एते ऽहर्वसिष्ठाः रात्रौ कश्यपाः । अहर्वसिष्ठा इत्यनेन विवाहातिरिक्तं वसिष्ठकार्यं वसिष्ठशब्देनोच्यते । एवं नक्तं कश्यपा इत्यत्रापि । तेन दिनकर्मणि वसिष्ठगोत्रप्रयुक्तप्रयाजादिकार्यं रात्रिकर्मणि कश्यपगोत्रप्रयुक्तं तत्कार्यम् । तत्तद्विगोत्राणां यथा तत्तदेकगोत्रैः सहाविवाहस्तथा तत्तदेकगोत्राणामपि तत्तद्विगोत्रैः सहाविवाहः यथा तत्तदेकगोत्रैः। तत्तद्विगोत्रविशेषाणामन्योन्यं यथैकगोत्राणां तथा द्विगोत्राणामपि। वसिष्ठभरद्वाजत्वादिगोत्रस्याविशेषात् ।

अथ द्व्यामुष्यायणप्रसङ्गाद्दत्तकादिविचारः प्रस्तूयते ।

तत्रेदानीन्तनानां दत्तकस्वयंदत्तकृत्रिमादीनामनयैव रीत्या पितृद्वयस्य सगोत्रैः सहाविवाहो द्रष्टव्यः । नच

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

इत्येवं विधलक्षणलक्षितद्व्यामुष्यायणस्यैवैतद्युक्तं तस्योभयसंबन्धित्वात् न तु दत्तकादेस्तस्यैकमात्रसंबन्धित्वादिति वाच्यम्। एवं हि देवरातादीनामपि द्विगोत्रता न स्यात्। शौङ्गशैशिरिसंकृत्यादीनाम् अथेमानि द्व्यामुष्यायणकुलानि भवन्तीत्युपक्रम्याभिधानात् तेषां लक्षितद्व्यामुष्यायणत्वं स्यादपि न तु स्वयंदत्तादिरूपाणां देवरातादीनाम्। ननु

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः।

इति वचनाज्जनकगोत्रनिवृत्तेः कथं जनकसगोत्रैरविवाह इति चेत्। नैष दोषः। आर्षेयवरणाभिवादनादौ जीवतो दत्तकादेः मृतस्य च श्राद्धदेवतात्वे जनकगोत्रसंबन्धाभावार्थं तद्वचनं न त्वविवाहार्थम्। विवाहे तु जनकसगोत्राया वरस्य जनकगोत्रसंबन्धाभावेन स्वसगोत्रत्वाभावेऽपि पितृसगोत्रत्वप्रयुक्त एव निषेधः। असगोत्रा च या पितुरिति वचनात्। तत्रत्यपितृपदप्रयोजनमप्येतदेवेत्युक्तं स्मृतिचन्द्रिकाकारेण। प्रवरमञ्जरीकारस्याप्येतदभिमतम्। एवं पुत्रिकापुत्रदत्तक्रीतपुत्रादीनामपि। द्वयोरपि गोत्रयोरविवाह इति तदुक्तेः। न च दत्तक्रीतादयो द्व्यामुष्यायणाः स्वतो द्विगोत्रा वेत्येवं प्रतिपादितं कैश्चित्। तदपरे न क्षमन्ते। अपुत्रेण परक्षेत्रे इत्यादिलक्षणलक्षितस्य द्व्यामुष्यायणत्वेन लक्ष्यत्वात्। विज्ञानेश्वरेण चेदमेवं व्याख्यातम्।

क्रियाभ्युपगमात्क्षेत्रं बीजिने यत्प्रदीयते।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च॥

इति मनुवाक्ये क्रिया अत्रोत्पन्नमपत्यमावयोरुभयोरिति संवादरूपा विवक्षितेति याज्ञवल्कीयमपि तद्विषयमेवेति तेषामेव द्व्यामुष्यायणता नत्वन्यत्र।

फलं त्वनभिसन्धाय क्षेत्रिणा बीजिना तथा।

प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥ इति

मनुवाक्ये फलानभिसन्धानं नामात्रोत्पन्नमपत्यमावयोरुभयोरित्येवं संवादाभावरूपं विवक्षितम् । तेन तदुत्पन्नो न द्व्यामुष्यायणः किं तु क्षेत्रजः । इदमेवाभिसन्धाय याज्ञवल्क्योऽप्याह,

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥
आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥ इति ।

तथाचोभयोरप्ययमिति संवादे दत्तकादिरपि द्व्यामुष्यायणः । तदभावे प्रतिग्रहीतुरेव । द्व्यामुष्यायणानां शौङ्गशैशिरिवन्निर्णयः । अन्येषां तु क्षेत्रजदत्तकादीनां गोत्ररिक्थे जनयितुरित्यादिमनुवाक्येन जनकगोत्रनिवृत्तौ नोभयतः प्रवृणीतइत्यादिना । नन्वेवं जनककुले सगोत्रत्वनिमित्तो विवाहनिषेधो न स्यात् । सापिण्ड्यनिमित्त एव तर्हि भविष्यति । नचैवं पिण्डो व्यपैतीत्यस्य सापिण्ड्यं निवर्त्ततइति मिताक्षराव्याख्यानेन विरोधः । सामान्यवाक्यस्यास्य "ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्चेति" गौतमवाक्येन विवाहविषये बाधितस्याशौचविषये संकोचेन व्यवस्थापनादिति सर्वमकलङ्कम् ।

अन्ये तु शिष्टपरिगृहीतत्वात्प्रथमपक्षमेवाद्रियन्ते । युक्तश्चायम् । गोत्ररिक्थे इत्यत्र यथा सापिण्ड्यशब्दस्य सामान्यत्वेन गौतमीयविशेषवचनेन तदितरविषयत्वं, तथा सगोत्रेत्यत्र पितृग्रहणात्तत्र गोत्रशब्दस्यापि तदितरविषयत्वं युक्तम् ।

तदुक्तं प्रयोगपारिजाते स्मृत्यन्तरे,

गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ।

न चात्र मातृग्रहणं व्यर्थम् । मातृद्वारकसापिण्ड्यस्य विवक्षित-

स्वादित्याहुः ।

यत्तु भरद्वाजस्य बृहस्पतेः सकाशान्ममतासंज्ञकोतथ्यक्षेत्रजातत्वेनोतथ्यप्रवराणां गौतमानां भरद्वाजानां च सर्वेषां परस्परमविवाह इति कश्चित् । तदसत् । तस्य क्षेत्रजातत्वेऽपि द्व्यामुष्यायणत्वाभावात् । न च तत्त्वे प्रमाणमस्ति । इदमावयोरपत्यमस्त्विति संवादेन विष्णुपुराणेऽनुक्तेः । प्रत्युत द्व्यामुष्यायणत्वाभावे एव प्रमाणं सम्भाव्यते । सर्वेषु प्रवरसूत्रेषु भरद्वाजानां द्व्यामुष्यायणत्वेनाप्रतिपादनात् । बौधायनेन च पूर्वैर्गौतमैरुक्तैश्च केवलाङ्गिरोभिः सह विवाहोक्त्या विष्णुपुराणमपि द्व्यामुष्यायणरूपक्षेत्रजत्वप्रतिपादनपरमिति वर्णनीयम् । किञ्च । गोत्रप्रवराभिधानपरपुराणभागस्यातिसंवादाभावात् पौराणिकस्य वंशानुपूर्वीमध्यगतजन्मक्रमस्यात्यन्तव्यवस्थितत्वात्तस्य सुतरामतिप्रसङ्गापादकत्वात्तदनुरोधेन गोत्रप्रवरनिर्णयस्याकिञ्चित्करत्वादिति दिक् । तदत्र द्व्यामुष्यायणानामुभयेऽपि प्रवराः कीर्त्तनीयाः। तथाच उभयतः प्रवृणीतैकमितरतो द्वावितरतः द्वौ वेतरतस्त्रीनितरतः न हि चतुर्णांप्रवरोऽस्ति न पञ्चानामतिप्रवरणमाङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेत्याश्वलायनः । अस्यार्थः । द्व्यामुष्यायणानां प्रवरकरणेऽनियमप्रसक्तौ उभयतः प्रवृणीतेति विहिते आङ्गिरसबार्हस्पत्यभारद्वाजेति पितुः वैश्वामित्रकात्यात्कीलेति क्षेत्रिण इत्येवमुभयतः षड्वरणे प्रसक्ते न पञ्चानामतिवरणमिति षड्वरणे प्रतिषिद्धे उभयतो वरणविधानात् "समं स्यादश्रुतित्वादिति"न्यायेन द्वयोर्द्वयोरुभयतो वरणे प्राप्ते न हि चतुर्णां प्रवरोऽस्तीति निषिद्धे कथं तर्ह्युभयतः प्रवृणीतेत्याकाङ्क्षिते एकमितरत इत्यादिना पक्षद्वयमुक्तम् । तत्रापि पूर्वं जनकस्य ततोऽन्यस्य त्रयाणां च सम्भवे पञ्चानां कीर्त्तनम् । तत्रापि त्रिपक्षे

जनकस्य द्वावाद्यौ प्राथम्यात् । उत्तरस्य एकः । पञ्चपक्षे च शौङ्गशिशिरिवदेव जनकस्य त्रयः भरद्वाजस्य द्वावाद्यावेव प्राथम्यात् तदतिक्रमे कारणाभावाच्च ।

अथ क्षत्रियवैश्यानां गोत्रमुच्यते ।

ऐलाद्याः पुरूरवाश्च क्षत्रियास्तेषां मनुर्गोत्रं त्रिप्रवराः मानवैलपौरूरवसेति होता, मनुवदिलवत्पुरूरवोवदित्यध्वर्युरिति कात्यायनानुयायिनः । पुरूरवोवदिलवन्मनुवदिति लौगाक्ष्यादयः ।

वैश्याः भालन्दनादयस्तेषां भलन्दनो गोत्रं भालन्दनसाप्रमाङ्कीलेति होता, भलन्दनवत्सप्रवन्मङ्कीलवदित्यध्वर्युरिति कात्यायनादयः । मङ्किलवत् सप्रवद्भलन्दनवदित्यध्वर्युरिति लौगाक्ष्यादयः । वात्सप्रेत्येकार्षेया इति त्रिप्रवरा वेति दक्षः ।

तत्र द्विविधाः क्षत्रियाः केचिद्विद्यमानमन्त्रदृशः केचिदविद्यमानमन्त्रदृशः । तत्र विद्यमानमन्त्रदृशः स्वीयानेव प्रवरान्प्रवृणीरन् । ये त्वविद्यमानमन्त्रदृशस्ते पुरोहितप्रवरान्प्रवृणीरन् । स्वीयप्रवरसत्त्वेऽपि स्वस्वपुरोहितगोत्रप्रवरपक्ष एव मिताक्षराकारमेधातिथिप्रभृतिभिराश्रितः । आपस्तम्बेनापि पक्षद्वयमुक्त्वा निर्णीतम् । स पुरोहितप्रवरो ऽस्त्येव न्यायेनेति । अयं च न्यायः मन्वादिषु गोत्रप्रवरलक्षणाभावः अगस्त्याष्टमसप्तर्षीणां ब्राह्मणत्वेन तदपत्यत्वाभावात् क्षत्रियवैश्ययोर्गोत्रत्वाभावात्सप्रवरत्वस्य सुतरामभावः । नापि सर्वे मन्त्रकृत इति । यत्तत्र प्रवरमञ्जरीकारादय ऊचुः, सर्वेषां राजन्यवैश्यानामेकरूपगोत्रप्रवरत्वे सर्वेषां परस्परमविवाहप्रसङ्ग इति न्यायः, स विशेषरूपेण सवर्णाविवाहोपदेशेन सामान्यरूपसगोत्रसप्रवरविवाहनिषेधबाधात्सुपरिहर इत्याहुः । तस्मात्सर्वैः क्षत्रियैर्वैश्यैर्वा वरणे यः पुरोहित उपात्तस्तद्गोत्रप्रवरैरेव तेषां कर्मानुष्ठानं विवाहाविवाहौ चेति । इति क्षत्रियवैश्यानाम् ।

अथाविदितस्वगोत्रप्रवरविशेषाणां ब्राह्मणानामप्याचार्यगोत्रप्रवरास्तैरेव कर्माणि विवाहाविवाहौ च। अथासंप्रज्ञातबन्धुराचार्यामुष्यायणमनुब्रुवीताचार्यप्रवरं वृणीतेति बौधायनवचनात्। अस्यार्थः। बन्धुर्गोत्रं प्रवरो वा सम्यक् न प्रज्ञातो येन सोऽसंप्रज्ञातबन्धुर्यथा सत्यकामो जाबालो गोतममाचार्यमुपेयिवान् भगवान्नित्युक्त्वा शरणं प्रपन्नो गौतमेन च किङ्गोत्रो नु सौम्यासीति गोत्रं पृष्टः सन् नाहमेतद्वेद भो यद्गोत्रोऽहमस्मीति एवमसम्प्रज्ञातबन्धुराचार्यामुष्यायणमाचार्यस्य गोत्रं चानुब्रुवीतानुपूर्व्या ब्रूयात् आचार्यप्रवरं वृणीतेति तदेवं विवृतम्। एवं च सति यो वा अन्यः सन्नन्यस्यार्षेयं प्रवृणीते स वा अस्य तदृषिरिष्टं वीतं गृहइत्यादिदोषश्रवणं प्रज्ञातगोत्रप्रवरविषयम्। तेषां त्वाचार्यकन्यामात्रं निषिद्धं न सर्वा तद्गोत्रा।

तथाच स्मृतिः,

गायत्रीं यस्य यो दद्यात्तत्कन्यां विवहेन्न सः।
तद्गोत्रे तत्कुले चापि विवाहो नैव दुष्यति॥ इति।

एतदनन्तरं गुरुगोत्राज्ञानेत्यादि गुरुगोत्राज्ञाने दानादिनाऽन्यगोत्राः स्युरित्यपि केचित्। आदिशब्दः क्रयोपलक्षणम्।

यद्वा स्वप्रवराज्ञाने जमदग्नीनुपाश्रयेत्।
गोत्रकार्येषु सर्वेषु किन्तु नैवोद्वहेत्क्वचित्॥

इति त्रिकाण्डमण्डनः।

गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमिष्यते।

इति यत् तदाचार्यगोत्रस्याप्यपरिज्ञाने विवाहातिरिक्तविषयं च शूद्रवदिति ज्ञेयमिति सङ्क्षेपः।

* तथाचोक्तं स्मृत्यर्थसारे प्रायश्चित्तविधाने ऊढ्वोपगच्छती-

* अत्र ग्रन्थः अलग्न इव भाति।

ति । नैवम् । गुरुतल्पव्रतातिदेशप्राप्तस्य सगोत्राग्रहणस्य गन्तृपरिणीतसगोत्राविषयत्वे मानाभावात् । समानप्रवरामित्यत्रापि उद्वाह एव चान्द्रायणस्योक्तत्वादिति परस्परव्यभिचारिनिमित्तसन्निपातात्प्रायश्चित्तद्वयं कर्त्तव्यम् । सगोत्रायामज्ञानादुत्पन्नस्य काश्यपगोत्रेण व्यवहारः कार्यः । गर्भो न दुष्यति काश्यप इति विज्ञायत इति बौधायनवचनात् । जनकशुद्धिश्चान्द्रायणत्रयेण ।

तथोक्तं स्मृत्यर्थसारे,

अज्ञानादैन्दवैः शुद्ध्येत्त्रिभिर्गर्भस्तु काश्यपः । इति ।

ऐन्दवैरिति बहुवचनं त्रित्वमात्रपर्यवसायि । कपिञ्जलाधिकरणन्यायात् । अल्पाभ्यासे एकस्मिन् चान्द्रायणे प्राजापत्यत्रयम् । बह्वभ्यासे एकस्मिन्प्राजापत्याष्टकमित्येवं कल्पनीयम् । ज्ञानतस्तूत्पत्तौ चाण्डालत्वमेव ।

तथाच यमः,

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥ इति ।

त्रिकाण्डमण्डनोऽपि,

सगोत्रायां प्रजां जातां चाण्डालेषु विनिक्षिपेत् ।
गुरुतल्पव्रतं कृत्वा तां रक्षेज्जननीमिव ॥ इति ।

गुरुतल्पव्रतं द्वादशवार्षिकम् । एतस्य गोत्रप्रवरविवेकज्ञानस्य तु फलं विधिनिषेधविषयपरिज्ञानमेव । प्रवरसूत्रकारैस्तु यद्ब्रह्मलोकावाप्त्यादिफलमित्युक्तं तत् पूर्णाहुत्या सर्वान्कामानवाप्नोतीतिवत्पूर्वकर्मानुष्ठानफलस्यैव स्तुत्यर्थमिति संक्षेपः ।

प्रोक्तो बौधायनादीनां रीत्या गोत्रविनिर्णयः ।
वक्ष्ये मत्स्यपुराणोक्तं गोत्रप्रवरनिर्णयम् ॥

सूत उवाच ।

इत्याकर्ण्य स राजेन्द्र ॐकारस्य च वर्णनम् ।
ततः पप्रच्छ देवेशं मत्स्यरूपं जलार्णवे ॥

मनुरुवाच ।

ऋषीणां नामगोत्राणि वंशावतरणं तथा ।
प्रवराणां तथा साम्यमसाम्यं विस्तराद्वद ॥
महादेवेन ऋषयः शप्ताः स्वायंभुवेऽन्तरे ।
तेषां वैवस्वते प्राप्ते सम्भवं मम कीर्तय ॥
दाक्षायणानां च तथा प्रजाः कीर्तय मे प्रभो ।
ऋषीणां च तथा वंशं भृगुवंशविवर्द्धनम् ॥

मत्स्य उवाच ।

मन्वन्तरेऽस्मिन्संप्राप्ते प्राप्ते वैवस्वते पुरा ।
अश्वमेधेतु वितते ब्रह्मणः परमेष्ठिनः ॥
महादेवस्य शापेन त्यक्त्वा देहान्समन्ततः ।
ऋषयश्च समुद्भूता हुते शुक्रे यथेच्छया ॥
देवानां मातरो दृष्ट्वा देवपत्न्यस्तथैव च ।
स्कन्नं शुक्रं महाराज ब्रह्मणः परमेष्ठिनः ॥
तं जुहाव ततो ब्रह्मा ततो जातो हुताशनः ।
ततो जातो महातेजा भृगुः स तपसां निधिः ॥
अङ्गारेष्वङ्गिरा जातस्तृतीयोऽत्रिस्तथैवच ।
मरीचिभ्यो मरीचिश्च ततो जातो महातपाः ॥
कुशैस्तु कपिलैर्जातः पुलस्त्यस्तु महातपाः ।
वसुमध्यात्समुत्पन्नो वसिष्ठश्च तपोधनः ॥
भृगुः पुलोम्नश्च सुतां दिव्याम्भार्यामविन्दत ।
यस्यामस्मात्ततो जाता देवास्तु द्वादशात्मकाः ॥
भुवनो भानवश्चैव सुजन्यः सुजवस्तथा ।

शुचिः क्रतुश्च मूर्द्धा च याजश्च वसुदश्च ह ॥
प्रभवश्चाव्ययश्चैव दक्षो द्वादशमस्तथा ।
इत्येते भृगवो नाम देवा द्वादश कीर्त्तिताः ॥
पौलोम्यजनयद्विप्रं देवानान्तु कनीयसाम् ।
च्यवनं तु महाभागमाप्नवानन्तथाप्यसौ ॥
आप्नवानात्मजश्चौर्वो जमदग्निस्तथाऽऽत्मजः ।
और्वगोत्रकरस्तस्य भार्गवाणां महात्मनाम् ॥
तद्गोत्रप्रवरान्वक्ष्ये भृगोर्दीप्तौजसस्त्वहम् ।
भृगुश्च च्यवनश्चैव आप्नवानस्तथैवच ॥
ऊर्वश्च जमदग्निश्च वत्सो दाभिर्नडायनः ।
वैशयनो वैतिहयः पैलश्चैवाथ सात्याकिः ॥
शौनकायनिजीवन्तिकम्बोदाः पार्षतिस्तथा ।
वैहीनरिविरूपाक्षौ रोहित्यायनिरेवच ॥
वैश्वानरिः कथानीलुर्वसावर्णिर्विकस्वरुः ।
विष्णुः पौलोमिबालाकिनौलिकेलान्तभाविनः ॥
ऋताभागोऽथ मार्कण्डः जह्विनो वीतिनस्तथा ।
मण्डूमाण्डव्यमाण्डूकफेनपा गनिभस्तथा ॥
स्थौलपिण्डः शिखापत्तिः शर्कराक्षिंस्तथैवच ।
जलधिः सौध्वजिः कृत्स्नस्तथाऽन्यः पागलायनिः ॥
मार्कायणो दिवपतिर्मण्डूकिर्नर्षभिः स च ।
लवः साङ्कृत्यसालाकिस्तथाचैत्रानुशातकिः ॥
कोपियज्ञो मित्रयज्ञस्तथाचैत्रामिलायनः
गार्ग्यायणो ह्वायनश्च ऋषिर्गोदायनस्तथा ॥
गोष्ठायनो हायनिश्च वैशम्पायनगालवौ ।
वैकर्णेयः शार्ङ्गरवो याज्ञेयिभार्ण्यकायनिः ॥

लालादिर्लाकुविश्चैव लक्ष्मण्यपरिमण्डलः ।
शाल्यायनिर्नालायनिः कौटलश्चलहस्तिकः ॥
शौक्तिः सकोटरश्चैव साक्षिसान्द्रमणिस्तथा ।
जेकाजिह्विर्जैकशून्यः केह्ललेर्ठिर्हिकस्वरः ॥
सौरद्वतिः सनैमिश्यो लोष्ठाक्षिश्च भवेरणिः ।
वागायनिः स्वानुमतिः पौर्णसौगन्धिकासिकृत् ॥
समभ्यगस्तथैतेषां पञ्चार्षप्रवरो मतः ।
भृगुश्च च्यवनश्चैव आप्नवानस्तथैवच ॥
और्वश्च जमदग्निश्च पञ्चैते प्रवरा मताः ।
परस्परमविवाह्या ऋषयः परिकीर्त्तिताः ॥
भृग्वन्दीया मार्गरथो ग्राम्यायनिरथायनी ।
आपस्तम्बस्तथा भालिर्नैकर्षिः कपिरेवच ॥
आर्ष्टिषेणो गार्दभिश्च कार्दमायनिरेवच ।
आश्वलायनिरथानूपः पञ्चार्षेयाः प्रकीर्त्तिताः ॥
भृगुश्च च्यवनश्चैव आप्नवानस्तथैवच ।
आर्ष्टिषेणस्तथाऽनूपः प्रवराः पञ्च कीर्त्तिताः ॥
परस्परमविवाह्या ऋषयः परिकीर्त्तिताः ।
यास्का वाचो वीतहव्या मागन्धश्चण्डमोदनः ॥
जीवन्त्यायनिर्मौपिलिश्च शलिश्चैव खलिस्तथा ।
भागलिर्गार्गवीतिश्च कौशाम्बोयिश्च काश्यपिः ॥
वासेयिः समदागेयिः सौरिज्वरिस्तथैवच ।
परस्परमविवाह्या ऋषयः परिकीर्त्तिताः ॥
शात्यायनो यक्षपतिर्मत्स्यगन्धिस्तथैवच ।
प्रत्यूहश्च तथा श्रौण्यश्चक्षिश्च कार्दमायनिः ॥
तथा गृत्समदो राजन् शुनकश्च महर्षिकः ।

परस्परमविवाह्या ऋषयः परिकीर्त्तिताः ॥
एते नवोक्ता भृगुवंशजाता महानुभावा नृप गोत्रकाराः ।
तेषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं विजहाति जन्तुः ॥
इति मत्स्यपुराणोक्तभृगुगोत्रप्रवरनिर्णयः ।

अथ मत्स्यपुराणोक्तत्रिविधानामाङ्गिरसां गोत्रप्रवरनिर्णय उच्यते ।

मत्स्य उवाच,

मरीचितनया राजन् सुरूपा नाम विश्रुता ।
भार्या त्वङ्गिरसो देवी तस्याः पुत्रा दश स्मृताः ॥
आत्मा ह्यायुर्मनो दक्षो दमः प्राणस्तथैवच ।
हविष्मांश्च हविष्ठश्च क्रतुः सत्यश्च ते दश ॥
इत्येतेऽङ्गिरसो नाम देवा वै सामगायनाः ।
सुरूपा जनयामास ऋषीन्सर्वेश्वरानिमान् ॥
बृहस्पतिं गोतमं च संवर्त्तं च महाऋषिम् ।
आयास्यं वामदेवं च उतथ्यमुशिजं तथा ॥
इत्येते ऋषयः सर्वे गोत्रकाराः प्रकीर्तिताः ।
तेषां गोत्रसमुत्पन्नान् गोत्रकारान्निबोध मे ॥
उतथ्यो गौतमश्चैव तैलेयोऽभिजितस्तथा ।
बौधिर्निगः सुगो माक्षिः क्षिरिटोटकिरेवच ॥
राहुकर्णिश्च सौपुत्रिः कैरातिः सामलोमकिः ।
पौष्काजिर्भगत्रो वै ऋषिश्चण्डालकस्तथा ॥
करोटसुतपा वीर उपविन्दः सुरैषिणः ।
रौहिणेयो निवैराणिः कौष्ठश्चैवारुणायनिः ॥
सोमो दायानिकः सोरुः कौशिल्यः पार्थिवस्तथा ।
रौहिणेयो निरोधश्च मूलयो वासुरेवच ॥

कार्षाक्षः पुष्पवांश्चैव क्षारकारण्डिरेवच ।
क्षया विश्वान्तिरेविश्च पाविका रेत्रिरेवच ॥
ऽयार्षेयप्रवरा ह्येते तेषां वा प्रवरान् शृणु ।
अङ्गिराश्च वचोतिश्च उशिजश्च महान् ऋषिः ॥
परस्परमविवाह्या इत्येते परिकीर्त्तितः ।
आत्रेयायनिसौवत्सावग्निवेशः शिलाथिलिः ॥
बालिशायनिवाराही चिविपिर्वाष्कलिस्तथा ।
सौठिश्च तृणकर्णिश्च प्रवाहिश्च लभायनिः ॥
ब्राह्मगाच्छिर्दशादीकिः स्वारग्रीवस्तथैवच ।
जित्यद्रोणिर्घटाकिश्च जैक्षलायनिरेवच ॥
आपस्तम्बिर्वाजवृष्टिः गोस्वपिङ्गलिरेवच ।
पैलश्चैव महातेजाः शालङ्कायनिरेवच ॥
ऽयार्षेयः प्रवरश्चैव सर्वेषां प्रवरोत्तमः ।
अङ्गिराः प्रथमस्तेषां द्वितीयोऽथ बृहस्पतिः ॥
तृतीयश्च भरद्वाजः प्रवराः परिकीर्त्तिताः ।
कण्वायनाः कौञ्जवयस्तथा वत्सतरायणाः ॥
भ्रष्टकृद्भ्रविष्मी च लैन्यालिः शाकलायनिः ।
क्रौडिश्चाष्मी च वाष्मी च तातकुन्मधुरावहः ॥
लोपकुद्दालविकुषो मर्कटः पौलिकायनः ।
मृतङ्गश्च तथादार्भिर्गार्भिः श्यामायनिस्तथा ॥
बालकिः साहनिश्चैव पञ्चार्षेयाः प्रकीर्त्तिताः ।
अङ्गिरास्तु महातेजाः देवाचार्यो बृहस्पतिः ॥
भरद्वाजो गर्गसैन्यो समानप्रवरस्त्वतः ।
सगोत्रत्वात्मका एते परस्परमनन्वयाः ॥
पतञ्जलिर्दिक्ष्वशक्तिः स्वदौनरकचेतरौ ।

भूयसी जनसिश्चिश्च बिन्दुर्दाजकुसीदरिः ॥
उर्धतो राजकेशी च सौजाटिः सासाविस्तथा ।
सलिश्च कलसी कण्व ऋषिकारी रयस्तथा ॥
क्षत्रज्यो वाच्यायनिश्चैव सावस्यायनिरेवच ।
त्र्यार्षेयः प्रवरस्तेषां कपीनां भूमिपोत्तम ॥
आमहय्योऽङ्गिरा मुख्य उरुक्षयस्तृतीयकः ।
सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः ॥
ज्ञात्वायतो हरिकर्वौ मत्स्यः पौगेल एवच ।
हस्तिवासो मात्स्यालिर्माडिलिश्च गवेराणिः ॥
शाङ्खदर्भिर्भीमगवः सर्वे त्रिप्रवरा मताः ।
अङ्गिरा अम्बरीषश्च यौवनाश्वस्तृतीयकः ॥
परस्परमविवाह्याः समानप्रवरत्वतः ।
बृहदुल्को वामदेवस्तथा त्रिप्रवरौ मतौ ॥
अङ्गिराबृहदुल्को वै वामदेवस्तृतीयकः ।
परस्परमवैवाह्या गोत्रे स्वे परिकीर्त्तिताः ॥
कुम्भगोत्रोद्भवश्चैव तथा त्रिप्रवरो मतः ।
अङ्गिरास्त्रसदस्युश्च पुरुकुत्सस्तृतीयकः ॥
कुत्साः कुत्सैरवैवाह्याः एवमाहुः पुराविदः ।
ततो रथीतराणां च त्र्यार्षेयः प्रवरः स्मृतः ॥
अङ्गिरा हि विरूपोऽपि तृतीयो हि रथीतरः ।
रथीतरा अवैवाह्याः नित्यमेव रथीतरैः ॥
विष्णुवृद्धिः सतोमाङ्गिर्जतृणः कर्तृणस्तथा ।
अत्रिवाचो महातेजाः तथा चैवापरायणः ॥
त्र्यार्षेयो हि मतश्चैषां सर्वेषां प्रवरो नृप ।
अङ्गिरा हि विरूपश्च पृषदश्वस्तृतीयकः ॥

ऋषयोऽमी सगोत्रत्वादवैवाह्याः परस्परम् ।
सत्यमग्निर्महातेजा हिरण्यस्तम्बिमुद्गलौ ॥
त्र्यार्षेयो हि मतस्तेषां सर्वेषां प्रवरः शुभः ।
अङ्गिराश्चैव भार्म्यश्वो मुद्गलः सुमहातपाः ॥
परस्परमवैवाह्या इत्येते परिकीर्त्तिताः ।
हंसजिह्वा देवजिह्वा आलवालविडालयः ॥
आयाग्नयः शुनपश्च पौराण्यान्तानि मुद्गलाः ।
त्र्यार्षेयो हि मतश्चैषां सर्वेषां प्रवरः शुभः ॥
अङ्गिराश्चैव ताविश्व मौद्गल्यश्च महातपाः ।
ऋषयोऽमी सगोत्रत्वादवैवाह्याः परस्परम् ॥
पादश्च चतुरश्चापि तृतीयः शाकटायनः ।
ततः प्रागादसौनारी मर्करो रमणः ससाः ॥
कण्वः कर्मटयश्चैव तथा गादायनो रथिः ।
श्यामायनिस्तथैवैषां त्र्यार्षेयः प्रवरो मतः ॥
अङ्गिराश्चाजमीढश्च कण्वश्चैव महातपाः ।
सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः ॥
तित्तिरिः कपिभूश्चैव गार्ग्यश्चैव महानृषिः ।
परस्परमवैवाह्याः समानप्रवरत्वतः ॥
अत्वरिश्च भरद्वाजः क्रथिश्चात्मा भवस्तथा ।
ऋषिर्मैत्रावरश्चैव पञ्चार्षेयाः प्रकीर्त्तिताः ॥
अङ्गिराश्च भरद्वाजस्तृतीयोऽथ बृहस्पतिः ।
ऋषिर्मैत्रावरस्तुर्यो मुनिरात्मा भविस्तमाः ॥
प्रवरैक्यस्वमुख्यत्वादवैवाह्याः परस्परम् ॥

सर्वे तइमेऽङ्गिरसस्त्रिधोक्ता महानुभावा नृप गोत्रकाराः ।
एषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं पुरुषो जहाति ।

इति मत्स्यपुराणे प्रवरकीर्त्तने सर्वेषां त्रिविधाङ्गिरसां प्रवराध्यायो द्वितीयः समाप्तः ।

इति मत्स्यपुराणोक्ते सर्वेषां त्रिविधाङ्गिरसां प्रवरकाण्डे प्रकीर्त्तितानां प्रवराणां मध्ये येषां प्रवरेषु गौतमः सप्तर्षिर्म्रियमाणतया सत्तया वा ऽनुवर्त्तते तेषां परस्परमविवाहः । समानगोत्रत्वात् । गौतमानां सर्वेषां परस्परमविवाह इति बौधायनवचनाच्च । तथा येषां गोत्राणां प्रवरेषु भरद्वाजः सप्तर्षिर्म्रियमाणतया सत्तया वाऽनुवर्त्तते तेषां परस्परमविवाहः । समानगोत्रत्वाद्भरद्वाजानां सर्वेषां परस्परमविवाह इति बौधायनवचनाच्च । तदितरेषां तु सप्तर्षिबाह्यानां केवलाङ्गिरसां हरितकुत्सकण्वरथीतरपृषदश्वमुद्गलवृद्धादीनां परस्परं स्वेच्छया विवाहः । सगोत्रत्वाभावात् । स्वस्वे गणे पुनः सुतरामविवाहः सगोत्रत्वादिति समुदायार्थो निरूढ इति । इति मत्स्यपुराणोक्तप्रवराध्याये त्रिविधानामङ्गिरसां गोत्रप्रवरनिर्णयस्तृतीयः समाप्तः ।

अथ मत्स्यपुराणोक्तः अत्रिगोत्रप्रवरनिर्णय उच्यते ।

मत्स्य उवाच ।

अत्रिगोत्रसमुत्पन्नान् गोत्रकारान्निबोध मे ।
कामयायनिसांख्येयौ तथा सारायणाश्च ये ॥
औद्दालकिः सौनकर्णिरथो सौक्तवराश्च ये ।
गौरग्रीविकेयोरञ्जिरथो जैत्रायणाश्च ये ॥
अर्द्धरथो वामरथो गोर्यन्यतृणबिन्दवः ।
कारजिह्वोद्गरग्रीवौ वैडालिः शाकटायनिः ॥
नैलेयश्च सचैलेयो न्यन्निगोणीपथस्तथा ।
जलदो भगपादश्च सौपुष्पिश्च महातपाः ॥
छान्दोगेयस्तथैतेषां त्र्यार्षेयः प्रवरो मतः ।

श्यावाश्वश्च तथाऽत्रिश्च तथा चैत्रार्चनानसः ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
अत्रेस्तु पुत्रिकापुत्राः तत ऊर्ध्वं निबोध मे ॥
कालेयश्च सवालेयो वामरथ्यस्तथैवच ।
सौत्रेयश्चैव शौभ्रेयस्त्र्यार्षेयाः परिकीर्त्तिताः ॥
अत्रिश्च वामरथ्यश्च पौत्रिकश्च महानृषिः ।
परस्परमविवाह्याः समानप्रवरत्वतः ॥
इत्यत्रिगोत्रप्रभवास्तथोक्ता महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं पुरुषो जहाति ॥
इति मत्स्यपुराणोक्तात्रिगोत्रप्रवरनिर्णयः ।
अथ मत्स्यपुराणोक्तो विश्वामित्रगोत्रप्रवरनिर्णय उच्यते ॥

मत्स्य उवाच,

अत्रेरेव परं वंशं तव वक्ष्यामि पार्थिव ।
अत्रेः सोमः सुतः श्रीमांस्तस्य वंशोद्भवो नृपः ॥
विश्वामित्रः सुतपसा ब्राह्मण्यं समवाप्तवान् ।
तस्य वंशमहं वक्ष्ये तन्मे निगदतः शृणु ॥
विश्वामित्रो देवरातस्तथा वै कृतिगालवौ ।
तडश्च बलशङ्कुः स्यादाश्ववातायनास्ततः ॥
श्यामायना याज्ञवल्क्या जाबालाः सैन्धवायनाः ।
बाभ्रव्याश्च करीशा हि संसृत्या अथ संसृताः ॥
औलोप्या औपगहनाः पार्षोदरपपाशयाः ।
रक्षपाः पाडलीभावा यमदूता मयूरकाः ॥
त्र्यार्षेयः प्रवरस्तेषां सर्वेषां परिकीर्त्तितः ।
विश्वामित्रो देवरात उदलश्च महातपाः ॥
परस्परमविवाह्याः समानप्रवरत्वतः ।

मार्गमित्रो तथाऽजाश्च माधुच्छन्दस एवच ॥
त्र्यार्षेयप्रवरा ह्येते ऋषयः परिकीर्त्तिताः ।
विश्वामित्रस्तथोजश्च मधुच्छन्दास्तथैवच ॥
परस्परमविवाह्या ऋषयः परिकीर्त्तिताः ।
धनञ्जयः कामधवः परिकूटश्च पार्थिव ॥
पाणिनीयस्तदीयाश्च त्र्यार्षाः सर्वे प्रकीर्त्तिताः ।
विश्वामित्रो मधुच्छन्दास्तृतीयोऽप्यघमर्षणः ॥
सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः ।
कामुकायनयश्चैवमश्वरथ्यास्तथैवच ॥
माधुलाः कौशिकाश्चैव त्र्यार्षेयाः प्रवरा मताः ।
विश्वामित्राश्मरथयो बाधुलिश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
अवैवाह्याः पूरणश्च वारिधापयता मिथः ॥
लोहिता अष्टकाश्चैषां त्र्यार्षेयाः परिकीर्त्तिताः ।
विश्वामित्रो लोहितश्च अष्टकश्च महातपाः ॥
अष्टका लोहितैर्नित्यमविवाह्याः परस्परम् ।
उदवासोऽपि कथक ऋषिरौद्दालकिस्तथा ॥
त्र्यार्षेया हि मतश्चैषां सर्वेषां प्रवरः शुभः ।
कथका ग्रन्थिनश्चैव विश्वामित्रस्तथैवच ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
औदुम्बरिः सौसवटिर्ऋषिस्ताक्ष्यायणिस्तथा ॥
कात्यायनिः करीराभिः शालङ्कायनिलानकी ।
मौजायनिश्च भगवान् त्र्यार्षेयः परिकीर्त्तितः ॥
स्वसनिश्च सुविद्धारिर्विश्वामित्रस्तथैवच ।
परस्परमवैवाह्याः ऋषयः परिकीर्त्तिताः ॥

एते तवोक्ताः कुशिका नरेन्द्र महानुभावाः सततं द्विजेन्द्राः।
येषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं पुरुषो जहाति ॥

अत्र विश्वामित्रगणेषु ये देवरातादयः परिगणिताः तेषां परस्परमविवाहः । स्वेस्वे गणे च समानप्रवरत्वात्सुतरामविवाहः।

यावतां प्रवरेष्वेको विश्वामित्रोऽनुवर्त्तते ।
न तावतां सगोत्रत्वाद्विवाहोऽस्ति परस्परम् ॥

इति मत्स्यपुराणोक्तो विश्वामित्रगोत्रप्रवरनिर्णयः ।

अथ मत्स्यपुरणोक्तः कश्यपगोत्रप्रवरानिर्णयः ॥

मत्स्य उवाच,

मरीचेः कश्यपः पुत्रः कश्यपस्य महाकुले ।
गोत्रकारानहं वक्ष्ये तेषां नामानि मेश्टणु ॥
आग्रायणा विषगणा मेषः किरिटिकायनाः ।
भवनन्दिर्महाचक्रिर्दाक्षणायनिरेवच ॥
क्रोष्टयना ह्यकिरयो हस्तिदास्तु तथैवच ।
वात्स्यायनाल्पनिकृतो हास्तलायनिनस्तथा ॥
कौशीतकाः स्वापशान्ता आग्निशर्मायणाश्च ये ।
मौनिस्वरः कैकसयास्तथाचैव सुगन्धयः ॥
पौलयो ज्ञानरायाश्च अग्नयः सर्वएवतु ।
श्यामायनिः शिरायक्षस्तथा यद्वोडलायनः ॥
कशायनाश्त्वमारीषा आजिहा यानहास्तिकः ।
विशीर्णयाः काश्यपाश्च सासिसा हारितायनाः ॥
प्रतंससाव्रष्टगवः ह्यार्षेयाः परिकीर्त्तिताः ।
अवत्सारः कश्यपश्च निध्रुवश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
नैहास्यसांख्यमित्राश्च ह्यार्ष्याः सर्वे प्रकीर्त्तिताः ॥

अवत्सरः कश्यपो मुख्यो निध्रुवस्तु तृतीयकः ।
सगोत्रत्वादवैवाह्या ऋषयोऽमी परस्परम् ॥
अतः परं प्रवक्ष्यामि ह्यामुष्यायणगोत्रजान् ।
अनुष्टयो भागुरयः तानयो रसवत्तयः ॥
सौरिः स्थिरो वहोहाश्च सैरन्ध्रिरोपवत्सकिः ।
साम्नाक्षिः सादपिङ्गाक्षिराजाताम्बिस्तथैवच ॥
दिवा वसिष्ठा इत्येते नक्तं ज्ञेयास्तु कश्यपाः ।
ऽयार्षेयो हि मतश्चैषां सर्वेषां प्रवरः शुभः ॥
कश्यपोऽवत्सरश्चैव वसिष्ठश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ॥
सम्पातिश्च बलिश्चोभौ पिप्पलोऽथ जलन्धरः ।
सुजातः पूरपूर्वश्च गर्दभो गर्दभीमुखः ॥
हिरण्यबहुकैरातावुभौ कश्यपशोभिनौ ।
कुलहोऽन्दषदण्डश्च मृगेनुश्च तथोत्तरः ॥
तट्टपोसस्तत्सोगमहाकैरलयाश्च ये ।
शाण्डला वैदीनवसौ दनवो वै द्रुयातवः ॥
पैप्पलादिस्तोयपर्य्यायः ऋषिर्वा परिकीर्त्तितः ।
ऋषिप्रधानस्य तु कश्यपस्य दाक्षायणीभिः सकलं प्रसूतम् ।
जगत्सहस्रं यदुसिंहमुख्य किं ते प्रवक्ष्याम्यहमुत्तरं नृप ॥
इति मत्स्यपुराणोक्तः कश्यपगोत्रप्रवरानिर्णयः ।
अथ मत्स्यपुराणोक्तवसिष्ठगोत्रप्रवरानिर्णयः ।

मत्स्य उवाच,

वसिष्ठवंशजान् विप्रान् सर्वान्निगदतो मम ।
शृणुष्वैकार्षप्रवरो वसिष्ठानां प्रकीर्त्तितः ॥
वसिष्ठा एव वासिष्ठा अवैवाह्या वसिष्ठजैः ।

व्याघ्रपादा औपगवा वैष्णवाः मातुलायनाः ॥
कपिष्ठला औडलोमा अध्वला वसदाध्वसः ।
गोपायना घोत्रयश्च दासव्या अथ बाह्यकृत् ॥
वालिसयाः पालिसयास्ततो वागूग्रन्थयश्च ये ।
आयस्थूणा शितिवृक्षास्तथा ब्रह्मपुरायकाः ॥
लोभायनाः स्वस्तिकाश्च चाण्डालिर्गौडिलिस्तथा ।
व्यालोहकिः स्थामुनाश्च सुपाचिर्धिद्विरेवच ॥
मिथोवालिब्रह्मवली पौलश्रवस एवच ।
पौडेयो याज्ञवल्क्यश्च एकार्षेया महर्षयः ॥
वसिष्ठ एषां प्रवरस्त्ववैवाह्याः परस्परम् ।
सौलालयो महाकण्वः कौरव्याः क्रोधिनस्तथा ॥
कपिञ्जलो वालशिखिभार्गवी नायकाश्च ये ।
कौमारोत्रा रावणका लाक्षीकृष्णास्तरायणाः ॥
शाकाहयाः शाकधियाः काण्वा उपलयाश्च ये ।
शाकायनाः सुहाकाश्च अथ माखशरावयः ॥
दाकामना वालवयो वाकयो गौरथास्तथा ।
आलम्बायना वाशयो यवक्रोडा वैराणयः ॥
लम्बायनाश्च ऋषय औपमन्यव एवच ।
सांख्यायनाश्च ऋषयस्तथा पञ्च दशेरकाः ॥
पालङ्कायन उद्वाहा ऋषयश्च वलश्वलाः ।
ब्रह्मचयश्च मानेयाः पार्णगारिस्तथैवच ॥
आर्षेयो हि मतश्चैषां सर्वेषां प्रवरः शुभः ।
आभरद्वसुवासिष्ठा वैन्द्रः प्रमद एवच ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
औपस्वस्थाः स्वस्थलयाः वालोहा लोहलाश्च ये ॥

माध्यन्दिनो माक्षिनयाः पैप्पलादिवचक्षुषी ।
त्रैश्रृङ्गिर्गोपनः सौगिर्लुवागुद्विनसोत्तमाः ॥
ऽयार्षेयो ह मतश्चैषां सर्वेषां प्रवरः शुभः ।
वासिष्ठमैत्रावरुणौ कौडन्यो हि तदुत्तमः ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
जातुकर्णो वसिष्ठोऽपि दयालुः सौक्तिकः खगः ॥
वसिष्ठात्रिभवास्त्र्यार्षास्तज्जाः सर्वे द्विगोत्रजाः ।
जातूकर्ण्यवसिष्ठौ द्वावुत्तमोऽत्रिश्च पार्थिव ॥
परस्परमवैवाह्या ऋषयः परिकीर्त्तिताः ।
पौत्रिकेयास्तद्वदत्रेर्वामरथ्यकुलोद्भवाः ॥
वसिष्ठवंशेऽभिहिता मयैते ऋषिप्रधाना नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं पुरुषो जहाति ॥
इति मत्स्यपुराणोक्तवसिष्ठगोत्रप्रवरनिर्णये प्रथमोऽध्यायः ।
मत्स्य उवाच ।
वसिष्ठस्तु महातेजा महान्पुरोहितो निमेः ।
बभूव पार्थिवश्रेष्ठ यज्ञस्तस्य समन्ततः ॥
श्रान्तात्मा पार्थिवश्रेष्ठ विशश्राम तदा गुरुः ।
तं गत्वा पार्थिवश्रेष्ठो निमिर्वचनमब्रवीत् ॥
भगवन्यष्टुमिच्छामि त्वं मां याजय मा चिरम् ।
तमुवाच महातेजा वासिष्ठः पार्थिवोत्तमम् ॥
किञ्चित्कालं प्रतीक्ष्योऽहं तव यज्ञे भृशं नृप ।
श्रान्तोऽस्मि राजन्विश्रम्य सम्यग्याजायितास्मि ते ॥
एवमुक्तः प्रत्युवाच वसिष्ठं नृपसत्तमः ।
पारलौकिककार्येषु कः प्रतीक्षितुमुत्सहेत ॥
न कस्य सौहृदं ब्रह्मन् कृतान्तेन बलीयसा ।

धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ॥
धर्मपथ्याशनो जन्तुर्मृतोऽपि सुखमश्नुते ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥
न हि प्रतीक्षते मृत्युः कृतं वापि न वा कृतम् ।
क्षेत्रग्रामगृहासक्तमन्यत्र गतमानसम् ॥
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।
भार्या मे पुत्रो मे धनपशू मे स्वजनो मे बन्धुवर्गो मे ।
एवं मे मे कुर्वाणं पशुमिव बध्नाति नियतं कालः ॥
नैकान्तेन प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते ।
आयुष्ये कर्मणि क्षीणे प्रसह्य हरते कुलम् ॥
प्राणो वायुश्चलत्वं च वायोर्विदितमेव ते ।
यदत्र जीव्यते ब्रह्मन् क्षणमात्रं तदद्भुतम् ॥
शरीरं शाश्वतं मन्ये विद्याभ्यासे धनार्जने ।
अशाश्वतं धर्मकार्ये तृणवत्स्वामिसंकटे ॥
सोऽहं संभृतसम्भारो भवन्मूलमुपागतः ।
न चेद्याजयसे मां त्वमन्यं याचामि याजकम् ॥
एवमुक्तस्ततस्तेन निमिना ब्राह्मणोत्तमः ।
शशाप तं निमिं क्रोधाद्विदेहस्त्वं भविष्यसि ॥
श्रान्तं मां त्वं समुत्सृज्य यस्मादन्यं द्विजोत्तमम् ।
धर्मज्ञस्त्वं नरेन्द्रेन्द्र याजकं कर्तुमिच्छसि ॥
निमिस्तं प्रत्युवाचाथ धर्मकार्यरतस्य मे ।
विघ्नं करोषि नान्येन यजनं च तथेच्छसि ॥
शापं ददामि यस्मात्त्वं विदेहोऽथ भविष्यसि ।
एवमुक्ते तु तौ जातौ विदेहौ द्विजपार्थिवौ ॥
देहहीनौ तयोर्जीवौ ब्रह्माणमुपजग्मतुः ।

आगतौ तौ समीक्ष्याथ ब्रह्मा वचनमब्रवीत् ॥
अद्य प्रभृति ते स्थानं निमे जीव ददाम्यहम् ।
नेत्रपक्ष्मसु सर्वेषां त्वं वसिष्यसि पार्थिव ॥
त्वत्संबन्धात्तथा तेषां निमेषः संभविष्यति ।
चालयिष्यन्ति तु तदा नेत्रपक्ष्माणि मानवाः ॥
एवमुक्ते मनुष्याणां नेत्रपक्ष्मसु सर्वशः ।
जगाम निमिजीवस्तु वरदानात्स्वयम्भुवः ॥
वसिष्ठजीवं भगवान् ब्रह्मा वचनमब्रवीत् ।
मित्रावरुणयोः पुत्रो वसिष्ठस्त्वं भविष्यसि ॥
वसिष्ठेति च ते नाम तत्रापि च भविष्यति ।
जन्मद्वयमतीतं च तत्रापि त्वं स्मरिष्यसि ॥
एतस्मिन्नेव काले तु मित्रश्च वरुणस्तथा ।
बदर्याश्रममासाद्य तपस्तेपतुरव्ययौ ॥
तपस्यतोस्तयोरेव कदाचिन्माधवे ऋतौ ।
पुष्पितद्रुमसंस्थाने शुभे दयितमारुते ॥
उर्वशी तु वरारोहा कुर्वन्ती कुसुमोच्चयम् ।
सुसूक्ष्मरक्तवसना ऽनयोर्दृष्टिपथं गता ॥
तां दृष्ट्वेन्दुमुखीं सुभ्रूं नीलनीरजलोचनाम् ।
उभौ चुक्षुभतुर्धैर्यात्तद्रूपपरिमोहितौ ॥
तपस्यतोस्तयोर्वीर्यमक्षरच्च मृगासने ।
स्कन्नं रेतस्ततो दृष्ट्वा पापभीतौ परस्परम् ॥
तोयपूर्णे चिक्षिपतुः कलशे तौ मनोरमे ।
तस्मान्नरवरौ जातौ तेजसाऽप्रतिमौ भुवि ॥
वसिष्ठश्चाप्यगस्तिश्च मित्रावरुणयोर्द्वयोः ।
वसिष्ठस्तूपयेमेऽथ भगिनीं नारदस्य तु ॥

अरुन्धतीं वरारोहां तस्यां शक्तिमजीजनत् ।
शक्तेः पराशरः पुत्रस्तस्य वंशं निबोध मे ॥
यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत ।
प्रकाशो जनितो येन लोके भारतचन्द्रमाः ॥
पराशरस्य तस्य त्वं शृणु वंशमनुत्तमम् ।
वाडुशयो वाहरयो जैमतो भैमतायनाः ॥
गोपालिरेषां पञ्चमे एते रक्ताः पराशराः ।
प्रागेहया वाह्यतयः पार्थेयाः कौरुजायनाः ।
द्वैर्याविरेषां पञ्चमे एते नीलाः पराशराः ।
काष्र्णायनाः काशित्रसेवाः काकेयस्या नयातयाः ॥
पुष्करः पञ्चमश्चैषां कृष्णा ज्ञेयाः पराशराः ।
आविष्टयायना वाल्येयाः स्वायथाश्चोकयश्च ये ॥
इषीकहस्तः पञ्चैते श्वेता ज्ञेयाः पराशराः ।
पटिका बादरिश्चैव स्तम्भभ्याः क्रौञ्चकायनाः ॥
क्षौमिरेषां पञ्चमश्च श्यामा एते पराशराः ।
खल्वायनिवार्ष्णायनैर्नायाः खलु मुपातयः ॥
एतेषां पञ्चमस्ताष्टिरेते धूम्राः पराशराः ।
पराशराणां सर्वेषां त्र्यार्षेयः प्रवरो मतः ॥
पराशरश्च शक्तिश्च वसिष्ठश्च महातपाः ।
परस्परमवैवाह्याः सर्वे एव पराशराः ॥
उक्तास्तएते नृप वंशमुख्याः पराशराः सूर्यसमप्रभावाः ।
येषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं पुरुषो जहाति ॥
इति मत्स्यपुराणोक्तवसिष्ठगोत्रप्रवरानिर्णये द्वितीयः परिच्छेदः ।
अथ मत्स्यपुराणोक्तोऽगस्तिगोत्रप्रवरानिर्णयः ।
मत्स्य उवाच ।

अतः परमगस्त्यस्य वक्ष्ये वंशोद्भवान् द्विजान् ।
अगस्तयः करभयः कौशल्याः करटस्तथा ॥
सुमेधसो मयोभुवस्तथा गन्धारकारणाः ।
पौलस्त्याः पौनहाश्चैव क्रतुर्वंशास्तवस्तथा ॥
ऽयार्षेयो हि मतश्चैषां सर्वेषां प्रवरः शुभः ।
अगस्त्यश्च महेन्द्रश्च ऋषिश्चैव मयोभुवः ॥
परस्परमवैवाह्याः पौर्णमासास्तु पारणैः ।
एतदुक्तमृषीणां तु वंशमुक्तमपौरुषम् ॥
अत परं प्रवक्ष्यामि किं तवानघ कथ्यताम् ।

मनुरुवाच ।

पुलहस्य पुलस्त्यस्य क्रतोश्चैव महात्मनः ।
अगस्त्यस्य तथा चैव कथं वंशस्तदुच्यताम् ॥

मत्स्य उवाच ।

क्रतुः खल्वनपत्योऽस्मिन् जन्म वैवस्वतेऽन्तरे ।
इध्मवाहं स पुत्रत्वे जग्राह ऋषिसत्तमम् ॥
अगस्त्यपुत्रं धर्मज्ञमागस्त्यं कृतवांस्ततः ।
पुलहाच्च तथा पुत्राः तिर्यञ्चः पृथिवीपते ॥
तेषां ते जन्म वक्ष्यामि उत्तरत्र यथाविधि ।
पुलहस्तु प्रजां दृष्ट्वा नातिप्रीतमनाः स्वकान् ॥
अगस्त्यजं दृढच्युतं पुत्रत्वे वृतवांस्ततः ।
पौलहाश्च तथा राजन्नागस्त्याः परिकीर्त्तिताः ॥
पुलस्त्योऽन्वयसम्भूतान्दृष्ट्वा रक्षःसमुद्भवान् ।
अगस्त्यस्य सुतान्धीमान्पुत्रत्वे वृतवांस्तथा ॥
पौलस्त्याश्च तथा राजन्नागस्त्याः परिकीर्त्तिताः ।
सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः ॥

एते तवोक्ताः प्रवरा द्विजानां महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्त्तनेन पापं समग्रं पुरुषो जहाति ॥
इति मत्स्यपुराणोक्तो गोत्रप्रवरनिर्णयः ।

समानार्षगोत्रयोः प्रत्येकं परिणयने प्रायश्चित्तमाह

शातातपः,

परिणीय सगोत्रां तु समानप्रवरां तथा ।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥ इति ।
कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनम् ।

इति माधवीयः पाठः । चान्द्रायणातिकृच्छ्रे सगोत्रादिप- रिणयनमात्रे । तदुपगनापत्योत्पादनयोस्तु ब्राह्मण्यहानिरेव ।

तथाचापस्तम्बः,

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥ इति ।

त्यागश्चोपभोगधर्मकार्ययोः । न तु तस्याः । मातृवत् परि- पालनस्मरणात् ।

तथाच शातातपः,

समानप्रवरां कन्यामेकगोत्रामथापिवा ।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥
उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् । इति ।

इदं चामत्या । सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृया- दिति बौधायनस्मरणात् । अमतिः शास्त्रार्थापरिज्ञानं, ब्राह्मादिवि- वाहे कन्यादानकालएव गोत्रादिस्वरूपपरिज्ञानात् । गान्धर्वरा क्षसपैशाचेषु गोत्रादिस्वरूपापरिज्ञानं वा ।

यत्तु

विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपिवा ।

इत्युपक्रम्य,

ऊढा ऽपि देया सा ऽन्यस्मै सप्रावरणभूषणा।

इति कात्यायनीयं सगोत्रोढायाः पुनर्विवाहस्मरणं, तद्युगान्तरविषयम्। कलौ तु

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।

कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥

इति ब्रह्मपुराणेन साक्षात् पुनर्विवाहस्य निषेधात्। तस्मात्परिपालनं परिशेषेण कलिविषयमवतिष्ठते इत्याहुः।

अत्रेदं प्रतिभाति। ऊढायाः पुनरुद्वाहमित्ययं निषेधो न सगोत्रोढापुनर्विवाहं विषयीकरोति। तस्या ऊढात्वाभावात्। विवाहो नाम संस्कारविशेषजनिका क्रिया। न च सगोत्रायां संस्काराः उत्पद्यन्ते। असगोत्रामित्यनेन तस्याः पर्युदस्तत्वात्। न च "ऊढा ऽपि देया सा ऽन्यस्मै" "उत्सृज्य तां ततो भार्याम्" इत्यादिप्रयोगान्यथानुपपत्त्या तस्यामपि संस्कारसिद्धिः, तस्य प्रवृत्तिनिमित्तत्वादिति वाच्यम्। गौणतया ऽपि प्रयोगोपपत्तेः। संस्कारवत् क्रियामात्रस्यापि प्रवृत्तिनिमित्तत्वे विवाहशब्दस्य नानार्थत्वापत्तेः। तस्मात्सगोत्रायां संस्कारानुत्पत्त्या ऊढात्वाभावात् न पुनर्विवाहनिषेधः प्रवर्त्तते। निषेधस्तु

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।

पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥

इत्याद्युत्पन्नसंस्कारस्त्रीविषयत्वेनाप्युपपद्यतइति। तथाच सगोत्रोढायां पालनविवाहयोर्विकल्प एव सिद्ध्यति।

ननु मा ऽस्तूढायाः पुनरुद्वाहमित्यस्य निषेधस्यायं विषयः।

दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च।

इत्यस्य तु निषेधस्य विषयो भविष्यत्येव। सगोत्रोढायां प-

र्युदस्तत्वेन संस्कारानुत्पत्त्या विवाहप्रसक्तावपि दानपदार्थोत्पत्तौ बाधकाभावेनैतन्निषेधप्रवृत्तेरव्याहतत्वात् । दानपूर्वकत्वाद्विवाहस्य दाननिषेधे विवाहस्यापि निषेधसिद्धेः। न च दानेऽपि सगोत्रपर्युदासोऽस्ति । येन दानं न सिद्धयेत् । यद्यपि न सगोत्राय दुहितरं प्रयच्छेदिति दानेऽपि सगोत्रपर्युदासोऽस्त्येव, तथाऽप्यसावदृष्टार्थो न दानपदार्थोत्पत्तौ बाधकः । तस्य लौकिकत्वात् ।

अत एव,

नटचारणमल्लेभ्यो दत्तं भवति निष्फलम् ।

इति निष्फलतामेवाभिधत्ते न दानानिष्पत्तिम् । अत एव वैधावैधदानभेदेन दत्तानपाकर्म दत्ताप्रदानिकमिति संज्ञाभेदोऽप्युपपन्नः । अदृष्टं चात्र संस्कार एव । स च भार्यात्वरूपः । तदर्थकएव दानेऽयं पर्युदासो न दानमात्रे । अन्यथा दत्तपुत्रीकरणेऽपि सगोत्राय दुहितृदानं न स्यात् । तस्मात्सगोत्रेऽपि कन्यादाननिष्पत्त्या तस्याः पुनर्दानं कलौ निषिध्यते । तन्निषेधेनैव विवाहनिषेधोऽप्यर्थसिद्ध एव । दानपूर्वकत्वाद्विवाहस्य । यद्येवं तर्हि सगोत्रोढायां गान्धर्वादिविवाहः कुतो नेष्यते, तस्य दानपूर्वकत्वाभावादिति चेन्न । ऊढायाः पुनर्गान्धर्वादिविवाहानिषेधेऽपि ब्राह्मादिविवाहस्यैव मया निषेधोपगमादिति प्राप्तेऽभिधीयते ।

दत्ताशब्दो विवाहपर एवावश्यं वाच्यः । दानमात्रपरत्वे वाग्दत्तायाः वरदोषदर्शने वरान्तरायापि पुनर्दानं न स्यात् । न च तत्र शिष्टाः कलिदोषं मन्यन्ते । दानशब्दोऽप्येष लक्षणया विवाहमेवाभिधत्ते । ऊढायाः पुनरुद्वाहमित्यनेनैकवाक्यतालाघवात् । अन्यथा श्रुत्यन्तरकल्पना स्यात् । ततश्च सगोत्रायां दानपदार्थनिष्पत्तावपि संस्कारानिष्पत्त्या ऊढात्वाभावात्कलि

निषेधाप्रवृत्त्या पुनर्विवाहः केन वारणीय इति ।

यत्तु दत्ताक्षतेति वाक्यं ब्राह्मादिचतुष्टयविषयम् । ब्राह्मादिचतुर्णां दानपूर्वकत्वात्पुनर्दाननिषेधोपपत्तेः । न गान्धर्वादिविषयम् । तत्र दानाभावात् । ऊढायाः पुनरिति वाक्यं तु गान्धर्वादिचतुष्टयविषयम् । सामान्यवाक्यत्वादिति व्यवस्थापनम् ।

तदप्येतेनैकमूलकल्पनालाघवेन निरस्तम् । एतेन

बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ।

इत्यादीन्यपि वाक्यानि सगोत्रापरतया व्याख्यातानि ।

अथ मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति ।

**तथाच शातातपः,**

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच ।

समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

**सुमन्तुरपि,**

पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां तथैवच समानप्रवरां विवाह्य चान्द्रायणं चरेदिति ।

**व्यासः,**

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि ।

जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः ॥ इति ।

अत्र च मातृगोत्रमेव वर्जनीयं न प्रवराः ।

**तथाच काठकगृह्ये,**

पितृगोत्रप्रवरसमां नोद्वहेत्तथा मातृगोत्रमात्रसमाम् । तथा,

प्रवरान्पितृगोत्रेषु मातृगोत्रेष्वचिन्तनम् । इति ।

**यत्तु,**

नैकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च ।

तमुद्वाहं न कुर्वीत सा कन्या भगिनी भवेत् ॥

इत्यभियुक्तोदाहृतं वचनं, तत्पुत्रिकापुत्रविषयम् ।

इदं च मातृगोत्रवर्जनं माध्यन्दिनीयानामेव नान्येषाम् । तथाच वर्जनीयमित्यनुवृत्तौ **सत्याषाढः**, मातृगोत्रं माध्यन्दिनीयानामिति । अपुत्रायास्सापत्नमातुरपि गोत्रं वर्जनीयम् । अपुत्रायाश्चेति तस्यैव स्मरणात् । ननु मातृसगोत्रामित्यनुपपन्नम् । मातुः पितृगोत्रत्वेन पृथग्गोत्राभावात् । न च भूतपूर्वगत्या लक्षणया वा मातामहगोत्रं विवक्षितमिति वाच्यम् । मातामहगोत्रनिषेधेनैव सिद्धौ पृथङ्मातुलसुतानिषेधानर्थक्यात् । न च प्रायश्चित्तविशेषार्थस्स इति वाच्यम् । चान्द्रायणस्योभयत्र तुल्यत्वात् । तस्मात्कथं मातृसगोत्रापदं व्याख्येयमिति चेत् । अत्र केचिदाहुः । गोत्रपदेनात्र नाम विवक्षितम् । गोत्रं नाम्नि च पर्वते इति कोषात् । तेन मातृसनाम्नीं नोद्वहेदित्यर्थः सिद्ध्यति ।

नोद्वहेद्भगिनीनाम्नीं न च मातृसनामिकाम् ।
मातामहीपितामह्योः पितृष्वसृसनामिकाः ॥

इति स्मरणात् । तन्न भव्यम् । उदाहृतवचनस्य मूलापरिज्ञानात् ।

जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः ।

इत्यपवादे जन्मपदवैयर्थ्याच्च । न हि जन्मनः पृथङ् निषेधोऽस्ति । गोत्रपरत्वे तु मातामहगोत्रस्य सम्बन्ध्यसम्बन्धिसाधारण्येन निषेधे प्राप्ते असम्बन्धिनि जन्मनाम्नोरविज्ञानात्प्रतिप्रसवो घटते । किं च गोत्रपदस्य नामपरत्वे गोत्रनिषेधे प्रवरप्रतिप्रसवो नोपपद्येत ।

प्रवरान्पितृगोत्रेषु मातृगोत्रे न चिन्तयेत् ।
गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥ इति ।

तस्मान्मातृपदं मातामहपरमेव व्याख्येयम् । तथैव शिष्टाचारात् । यत्तु मातामहगोत्रनिषेधेनैव मातुलकन्यानिषेधसिद्धौ पृथग्वचनमनर्थकमित्युक्तम् । तत्रोच्यते । यो मातुलोऽन्यस्य दत्तकीकृतः तस्य पितृगोत्रनिवृत्तावपि मातुलत्वानिवृत्त्या पृथग्वचनं घटते । यद्यपि सपिण्डनिषेधेनायमपि निषिद्धस्तथाप्यदत्तमातुलनिषेधवद्दत्तकनिषेधोऽपि समाधेय इत्यलं पल्लवनेन ।

अथ क्रमप्राप्तं सापिण्ड्यं निर्णीयते ।

तत्र एकपिण्डान्वयनिमित्तको विवाहादिप्रतिबन्धकः पूर्णाशौचप्रयोजको धर्मविशेषः सापिण्ड्यम् । पिण्डशब्दश्चायं नानार्थः ।

पिण्डो देहे जपापुष्पे निर्वापे सिह्लकेऽपि च ।

इति विश्वकोषात् । तत्रान्नमयपिण्डविवक्षया केचित्सापिण्ड्यं वर्णयन्ति ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

इति मत्स्यपुराणवचनात् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥
लेपसम्बन्धिनश्चान्ये ये वृद्धप्रपितामहात् ।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥
इत्येष मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः ।

इति मार्कण्डेयपुराणवचनाच्च ।

अस्यार्थः । एकस्यां पिण्डदानक्रियायां दातृत्वेन यजमानस्य, देवतात्वेन पितृपितामहप्रपितामहानां, लेपभाक्त्वेन प्रपितामहस्य पितृपितामहप्रपितामहानां चानुप्रवेशात्सप्तपुरुषं व्याप्य सापिण्ड्यं भवति । एवं भ्रातॄणामपि सापिण्ड्यं योज्यम् । देवदत्तकर्तृकपि-

ण्डदानक्रियायां येषामनुप्रवेशः तेषामेव यज्ञदत्तकर्तृकपिण्डदानक्रियायामनुप्रवेशात् । एवमेषां षण्णां मध्ये यद्यत्कर्तृकपिण्डदानक्रियायामन्यतमस्याप्यनुप्रवेशस्तेषां सर्वेषां सापिण्ड्यम् । तेन च मातुलमातामहादिभिरपि सापिण्ड्यं योज्यम् । समानोद्देश्यकपिण्डदानक्रियान्वयात् । भ्रातृभार्याणां तु स्वस्वभर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृत्वेन । एवं यत्र यत्र सापिण्डशब्दप्रयोगस्तत्र तत्र साक्षात्परम्परया वा एकपिण्डदानक्रियान्वयोऽवगन्तव्य इति । नेदं चतुरस्रम् । विकल्पासहत्वात् । तथाहि । किमत्र पितृशब्दो जनकमात्रमभिधत्ते आहोस्वित्प्रमीतमात्रम् । न तावदाद्यः । भ्रातृपितृव्यादीनामजनकत्वेनासापिण्ड्यप्रसङ्गात् । समानोद्देश्यकपिण्डदानक्रियाद्यन्वयेन सापिण्ड्यविवक्षायां प्रमाणाभावात् । नापि सापिण्ड्यान्यथानुपपत्तिरेव मानम् । तस्यावयवान्वयेनाप्युपपत्तेः । नापि द्वितीयः । गुरुशिष्यसहाध्यायिमित्रादिभिरपि पिण्डदानक्रियान्वयेन सापिण्ड्यप्रसङ्गात् । किञ्च । मातामहप्रमातामहादीनां देवदत्तकर्तृकपिण्डदानक्रियायां कथमप्यनन्वयेन सर्ववादिसम्प्रतिपन्नमपि सापिण्ड्यं न स्यात् । दत्तकादिपुत्राणां

गोत्ररिक्थे जनयितुर्न भजेद्दात्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मनुवचने जनकपिण्डदानक्रियानिवृत्त्या तत्सापिण्ड्याभावप्रसङ्गाच्च । न चेष्टापत्तिः ।

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥

इति, ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्चेति बृहन्मनुगौतमादिवचनविरोधात् । वस्तुतस्तु सापिण्ड्यशब्दोऽत्र नोक्तलक्षणं सम्बन्धविशेषमभिधत्ते, किन्तु सपिण्डीकरणम् । तस्यैवोपक्रमात् ।

तथाहि । मत्स्यपुराणेऽष्टादशेऽध्याये सपिण्डीकरणं प्रक्रम्य

त्रिभिस्सापिण्डीकरणैराशोकहतयेतिवा ।
यदा प्राप्स्यति कालेन तदा मुच्येत बन्धनात् ॥
युक्तोपलेपभागित्वं प्राप्नोति कुशमार्जनात् ।
लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ॥
पिण्डदस्सप्तमस्तेषां सापिण्ड्यं साप्तपूरुषम् । इति

पठितम् । तत्रोपक्रमस्थसपिण्डीकरणशब्दार्थपरतयैवोपसंहारस्थः सापिण्ड्यशब्दो वर्णनीयो नाप्रस्तुतसम्बन्धाविशेषतयेति न्यायविदां घण्टाघोषोऽपि बाधक एव भवद्व्याख्याने । तस्मादन्यथा सापिण्ड्यं वर्णनीयम् । तत्र प्रामाणिकाः पिण्डशब्दं शरीरपरतया व्याचक्षते । समानः एकः पिण्डो देहो येषां ते सपिण्डाः तेषां भावस्सापिण्ड्यम् । समानाः सत्समैके स्युरिति त्रिकाण्डीस्मरणात् ।

पिण्डो देहे जपापुष्पे निर्वापे सिह्लकेऽपिच ।

इति विश्वकोषाच्च । तच्चैकशरीरत्वं द्वयोर्बहूनां वा न संभवतीत्यारम्भकशरीरैक्यं विवक्षितम् । तच्चावयवद्वारैव सम्भवति ।

तथाच श्रुतिः । एतत्षाट्कौशिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतस्त्वग्मांसरुधिराणि मातृत इति ।

अत एव स एवायं विरूढः प्रत्यक्षेणोपलभ्यतइत्यभेदोपचारः । नन्वेवमवयवान्वयसिद्धावपि तस्य सापिण्ड्यप्रयोजकत्वं कुत इति चेत् ।

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥
दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥ इति
ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्चेति शाङ्खबृहन्मनुगौत-

मादिवाक्येषु जन्यजनकभावस्य सापिण्ड्यप्रयोजकत्वप्रति-
पादनादिति ब्रूमः। तच्चैकशरीरारब्धत्वं साक्षात्पुत्रशरीरे परम्प-
रया पौत्रादिशरीरेष्विति पुत्रपौत्रादीनां पितृपितामहादिभिः स-
ह सापिण्ड्यं सिद्ध्यति। एवं पुत्रेऽपि पित्रादीनां सापिण्ड्यं सि-
द्ध्यति। अवयवान्वयमात्रस्याभिप्रेतस्योभयनिरूप्यत्वात्। भ्रा-
त्रोरेकशरीरारब्धत्वेन, दंपत्योस्तु एकशरीरारम्भकत्वेन। भ्रातृभा-
र्ययोस्तु एकशरीरारब्धाभ्यां सहैकशरीरारम्भकत्वेन। एवं स्नु-
षाश्वशुरयोः श्वशुरशरीरारब्धेन सह पुत्रशरीरारम्भकत्वेन। एतेषा-
ञ्च प्रकाराणामेकशरीरावयवान्वयत्वेनानुगमः। यद्येवं तर्हि सहो-
दयोः सापिण्ड्यं स्यात्। भ्रातृभार्ययोरिव एकशरीरारब्धाभ्यां
भगिनीभ्यां सह स्वस्वपुत्रशरीरारम्भकत्वात्। तथा दंपत्योरिव
दंपातिपित्रोरपि। कन्यापुत्रद्वारा एकशरीरारम्भकत्वात्। स्यादे-
तत् यदि यत्र यत्र शरीरावयवान्वयस्तत्र तत्र सापिण्ड्यमिति
व्याप्तिः स्यात्। नत्वेवं, किं तु यत्रयत्र सपिण्डशब्दप्रयोगस्त-
त्रतत्र साक्षात्परम्परया वा एकशरीरावयवान्वयः। यत्रैकशरी-
रावयवान्वयो नास्ति तत्र सपिण्डशब्दप्रयोगोऽपि नास्तीत्यन्व-
यव्यतिरेकव्याप्तिस्वीकारेण व्यापकव्यभिचारस्यादोषत्वात्। यथा
पङ्कजपदे कुमुदसाधारणो योगो रूढ्या नियम्यते तथाऽत्रापीति
नातिप्रसङ्गः। नन्वेवं दत्तकस्य प्रतिग्रहीत्रा पित्रा सह सा-
पिण्ड्यं न स्यात्। अवयवान्वयाभावात्। न चेष्टापत्तिः। लोके
अनादिवृद्धव्यवहारे च सपिण्डशब्दप्रयोगसद्भावादिति चेन्मैवम्।
त्रिविधो हि दत्तको भ्रातृपुत्रः सपिण्डोऽसपिण्डश्चेति। तत्राद्य-
योः पितामहमूलपुरुषयोरवयवान्वयेनास्त्येव पालकदत्तकयोः
सापिण्ड्यमिति नास्त्येव दोषः। अन्यत्र तु अवयवान्वयाभावादल-
क्ष्यतयैव न दोषः। प्रतिग्रहीत्रवयवान्वयाभावात्।

अत एव वृद्धगौतमः,

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।

विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते॥ इति।

ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृता ह्येव विधिना गोत्रतां सन्ततित्वं यान्ति, परं तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पाद्यते इत्यर्थः। स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता।

अत एव देवलः,

धर्मार्थं वर्द्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत्।

अंशपिण्डविभागित्वं तेषु केवलमीरितम्॥

इति केवलशब्देन सापिण्ड्यमेव निरस्तवान्। गोत्रांशपिण्डानां विधानात्। नन्वेतत्प्रकृतार्थानुपयोगि, धर्मपुत्रविषयत्वात्। तथाहि। तत्तद्गोत्रेण तस्यतस्यैव गोत्रेण ये पुत्रवद्धर्मार्थं वर्द्धितास्तेषु पुत्रेषु केवलम् अंशपिण्डविभागित्वमेव न वर्द्धकसापिण्ड्यमित्यर्थात्। तेनैतद्धर्मपुत्रस्यैव वर्द्धकसापिण्ड्याभावं बोधयति, न दत्तकस्येति चेत्। मैवम्।

पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः।

इति परिसंख्याविरोधेन धर्मपुत्रानभ्युपगमात्। अभ्युपगमेऽपि वा पत्न्यादिष्वगणनेनांशभागित्वासम्भवात्। अप्रसक्त्या सापिण्ड्यनिषेधासङ्गतेश्च। तस्माद्दत्तकादिपुत्रविषयमेवैतत्। अंशभागित्वप्रदर्शनात्। धर्मार्थं स्वस्यालोकतापरिहारकधर्मसम्पत्त्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्नभिन्नगोत्रेणापि परिग्रहीत्रा पुत्रवत् पुत्रप्रतिनिधितया परिगृह्य ये पुत्राः वर्द्धितास्तेषु केवलं परिग्रहीत्रंशपिण्डविभागित्वमेव न सापिण्ड्यमिति। तस्मान्न दत्तके परिग्रहीतृसापिण्ड्यम्। किं तु जनककुलएव साप्तपुरुषं सा-

पिण्डयमिति सिद्धम् । नन्वत्र तच्छब्देन सन्निधानाद्दीप्सापेक्षितश्रुतबहुत्वानां पुत्राणामेव परामर्शो गम्यते, न वर्द्धकानां पुत्रिणाम् । व्यवहितत्वात् । संदिग्धबहुत्वानां वीप्सान्वयायोग्यत्वात्त्वात् । आत्मनि परोक्षत्वनिर्देशकतच्छब्दान्वयानुपपत्तेरपरोक्षनिर्देशकस्वशब्दस्यैवौचित्याच्चेतिचेत्, मैवं वादीः । सर्वनाम्नां बुद्धिस्थे शक्तिरिति न्यायेन बुद्धिस्थतयाः प्राधान्यायत्तत्वात्प्राधान्यस्य च संस्कार्यत्वेन फलान्वयेन वा सम्भवात् ।

पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया ।

इत्यादिवचनपर्यालोचनया पुत्रकर्तृकपिण्डदानादिक्रियया पितुः संस्कार्यत्वावगमात् पुत्रेण लोकान् जयतीत्यादिवचनबलात्पितुरेव पुत्रकरणकभावनाभाव्यलोकरूपफलयोगितया प्राधान्यात्तच्छब्देन परामर्शो युज्यते । यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्रामिक्षायाः संसृष्टदधिपयोरूपत्वेन सान्नाय्यविकारत्वे स्थिते, पूर्वपक्षिणा सप्तमीनिर्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्दिष्टस्य दध्नः प्रधानत्वात्तस्यैव तच्छब्देन परामृष्टस्य देवतासम्बन्धात्सायन्दोहविकारत्वमित्युक्ते, सिद्धान्तिना कर्मीभूतेनापि दध्ना पयसो व्याप्यमानत्वेन दध्ना पयः संस्कुर्यादिति वाक्यार्थपर्यवसानेन पयस एव प्रधानत्वात् तस्यैव तच्छब्देन परामृष्टस्य देवतासम्बन्ध इति प्रातर्दोहविकारत्वं साधितम् । तद्वत्प्रकृतेऽपि पितुः संस्कार्यत्वेन प्रधानत्वात्तच्छब्देन तस्यैव परामर्श इति युक्तम् । नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथं विवाहो न स्यादिति चेत् । सगोत्रत्वादिति ब्रूमः । तर्हि तद्भगिन्यादिसन्ततौ विवाहोऽस्तु सगोत्रत्वसपिण्डत्वयोरभावात् । न चाहत्य निषेधकं वचनमुपलभामहे । प्रत्युत

सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।

तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृत् ॥

इत्याद्यनुकूलमेव मरीचिवचनमस्ति । न चेष्टापत्तिः । आविन्ध्यस्याविगीतसकलदेशीयशिष्टाचारविरोधात् । तस्मात्किं तत्रविवाहे निमित्तमिति ।

अत्राहुः । त्रिविधा हि पर्युदसनीया सपिण्डा । तत्राद्या पितुः स्वस्य च सपिण्डा । द्वितीया पितुरसपिण्डा स्वस्य सपिण्डा । तृतीया पितुः सपिण्डा स्वस्यासपिण्डा । तत्राद्या यथा, जननीपरिणेतुर्जनकस्य या सपिण्डा सा स्वस्यापि सपिण्डा । द्वितीया यथा, पालकस्य पितुरसपिण्डा जनकस्य पितुस्सपिण्डा सा पितुरसपिण्डा सती स्वस्य सपिण्डा । तृतीया यथा, पालकस्य पितुस्सपिण्डा स्वस्यासपिण्डा । दत्तके पालकावयवान्वयाभावात् । एवं च पितुरपि चातुर्विध्यं सिध्यति । जननीपरिणेता सन् जनकः, क्षेत्री, बीजी, पालकश्चेति । दत्तकजनकस्त्वाद्य एवान्तर्भूतः । तत्र जनकबीजिभ्यां साक्षादवयवसम्बन्धादौरसक्षेत्रजयोस्सापिण्ड्यं क्षेत्रिणा तु क्षेत्रद्वारा क्षेत्रजस्य सापिण्ड्यम् । क्षेत्रक्षेत्रिणोरेकशरीरत्वप्रतिपादनात् । तादृशीनां तिसृणामपि स्वसपिण्डानाम् असपिण्डां यवीयसीमित्यादिवचनेनैव पर्युदासः । पालकसपिण्डा तु दत्तकस्यासपिण्डेति न असपिण्डां यवीयसीमित्यनेन पर्युदसितुं शक्यते । तदर्थं पितुरसपिण्डेति वचनमन्वेष्टव्यम् ।

तदाह मनुः,

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ इति ।

अत्र वाक्ये गौणस्यापि पितुः साप्तपुरुषं सापिण्ड्यं विवाहे वर्जनीयमिति गम्यते । अन्यथाऽसपिण्डामित्यनेनैव सिद्धौ मातापितृपदोपादानवैयर्थ्यात् । न च पितृद्वारा अष्टमस्य वरस्य मातृ-



द्वारा षष्ठ्याः कन्यायाः विवाहत्वं प्रसक्तं तन्मा प्रसाङ्क्षीदित्ये-तदर्थं पितुरसपिण्डेति वक्तव्यमिति वाच्यम् ।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।

इत्याद्यनेकवाक्यविरोधात् । तस्मात् पातीति पितेति व्युत्पत्त्या प्रतिग्रहीतुरपि पितृत्वात्सापिण्ड्यनिवर्त्तनायैतद्वचनारम्भ इत्यवश्यं वक्तव्यम् । न च तातस्तु जनकः पितेति कोशात्सर्वेषां शब्दानां मुख्ये सम्प्रत्यय इति न्यायाच्च सर्वत्रापि पितृपदं जनकपरमेवेति वाच्यम् । ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्चेत्यत्र गौतमवाक्ये पितृपदेनैव बीजिनः प्राप्तत्वेन पृथग्बीजिग्रहणानर्थक्यापत्त्या गोबलीवर्दन्यायेन पितृपदस्य जनकातिरिक्तपितृपरत्वावश्यंभावात् । ततश्च मनुवाक्ये पालकपितृसपिण्डाया अपि वर्जनीयत्वान्नोक्तदोषावसर इति ।

तन्न युक्तम् । असपिण्डादिवाक्यैरेकमूलत्वसम्भवे पृथङ्मूलकल्पनागौरवात् । तथाहि । मातुः पितुश्च द्वारा या स्वस्यासपिण्डा असगोत्रा चेत्यर्थपरत्वेन

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।

इत्यादिवाक्यैकमूलत्वसम्भवात् । गौतमवाक्ये तु पितृपदस्य जननीपरिणेतृजनकपरतया परक्षेत्रबीजावापकबीजिप्रतिपादनाशक्त्या गोबलीवर्दन्यायासम्भवाच्च । अन्ये तु क्षेत्रजादीनां पुत्रप्रतिनिधित्वाभिधानात् प्रतिनिधिस्तद्धर्मा स्यादिति न्यायेन सकलौरसधर्मप्राप्त्या क्षेत्र्यादिपितृसपिण्डावर्जनं सेत्स्यतीत्याहुः । तन्न । न सापिण्ड्यं विधीयतइति निषेधेन सापिण्ड्यस्यैवाप्राप्त्या तद्वर्जनासम्भवात् । एतेन पुत्रनाम्ना औरसधर्मातिदेशात्प्रतिग्रहीत्रादिपितृसपिण्डावर्जनासिद्धिरित्यप्यपास्तम् । न तौ पशौ करोतीतिवदतिदिष्टस्य सापिण्ड्यस्य निषेधेन वर्जनासम्भवात् ।

तस्मादनन्यगत्या वचनादेव प्रतिग्रहीत्रादिपितृसपिण्डावर्जनमि-सकामेनाप्यभ्युपगन्तव्यम् । तच्च हेमाद्रिः पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यवातिष्ठिपत् । तथाच

कार्ष्णाजिनिः,

यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः ।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम् ।
चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी ॥ इति ।

अस्यार्थः । ये दत्तकादयः पुत्रास्ते प्रेतानां स्वप्रतिग्रहीतृमातृपित्रादीनां यावन्तः पितृवर्गाः पित्रादिसमूहाः पितृपितामहप्रपितामहादयस्तावद्भिः सह योजनं कुर्युः । यावत्तावच्छब्दोपादानादौरसानां केवलदत्तकानां च एकैक एव पितृवर्गो भवति । द्व्यामुष्यायणानां तु द्वौ, जनकवर्गः प्रतिग्रहीतृवर्गश्च । एवं त्र्यामुष्यायणानां त्रयः पितृवर्गा भवन्ति, बीजिवर्गः क्षेत्रिवर्गः प्रतिग्रहीतृवर्गश्चेति । द्व्यामुष्यायणे द्वितीयं वर्गमाह । स्वकीयैः पितृभिः सहेति । स्वकीयैः द्व्यामुष्यायणीयैः न कर्तृपितृभिः । तेषां प्रेतेनानन्वयात् । पितृभिर्जनकैः । दत्तकादिपुत्रेषु विशेषमाह । द्वाभ्यामिति । तत्पुत्राः दत्तकादिपुत्राः । स्वपितृप्रतिग्रहीतुः पितृपितामहाभ्यां सह । दत्तकादिपौत्रेषु विशेषमाह, पौत्रास्त्वेकेन तत्सममिति । दत्तकपौत्राः स्वपितुः दत्तकतत्प्रतिग्रहीतृभ्याम् एकेन प्रतिग्रहीतृपित्रा सह योजनं कुर्युः । चतुर्थपुरुषे दत्तकप्रपौत्रे कर्त्तरि छेदं, प्रतिग्रहीतृपितुरिति शेषः । तस्मादेषा दत्तकसपिण्डता त्रिपौरुषीति सिद्धम् । एतदेवाभिप्रेत्याह संग्रहकारः,

दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रि पूरुषम् ।

जनकस्य कुले तद्वद्वहीतुरिति धारणा ॥ इति ।

इदं च दत्तकस्य जनककुले त्रिपुरुषं सापिण्ड्यं पञ्चमी सप्तमी तद्वदित्यादिबृहन्मनूक्तसप्तपुरुषसापिण्ड्येन सह विकल्पते। तच्च कल्पद्वयं देशाचारादिभिर्व्यवस्थापनीयम् । यद्यपि निर्वाप्यपिण्डान्वयेन सापिण्ड्यं प्राङ्गिरस्तं तथाप्यगत्या दत्तकस्य प्रतिग्रहीत्रा सह तदेवाश्रयणीयम् । अविच्छिन्नशिष्टाचारानुरोधात् । अथ सपत्नमात्रा सह कथं सापिण्ड्यं तच्छरीरावयवान्वयाभावात् । न च पितृशरीरावयवानां स्वस्मिन्नारम्भकत्वेन सपत्नमातरि चाधेयत्वेनान्वयादेकशरीरान्वयेनैव सापिण्ड्यसिद्धिरिति वाच्यम् । पित्रवरुद्धदासीभुजिष्यादिभिरपि सापिण्ड्यापत्तेः । न च स्वसापिण्डपितृसापिण्डत्वेन सपत्नमात्रा सापिड्यमिति वाच्यम् । सपत्नमातामहादिभिरप्येवंसापिड्यापत्त्याऽतिप्रसङ्गात् । यथाहि स्वसापिण्डः पिता तत्सापिण्डा सपत्नमातेति तया सह सापिण्ड्यं तथा तत्सापिण्डेन तत्पित्रा सपत्नमातामहेनापि समं सापिण्ड्यं कन वार्येत । अथ पितृशरीरावयवान्वयिनि सपत्नभ्रातरि सपत्नमातुरप्यवयवान्वयात्स्वारम्भकेन सहैकशरीरम्भकतया सह सापिण्ड्यमिति वाच्यम् । तत्रापि सपत्नमातामहादिभिः सह सापिण्ड्यप्रसङ्गः । तस्यापि स्वकन्याद्वारा दौहित्रशरीरावयवान्वयात् । अत्रोदाहरणं, यथा श्रीरामस्य पिता दशरथस्तदवयवान्वयिनि भरतशरीरे केकयराजस्याप्यवयवान्वयाद्रामकेकयराजयोः सापिण्ड्यमिति । एवं सपत्नमातुलादिभिरप्येकशरीरारम्भकारभ्यत्वेन सापिण्ड्यसिद्धिः । यथा साक्षात्परम्पराभ्यामेकस्य भरतशरीरस्यारम्भकौ दशरथकेकयराजौ तदारब्धत्वेन रामयुधाजितोरपि सापिण्ड्यम् एवमेव सापत्नमातुलकन्यापुत्रादिभिरपि सापिण्ड्यमुन्नेयम् । साक्षात्परम्पराविवक्षायाः सर्वशेषत्वात् । न-

नु यत्रयत्र सपिण्डशब्दप्रयोगस्तत्रतत्र साक्षात्परम्परया वा एक-शरीरावयवान्वयो वेदितव्य इति मिताक्षराग्रन्थस्वरसात्सापिण्ड्यावयवान्वययोर्व्याप्यव्यापकभावावगमात्सपत्नमातुलादौ एक-शरीरावयवान्वयसत्त्वस्य व्यापकव्यभिचारत्वेनादोषत्वम्। स-पिण्डशब्दप्रयोगाभावादिति चेत् मैवम्। पितृपत्न्यः सर्वा मातरस्त-द्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरो भगिन्यो भ-गिनीसपत्न्यश्च भगिन्यस्तदपत्यानि भागिनेयानि अन्यथा सङ्करका-रकाणीति याप्याः पतिताश्च भवन्तीति सुमन्तुना सापिण्ड्यव्या-प्यमातुलत्वादिव्यपदेशात्। यद्येवं तर्हि न कोऽपि दोषो लक्ष्य-लक्षणोभयसत्त्वादिति चेत्, न। तथा सति सहजसिद्धावय-वान्वयरूपसापिण्ड्यसद्भावेन सापत्नमातुलादिषु सापिण्ड्यातिदे-शाय वचनारम्भोऽनर्थकः स्यात्। तथाच सुमन्तुवचनारम्भान्यथा-नुपपत्त्यैव सपत्नमातुलादिष्ववयवान्वयरूपसापिण्ड्याभावोऽवगम्य-तइत्यतिप्रसङ्गः सुस्थः। तस्मान्न सपत्नमात्रा सह सापिण्ड्य-मवयवान्वयाभावादिति प्राप्तउच्यते।

यत्रयत्रेत्यादिग्रन्थस्वरसात्सपत्नमातरि सर्वजनीनसापिण्डश-ब्दप्रयोगान्यथानुपपत्त्याऽयवान्वयोऽवश्यं वाच्यः। स च सपत्न्योरेकेन भर्त्रा सहैकशरीरम्भकतया यथा तथा स्वार-म्भकेण सहैकशरीरारम्भकतया सपत्नमात्रा सहापि सिद्ध्य-त्येव। एवं एकतस्तत्सिद्धावन्यतोऽप्येकशरीरारम्भणसह-कार्यारब्धत्वेन तत्सिद्धिः। यथा पुत्रस्य पितृशरीरावय-वान्वये पित्रा सहेत्युक्ते पुत्रेऽपि स्वशरीरावयवान्वयेन पुत्रेण सहेत्यपि सिद्धम्। तस्मादस्ति सपत्नमात्रा सहाप्यवयवान्वय इति न दोषः। न च सपत्नमातामहादिष्वतिप्रसङ्गः। इष्टापत्तेः। न चैवं सपत्नमातुलादिष्वप्येकशरीरारम्भकारब्धत्वादिना सह-

जःसिद्धे साविण्ड्ये तद्भ्रातरो मातुला इत्यादिवचनारम्भवैयर्थ्यमिति वाच्यम् । पञ्चमसप्तमादिसंख्यान्तरपरिसंख्यार्थतया सार्थक्योपपत्तेः । तथाहि मातृपितृसम्बद्धा आसप्तमादविवाह्याः कन्या भवन्त्यापञ्चमादन्येषामिति पूर्ववाक्ये मातृपितृसापिण्ड्येनाविवाह्यत्वेऽवधिद्वयं स्वपरमतेनोपन्यस्य मातृसपत्न्यां मातृपितृत्वाभावेन सापिण्ड्यद्वारताऽसम्भवात्तत्सम्बन्धिनां सापिण्ड्याभावादविवाह्यत्वाप्रसक्तौ पितृपत्न्यः सर्वा मातर इत्यारभ्यते । तत्र मातृसपत्नी सपत्नमातेत्यादिशब्दैरभिधानसम्भवेऽपि यत्पितृपत्नीशब्देनोपादानं तत्तस्याः पितृद्वारकसम्बन्धद्योतनाय । यच्च पत्नीशब्दोपादानं तत्पित्रवरुद्धदासीभुजिष्यादिभिः सापिण्ड्यवारणाय । यच्च सर्वशब्दोपादानं तद्विजातीयाभिरपि सापिण्ड्यद्योतनाय । तेन च तत्सम्बद्धानामप्यासप्तमादापञ्चमाद्वा अविवाह्यत्वप्रसक्तौ तद्भ्रातरो मातुला इत्यादि परिसंख्यायते, यथैतएवाविवाह्या नान्यइति । पञ्च पञ्चनखा भक्ष्या इतिवत् । नचायं नियमः सम्भवति । यथोक्तरीत्या सापिण्ड्यसद्भावेनाविवाह्यत्वस्य नित्यवत्प्राप्ततया पाक्षिकत्वाभावात् । नन्वयम् अपूर्वो विवाह्यत्वप्रतिषेध एव कुतो नेष्यते । सर्वजनीनसापिण्ड्याभावेन प्रसक्तिसम्भवादिति चेत्, न । साक्षात्परम्परया स्वारम्भकेण सहैकशरीरारम्भकत्वादिना सिद्धस्य सापिण्ड्यस्यापलपितुमशक्यत्वात् । तत्सिद्धौ चातिप्रसङ्गभङ्गायावश्यापेक्षितव्यवस्थाभिधानमस्मत्पक्षे । अपूर्वनिषेधपक्षे त्वनपेक्षितार्थवचनमपूर्वान्तरकल्पनाक्लेशश्चेति दोषद्वयम् । तथाहि । व्यवस्थातिक्रमे हि सपिण्डोद्वाहनिषेधाश्रितत्वेन व्यवस्थायाः सपिण्डोद्वाहनिषेधातिक्रमजन्यमेव दुरितं कल्प्यते, न पृथक् । अपूर्वनिषेधपक्षे तु सापिड्याभावात्सपिण्डोद्वाहनिषेधातिक्रमजन्यदुरितदुरितान्तरकल्पनाक्लेशः

प्रकृतनिषेधातिक्रम इति । तस्मात्स्वभावसिद्धसापिण्ड्यस्यापलपितुमशक्यत्वात्तदतिप्रसङ्गभङ्गायावश्यापेक्षितव्यवस्थाभिधानार्थमिदमुदेतीति सर्वं सुस्थम् ।

अथ वाक्यार्थः । तद्भ्रातर इत्यत्र तच्छब्देन पितृपत्नी परामृश्यते प्रधानत्वात् । तद्भगिन्य इत्यत्रापि सैव । पूर्वपरामर्शेन सन्निहितत्वात्प्रधानत्वाच्च । तद्दुहितर इत्यत्र तु न तत्परामर्शस्तद्दुहितॄणां साक्षात्पित्रारब्धत्वेनासपिण्डामिति सामान्यवचनेनैव विषयीकरणादेतद्विशेषवचनविषयतान्तर्भावानर्थक्यात् । किन्तु सपत्नमातुलमातृष्वस्रोरेव परामर्शः । ततश्च तत्कन्यानामेवात्रविवाह्यत्वमत्रोच्यतइति सभ्यम् । पुत्रस्यैव सपत्नमातृकुले सापिण्ड्यं न सपत्नमातृकुलस्य पुत्रकुलइति शङ्कापनोदायाह । भगिनीसपत्न्यश्च भगिन्य इति । भगिनीसपत्नीत्वव्यपदेशेनोभयतोऽपि सापिण्ड्यप्रदर्शनात्परस्परसन्ततेरविवाह्यत्वं दर्शयति । तदेवाह तदपत्यानीति । तासामपत्यानीत्यत्रापि तच्छब्देन सपत्नमातुलमातृष्वसृदुहितॄणां भगिनीसपत्नीनां च परामर्शः । पितृपत्नीपरामर्शे तु तदपत्यानां भगिनीत्वेन भागिनेयत्वव्यपदेशानुपपत्तेः । ततश्च सपत्नमातुलमातृष्वसृतदुभयदुहितृतदपत्यानि भगिनीसपत्न्यपत्यानि चाविवाह्यानीति वाक्यार्थ इति ।

नन्वत्रोभयतः सापिण्ड्यं न सिद्ध्यति प्रमाणाभावात् । तथाहि । पितृपत्नीशब्दो हि सपत्नमातुः पितृद्वारकमेव सापिण्ड्यं वदतीत्युक्तमेव प्राक् । तच्च सापिण्ड्यं यत्पितुः सा पत्नी तस्यैवेति सापिण्ड्यावधिपरिच्छेदाकाङ्क्षाऽपि तस्यैव न पितृपत्नीपक्षस्थानां, पितृपत्नीरूपसापिण्ड्यप्रतियोग्यभावात् । न हि सा तेषां पितृपत्नी भवति, येनेदं वाक्यं तत्सापिण्ड्यं परिच्छिन्द्यात् । अस्ति तु भगिनीत्वादिना तेषां तत्सापिण्ड्यम् । तत्र चास्त्येव परिच्छेदकं पञ्चमात्स-

प्तमादूर्ध्वमित्यादि । अत एव यद्धर्मपुरस्कारेण येन सह सापिण्ड्यं तद्धर्मपुरस्कारेणैव तदुपादानं, यथा तद्भ्रातरो मातुला इत्यादिषु तद्भ्रातृत्वादिना । यदीदमेव वाक्यमुभयतोऽपि सापिण्ड्यपरिच्छेदकं स्यात्तर्हि पुरुषसंख्याविशेषपुरस्कारेणैव प्रवर्त्तेत, यथा पञ्चमात्सप्तमादूर्ध्वमित्यादि, न तद्भ्रातृत्वादिपुरस्कारेण । प्रवर्त्तते च तथा, तस्मान्नोभयतः सापिण्ड्यपरिच्छेदकमिदमित्यवसीयते । किं तु यद्धर्मपुरस्कारेण यदुपादानं तस्यैवाविवाह्यत्वं प्रतिपादयति नान्येषाम् । अन्यथा तद्भ्रातृपदादीनां तत्पित्राद्युपलक्षणतापत्तेः । तथाच पुनरातप्रसङ्गः । तद्वारणाय पञ्चमादिवाक्यमेवालं किमनेनारब्धेनेति प्राप्तउच्यते ।

नात्र पञ्चमादिवाक्यं प्रवर्त्तते तस्य साक्षात्सापिण्ड्यविषयत्वात् । कुत एतदवसीयतइति चेत् । एतद्वाक्यारम्भान्यथानुपपत्त्यैवेति ब्रूमः । ततश्च परिगणितातिरिक्तेषु येषु सापत्नमातामहसापत्नमातुलपुत्रसापत्नमातृष्वसृपुत्रेष्वेतद्वाक्यं न प्रवृत्तं न च पञ्चमादिवाक्यं तत्र विवाह्यतापत्तिरवशिष्यते । नचेष्टापत्तिः । उक्तरीत्याऽवयवसम्बन्धसत्त्वेन सापिण्ड्यसत्त्वेन सपिण्डानिषेधस्यात्राप्यक्षतत्वात् । तर्हि सपिण्डानिषेधादेव नोक्तविषयेषु विवाह्यताप्रसङ्ग इति चेत् न । सापिण्ड्यस्यासहस्रपुरुषमप्यविच्छेदेन परिच्छेदकाभावे निषेधस्यातिप्रसङ्गात् । तस्मादनन्यगत्या तद्भ्रात्रादिपदं तत्पित्रादीनामप्युपलक्षणं वाच्यम् । ततश्चशब्दोपात्तानां प्रचयेन यावतां कथञ्चिदुपस्थितिः तावद्दूरं सापिण्ड्यमनेन परिच्छिद्यतइति पर्यवसन्नम् । तद्यथा सापत्नमातामहो मूलपुरुषः प्रथमः, तत्पुत्रः सापत्नमातुलो द्वितीयः, तत्पुत्रः सापत्नमातुलपुत्रस्तृतीयः । किमस्याश्रुतस्य ग्रहणे प्रमाणमितिचेत् । तद्दुहितरश्च भगिन्य इति मातुलमातृष्वसृदुहितृपदा-

नमेवेति ब्रूमः । दुहितॄणामिव पुत्राणामपि सम्बन्धाविशेषात् । तत्पुत्रः सापत्नमातुलेयपुत्रश्चतुर्थः । अत्रापि तदपत्यानि भागिनेयानीति मातुलमातृष्वसृदुहित्रपत्यानां मातुलमातृष्वसृपुत्रापत्यानामप्युपलक्षणम् । तुल्यसम्बन्धतया बाधकाभावात् । एवं सापत्नमातृकुले चतुष्पुरुषं सापिण्ड्यं सिध्यति । एवं सापत्नमातृष्वसृसन्तानेऽपि ज्ञेयम् । मातुलमातृष्वस्रोर्मूलपुरुषस्यैकत्वात् । ततश्च सापत्नमातामहादेव मूलपुरुषात्तद्दुहितृसपत्नीसन्ताने तत्सन्ताने च यावच्चतुर्थं परस्परमविवाह्यताप्रदर्शनेन चतुष्पुरुषं सापिण्ड्यमनेनोक्तमिति सिद्धम् । तद्भ्रातरो मातुला भगिनीसपत्न्यश्च भगिन्य इत्यन्योन्यं तुल्यसंबन्धप्रतिपादनालिङ्गादुभयतः सापिण्ड्यसिद्धेः ।

यत्तु मदनपारिजातेन,

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ।

इति वसिष्ठवाक्यं सपत्नमातामहकुलविषयमवयवानुवृत्तेरभावादिति व्याख्यातं, तदाकाशलतेव मूलानपेक्षमेवोज्जृम्भते । उक्तरीत्या ऽवयवानुवृत्तिसद्भावात् सापत्नादिपदाश्रवणात् सापत्नवाक्यैकवाक्यताऽभावात्सौमन्तवविशेषवाक्यविरोधाच्चेति । न च वसिष्ठवाक्यान्यथानुपपत्तिरेव मूलमिति वाच्यम् । अन्यथोपपत्तेर्वक्ष्यमाणत्वात् । तस्मादुक्तमेव साधीय इत्यलमतिविस्तरेण ।

अथ सापिण्ड्यपरिच्छेदकपुरुषसंख्याविशेषः ।

तत्र बुधस्मृतिः, सवर्णां भार्यामुद्वहेत् अतीत्य मातृतः पितृतः पञ्चमीं दशमीमन्यत्रगोत्रजामिति ।

मातृतः पञ्चमीं पितृतः दशमीम् अतीत्येत्यन्वयः । पञ्चमीं दशमीं संख्यामिति शेषः, न कन्यामिति । तथात्वे पितृतः पितृद्वारके सापिण्ड्ये दशम्याः मातुरत्यये सापिण्ड्यस्य मातृद्वारकतापत्त्या पितृग्रहणमनर्थकं स्यात् । तस्मात्संख्येत्येव शेषो वाच्यः ।

स्वयम्भुस्तत्रस्यैव सापिण्ड्यस्याविवाहाशौचयोर्द्वयोरप्यावश्यकत्वमाह । तत्र ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति आसप्तमाद्रिक्थविच्छित्तिर्भवति आतृतीयात्स्वधाविच्छित्तिर्भवति अन्यथा सपिण्डाशौचक्रियाद्युच्छेदाद्ब्रह्महतुल्या भवन्तीति ।

अस्यार्थः । पिण्डो जनकदेहः । स्वधा श्राद्धम् । तच्च न यत् किञ्चित्, किं तु प्रौष्ठपद्यां विहितं प्रपितामहपित्रादीनां नान्दीमुखं श्राद्धम् । तत्र प्रपितामहपित्रादयस्त्रयः पिण्डभाजस्तदूर्ध्वास्त्रयो लेपभाजः स्वपित्रादयस्त्रयस्तन्निरूपकाः कर्त्ता चेत्येवं दशपुरुषसम्बन्धि, तदुभयं येषां ते एकपिण्डस्वधास्ते सपिण्डाः वाक्यशेषात् । तेषामादशमाद्दशमं पुरुषं मर्यादीकृत्य आदशमं तस्मादादशमाद्दशमोर्ध्वमिति यावत् । अत्राङ्पूर्वः मर्यादावचनः । आजन्मशुद्धानामितिवत् । धर्मस्य विवाहे सपिण्डावर्जनस्य जननमरणयोः सन्ध्यास्नानादिवर्जनस्य च विच्छित्तिर्निवृत्तिर्भवति । तथा आसप्तमात्सप्तमोर्ध्वं रिक्थनिवृत्तिः । तथा तृतीयोर्ध्वं स्वधानिवृत्तिः । 'अन्यथा' दशमपुरुषादर्वागेव अविवाह्यतापरिहारे जननमरणयोः सन्ध्यास्नानादिवर्जननिवृत्तौ च सपिण्डानामाशौचस्य तन्निमित्तायाः पिण्डदानादिक्रियाया आदिशब्दादविवाह्यतायाश्चोच्छेदाद्ब्रह्महतुल्या भवन्ति ।

नन्वेवमप्येकपिण्डस्वधानामित्यत्र विशेषद्वयोपादानं व्यर्थम् । अन्यतरविशेषणेनैवावयवपिण्डान्वयरूपैकतरसापिण्ड्यसिद्धेरिति चेन्न । दत्तपुत्रे सत्यपि जनकावयवान्वये तत्कर्तृकश्राद्धसम्बन्धाभावान्न दशपुरुषं सापिण्ड्यम् । किं तु

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद् गोत्रं तत्पालकस्य च ॥

इति बृहन्मनुवचनात्साप्तपुरुषमेव। तथा प्रतिगृहीते पुत्रे सत्यपि प्रतिग्रहीतृश्राद्धान्वये अवयवान्वयाभावात् न दशपुरुषं सापिण्ड्यम्। किं तु त्रिपुरुषमेव।

यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी॥

इति कार्ष्णाजिनिवचनादिति तद्वारणार्थमुभयोपदानात्। एषा सपिण्डता। शेषं तु दत्तकसापिण्ड्यावसरएव व्याख्यातम्। दशपुरुषमेव सापिण्ड्यं रिक्थाशौचयोर्द्वयोरपि प्रयोजकमित्याह

भगवान् बौधायनः, प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रवर्गं तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते विभक्तदायान्सकुल्यानाचक्षतइति। तस्य प्रपौत्रस्य पुत्रवर्गः पुत्रसमुदायः। तेषां समुदायिनां पुत्रपौत्रम्। अविभक्तदायम् दायोऽत्र पिण्ड एकपिण्डान्वयीत्यर्थः। पिण्डान्वयश्च दशपुरुषएवेत्युक्तमेव प्राक्। विभक्तदायान्विच्छिन्नपिण्डान्दशमपुरुषादूर्ध्वं सकुल्यानाचक्षतइत्यर्थः। न चेदं केवलं रिक्थग्रहणएव दशपुरुषं सापिण्ड्यम्, आशौचे सपिण्डेष्वासप्तमादिति तेनैव पृथक्साप्तपुरुषाभिधानादिति मन्तव्यम्। सपिण्डेष्वादशाहमित्युपक्रम्य जननमरणयोस्सन्निपातइत्युपसंहारान्मध्यपठितयोः साप्तपुरुषदशपुरुषयोः सापिण्ड्ययोः सन्दंशपतितत्वेनोभयत्राप्युभयोरपि वैकल्पिकाङ्गत्वसिद्धेः। तच्चासप्तमाद्रिक्थविच्छित्तिरिति स्वयम्भूवाक्ये साप्तपुरुषस्य बौधायनवाक्ये च दशपुरुषस्य रिक्थग्रहणे वैकल्पिकमङ्गत्वं स्पष्टमेव। तेन साप्तपुरुषसपिण्डसत्त्वेऽष्टमादिभिर्न रिक्थं ग्राह्यमिति सिध्यति। आशौचे तु तयोर्वैक-

लिपकमङ्गत्वं स्पष्टमाह

पारस्करः, सर्वे ज्ञातयो ऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वेति ।

याज्ञवल्क्योऽपि,

सप्तमाद्दशमाद्वाऽपि ज्ञातयो ऽभ्यवयन्त्यपः । इति ।

यत्तु सप्तमदशमशब्दयोर्दिनपरतया मिताक्षराव्याख्यानं, तदसत् । पूर्वोदाहृतपारस्करवचनादर्शनात् । इदमेव सापिण्ड्यं श्रुतिलिङ्गमप्युपोद्बलयति,

दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥

ममतायाः अपत्यं पुमान्मामतेयः दीर्घतमा नाम ऋषिः कूटस्थाद्दशमे युगे द्वंद्वे मातापितृलक्षणे अतीते जुजुर्वान् भार्यां सेवितवान् । जुषी प्रीतिसेवनयोरित्यस्यायं प्रयोगः । कुत इत्यत आह । अर्थं गर्भलक्षणं प्रयोजनम् आसादयितुं यतीनां गच्छन्तीनाम् अपां शुक्रशोणितरूपाणां जलानां सारथिः नेता ब्रह्मा जीवो भवति ।

स्त्रीपुंसयोश्च संयोगे विद्धे शुक्रशोणिते ।
पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः ॥

इति स्मृतेः । तस्मादवयवान्वयरूपं सापिण्ड्यं दशपुरुषमनुवर्त्ततइति तात्पर्यम् । तथा मातृद्वारकं साप्तपुरुषं सापिण्ड्यं स्मर्यते ।

यथाह सुमन्तुः, मातृपितृसम्बद्धा आसप्तमादविवाह्याः कन्या भवन्ति आपञ्चमादन्येषामिति ।

अत्र मातृपितृद्वारकयोरुभयोरपि सापिण्ड्ययोः स्वमते साप्तपुरुषत्वमुक्तं, परमते द्वयोरपि पञ्चपुरुषत्वमुक्तम् ।

**याज्ञवल्क्यस्तु** मातृतः पञ्चपुरुषं पितृतस्सप्तपुरुषं सापिण्ड्यमाह,

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । इति ।

**विष्णुरपि,** मातृतस्त्वापञ्चमात्पुरुषात्पितृतश्चासप्तमादिति ।

अत्राङ् न मर्यादायां, किन्तु अभिव्याप्तौ । नोद्वहेदित्यनुषज्यते ।

**गौतमोऽपि,** ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति ।

**देवलोऽपि,**

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।
सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः ॥ इति ।

**पैठीनसिरपि** असमानार्षेयीं कन्यां वरयेत्पञ्च मातृतः परिहरेत्सप्त पितृत इति ।

**हारीतोऽपि,** तस्माल्लक्षणत्रयविज्ञानोपपन्नां कन्यां वरयेत्प[illegible]मातृबन्धुभ्यः सप्त पितृबन्धुभ्य इति । परिहृत्येति शेषः ।

**नारदोऽपि,**

पञ्चमात्सप्तमादर्वाक् बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ॥ इति ।

**वसिष्ठस्तु** मातृतश्चतुष्पुरुषं पितृतः षट्पुरुषमाह ।

गृहस्थः सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य इति ।

**श्लोकवसिष्ठोऽपि,**

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । इति ।

**विष्णुपुराणेऽपि,**

पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम् ।
गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृप ॥ इति ।

**शङ्खोऽपि,**

विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम् ।
मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम् ॥ इति ।

**चतुर्विंशतिमतेऽपि,**

ब्राह्मेण तु विवाहेन शीलरूपगुणान्विताम् ।
मातृतः पञ्चमीं चैव सप्तमीं पितृतस्तथा ॥ इति ।

आशौचमधिकृत्य **मनुविष्णू** षाट्पुरुषमाहतुः,

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । इति ।

**विष्णुरपि,** आशौचे तथैव पठति,

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । इति ।

**गौतमोऽप्या**शौचे पिण्डनिवृत्तिः सप्तमे पञ्चमे वेति ।

**वसिष्ठस्तु** आशौचे साप्तपुरुषमाह, सपिण्डता च साप्तपुरुषी विज्ञायतइति ।

**पैठीनसिस्तु** विवाहएव मातृतस्त्रिपुरुषं पितृत[illegible]नाद्ध-षमाह, त्रीनतीत्य मातृतः पञ्चातीत्य पितृतो वेति । व[illegible]दीत्य-नुषज्यते ।

**चतुर्विंशतिमते** तु पक्षद्वयेऽपि त्रिपुरुषं द्विपुरुषं च सापिण्ड्यमुक्तम्.

तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥
आरभ्य कूटात्पुरुषात्पञ्चमो न तु पञ्चमीम् ।
चतुर्थीं पञ्चमीं चैव चतुर्थः षष्ठ उद्वहेत् ॥ इति ।

**षट्त्रिंशन्मते** तु विवाहएव मातृतः पितृतश्च द्विपुरुषमेव सापिण्ड्यमुक्तम्,

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।

विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ इति ।

एषां वचनानां विरोधे व्यवस्थामाह विज्ञानेश्वराचार्यः, वसिष्ठादिवचनजातं तु अर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोध इति । अत्रोपपत्तिमाह मिताक्षराटीकायां सुबोधिन्यां भट्टवीरेश्वरः,

पञ्चमात्सप्तमाद्वा यः कन्यामुद्वहते द्विजः ।
गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥
पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते सर्वे ते शूद्रतां गताः ॥

इति विष्णुमरीच्यादिवाक्याभिहितनिन्दार्थवादानुगृहीतेन—

पञ्चमात्सप्तमादर्वाक् बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ॥

इति नारदीयादिस्पष्टनिषेधेनार्वाग्विवाहविधायकवाक्यानामविरोधाय निषेधस्य निषेध्यापेक्षिततया एकमूलकल्पनालाघवेन च नोद्वहेदित्येकवाक्यताकरणात्सर्वस्मृतीनामविरोध इति भाव इति । नैतन्मीमांसकशिरोमणेर्विज्ञानेश्वरस्याशयविवरणं साधीयः । षोडशिग्रहणाग्रहणादिविधिनिषेधयोर्विकल्पमात्रोच्छेदप्रसङ्गात् । तस्माद्विधिनिषेधयोरेकवाक्यताकरणं तेजस्तिमिरयोस्संवलनमिवाशक्यमित्युपेक्षणीयम् ।

विवाहमञ्जर्यां तु अस्यैवाशयोऽन्यथा वर्णितः । तथाहि । असपिण्डामुद्वहेदित्यत्र तत्तद्वाक्योपात्तानां तृतीयाद्यष्टम्यन्तानामसपिण्डानां युगपत्प्राप्तौ पञ्चमात्सप्तमादूर्ध्वमिति वचनमर्वाचीनानामसपिण्डानां परिसंख्यार्थम् । सैव च तत्तन्निषेधवाक्यैः स्पष्टीक्रियते । तदभिप्रायेणार्वाङ्निषेधपरमिति । नैतदपि सारम् । तृतीयाद्यष्टम्यन्तासपिण्डोद्वाहविधीनां विनिगमनाविरहेण परस्परपरिसंख्यार्थता-

पत्तेः । वस्तुतस्तु ऐकान्तिको निषेधः परिसंख्या वा रागप्राप्त एव भवति, न कलञ्जं भक्षयेत् पञ्च पञ्चनखा भक्ष्या इत्यादिष्विव । न शास्त्रप्राप्ते । तयोस्तुल्यबलत्वेन विकल्पापादकत्वात् । न चासावपि प्रकृते युक्तः । अष्टदोषदुष्टत्वात् । गत्यन्तरसम्भवाच्च ।

यदपि सप्तम्यादिविधीनां न तत्तद्विधायकत्वं, पञ्चमे सप्तमे चैवेत्य द्विवचनविरोधात् । किं तु पञ्चमसप्तमार्वाचीननिषेधपरत्वम् । पञ्चमात्सप्तमादर्वागित्यादिवचनैकवाक्यत्वादिति व्याख्यातम् । तदपि न । अपदार्थत्वेन लक्षणाप्रसङ्गात् ।

यदपि सप्तम्यादिविधायकवाक्येषु अतीतपदाध्याहारेण सप्तम्याद्यूर्ध्वविधायकवाक्यैकवाक्यताकरणम् । तदपि न । विष्णुगौतमवसिष्ठादिस्मृतिषु विवाहाशौचप्रकरणयोः षाट्पुरुषसाप्तपुरुषसापिण्ड्यविधायकवाक्यद्वयारम्भानर्थक्यापत्तेः । षाट्पुरुषसापिण्ड्यविधायकएवातीतपदाध्याहारेण साप्तपुरुषसापिण्ड्यासिद्धेः । तथाहि । विष्णुस्मृतौ—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।

इत्याशौचप्रकरणे अभिधाय विवाहप्रकरणे मातृतस्त्वापञ्चमात्पुरुषात्पितृतस्त्वासप्तमान्नोद्वहेदिति पुनरभिहितम् । तथा गौतमनापि पिण्डनिवृत्तिः सप्तमे पञ्चमे वेत्याशौचप्रकरणे अभिधाय पुनः "ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति" विवाहप्रकरणेऽभिहितम् । तथा वसिष्ठेनापि सपिण्डता तु साप्तपुरुषी विज्ञायतइति आशौचप्रकरणे अभिधाय गृहस्थः सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य इति विवाहप्रकरणे चाभिहितम् । तस्माद्यथा विवाहाशौचयोः पृथक् पृथक् सापिण्ड्यम् अगत्या स्वीक्रियते तथा विवाहेऽपि सापिण्ड्यभेदः स्वीक्रियताम् । अत एव सुमन्तुपैठीनस्यादिस्मृतिषु विवाहएव-

साप्तपुरुषपञ्चपुरुषसापिण्ड्ये अभिहिते। तथाहि। मातृपितृसम्बद्धा आसप्तमादविवाह्याः कन्या भवन्त्यापञ्चमादन्येषामिति सुमन्तुः। पैठीनसिश्च असमानार्षेयां कन्यां वरयेत्पञ्च मातृतः परिहरेत्सप्त पितृतः, त्रीनतीत्य मातृतः पञ्चातीत्य पितृतो वेति। न चात्रानीतपदाध्याहारेणैकवाक्यता सम्भवति। साक्षादेवातीतिपदवापदयोः श्रवणात्। तस्मान्न तदपि भव्यम्।

तर्हि कथमेषां वाक्यानां विरोधपरिहार इति चेद् मुख्यानुकल्पताभेदेनेति ब्रूमः। तत्र पितृतो दशपुरुषं सापिण्ड्यं मुख्यकल्पः। बुधस्वयम्भूबौधायनयाज्ञवल्क्यपारस्करादिस्मृत्यनुग्रहात्। प्रत्यक्षश्रौतलिङ्गोपष्टम्भाच्च। अस्मिन् पक्षे मातृतस्साप्तपुरुषं सापिण्ड्यं मुख्यः कल्पः। मातृपितृसम्बद्धा आसप्तमादविवाह्याः कन्या भवन्तीति सुमन्तुस्मरणात्। तत्परिहाराशक्तौ पितृतः साप्तपुरुषादयः मातृतश्च पञ्चपुरुषादयः षट् पक्षास्त्वनुकल्पाः। तत्रापि पितृतस्साप्तपुरुषपक्षो मातृतः पञ्चपुरुषपक्षश्च बहुस्मृत्यनुग्रहादनिषेधात्प्राशस्त्यवचनात्सकलशिष्टपरिग्रहाच्च प्रशस्तः। अन्ये तु पूर्वपूर्वासम्भवे अनुकल्पतातारतम्येन व्यवस्थाप्याः। अनुकल्पता च मुख्यानुष्ठानासम्भवे परानुष्ठानम्। तत्रानुकल्पता द्विविधा, नैयायिकी वाचनिकी चेति। तत्र नैयायिकीमाह—

विष्णुपुराणम्,

सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्।
उद्वहेत द्विजो भार्यां न्याय्येन विधिना नृप॥ इति।

न्याय्यो न्यायप्राप्तः। न्यायश्च यथा, न दीक्षितस्यान्नमश्नीयादिति निषेधे अग्नीषोमीये संस्थिते दीक्षितस्यान्नमश्नातीत्यस्य मुख्यपक्षस्य प्रतिप्रसवस्यासम्भवे क्रीतराजको भोज्यान्न इति ल-

घुपक्षस्याभ्यनुज्ञाने । वाचनिकी यथा विश्वरूपोदाहृते—

चतुर्विंशतिमते,

दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ।
उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ॥
पञ्चमीं तदभावे तु पितृपक्षे स्वयं विधिः ।
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैवच ॥
एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ।
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ॥
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ।
असपिण्डा च या मातुरसगोत्रा च या पितुः ॥
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ॥
नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते । इति ।

सप्तमादूर्ध्वं प्रशस्तः कल्पः । तदभावे सप्तमीं तदभावे पञ्चमीमिति पक्षद्वयेऽप्ययं सर्वमतेन प्रशस्तोऽनुकल्पः । तुशब्देन पक्षान्तरं परिगृह्णाति । पितृपक्षे स्वयं वक्ष्यमाणो विधिः सप्तमीं षष्ठीं पञ्चमीं तथा । मातृपक्षे चतुर्थ्यादिकां पूर्वपूर्वाभावएव उद्वहेदेवमुद्वाहे न दोष इति शाकटायनमतम् । एवं स्वमतेन पक्षद्वये अनुकल्पमुक्त्वा इदानीं मतान्तरेण पक्षद्वयेऽनुकल्पमाह । पञ्चम्यभावे चतुर्थीं तदभावे तृतीयामार्थक्रमप्राबल्यात्, पक्षद्वयेऽप्युद्वहेदिति मनुपराशराङ्गिरोयमानां मतम् । कन्यागतमेव सप्तमत्वादिविशेषणं वरेऽपि ज्ञेयम् । असपिण्डोऽसपिण्डामुद्वहेदित्यसापिण्ड्यस्योभयविशेषणत्वात् । तेन सप्तमः सप्तमीं षष्ठः षष्ठीमित्यादि सिध्यति । पञ्चमयोस्तु विशेषोऽभिहितस्तत्रैव,

आरभ्य कूटात्पुरुषात्पञ्चमो न तु पञ्चमीम् ।

चतुर्थीं पञ्चमीं चैव चतुर्थः षष्ठ उद्वहेत् ॥ इति ।

नन्वनुकल्पेऽपि यदि दोषाभावस्तुल्यः तर्हि को विशेषो मुख्यकल्पादित्यत आह। सा प्रशस्तेति। सा ऽतीतसप्तमादिका प्रकर्षेण शस्ता। दारकर्म गृहकार्यं, मैथुनमाधानादि। अनेनानुकल्पस्य द्विजातीनां दोषाजनकत्वेऽप्यप्राशस्त्यमुक्तम्भवति। लोकविद्वेषात्। अन्येषां तु नाप्राशस्त्यमपि। उक्तरीत्या साप्तपुरुषस्य सापिण्ड्यस्य विजातीयोष्विव शूद्रेष्वपि सङ्कोचावश्यम्भावेन द्विजातिमात्रविषयत्वात्।

अन्ये तु साप्तपुरुषं सापिण्ड्यं चातुर्वर्ण्यविषयं, तद्विषयमेव चानुकल्पविधानं, तच्च द्विजेष्वपोद्यते पञ्चमात्सप्तमादर्वागित्यनेन। ततश्च द्विजानामेवायमनुकल्पनिषेधो नान्येषामिति द्विजातिरिक्तविषयं सप्तम्यादिविधानमिति मन्यन्ते।

तन्न सुन्दरम्। अनुकल्पविधानस्य श्रोत्रियाणामित्युपक्रमेण द्विजातीनामित्युपसंहारेण च द्विजातिमात्रविषयत्वेन चातुर्वर्ण्यविषयत्वासम्भवात्। द्विजातिमात्रविषयत्वे च विधिनिषेधयोरष्टदोषदुष्टविकल्पापत्तेः। न चास्मन्मते सा। विधेरनुकल्पविषयत्वेन निषेधस्य च मुख्यकल्पविषयत्वेनैकविषयत्वाभावात्। तस्माद्यथोक्तमेव साधीय इति।

नन्वनुकल्पोद्वाहे दोषाभावान्नरको न स्यात्। लोकविद्वेषस्तु मधुपर्कगोवधवत्स्यादेवेत्यत आह। यस्तु देशेति। देशकुलाचाराभ्यामनुकल्पस्य व्यवस्थितत्वान्न लोकविद्वेषविषयता। तत्र प्रमाणमाह। वेदादिति। तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै इति वेदस्तृतीयचतुर्थयोरुद्वाहे प्रमाणम्। ते "नस्त्वाध्वं तेऽवत तउ नो अधिवोचत। मा नः पथः पित्र्यान्मानवादधिदूरं नैष्ट परावत" इति वेदः कुलाचारे प्रमाणमिति। भो देवास्ते यूयं न-

स्त्राध्वं पालयध्वम् । ते यूयं नः अस्मानवत रक्षत । ते यूयं नः अस्मानधिवोचत अधिकं हितं ब्रूत । मानवान्मनुष्यानुग्रेयात् परावतः परलोकसम्बन्धिनः पित्र्यात्पितृपरम्परागतात्पथो दूरं नः अस्मान्मा नैष्ट मा नयतेति देवान्प्रति प्रार्थ्यते । तस्मात्कुलपरम्परागतेन मार्गेण सप्तमादर्वागप्युद्वाहे न दोष इति भावः ।

उत्कलाः पुनरिमान्येव वाक्यानि दिव्यसिंहमिश्रकृतसंस्कारलतिकोदाहृतोशनःस्मृतिवाक्यबलादन्यथैव व्यवस्थापयन्ति । तद्यथा,

सप्त षट् पञ्च चत्वारो वर्ज्या वर्णैः क्रमान्नराः ।
सपिण्डतायामुद्वाहे शुद्धौ मरणजन्मनोः ॥
त्रयोऽनुलोमजैस्त्याज्याः द्वावेव प्रतिलोमजैः । इति ।

नराः पुरुषाः शीर्षाणीति यावत् ।

गौडास्तु शूलपाणिमिश्रकृतसम्बन्धविवेकोदाहृतबृहन्मनुवचनानुरोधेनान्यथैव व्यवस्थामाहुः । तद्यथा,

असबद्धा भवेद्या तु पिण्डेनैवोदकेन वा ।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥ इति ।

त्रिगोत्रान्तरिता मूलपुरुषगोत्रात् चतुर्थगोत्रोत्पन्नेति यावत् ।

तथाच स एव,

तत्सन्निकर्षे कर्त्तव्यं त्रिगोत्रात्परतो यदि । इति ।

## अथ विजातीयसापिण्ड्यनिर्णयः ।

तत्र शङ्खः ।

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते तिषु ॥ इति ।

अस्यार्थः । एकजाता एकस्माद्ब्राह्मणादेर्जाताः पृथग्जनाः भर्त्रपेक्षया भिन्नजातीयासु परस्परं समानजातीयासु स्त्रीषु जातास्ते एकपिण्डाः सपिण्डाः । ते पृथक्शौचाः पितृजात्यपेक्षया

विजातीयाशौचाः। पिण्डस्त्वावर्त्तते त्रिषु तेषां सापिण्ड्यं त्रिपुरुषमेवेत्यर्थः।

ब्रह्मपुराणेऽपि,

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु॥ इति।

अथ मातुलकन्यापरिणयननिर्णयः।

तत्र तदनुष्ठातारः श्रुतिस्मृतिपुराणेतिहासशिष्टाचारान् प्रमाणानि प्रदर्शयन्ति। तत्र ऋग्वेदश्रुतिः,

आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमन्नो भागधेयं जुषस्व।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव॥ इति।

अस्यार्थः। हे इन्द्र ईळितेभिः पथिभिः स्तुतैर्मार्गैर्नोऽस्माकमस्माभिरनुष्ठीयमानम् इमं यज्ञम् आयाहि आगच्छ आगत्य च स्वीयं भागधेयं जुषस्व जुषी प्रीतिसेवनयोः प्रीतिपूर्वकं गृह्णीष्व। कोऽसौ भागधेय इत्यत आह। वपां तृप्तामाज्यादिभिः संस्कृतां वपां यजमानाध्वर्युप्रभृतयो जहुस्त्यक्तवन्तः, तत्र दृष्टान्तद्वयमवतारयति। मातुलस्येव योषेति पैतृष्वसेयीवेति च। अत्र मातुलशब्दस्य सम्बन्धिशब्दत्वात्सम्बन्धी भागिनेय उपतिष्ठते। ततश्च मातुलस्य योषा मातुलकन्या न पत्नी। पैतृष्वस्रेय्या अनन्वयापत्तेः। यथा भागिनेयस्य भागः भजनीया परिणेतुं योग्येति यावत्। यथाच पैतृष्वस्रेयी पितृष्वसुर्दुहिता अर्थान्मातुलपुत्रस्य भागस्तथेयं च वपा तव भागधेयः।

तथा श्रुत्यन्तरमपि,

गर्भे तु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः।
नाकरस्य प्रमिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः॥

इति। अस्यार्थः। त्वष्टा रूपाणां कर्त्ता सविता सर्वेषां शुभाशुभ-

स्य प्रेरकः विश्वरूपः सर्वात्मकः देवो दानादिगुणयुक्तः नौ आवयोर्भ्रातृभगिन्योः गर्भे जनिता जनितारौ कन्यापुत्रौ दंपती जायापती कः करिष्यतीत्यर्थः । अत्र हेतुमाह । अस्य प्रजापतेः व्रतानि कर्माणि नकिः प्रमिनन्ति न केचित्प्रहिंसन्ति न लोपयन्तीत्यर्थः । अपिच नौ आवयोः अस्य प्रजापतेः कर्त्तव्यं दंपती जनकत्वं पृथिवी भूलोकः द्यौः स्वर्लोकश्च न वेद न जानातीत्यर्थः । एतेनापि भ्रातृभगिन्यपत्ययोर्विवाहयोग्यता सिध्यति ।

वाजसनेयकेऽपि,

तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायेते ।

तृतीये सङ्गच्छावहाउत चतुर्थे सङ्गच्छावहै ॥ इति ।

अस्यार्थः । तस्मादित्युक्तमर्थं दृष्टान्तेनोपसंहरति । समानादेकस्मात्पुरुषात्कूटस्थात् अत्ता भोक्ता आद्यो भोग्यश्च जायेते । तौ च मिथस्संकल्पयतः कूटस्थमारभ्य तृतीयपुरुषे आवां सङ्गच्छावहै उत चतुर्थे पुरुषे सङ्गच्छावहै इति । यद्यप्येते मन्त्रार्थवादाः पदार्थत्वान्न स्वार्थविधिपरास्तथाप्यप्राप्तस्यार्थस्य सिद्धवदनुवादान्यथानुपपत्त्या स्वार्थविधिकल्पका गम्यन्ते । यथा उपरि हि देवेभ्यो धारयति सव्यं हि मनुष्या अञ्जते इत्यादौ । न च प्रजापतिः स्वां दुहितरमभ्यध्यायत् योषा जारमिव प्रियमित्यादौ विधिकल्पनातिप्रसङ्गः । तेषां रागप्राप्तत्वात् । अत एव एतच्छ्रुतिमूलिका स्मृतिरपि षट्त्रिंशन्मते प्रत्यक्षमेव विधिं दर्शयति,

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।

उद्वाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ इति ।

चतुर्विंशतिमतेऽपि,

तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।

विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ इति ।

पुराणेऽपि श्रीभागवते,

यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः ।
व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥
वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥ इति ।

तथा तत्रैव,

दौहित्रायानिरुद्धाय गौरीं रुक्म्यददाद्धरेः ।
रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥
जानन्न धर्मं तं यौनं स्नेहपाशानुबन्धतः । इति ।

यत्तस्य अधर्मं जानन्नित्यन्वयप्रतिभानादधर्मत्वव्याख्यानं केषाञ्चित्,तद्भगवद्बादरायणाशयानभिज्ञाननिबन्धनमित्युपेक्षणीयम्। तथाहि । प्रत्यक्षश्रौतलिङ्गानुमितश्रुतिस्मृत्याद्यनेकप्रमाणप्रमितं तं यौनं दौहित्राय पौत्रीदानलक्षणं सम्बन्धं धर्मं धर्मत्वेन जानन्नाददात्, किन्तु स्वसुः प्रियचिकीर्षया स्नेहपाशानुबन्धत एव । अतएव हरेर्बद्धवैरोऽपीति विशेषणेन तदेवाविष्कृतम् । दौहित्राय प्रद्युम्नपरिणीतस्वदुहितृपुत्राय गौरीं गौराङ्गीं रोचनां रोचनामिवेति लुप्तोपमेक्षेति शब्दार्थः ।

इतिहासेऽपि महाभारते, शूरकन्या कुन्तिभोजेन पुत्रीकृता पाण्डुतोऽर्जुनमजीजनत् । अर्जुनश्च शूरात्मजस्वमातुलवसुदेवसुतां सुभद्रामुपयेमे इत्यपरं लिङ्गम् । तथाहि ।

अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ।
गतः प्रभासमश्रृणोन्मातुलेयीं स आत्मनः ॥
तत्र चंक्रममाणौ तौ वसुदेवसुतां शुभाम् ।
स्वलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥
ममैषा भगिनी पार्थ सारणस्य सहोदरा ।

सुभद्रा नाम भद्रं ते पितुर्मे दयिता शुभा ॥
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव सम्पन्ना कमेवैषा न मोहयेत् ॥
कृतमेव तु कल्याणं सर्वं मम भवेद् ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥
अतः प्रचिन्त्य कल्याणीं प्रसह्य भगिनीं मम ।
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥
ततः सुभद्रा सौभद्रं केशवस्य स्वसा प्रिया ।
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ॥ इत्यादि ।

आचारोऽप्यविच्छिन्नपारम्पर्येण दाक्षिणात्यशिष्टानामविगीतो विजृम्भते । तस्मात्सिद्धं मातुलपितृष्वसृकन्यापरिणयनम् ।

अत्र प्राच्योदीच्यप्रतीच्याः प्रत्यवतिष्ठन्ते । कथमविगानं, निषेधस्मृतीनां बहुलमुपलब्धेः ।

**तथाहि मनुः,**

पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेवच ।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥
एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्पुनः ॥ इति ।
मातुश्चाप्तस्य मात्रा भ्रातृत्वेन प्रतिपन्नस्य ।

**तथाच लिङ्गपुराणे,**

वाक्सम्बन्धकृतानां तु स्नेहसम्बन्धभागिनाम् ।
विवाहोऽत्र न कर्त्तव्यो लोकगर्हा प्रसज्यते ॥
अतो वंशा विनश्यन्ति लोके संकरकारकाः । इति ।

**शातातपः,**

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच ।

समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत् ॥ इति ।

पुनरपि स एव,

उद्वहेत्तु सगोत्रां यस्तनयां मातुलस्य च ।
ऋषिभिश्चैव तुल्यां च स तु चान्द्रायणं चरेत् ॥

महाभारते ययातिवाक्यमपि,

यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
पापा मातुलसम्बन्धात्प्रजा वै ते भविष्यति ॥

कलिनिन्दाप्रक्रमे व्यासोऽपि,

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥ इति ।

सुमन्तुः,

पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां समानप्रवरां च विवाह्य चान्द्रायणं चरेदिति ।

पैठीनसिः,

कुलोत्पन्नां साध्वाचारां वरयेत्पितृष्वसृमातृष्वसृदुहितरो मातुलसुता च धर्मतस्ता भगिन्यो वर्जयेदिति । भगिन्य इत्यपरिणेयत्वे हेतुगर्भं विशेषणम् । अत एव भविष्योत्तरे,

प्रथमा श्रावणे मासि तथा भाद्रपदे परा ।
तृतीयाऽऽश्वयुजे मासि चतुर्थी कार्तिके भवेत् ॥ इति—

चतस्रो यमद्वितीया उपक्रम्य तासु—

पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ।
मातुलस्य सुताहस्ताद् द्वितीयायां तथा नृप ॥
पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् ।
भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् ॥
सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ।

इति चतसृणामपि भागिनीत्वं स्पष्टमेवाभिहितम्। तदेवं मातुलकन्यापरिणयस्य निषेधवचनकदम्बे जाग्रति कथमिव तद्विधायकस्मृत्यादेर्मूलभूतश्रुत्यनुमानमिति प्राप्ते—

अभिधीयते दाक्षिणात्यैः। प्रत्यक्षश्रौतलिङ्गाद्यनुमितश्रुत्या शीघ्रोपस्थितिकतया स्मृत्यनुमितलिङ्गाद्यनुमीयमानश्रुतेर्विषयापहारेण बाधादनुमानासम्भवान्नैतासां स्मृतीनां स्वार्थप्रमापकत्वम्।

तदुक्तं बलाबलाधिकरणे वार्तिकाचार्यैः, स्मृतिवैदिकलिङ्गयोर्विरोधे स्मृतेर्मूलान्तरसम्भवाद्वेदलिङ्गानां चानन्यथासिद्धत्वात्स्मृतेर्बाध इति। तथा, बलीयो वैदिकं वैदिकनिवहायाः स्मृतेरपीति च। विवृतं चैतद्राणकाचार्यैः प्रकृतमेवोदाहरणं प्रस्तुत्य। अथवा। विषयविशेषव्यवस्थया विरोधाभावेन विधिनिषेधवाक्यैः स्वस्वमूलभूतश्रुत्यनुमाने बाधकाभावः। तथाहि। ब्राह्मादिषु विवाहेषु दानेन कन्यायाः पितृगोत्रसापिण्ड्ये निवर्त्तते, यथा दत्तपुत्रस्य।

तदाह मनुः,

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥ इति।

दत्तः पुत्रो जनयितुर्गोत्ररिक्थे न भजेत्। तथा पुत्रं ददतः पितुः पिण्डः सापिण्ड्यं स्वधा श्राद्धं च दत्तपुत्राद्व्यपैति। तत्र हेतुर्यतो गोत्ररिक्थानुगः पिण्डस्तन्निवृत्तौ निवर्त्तते इत्यर्थः। आसुरादिचतुर्षु पुनर्दानाभावेन गोत्रसापिण्ड्ययोरनिवृत्तिरिति। अत एव मार्कण्डेयेन,

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्।

इति गोत्रनिवृत्त्यनिवृत्ती प्रतिपाद्येते । अनेनैवाभिप्रायेण स्मृत्यन्तरेऽप्युक्तम्,

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके । इति ।

एवं च यानि मातुलसुतादिनिषेधकानि मन्त्रादिवाक्यानि तान्यनिवृत्तगोत्रसापिण्ड्येष्वासुरादिविवाहेषु सावकाशानीति । एतेन पुत्रिकापुत्रोऽपि व्याख्यातः ।

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ॥

इति लौगाक्षिस्मरणात् । तन्न चतुरस्रम् । विकल्पासहत्वात् । तथाहि । ब्राह्मादिविवाहेषु सापिण्ड्यनिवृत्तिः किं दानेन उत वचनेन आहोस्वित्सत्यपि सापिण्ड्ये वाचनिकोऽयं विवाह इति । न तावदाद्यः । दानेन स्वत्वनिवृत्तावपि सापिण्ड्यानिवृत्तेः । अवयवान्वयः पिण्डान्वयो वा सापिण्ड्यं, तत्रावयवान्वयनिवृत्तिः प्रत्यक्षबाधिता । पिण्डान्वयनिवृत्तिस्तु—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

इति शास्त्रेण बाधिता । यदा तु कन्यादाने परस्वत्वापादनमात्रं न स्वस्वत्वनिवृत्तिरिति दानत्वस्यैवाभावो विद्यादानादिष्विव तदा सुतरां न सापिण्ड्यनिवृत्तिः । नापि द्वितीयः । तादृशवचनस्य श्रीमद्भिरप्यनुपन्यासात् । यत्तु—

एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके ।

तथा—

स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।

इति च वाक्यद्वयमुपन्यस्तं, तत्राद्ये दंपत्योः पिण्डैक्यमात्रं बोध्यते न पितृसापिण्ड्यनिवृत्तिः । अथ पिण्डशब्देन सापिण्ड्य-

मेवोच्यते तत्रापि तथैव। निवृत्तिपदाश्रवणात्। द्वितीयेऽपि तथैव पितृगोत्रनिवृत्तिः श्रूयते न सापिण्ड्यनिवृत्तिः। सापिण्ड्यपदाश्रवणात्। न च गोत्रनिवृत्त्यैव सापिण्ड्यनिवृत्तिः। परस्परव्यभिचारेण व्याप्त्यभावात्। यदपि—

चतुर्विंशतिमते,

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा।

इत्यादिवचनं, तन्मातुलस्य सुतामूढ्वेत्यादिना सत्प्रतिपक्षग्रस्तमेव, प्रतिलोमादिसापिण्ड्यविषयं वेति न प्रकृतोपयोगि।

यदपि,

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्।

इति मार्कण्डेयवाक्येन ब्राह्मासुरविवाहभेदेन गोत्रसापिण्ड्ययोर्निवृत्त्यनिवृत्ती प्रतिपाद्येते इत्युक्तं, तदपि न। सापिण्ड्यनिवर्त्तकपदाश्रवणात्। गोत्रनिवृत्तिस्त्वासुरेऽपि भवत्येव।

पूर्वं परिग्रहस्तेषां पश्चाद्धोमो विधीयते।

इति परिशब्देन होमादिसप्तमपदप्रक्रमान्ते सकलभार्यात्वोत्पादकसंस्कारविधानात्। तत्र च सप्तमे पदे पितृगोत्रनिवृत्तेरावश्यकत्वात्। तस्मान्मार्कण्डेयवाक्यम् आसुरादिविवाहेषु मातुः पिण्डदानादौ पितृगोत्रप्राप्त्यर्थम्। ब्राह्मादिवचनं तु दृष्टान्तार्थमनुवाद इति सर्वं सुस्थम्।

यत्तु मातुलस्येव योषेत्यादिश्रौतलिङ्गानुमितश्रुतिरत्र प्रमाणमिति, तदपि—

आयाहीन्द्र पतिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व।
तृप्ता जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव॥

इत्यपरार्कोदाहृतशाखान्तरीयश्रौतलिङ्गानुमितश्रुत्या सत्प्रतिपक्षग्रस्तम् । तस्याश्चार्थस्तेनैव व्याख्यातः । आयाहीन्द्र अस्मदीयं यज्ञमन्यैरपि सोमपतिभिः ईळितेभिः स्तोत्रार्हैः सह, आगत्य च वाजसातौ सोमरूपान्नभोजनप्रस्तावे जुषस्व, सोममिति सम्बध्यते । एवं प्रार्थ्येन्द्रस्तुत्यर्थं स्वरूपार्थवादं करोति, ये सोमपतयो भवता सहायातास्ते सकृत्सोमपानेन तृप्तास्सन्तस्सोमं जहुः त्यक्तवन्तः । के कामिव, मातुलस्य सुताः पैतृष्वसेयीमिव भार्यात्वेनासन्तानभिलषणीयां त्यजन्ति स्वकीयमातुलस्य सम्बन्धायोग्यत्वात् । तद्वद्वपुद्देशेन सोमं त्यक्तवन्तो निराकाङ्क्षतया । तव पुनरयं सोमभागः अपामिवौघः सातत्येनाकर्मसमाप्तेरिति ।

यदपि,

गर्भे नु नौ जनिता दम्पती करिति श्रुतेः नौ आवयोर्गर्भे जनितारौ त्वष्टा देवः दम्पती करिष्यतीति व्याख्यानं, तदपि नौ आवां जनिता जनयिता देवः गर्भे नु गर्भएव दम्पती कर्तृ कृतवानिति विद्यारण्यश्रीपादकृतव्याख्याविरुद्धत्वादुपेक्षणीयम् । युक्तं चैतदेव । ओचिदिति चतुर्दशर्चस्य सूक्तस्य ।

ओचित् पल्नावैवस्वतयोर्यमयम्योः संवादः षष्ठ्ययुग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन्प्रत्याचष्टे—

इति सर्वानुक्रमेऽस्याः पञ्चम्या ऋचः यमं प्रति यम्या पूर्वपक्षत्वेनाभिधानात् । सिद्धान्ते—

न वाउ ते तन्वा तन्वं सम्पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।

अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतदिति ।

अस्यार्थः । हे सुभगे ते तव तन्वा शरीरेण तन्वं स्वीयान्ततुं न वाउ नैव सम्पपृच्यां सम्पर्कयिष्यामि । तत्र हेतुमाह । यः स्वसारं

निगच्छात् गच्छति तं लोका देवाश्च पापं पापिष्ठम् आहुः । तर्हि मत्सन्तोषः कथं स्यादित्यत आह । मत्प्रमुदः मत्तः जायमानाः प्रमुदस्त्वम् अन्येन पुंसा कल्पयस्व अर्जयस्व । न ते भ्राता यमः एतत्कर्म वष्टि न काङ्क्षतीति यमेन तत्प्रत्याख्यानाच्च ।

अथ तृतीये सङ्गच्छामहे इति शातपथश्रुत्या मातुलकन्यापरिणयः सेत्स्यतीति । तत्रोच्यते । न तावद्विधित्वेनेदं गमकम् । उत्तमपुरुषश्रवणात् । नापि विधिकल्पनया । स वै स्रुचौ व्यूहतीति स्रुग्व्यूहनविधिशेषत्वात् । यद्यप्राप्तार्थकत्वेनान्यशेषस्यापि विधिकल्पकत्वं, तर्हि नापुत्रस्य लोकोऽस्ति तत्सर्वे पशवो विदुः तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहतीत्यस्यापि पुत्रोत्पादनविधिशेषस्य मात्रादिगमनविधिकल्पकत्वं केन वार्येत । अथास्य छन्दोगश्रुतिविरोधान्न विधिकल्पकत्वं तर्हि प्रकृते अपरार्कोदाहृतश्रुतिविरोधान्न विधिकल्पकत्वमिति समः समाधिः ।

अथ तस्मादु समानादेव पुरुषादत्ता चाद्यश्च जायेते इत्यस्मात्तदर्थसिद्धिः । तदपि न । एकस्मादुत्पन्नयोर्भ्रातृभगिन्योर्दांपत्यस्य पापमाहुर्यः स्वसारं निगच्छादितिप्रत्यक्षश्रुतिबाधितत्वेन मुख्यार्थासम्भवात् । अथैकान्तरविवक्षया विवक्षितार्थसिद्धिस्तर्हि मुख्यार्थत्यागाविशेषाच्छास्त्रान्तराविरोधाय पञ्चमान्तरविवक्षया एकपुरुषसन्तानजात्पञ्चमात्सप्तमादूर्ध्वमित्येवार्थः कुतो न कल्प्यते । यथा जातेष्टौ मुख्यकालबाधेन शास्त्रान्तराविरोधायाशौचानन्तरः पर्वकालः कल्प्यत इति । न हि पञ्चम्या ऽव्यवहितस्यैवापादानत्वमुच्यते । चिरनिर्गतेऽपि पुरुषे गौडादागत इत्यादिप्रयोगदर्शनात् । तेन वाजपेयस्य यूप इतिषष्ठीवद्व्यवहितसम्बन्धेऽपि पञ्चम्युपपत्तेः । यतो वंशभेदस्तमादाय गणयेदित्यादिस्मृतिमूलत्वमेवास्याः श्रुतेः कल्पयितुं युक्तम् । ननु कल्प्यता-

मन्तरं तथापि पञ्चपान्तरकल्पने किं प्रमाणम्। वाक्यशेषश्रुततृतीयचतुर्थपुरुषसंख्ययैव निराकाङ्क्षत्वादस्य वाक्यस्य। उपसंहृतश्चायमेवार्थश्चतुर्विंशतिमतस्मरणेऽपि,

तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि।

विवाहयेदिति प्राहुः पाराशर्याङ्गिरोयमाः॥ इति।

तस्मात्सिद्धमेतावत्येवान्तरे विवाहविधायकत्वमस्येति चेत्, सत्यम्। तथापि मातुलकन्यापरिणयनासिद्धेः। मातृष्वस्रीयादिपरिणयनप्रसङ्गात्। न चाचाराभावेन तदपरिणयनसिद्धिः। प्रत्यक्षश्रुतिविहितेऽनाचारस्याप्रयोजकत्वात्। न चास्य सामान्यरूपस्यापि मातुलस्येव योषेत्यादिलिङ्गकल्पितविशेषश्रुत्युपसंहारेण नातिप्रसङ्ग इति वाच्यम्। अपरार्कोदाहृतश्रौतस्यागलिङ्गविरोधेन तदुद्वाहविधायकविशेषश्रुत्यनुमानस्यैवासम्भवात्। किञ्च। मातुलकन्यापरिणयनपरत्वे तयोः श्रुतिस्मृत्योस्तृतीयपुरुषसंकीर्तनमेव कर्त्तव्यं न चतुर्थपुरुषसंकीर्तनम्। तस्य मातुलत्वाभावात्। तस्मान्नेदं मातुलकन्यापरिणयनपरत्वेन व्याख्येयम्। किन्तर्हि, द्विपुरुषसापिण्ड्यकीर्तनं प्रतिलोमजविषयं व्याख्येयम्। त्रिपुरुषानुलोमजसापिण्ड्यसमभिव्याहारात्।

त्रयोऽनुलोमजैस्त्याज्या द्वावेव प्रतिलोमजैः।

इत्युशनःस्मरणात्। तेषां तथाऽऽचारदर्शनाच्च।

अथ विधिनिषेधयोः प्रत्यक्षश्रौतलिङ्गद्वयानुमितश्रुतिद्वयमूलकयोस्तुल्यबलतया विकल्प एव देशभेदेन व्यवस्थितो मन्तव्यः।

तथाच बौधायनः, पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तान्यनुव्याख्यास्यामो, यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति, अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतो-

दृद्भिर्व्यवहारः आयुधीनकं समुद्रयानमिति । तत्रेतरादितरस्मिन्कुर्वन्दुष्यति इतरादितरस्मिन् तत्रतत्र देशप्रामाण्यमेव स्यादिति ।

अस्यार्थः। विप्रतिपत्तिर्विरुद्धार्थानुष्ठानम् । इतरदिति दाक्षिणदेशीयं कर्मोत्तरदेशे उत्तरदेशीयं च कर्म दक्षिणदेशे कुर्वन् दुष्यति न स्वस्वदेशे तत्रतत्र देशनिबन्धनप्रामाण्यादिति चेत् न। मिथ्यैतदिति गौतमः, उभयमेव नाद्रियेत शिष्टस्मृतिविरोधदर्शनादिति बौधायनेनैवाग्रे विकल्पनिराकरणात् ।

तर्हि कथमयं विरोधः परिहर्त्तव्यः, प्रमिताक्षरोक्तप्रकारेणेति ब्रूमः । तथाहि । स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्विते‌ऽर्थे प्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयादित्यादिनिरुक्तपरिभाषया श्रुतिस्मृतिविरुद्धस्यार्थस्यानन्वितत्वेन प्रादेशिकविकारेणार्थं निर्णीयाविरुद्धोर्थः संपादनीयः । सच यथा,

आनो भर प्रमगन्दस्य वेद इत्यादौ नित्यानित्यसंयोगविरोधेन प्रसिद्धमपि राजानं प्रमगन्दपदस्यार्थं विहाय प्रकृष्टं मह्यं गमयिष्यतीति यो ददाति स प्रमगन्द इति व्युत्पत्त्या वार्द्धुषिकः प्रमगन्दपदस्यार्थः कल्प्यते । यथावा कीकटशब्दार्थं प्रसिद्धमपि देशविशेषं विहाय किङ्कृतेनेति ये वदन्ति ते कीकटा नास्तिका इति कल्प्यते । तथा मातुस्तुल्यं लक्षणं यस्येति निरुक्त्या मातुलशब्देन मातृमुखो गृह्यते । पितृष्वसाशब्देन च स्वसा सुअसा स्वेषु सीदतीति वेति च निरुक्त्या पितुः स्वे रूपे सीदतीति पितृष्वसेति पितृसदृशमुखीत्यर्थो निर्णयः । तथाच मातृमुखेन पुरुषेण पितृमुख्यां कन्यायामुत्पादिता कन्या यथा भजनीया भवति तथेयं वपा तव भजनीयेत्यर्थः ।

उक्तं च सामुद्रिकसारे,

धन्या पितृमुखी कन्या धन्यो मातृमुखः सुतः ।
तयोर्धन्यतरोत्पन्ना कन्या भाग्येन लभ्यते ॥ इति ।

मातुलस्येव योषा पैतृष्वसेयीवेति च दृष्टान्तद्वयं विशिष्टकन्याऽलाभे अन्यतराऽपि प्रशस्तेति गमयितुम् । यद्येवमपि मातुलस्य योषा पैतृष्वसेयी लोकस्य भजनीयेत्यन्वये लोकस्येति कर्त्रध्याहारो दोषस्तर्हि मातुलस्य योषा कन्या भागिनेयस्य पैतृष्वसेयी मातुलपुत्रस्येति भवतामध्याहारद्वयं कथमदोषमापद्यते । वस्तुतस्त्वस्माकमीषदपि नाध्याहारो, यतो मातुस्तुल्यं लक्षणं नाम यस्येति व्युत्पत्त्या मातृसमाननामा पुलोमापत्यं पुलोमा गृह्यते । तस्य मातुलस्य पुलोम्नो याऽपत्यं शची सा च पैतृष्वसेयी पितॄणामग्निष्वात्तादीनां स्वसा शची तदपत्यत्वाच्छचीन्द्राणी यथा ते भागस्तथेयं वपा ते भाग इत्यर्थः । तदेतत्सर्वं महाभारतमत्स्यपुराणादिषु स्पष्टमभिहितम्,

पुलोमा कालका चैव वैश्वानरसुते उभे ।
बह्वपत्ये महासत्त्वे मरीचेस्तु परिग्रहः ॥
तयोः पुत्रसहस्राणि षष्टिर्दानवनन्दनाः ।

इत्युपक्रम्य—

पौलोमाः कालकेयाश्च दानवास्ते महाबलाः ।

इति मध्येऽभिधाय—

वैश्वानरः पुलोमा च विद्रावणमहार्णवा ।

इत्युक्त्वा—

स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता ।

इत्यन्तेऽभिहितम् । तथा,

अग्निष्वात्तादिकानां तु पितॄणां सा शची स्वसा ।

पुलोमा जनयामास तस्यां नाम्ना शचीं सुताम् ॥ इति ।

तथा,

शच्यां तु जनयामास जयन्तं तनयं हरिः । इत्यादि ।

तस्मादिदमित्थमेव व्याख्येयम् ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥

इति स्मरणात् । तस्मादेतन्मन्त्रलिङ्गकल्पितविधिवशेन मातुलकन्यापरिणयनं न कथञ्चन सिध्यति । यदस्यागमिष्यन्ति शुक्रो देवता इत्याद्येतन्मन्त्रनिरुक्तत्वेन केचित्पठन्ति, तदपि सर्वदेशीयवैदिकपाठाभावेन भाष्यकारापरिग्रहेण च न प्रमाणत्वेन शङ्कनीयम् । यदपि प्रद्युम्नानिरुद्धार्जुनादीनां मातुलकन्यापरिणयनमत्र प्रमाणमिति, तदपि विधवयोः प्रभावत्युलूप्योः परिणयनवत् कतकभरद्वाजौ व्यत्यस्य भार्ये जग्मतुर्वसिष्ठश्चाण्डालीमक्षमालामुपयेमे प्रजापतिः स्वां दुहितरमभ्यध्यायदित्यादिवत् परशुरामस्य मातृशिरश्छेदवत् पाण्डवानां द्रौपदीपरिणयवच्च धर्मव्यतिक्रम एव । प्रत्यक्षश्रुतिस्मृतिविरोधात् ।

तथाच गौतमः, दृष्टो धर्मव्यतिक्रमः साहसं च महतामिति । न च तैः कृतमित्यस्मदादाभरपि कर्त्तव्यम् । तत्रापि हेतुमाह स एव । अवरदौर्बल्यादिति । अवरेषामस्मदादीनां दुर्बलत्वात् ।

तथाच श्रूयते,

तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ।

तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः ॥ इति ।

अनुष्ठितन्तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।

नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् ॥ इति ।

भागवतेऽपि,

तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा। इति।

अत एव बृहस्पतिरपि,

उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।

इत्यनाचारेष्वेव तत्परिगणयति। सोऽपि कलौ निषिद्धः।

गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा।

इति ब्रह्मपुराणात्। मातुस्सपिण्डो मातुलः। अत एव कलिनिन्दाप्रक्रमे—

व्यासोऽपि,

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा।

शुल्केन चोद्वहिष्यन्ति विप्रा पापविमोहिताः॥

इत्यलं वृद्धविरोधेन।

अथ विरुद्धसम्बन्धा।

तत्र गृह्यपरिशिष्टम्, अविरुद्धसम्बन्धामुपयच्छेतेत्युपक्रम्य दंपत्योर्मिथः पितृमातृसाम्ये विरुद्धसम्बन्धा। यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति। पितृमातृसाम्यइत्युपलक्षणम्। तेन भ्रातृभगिनीसाम्ये स्नुषाश्वशुरादिसाम्येऽपि नोद्वाहः। विरुद्धसम्बन्धाविशेषात्। तद्यथा। पितृव्यपत्नीस्वसुः सुता भगिनीसमा भवति पितृव्यशालिकायाः मातृष्वसृतुल्यत्वात्। तथा स्नुषाभगिन्यपि श्वशुरेण नोद्वाह्या। स्नुषातुल्यत्वात्। एवमन्यत्राप्यूह्यम्।

अत एव बौधायनः,

मातुस्सपत्न्या भगिनीं तत्सुतां चापि वर्जयेत्।

पितृव्यपत्न्या भगिनीं तत्सुतां चापि वर्जयेत्॥ इति।

अथ प्रत्युद्वाहनिषेधः।

प्रयोगपारिजाते,

प्रत्युद्वाहो न कर्त्तव्यो नैकस्मै कन्यकाद्वयम् ।
न चैकजन्ययोः पुंसोर्नैकजन्ये तु कन्यके ॥

तथा,

एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोः ।
न पुत्रीद्वयमेकस्मै दद्यादिति पराशरः ॥ इति ।

प्रत्युद्वाहः यत्पुत्राय स्वकन्या दीयेत तत्कन्या स्वपुत्राय न-कार्येत्यर्थः ।

अथैकोदराविवाहनिर्णयः ।

स्मृतिरत्नावल्याम्,

एकोदरप्रसूतानामेकस्मिन्वत्सरे पुनः ।
विवाहं नैव कुर्वीत मण्डनोपरि मुण्डनम् ॥

संहितासारावल्याम्,

एकमातृप्रसूतानामेकस्मिन्वत्सरे यदि ।
विवाहं नैव कुर्वीत कुर्वन्ति मुनयोऽन्यथा ॥

अन्यथा मातृभेदे । तथाच गर्गः,

एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ इति ।

वत्सरपरिहाराशक्तौ षण्मासं वा परिहरेत् ।

तथाच वराहः,

विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥

मदनरत्नेऽपि,

एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयस्समूचुर्न मुण्डनं मण्डनतोऽपि कार्यम् ॥

अस्यापवादस्तत्रैव,

ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।
तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥

**संहितासारावल्यां,**

फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलम्बनम् ॥ इति ।

षण्मासस्यापि परिहाराशक्तौ दिनचतुष्टयं परिहरेत् ।

**तथाच गर्गः,**

पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

**कपर्द्दिकारिकायामपि,**

उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाऽपि ।
यावच्चतुर्थं दिवसं न पूर्णं समाप्य चान्योद्वहनं विदध्यात् ॥

दिनचतुष्टयस्यापि परिहाराशक्तौ दिनमात्रं परिहरेत् ।

**तथाच गर्गः,**

भ्रातृयुगे स्वसृयुग्मे च भ्रातृस्वसृयुगे तथा ।
न जातु मङ्गलं कुर्यादेकस्मिन्मण्डपेऽहनि ॥

**कपर्द्दिकारिकायामपि,**

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
न कुर्यान्मङ्गलं किञ्चिदेकस्मिन्मण्डपेऽहनि ॥ इति ।

दिनमात्रस्यापि परिहाराशक्तौ लग्नमात्रं परिहरेत् ।

तथाच प्रयोगपारिजाते स्मृत्यन्तरं,

विवाहस्त्वेकजन्यानामेकस्मिन्नुदये कुले ।
नाशं करोत्येकवर्षे स्याद्वैका विधवा तयोः ॥ इति ।

अस्यार्थः। एकजन्यानाम् एकस्मिन्नुदये लग्ने विवाहः एकवर्षमध्ये कुले नाशङ्करोति। तयोर्वा मध्ये एका विधवा भवतीति ।

लग्नस्यापि परिहाराशक्तौ मण्डपमात्रं परिहरेत् ।

**तथाच स्मृतिरत्नावल्याम्,**

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
एकस्मिन्मण्डपे चैव न कुर्यान्मङ्गलद्वयम् ॥ इति ।

अस्यां च व्यवस्थायां प्रमाणमुक्तं ज्योतिर्विवरणे,

एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः ।
नद्यन्तरे एकदिने केऽप्याहुः संकटे च शुभम् ॥
न प्रतिषिद्धं लग्नं संप्राप्ते संकटे महति ।
एकोदरसम्भवयोरेकाह्ने भिन्नमण्डपे काले ॥

अत्र दिनशब्दः पूर्वोक्तानां संवत्सरादीनां सर्वेषामुपलक्षणम्। सङ्कोचनिमित्तस्य संकटस्य सर्वत्रापि तुल्यत्वात् । अत एव प्रवेशनिर्गमयोः षण्मासपरिहारासंभवं वैपरीत्येनैकदिनविधानं तत्रैव,

ऊर्ध्वं विवाहाच्छुभदो नरस्य नारीविवाहो न ऋतुत्रयं स्यात्।
नारीविवाहात्तदहेऽपि शस्तं नरस्य पाणिग्रहमाहुरार्याः ॥

भिन्नमातृकयोस्तु न पूर्वोक्तकालवर्जनमित्याह—

**मेधातिथिः,**

पृथग्मातृजयोः कार्यो विवाहस्त्वेकवासरे ।
एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा ॥
पुष्पपट्टिकयोः कार्यं दर्शनं न शिशिरस्थयोः ।
भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् ॥ इति ।

वासरशब्दो वत्सरादीनामुपलक्षणम् ।

अथ यमलयोरपि पूर्वोक्तनिषेधापवादः ।

**भट्टकारिकायाम्,**

एकस्मिन्वत्सरे चैकवासरे मण्डपे तथा ।

कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥ इति ।

## अथ द्विशोभनादिनिर्णयः ।

तत्र वसिष्ठः,

द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सुको वा द्वारेऽथवाऽऽचार्यविभेदतो वा ॥
एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत् ॥

अस्यार्थः । एकस्मिन्गृहे नवदिनमध्ये शोभनद्वयं न कार्यं, किंतु नवदिनानन्तरं कार्यम् । औत्सुक्येनावश्यककर्त्तव्ये द्वारभेदेन गृहभेदेनाचार्यभेदेन वा कार्यम् । तथैकस्मिन्गृहे सोदराणां होमवत्संस्कारत्रयं न कार्य्यं, भिन्नोदरप्रसूतानां तु न दोषः ।

सायणीयेऽपि,

एकस्मिन् शोभने वृत्ते द्विशुभं नैव कारयेत् ।
यदि कुर्यात्प्रमादेन तत्र स्यादशुभं ध्रुवम् ॥
कात्यायनोऽपि, न कुर्यान्मङ्गलत्रयमिति ।

## अथ मण्डनमुण्डनादिनिर्णयः ।

तत्र गर्गः,

न मण्डनान्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मुण्डनमेकवर्षे ।
न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुश्च कुर्यात् ॥

वासिष्ठेऽपि,

न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् ।
न मण्डनाच्चापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः ॥
गोत्रैकतायामिति त्रिपुरुषसापिण्ड्ये द्रष्टव्यम् ।
प्रवेशनिर्गमसहचरितमुण्डनमण्डनयोस्तथा दर्शनात् ।

तथाच मेधातिथिः,

पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ।
प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने ॥ इति ।

कात्यायनोऽपि,

कुले ऋतुत्रयादर्वाग्मुण्डनान्न तु मण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥
कुर्वन्ति मुनयः केचिदन्यस्मिन्वासरे लघु ।
लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ॥
लघुगुरुलक्षणमुक्तं ज्योतिःसागरे,
चूडाकेशान्तसीमन्तविवाहोपनयान् बुधाः ।
गुरुमङ्गलमित्याहुः तदन्यं लघु मङ्गलम् ॥ इति ।
प्रवेशनिर्गमलक्षणमुक्तं कात्यायनेन,
पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥
चौलं मुण्डनमेवोक्तं वर्जयेद्वरणात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ॥
अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ।
अभेदेऽपि विवाहः स्यान्न कुर्यादेकमण्डपे ॥

नृसिंहप्रसादेऽपि,

न मुण्डनं स्याद्दशनानिबन्धो न चापि मोक्षो व्रतबन्धनस्य ।
वदन्ति गर्गप्रमुखा मुनीन्द्राश्चूडाकृतिं मुण्डनमेव नान्यम् ॥ इति ।

नारदः,

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।
न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम् ॥

संहिताप्रदीपे,

ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितुस्समार्द्धम् ।

अप्राप्य कन्यां श्वशुरालयं तु वधूः प्रवेश्या स्वगृहं नवादौ इति ।

अथ कन्यालक्षणानि ॥

लक्षण्यां स्त्रियमुद्वहेदिति योगिस्मरणे तानि द्विविधानि बाह्यान्याभ्यन्तराणि च ।

तत्र बाह्यान्याह मनुः,

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥

शातातपोऽपि,

हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
तादृशीं वरयेत्कन्यां गृहस्थः सुखमेधते ॥

आपस्तम्बोऽपि,

बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेतेति । लक्षणसम्पन्नामित्यनेन दोषवतीं नोद्वहेदित्युक्तं भवति ।

अत एव मनुः,

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥
वाचाटां बहुभाषिणीम् । पिङ्गलां पिङ्गलाक्षीम् ।

यमोऽपि,

ह्रस्वां दीर्घां कृशां स्थूलां पिङ्गाक्षीं गौरपाण्डुराम् ।
न पूज्या न च सेव्यास्ता नाशमृत्युकराः स्त्रियः ॥

विष्णुपुराणेऽपि,

न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घरस्वरां काकुवाक्यां काकस्वरां न च ॥
नानिमेषेक्षणां तद्वत्क्षीणाक्षीं नोद्वहेद् बुधः ।

यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ॥
गण्डयोः कूपकौ यस्या भवतस्तां च नोद्वहेत् ।
नातिरूक्षच्छविं पाण्डुं न रुजामरुणेक्षणाम् ॥
अपीनहस्तपादां च न कन्यामुद्वहेद् बुधः ।
न वामनां नातिदीर्घां नोद्वहेत्संहतभ्रुवम् ॥
न चातिच्छिद्रदशनां न करालमुखीं तथा ।
नामविशेषेणापि वर्जनीयां मनुराह,
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
ऋक्षं नक्षत्रम् । अन्त्यो म्लेच्छः ।

आपस्तम्बोपि,

नक्षत्रनामा नदीनामा वृक्षनामा च गर्हिताः ।
सर्वाश्च रेफलकारोपान्त्यवर्णा विवर्जयेत् ॥ इति ।

यमोपि,

वेदनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम् ।
ऋक्षवृक्षलतानाम्नीं दारार्थे परिवर्जयेत् ॥ इति ।

आभ्यन्तराण्याहाश्वलायनः,

दुर्विज्ञेयानि लक्षणानीति अष्टौ पिण्डान्कृत्वा पिण्डानभिमन्त्रयते "ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम् यदीयं कुमार्यभिजाता तदीयमिह प्रतिपद्यतां यत्सत्यं तद् दृश्यताम्" इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । क्षेत्राच्चेदुभयतः सस्याद् गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठाच्चेत्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वलक्षणसम्पन्ना देवनात्कितवी चतुष्पथाद् द्विप्रव्राजिनी ईरिणादधन्या श्मशानात्पतिघ्नीति ।

अस्यार्थः । उभयतःसस्याद्यस्मिन् क्षेत्रे प्रतिसंवत्सरं द्विवारं

सस्यं निष्पद्यते तदुभयतःसस्यम् ।

तदुक्तं,

सस्यं क्षेत्रे तु यत्र द्विर्निष्पन्नं प्रतिवत्सरम् ।
तदिहोभयतस्सस्यशब्देनेति प्रचक्षते ॥ इति ।

तस्मात्तत्क्षेत्रात्। गोष्ठं गोस्थानम्। वेदिगताः पांसवो वेदिपुरीषमिति हरदत्तः। अपवृत्ते कर्मणि या वेदिः तद्वेदिपुरीषमिति नारायणः। अविदासिनः दसु उपक्षये इति धातुः। अविदासिनः अशोष्याद्ध्रदादित्यर्थः। कितवा यत्र दीव्यन्ति तद्देवनं द्यूतस्थानम्। चतुर्णां पथां समाहारश्चतुष्पथम्। ईरिणमूषरप्रदेशः यत्र धान्यं न प्ररोहति। अधन्या धनरहिता। श्मशानं प्रसिद्धम्। एतेभ्यः स्थानेभ्यो मृदः पृथगानीय तत्तत्स्थाननामानि पृथक्पृथक् पत्रखण्डेषु लिखित्वा तानि खण्डानि यथाक्रमं मृत्तिकास्वन्तर्द्धायैकरूपतया पिण्डान्कृत्वा परिशुद्धे पात्रे विनिक्षिप्य गन्धपुष्पैरभ्यर्च्य ऋतमग्रइत्यनेन मन्त्रेणाभिमन्त्र्य वरः स्वाभिमतां देवतां ध्यात्वा एषामेकं गृहाणेति कुमारीं ब्रूयात्। सा च यदि क्षेत्रादाहृतं पिण्डं गृह्णीयादस्याः प्रजा अन्नवती भविष्यतीति, विद्यात् इति सर्वत्र नेयम्। वृत्तस्वाध्यायकृतं यशो ब्रह्मवर्चसं तद्वती ।

तदुक्तं,

वृत्ताध्ययनसंपत्तिः ब्रह्मवर्चसमुच्यते । इति ।

द्वौ प्रव्रजतीति द्विप्रव्राजिनी । स्पष्टमवशिष्टमिति ।

शौनकोऽपि,

अथाष्टपिण्डग्रहणविधानेन विचक्षणः ।
लक्षणानि परीक्षेत ततः कन्यां यथातथम् ॥
क्षेत्रादुभयतःसस्याद्गोष्ठाद्वेदितलादपि ।
अशोष्याच्च ह्रदाद् द्यूतस्थानादथ चतुष्पथात् ॥

इरिणाच्च श्मशानाच्च गृहीत्वाऽष्टौ मृदः पृथक् ।
ताभिर्गृही विधायाष्टौ पिण्डानन्योन्यतः समान् ॥
तिलपत्रैकदेशेषु मृदां संज्ञाः पृथक्पृथक् ।
लिखित्वा ताश्च पिण्डानामन्तर्धाय यथाक्रमम् ॥
शुद्धपात्रे विधायैतान् गन्धाद्यैरर्चयेदथ ।
ऋतमग्रे प्रथमं जज्ञइत्याद्यां वैदिकीमृचम् ॥
दृश्यतामितिपर्यन्तमुक्त्वा पिण्डाभिमन्त्रणम् ।
कृत्वाऽग्रपाणिना ध्यायन् स्वाभीष्टां देवतां वरः ॥
एषामेकं गृहाणेति कुमारीं प्रत्युदीरयेत् ।
तं पिण्डमेकं गृह्णीयात्साऽपि स्वाभिमतं ततः ॥
गृहीतपिण्डमध्यस्थलेखवाचनपूर्वकम् ।
गृह्योक्तं तत्फलं बुध्वा ततः कुर्याद्यथारुचि ॥
पिण्डेष्वेषु प्रथमतश्चत्वारः शुभसूचकाः ।
कन्यायाः पश्चतश्चान्ये चत्वारोऽशुभसूचकाः ॥
क्षेत्रमृद्ग्रहणे तस्या बह्वन्ना सन्ततिर्भवेत् ।
इति विद्यात्तथा गोष्ठमृद्ग्रहे तु गवादिभिः ॥
पशुभिः सुसमृद्धा स्यात्सन्ततिः स्वयमेव वा ।
ब्रह्मवर्चससम्पन्ना वेदिमृद्ग्रहणे भवेत् ॥
सर्वसम्पत्समृद्धा स्यादशोष्याद्वा ह्रदाद् ग्रहे ।
द्यूतमृद्ग्रहणे धूर्त्ता स्याच्चतुष्पथमृद्ग्रहे ॥
द्विरूढा विरमण्येषा व्यभिचाररता भवेत् ।
दारिद्र्योत्पादिनी भर्त्तुर्भवेदीरिणमृद्ग्रहे ॥
श्मशानमृद्ग्रहे भर्त्तुर्मृतिहेतुर्भवेदियम् । इति ।

आश्वलायनोऽपि.

पितृमातृभ्रातृमतीं सर्वलक्षणलक्षिताम् ।

उद्वहेदष्टपिण्डाद्यैः कन्यां सम्यक् परीक्षिताम् ॥ इति ।

सामुद्रिकादिलक्षणानि तु लक्षणप्रकाशे वक्ष्यन्ते ।

## अथानन्यपूर्विकानिर्णयः ।

तत्र याज्ञवल्क्यः,

अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ इति ।

अन्यः पूर्वो यस्याः सा अन्यपूर्वा अन्यपूर्वैवान्यपूर्विका न अन्यपूर्विका अनन्यपूर्विका ताम् अनन्यपूर्विकाम् । सा च द्विविधा। पुनर्भूः स्वैरिणी च । पुनर्भूरपि द्विविधा। क्षता अक्षता चेति ।

तथाच स एव,

अक्षता च क्षता चैव पुनर्भूस्संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥ इति ।

अस्यार्थः ।पुनस्संस्कृता पुनर्भूः, सा च संस्कारद्वैविध्याद् द्विविधा । तत्र विहितविवाहसंस्कारमात्रसंस्कृता ऽनुपभुक्ता अक्षतेत्युच्यते । क्षता पुनर्विवाहात्प्रागेव निषिद्धपुरुषसंबन्धदूषिता । या तु कौमारं पतिमुत्सृज्य स्वेच्छया पुरुषान्तरं श्रयति सा स्वैरिणी । एतासामेव किञ्चिदवान्तरभेदेन सप्तविधत्वमाह—

कश्यपः,

सप्त पौनर्भवाः कन्याः वर्जयित्वा कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूः प्रसवा च या ॥
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् । इति ।

बौधायनोपि,

वाचा दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता

गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः तां गृहीत्वा न प्रजां न धर्मं विन्देदिति ।

नारदस्तु पुनर्भूत्रैविध्यं स्वैरिणीचातुर्विध्यं चाह,

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा सोक्ता पुनस्संस्कारकर्मणि ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥
उत्पन्नसाहसा उत्पन्नव्यभिचारा ।
असत्सु च देवरेषु बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता ।
स्त्री प्रसूता ऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्त्तिता ॥
मृते भर्त्तरि तु प्राप्तान्देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्त्तिता ।
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपगमात् सा चतुर्थी प्रकीर्त्तित ॥ इति ।

एतासां सर्वासामविवाह्यत्वेऽप्यतिक्रान्तनिषेधेन परिग्रहीत्रा ऋणं द्वयोरेव देयम् ।

तथाच स एव,

अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्रुतः ॥ इति ।

अथान्यदर्थपरिणयने प्रतिप्रसवः।

तत्र याज्ञवल्क्यः,

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।

सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥ इति।

यद्यप्यत्र गमनमात्रमेव श्रूयते तथापि परिणयनपूर्वकमेव तद्द्रष्टव्यम्।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।

तामनेन विधानेन निजो विन्देत देवरः॥

यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्।

मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ॥

इति मनुस्मरणात्। अयं च विवाहो वाचनिको मृतस्यैव भार्यात्वोत्पादकः न वोढुः।

अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः।

इति इदमा मृतस्यैव परामर्शात्। स च वाग्दत्ताविषयो नोढाविषयः। यस्या म्रियेत कन्याया इति पूर्वोक्तमनुवचनात्।

तथा,

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।

प्रजेप्सिता ऽधिगन्तव्या संतानस्य परिक्षये॥

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि।

एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन॥

इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति,

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।

अन्यस्मिन्हि नियुञ्जानाः धर्मं हन्युः सनातनम्॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।

न विवाहविधावुक्तं विधवावेदनं पुनः॥

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥
ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थे गर्हन्ते तं हि साधवः ॥ इति ।

विधवायां नियुक्तस्त्वित्यत्र विधवाशब्दो वाग्दानानन्तरं विवाहात्प्राक् मृतपतिकाविषयः । वाचा सत्ये कृते पतिरित्युपक्रमात् । नान्यस्मिन्विधवा नारीत्यत्र तु विधवाशब्दो विवाहानन्तरं मृतपतिकाविषयः । नोद्वाहिकेषु मन्त्रेष्विति हेतूपन्यासात् । ततश्च विषयभेदान्न मिताक्षरोक्तविकल्पशङ्कावसरः ।

पराशरः,

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

वसिष्ठबौधायनावपि,

बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

याज्ञवल्क्योऽपि,

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ।

एतच्च वाग्दत्ताविषयम् । वाग्दत्तापि वरदोषे ज्ञाते गुणवतेऽन्यस्मै देयेत्यर्थः ।

तथाच गौतमः, प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति । वरदोषास्तु प्रागुक्ताः ।

शातातपोऽपि,

वरश्चेत्कुलशीलाभ्यां न युज्येत कथंचन ।

न मन्त्राः कारणं तत्र नच कन्यानृतं भवेत् ॥
समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत् ॥
हीनस्य कुलशीलाभ्यां हरन्कन्यां न दोषभाक् ।
न मन्त्राः कारणं तत्र नच कन्यानृतं भवेत् ॥ इति ।
स तु यद्यन्यजातीयः पतितः क्लीब एववा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपिवा ॥
ऊढा ऽपि देया सा ऽन्यस्मै सप्रावरणभूषणा । इति ।
वागुदकदत्तायामप्यसंस्कृतायां वरमरणे न कन्यात्वहानिः ।
तथाच वसिष्ठः,
अद्भिर्वाचा च दत्ताया म्रियेतादौ वरो यदि ।
नच मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥ इति ।
वरणानन्तरं देशान्तरगमने विशेषमाह—
कात्यायनः,
वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा ।
ऋत्वागमांस्त्रीनतीत्य कन्या ऽन्यं वरयेद्वरम् ॥ इति ।
नारदोऽपि,
प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्या ऽन्यं वरयेद्वरम् ॥ इति ।
शुल्कदानानन्तरं वरमरणे विशेषमाह—
मनुः,
कन्याया दत्तशुल्काया म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्या ऽनुमन्यते ॥
शुल्कदानानन्तरं देशान्तरगमने तु विशेषमाह—
कात्यायनः,

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देया ऽन्यस्मै विधानतः ॥

अनेकेभ्यो वाग्दत्तायां विशेषमाह स एव,

अनेकेभ्यो हि दत्तायामनूढायां तु यत्र वै ।
प्रत्यागतश्च सर्वेषां लभेतादित्वरस्सुताम् ॥
अथागच्छेयुरूढायां दत्तपूर्ववरो हरेत् । इति

योऽयं पुनरुद्वाहो विहितः सोऽक्षतयोन्या एव ।

सा चेदक्षतयोनिः स्याद्गतप्रत्यागता ऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनस्संस्कारमर्हति ॥

इति मनुस्मरणात् । अत्र सेति तच्छब्देन पूर्वप्रक्रान्ता पुनर्भूरुच्यते । यद्यपि,

या पत्या वा परित्यक्ता विधवा स्वेच्छया ऽपि वा ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥

इति पुनर्भूविशेष एव प्रक्रान्तो न पुनर्भूसामान्यं, तथापि

अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।

इति स्मृत्यन्तरवाक्यैकवाक्यतया पुनर्भूमात्रजातस्य पौनर्भवत्वेन पुनर्भूसामान्यस्यैव प्रक्रमोऽभिप्रेत इति ध्येयम् ।

तस्याश्चाक्षतयोनित्वलक्षणगुणविशेषपुरस्कारेण पुनस्संस्कारो विधीयते । तत्र कुल्लूकभट्टव्याख्या ।

सा यद्यक्षतयोनिः सती अन्यमाश्रयेत तदा तेन पौनर्भवेन भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हतीति । तत्र चाक्षतयोन्याः पुनर्विवाहे पौनर्भवेन भर्त्रेत्यन्वयकरणाद् गतप्रत्यागतासंस्कारे च कौमारेण भर्त्रेत्युपादानाद् द्वितीयस्यैव पौनर्भवत्वं न पूर्वस्येति सिध्यति । तेन च पौनर्भवश्च काणश्चेति श्राद्धे, तथा पौनर्भवे द्विजे इति दाने च, परपूर्वापतिस्तथेत्यादिना च प्रतिषेधोऽपि द्विती-

थस्य पत्युस्तदुत्पन्नानां पुत्राणां चेति सर्वनिबन्धसम्मतं, न क्वापि प्रथमस्य पत्युः पौनर्भवत्वेन तदपत्यानां वा निषेधो गम्यते। यद्यपि पुनर्भ्वा अयमिति सम्बन्धसामान्यविवक्षया पूर्वापरयोर्द्वयोरपि पत्योः पौनर्भवत्वं प्रतीयते तथापि पुनर्भवतीति व्युत्पत्तावन्यथाऽनुपपत्त्या भार्येति शेषस्यावश्यकतया यत्प्रतियोगिकभार्यात्वेनास्याः पुनर्भूत्वं तस्योपस्थितस्य विशेषस्य परित्यागे कारणाभावाद् बुद्धिस्थतया चायमिति सर्वनाम्ना परामर्शसम्भवात्तस्यैव पौनर्भवत्वं युक्तम्। यत्तु अपरार्केणोभयोरपि पत्योः पौनर्भवत्वमुक्तं, तद् उक्तयुक्त्या बाधितमिति ध्येयम्। यद्यप्यस्मिन्व्याख्याने गतप्रत्यागतायां क्षताक्षतात्वविशेषो न प्रतीयते तथापि नारायणसर्वज्ञमेधातिथिभ्यां तस्यामप्यक्षतयोनिपदानुषंङ्गकरणादक्षतात्वमेव सिध्यति। युक्तं चैतत्।

त्यक्त्का भर्तृगृहं गच्छेद्यदि दोषं विना पुनः।
भर्त्रा सा संस्कर्त्तव्या च प्रायश्चित्तादिभिः क्रमात्॥

इति ब्राह्मवाक्ये दोषं विनेत्यभिधानात्। दोषश्च क्षतयोनित्वम्। तदभावे संस्कार्यताऽभिधानात्।

यथाह वसिष्ठः,

पाणिग्राहे कृते कन्या केवलं मन्त्रसंस्कृता।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति॥ इति।

नारदोऽपि,

उद्वाहिता ऽपि या कन्या न चेत्सम्प्राप्तमैथुना।
पुनस्संस्कारमर्हेत यथा कन्या तथैव सा॥ इति।

अत एव मनुः,

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिता।
न त्वन्यासु क्वचिन्नॄणां लुप्तधर्मक्रिया हि ताः॥

इत्यक्षतयोनीनामेव कन्याशब्दाभिधेयानां मन्त्रसंस्कारमाह। कन्या अग्निमयक्षतेति मन्त्रलिङ्गात् । एतेनापरार्कीयमपि गतमत्यागतायां क्षतात्वव्याख्यानं परास्तम्। यच्च पुनर्भूर्या कौमारं भर्त्तारमुत्सृज्यान्यैः सह चरित्वा पुनस्तस्यैव गृहमाविशति सा पुनर्भूर्भवतीत्युपक्रम्य न संस्कारबोधकं वसिष्ठवाक्यमत्रोदाहृतं तत्रापि चरित्वेत्यत्र नैकान्ततः सुरतमेव कर्मतयोपतिष्ठते । सप्तपदीं चरित्वेत्यस्यापि सम्भवात्। बहूनामनुग्रहो न्याय्य इति न्यायेनानेकवाक्यानुरोधाच्च। वस्तुतस्तु धात्वर्थमर्यादयापि सप्तपदीचरणमेव मुख्यार्थो गम्यते न सुरतमिति ध्येयम् । नन्वेवमक्षतयोन्या एव संस्कारविधाने—

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती।
वोढुः स गर्भो भवति सहोढ इति चोच्यते॥

इति मनुवचनं विरुध्येत। गर्भिण्याः संस्कारविधानादिति चेत्। मैवम्। सहोढस्य वोढुः पुत्रत्वान्यथानुपपत्त्या तादृशसंस्काराभ्युपगमात्। तस्मादक्षतयोनिश्चेद् गतप्रत्यागता तदा पूर्वभर्त्रा पुनः संस्कृत्य परिग्राह्येति।

अत्राहुः, न सङ्ग्राह्येति। कुतः, पुनस्संस्कारस्य कलौ निषेधात्। यथा,

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥ इति।

तदपरे न क्षमन्ते। वरान्तरकर्तृकस्यैव पुनर्विवाहस्य कलौ निषेधो न स्वकर्तृकस्य।

दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च।

इति बृहन्नारदीयवाक्येनास्योपसंहारात्। अत एव—

बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः।

इति धर्मज्ञसमये स्पष्टमेवाभ्यधायि । अन्यथा चिरप्रोषितस्य जीवद्वार्त्तानाकर्णने कृतौर्ध्वदेहिकस्य पुनः प्रत्यागमनेऽपि स्त्रियाः पुनस्संस्कारो निषिध्येत । तस्मान्नास्य निषेधस्यायं विषय इति न पूर्वेण भर्त्रा तस्याः परिग्रहे विरोध इति । तन्न साधु । स्वपरकर्तृकस्य द्विविधस्यापि पुनः संस्कारस्य कलौ निषेधात् ।

यथा ब्रह्मपुराणे,

मृते भर्त्तरि या नारी त्यक्तधत्यथ तं स्वयम् ।
सवर्णाज्जनयेद्गर्भं भर्त्तुः पौनर्भवं सुतम् ॥
यदि सा बालविधवा बलात्त्यक्ता ऽथवा क्वचित् ।
तदा भूयस्तु संस्कार्या गृहीता येन केन चित् ॥
त्यक्त्वा भर्तृगृहं गच्छेद्यदि दोषं विना पुनः ।
भर्त्रा सा संस्कर्तव्या च प्रायश्चित्तादिभिः क्रमात् ॥
स्त्रीणां पुनर्विवाहस्तु देवरात्पुत्रसन्ततिः ।
स्वातन्त्र्यं वा कलियुगे न कर्त्तव्यं कदाचन ॥ इति ।

अत्र यत्तच्छब्दोपादानादेकवाक्यत्वम् । तच्चैवं । या मृतभर्तृका या च जीवन्तमेव भर्त्तारं स्वयं त्यक्त्वा सवर्णादन्यस्मात्पुरुषाद्गर्भं जनयेज्जनयितुं प्रवर्त्तते तदा सा येन केनचिद् गृहीता स्वीकृता भूयः संस्कार्या । तत्र मृतभर्तृकायास्त्यक्तभर्तृकायाश्चाविशेषप्राप्तावाह । यदि सा बालविधवेत्यादि । मृतभर्तृका यदि बालविधवा अक्षतयोनिस्तथा त्यक्तभर्तृका भर्त्रापि बलान्निर्भर्त्स्य त्यक्ता भवति तदैव संस्कार्या नान्यथा । अनेन वा—

या पत्या चापरित्यक्ता विधवा स्वेच्छया ऽपि वा ।

इति मनुवाक्येऽपि पत्या स्वेच्छया परित्यक्तेत्येवान्वयः सिद्धः । तेन च क्षतयोन्याः भर्त्रपरित्यक्तायाश्च व्यावृत्तिः । तत्र गर्भस्य कुण्डगोलकत्वपरिहारायाह । भर्त्तुः पौ-

नर्भवं सुतामिति । भर्त्तुर्द्वितीयस्य पत्युः पौनर्भवं पुनर्भ्वा-मुत्पादितं सुतं पुनः संस्कृतायामुत्पन्नस्यैव पौनर्भवत्वात् । एवं पुनर्भूसंस्कारमुक्त्वा गतप्रत्यागतासंस्कारमाह । त्यक्त्वेति। यदि-सैव पुनर्भूः पौनर्भवं भर्त्तारं त्यक्त्वा दोषं पुरुषसंबन्धं विना पुनः भर्त्तुः पूर्वस्य पत्युः गृहं गच्छेत्तदा सा भर्त्रा पूर्वेण प्रायश्चित्तादिभिः संस्कार्येति । तमेवमुभयविधमपि संस्कारं कलौ निषेधति । स्त्रीणा-मिति । पुनर्विवाह उक्तविषयः । स्वातन्त्र्यं विधवायाः पित्रादि-परिहारेण स्थितिरिति । अत्र तदा भूयस्तु संस्कार्येति परकर्तृ-कस्य भर्त्रा सा संस्कर्त्तव्या चेति स्वकर्तृकस्य च पुनः संस्कार-स्य प्रक्रमात् स्त्रीणांपुनर्विवाहस्त्विति सामान्यनिषेधो द्वावपि-विषयीकरोति । विशेषे विनिगमकाभावात् । यदि संनिधिर्वि-निगमकस्तदा सुतरामस्मदभीष्टसिद्धिः ः स्वकर्तृकस्यैव संनिहित-त्वात् । न च सामान्यरूपस्यास्य वरेणान्येन संस्कृतिरिति विशे-षेणोपसंहार इति वाच्यम् । संनिधिलक्षणप्रकरणोपात्तवि-शेषद्वयान्वयेन विशेषरूपतयैवास्य नैराकाङ्क्षयात् । ग्रन्थान्तरी-यस्य विशेषस्य विलम्बोपस्थितिकतया ऽनन्वयात् । तस्मात्पुन-र्भूर्गतप्रत्यागता चेत्युभे अप्यसंग्राह्ये इति ।

यत्तु सा चेदक्षतयोनिः स्यादिति मनुवचनं तद्युगान्तरविषयम् । उक्तवचनानिचयात् । अत एव तादृश्या मनूक्तस्त्यागोऽपि सा-म्प्रतविषये एव । यथा,

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥

इति । विगर्हितां पूर्वं प्रतिगृहीतामक्षतयोनिमपीति मेधातिथिः । विप्रदुष्टामन्यगतभावामिति ।

नारदोऽपि,

नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः ॥ इति ।

अदुष्टकन्यापरित्यागे दण्डमाह—

याज्ञवल्क्यः,

अदुष्टां च त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम् । इति ।

नारदोऽपि,

प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद्वरः ।
विनेयः सोऽथ दण्डेन कन्यां तामेवचोद्वहेत् ॥

कात्यायनः,

वरदोषमनाख्याय पाणिं गृह्णाति यो नरः ।
याचनं च प्रकुर्वीत तद्दत्तं नाप्नुयात्तु सः ॥
कन्यादोषेऽप्येवमेव दाता दण्ड्यो वरस्तथा ।

याज्ञवल्क्योऽपि,

अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् । इति ।

एवमनन्यपूर्वा व्याख्याता ।

अथ कान्तादिविशेषणानि व्याख्यायन्ते ।

कान्ता वोढुर्मनोनयनानन्दकारिणी । यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिरित्यापस्तम्बस्मरणात् । असपिण्डा व्याख्याता प्रागेव । यवीयसी वयसा प्रमाणतश्च ।

तथाच वसिष्ठः, गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वा असमानार्षेयीमसंस्पृष्टमैथुनामवरवयसीं सदृशीं भार्यां विन्देतेति ।

गृहस्थ इति भाविनि भूतोपचारः, यूपं तक्षतीतिवत् । अरोगिणीम् अचिकित्सनीयव्याध्यनभिभूताम् । अचिकित्सनीयाश्च व्याधयो वैद्यकेऽभिहिताः ।

यथा,

वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः ॥ इति ।

भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये ।

यथाह मनुः,

यस्याश्च न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्म्मशङ्कया ॥ इति ।

यस्याः पिता पुत्रिकाकरणाभिप्रायवान्नेति न निश्चीयते तामपि नोद्वहेदित्यर्थः । अनेनापरिभाषिताऽपि पुत्रिका भवतीति सर्वर्षिसंम्मतोऽर्थो दर्शितः ।

तत्प्रकारमाह वसिष्ठः,

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ इति ।

संवित्करणं चाग्निं प्रजापतिं चेष्ट्वा भवति ।

यथाह गौतमः,

पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्येति ।

होमश्चाज्येनेति हरदत्तः । तन्न ।

पुत्रिकायाः प्रदानेन स्थालीपाकेन धर्मवित् ।
अग्निं प्रजापतिं चेष्ट्वा पुत्रदाने तथैव च ॥

इति जाबालिस्मरणात् । इयमेव मम पुत्रस्थानीयेत्यभ्युपगत्याऽपि पुत्रिका भवति । अत एव वसिष्ठः, तृतीयः पुत्रिका विज्ञायत इति पुत्रगणने तामपि परिगणितवान् । साऽपि भ्रातृमत्त्वेन व्यावर्त्यते । प्रत्यावृत्तिलक्षणदोषश्रवणात् ।

तथाच श्रुतिः,

अभ्रातेव पुंस एति प्रतीची गर्त्ता रुगिव सन ये धनानाम्।
जायेव पत्यउशती सुवासा उषाहस्रेव निर्णीते अप्स इति।

अस्यार्थः। अभ्रातेव पुंसः यथा अभ्रातृका कन्या दत्ताऽपि सती पित्रा ऊढाऽपि भर्त्रा पुनः पुंसः प्रतीची पितॄनेव पितृवंशमेवाभिमुखी एति सन्तानकर्मणे पिण्डदानार्थं न पतिवंशमित्यर्थः। सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्द्धयति न भर्तृवंशमिति।

यास्कोपि, अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानायेति।

वसिष्ठोऽपि, अभ्रातृका पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वमिति।

अथोद्वाहे मुख्या दाराः॥

तत्र मनुः,

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥

व्यासोऽपि,

स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम्। इति।

मनुरपि,

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि। इति।

वर्णो जातेरप्युपलक्षणम्। अग्रे प्रथमोद्वाहे। द्विजातिपदं शूद्रानुलोमजप्रतिलोमजानामुपलक्षणम्। प्रशस्ता प्राथमकल्पिके दारकर्मणि रतिपुत्रधर्मलक्षणे।

तथाच यमः,

भार्याः सजात्याः सर्वेषां धर्म्मः प्राथकल्पिकः। इति।

अयमर्थः। समावृत्तस्य त्रैवर्णिकस्य प्रथमविवाहे सवर्णैव मुख्या। क्षत्रियोरव्यादिषु प्रायश्चित्तस्मरणात्। शूद्रस्य शूद्रैव।

अनुलोमजादीनामपि प्रथमविवाहे सवर्णैव ।

अथ दारानुकल्पः ।

तत्र पैठीनसिः, अलाभे कन्यायाः स्नातकव्रतं चरेत्, अपिवा क्षत्रियायां पुत्रमुत्पादयेत्, वैश्यायां वा शूद्रायां चेत्यन्ये इति । कन्यायाः सवर्णायाः । स्नातकव्रताचरणं तु स्नातकाभिप्रायेणैव, न मृतभार्याभिप्रायेण ।

आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ।
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ॥

इत्यादिवचनविरोधात् । यदा तूत्पन्नपुत्रोऽतिवृद्धो वा कन्यां न लभते तदा भवत्येव तस्यापि स्नातकव्रताचरणम् । यदा त्वनुत्पन्नपुत्रोऽविरक्तोऽतिसमर्थश्च सवर्णां न लभते तदा त्वाह । अपिवेति ।

यमः,

आनुपूर्व्येण भार्याः स्युश्चतस्रो ब्राह्मणस्य तु ।
क्षत्रियस्यानुपूर्व्येण ज्ञेयास्तिस्रोऽवराः स्त्रियः ॥
वैश्यस्य चावरे धर्म्ये द्वे भार्येत्यब्रवीन्मनुः ।
शूद्रः स्वजातिं विन्देत तास्वपत्यं समं भवेत् ॥

नारदोऽपि,

ब्राह्मणस्यानुलोम्येन स्त्रियोऽन्यास्तिस्र एवतु ।
शूद्रायाः प्रातिलोम्येन तथाऽन्ये पतयस्त्रयः ॥
द्वे भार्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्त्तिता ।
वैश्याया द्वौ पती ज्ञेयावेकोऽन्यः क्षत्रियापतिः ॥

वसिष्ठः, तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यशूद्रयोरिति ।

मनुः,

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो ऽवराः॥
शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः॥ इति।

अथ शूद्रापरिणयने विप्रतिपत्तिः।

तत्र मनुः,
न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते॥
वृत्तान्ते उपाख्याने।

वसिष्ठः, शूद्रामप्येके मन्त्रवर्जनं च न तथा कुर्यादिति हि ध्रुवः कुलापकर्षः प्रेत्य चास्वर्ग्यम्।

याज्ञवल्क्यः,
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम्॥ इति।

विष्णुः,
द्विजस्य भार्या शूद्रा तु धर्म्मार्थं न भवेत् क्वचित्।
रत्यर्थमेव सा ऽत्यन्तं रागान्धस्य प्रकीर्त्तिता॥ इति।

वसिष्ठः,
कृष्णवर्णा च रामा रमणायैव न धर्मार्थमिति।

शङ्खः,
आपद्यपि न कर्त्तव्या शूद्रा भार्या द्विजेन तु।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते॥
तपस्वी धर्मशीलश्च सर्वधर्मभृतां वरः।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे॥
नीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः।

सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितस्तु ते ॥
सपिण्डीकरणं कार्यं कुलजस्य तथा ध्रुवम् ।
श्राद्धं द्वादशकं कृत्वा प्राप्ते श्राद्धे त्रयोदशे ॥
सपिण्डीकरणानर्हो न च शूद्रस्तथा ध्रुवः ।
तस्मात्सर्वप्रयत्नेन शूद्रां भार्यां विवर्जयेत् ॥

मनुविष्णू,

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥

मनुः,

शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

यमः,

ब्राह्मणो वृषलीं गत्वा ऽप्यहं भवति सूतकी ।
अथास्यां गर्भमाधत्ते ब्राह्मण्यादेव हीयते ॥
न ब्रह्महा ब्रह्महा तु ब्रह्महा वृषलीपतिः ।
यस्तत्र जायते गर्भः स तेन ब्रह्महा भवेत् ।
वृषली शूद्रा ।

हारीतः,

ब्राह्मणो वृषलीं गत्वा सद्यो गच्छेदधोगतिम् ।
अथास्यां गर्भमाधत्ते पतत्याशु न संशयः ॥
ब्रह्महा न भवत्यन्यो ब्रह्महा वृषलीपतिः ।
यस्तस्यामाहितो गर्भः स तेन ब्राह्मणो हतः ॥

मनुयमहारीताः,

वृषलीफेनपीतस्य निश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥
फेनपीतस्य पीतमुखासवस्य ।

उशना,

निष्कृतिः स्यात्सुरापस्य हत्वा वा ब्रह्मवादिनः ।
वृषल्यभिप्रजातस्य निष्कृतिर्नोपपद्यते ॥

गर्ग्योशना, पतति वृषलीपतिरित्याचक्षते । न पततीत्येके । ब्राह्मणस्य कल्पविहिताश्चतस्र आनुपूर्व्येण भार्या भवन्तीति ।

वसिष्ठ आह, पतति न पततीति न संशयः वृषल्या पततीति हारीतः । सुतजननात्पततीति शौनकः । तदपत्यैः पततीति गौतम इति ।

हारीतः,

अधोवर्णेषु प्रजायमानः पतति न पततीति संशयः । न क्षत्रियविशोः । यज्ञसंयोगात् । वृषल्यां पतितः यः प्रजायते स तत्र गमनादधस्तरः सर्ववर्णक्षये वा ब्राह्मणः सर्वानेव जनयन्न दुष्यतइत्याचार्या इति ।

भविष्यत्पुराणे,

शूद्रामारोप्य वेद्यां तु पतितोऽत्रिर्बभूव ह ।
उतथ्यः पुत्रजननात्पतितत्वमवाप्नुयात् ॥
पुलस्य पुत्रमासाद्य शौनकः शूद्रतां गतः ।
भृग्वादयोऽप्येवमेव पतितत्वमवाप्नुयुः ॥ इति ।

अत्रायं संकलितोर्थः । द्विजातीनां सजातीयकन्याया अलाभे उत्तरोत्तरविजातीया अपि क्रमेण विवाह्याः । तथा आधिवेदननिमित्ते सति पूर्वभार्य्यामरणे च सति सवर्णाया अलाभे उत्तरोत्तराः विवाह्याः ।

तदुक्तं ब्रह्मपुराणे,

क्षत्रविट्शूद्रकन्यास्तु न विवाह्या द्विजातिभिः ।
विवाह्य ब्राह्मणीं पश्चाद्विवाह्याः कचिदेवतु ॥

कचिदेवेति कस्मिंश्चिदधिवेदननिमित्ते दारमरणे वा सति । शूद्रायां त्वयं विधिस्तदितरासु प्रजाया असंभवे प्रजोत्पत्तिमात्रार्थं सापि विवाह्या । वर्णक्षये सर्वानेव जनयन्न दुष्यतइति हारीतवचनात् । शूद्राविवाहनिषेधस्त्वितरासां लाभे । यस्तु पुत्रपौत्रजनने निन्दानुवादः सोऽप्यनेवंविधविवाहविषयः । निन्दाविशेषश्रवणं तु दोषभूयस्त्वप्रतिपादनार्थम् । इति दारानुकल्पः ॥

अथ वरलक्षणानि ।

तत्र लिङ्गपुराणं,

दातव्यां श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥
ब्रह्मचारिणे ऽस्खलितब्रह्मचर्याय ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।

इति योगिस्मरणात् । लक्षणपरीक्षातः प्रागायुष्परीक्षा कर्त्तव्येत्युक्तं तत्रैव,

पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् ।
आयुर्हीननराणां च लक्षणैः किं प्रयोजनम् ॥
वामभागेषु नारीणां दक्षिणे पुरुषस्य तु ।
पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ॥
सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते ।
बाहुर्नेत्राञ्चलं चैव जानु नासा तथैवच ॥
स्तनयोरन्तरं चैव पञ्चदीर्घं प्रशस्यते ।
ग्रीवाप्रक्षाननं पृष्ठं ह्रस्वं जङ्घे च शोभने ॥

ह्रस्वानि यस्य चत्वारि पूजामाप्नोति नित्यशः।
सूक्ष्माण्यङ्गुलिपर्वाणि दन्तकेशनखत्वचः॥
पञ्च सूक्ष्माणि येषां स्युस्ते नरा दीर्घजीविनः।
कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटिकाः॥
एतत्सर्वं विनिर्दिष्टमुन्नतं षट् प्रशस्यते।
नेत्रान्तं करपादं चाधरोष्ठं चैव तालुकम्॥
जिह्वा नखश्च ते सप्त रक्तवर्णाः शुभावहाः।
कर्णकूपौ च नाभिश्च त्रिगम्भीरं प्रशस्यते॥
उरः शिरो ललाटं च त्रिविस्तीर्णं प्रशस्यते।
सुखमध्यं शरीरस्य सर्वं वा सुखमुच्यते॥
तत्रापि चक्षुषी श्रेष्ठे घ्राणं च तदनन्तरम्।
वर्णात्परतरः स्नेहः स्नेहात्परतरः स्वरः॥
स्वरात्परतरं सत्त्वं सर्वं सत्त्वे प्रतिष्ठितम्।
उरोविशालो धनधान्यभोगी शिरोविशालो नृपपुङ्गवः स्यात्।
कटीविशालो बहुपुत्रभोगी विशालपादस्तु धनी सुखी स्यात्॥
चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम्।
त्वचः स्नेहेन शय्या स्यात्पादस्नेहेन वाहनम्॥
अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ।
यस्य हस्तौ च पादौ च तस्य राज्यं विनिर्दिशेत्॥
दीर्घलिङ्गे च दारिद्र्यं स्थूललिङ्गे च निर्धनम्।
कृशलिङ्गे तु सौभाग्यं ह्रस्वलिङ्गे तु भूपतिः॥
कनिष्ठाङ्गुलिदेशे तु रेखा गच्छति मध्यगा।
अविच्छिन्ना तु रेखा स्यादशीत्यायुर्विनिर्दिशेत्॥
अनामिकापर्वमतिक्रमेत चेत्कनिष्ठिका वर्षशतं च जीवति।
समे त्वशीतिर्विषमे तु सप्ततिः पर्वार्द्धहीने खलु षष्टिमादिशेत्॥

अङ्गुष्ठोदरमध्यस्थे यवाविव विराजिते ।
उत्पन्नभोग्यभोगी च स नरः सुखभाग्भवेत् ॥
रेखाभिर्बहुभिः क्लेशमल्पाभिर्धनहीनता ।
रक्ताभिर्धनमाप्नोति कृष्णाभिर्दुःखितो भवेत् ॥
अतिमेधोऽतिकीर्त्तिश्च विक्रमी च सुखी तथा ।
अतिस्निग्धार्थदृष्टिः स्यात्स नरोऽल्पायुषो भवेत् ॥
अङ्कुशं कुड्मलं चक्रं यस्य पाणितले भवेत् ।
तस्य राज्यं विनिर्दिष्टं सामुद्रवचनं यथा ॥
मत्स्ये शतं विजानीयान्मकरे तु सहस्रकम् ।
पद्मे कोटीर्विजानीयाच्छङ्खे कोटिसहस्रकम् ॥
अतिकृष्णमतिश्वेतमतिरक्तं तथैव च ।
इत्थंवर्णो न रोगी स्यान्नारदस्य वचो यथा ॥ इति ।
लक्षणान्तराणि तु लक्षणप्रकाशे वक्तव्यानीति नेहोच्यन्ते ।

## अथ वरगुणाः ।

तत्र यमः,

कुलं च शीलं च वपुर्वयश्च विद्यां च वित्तं च सनाथतां च ।
एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ।
इति ।

लल्लः,

जातिविद्यावयःशीलमारोग्यं बहुपक्षता ।
आर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥ इति ।

गौतमोऽपि,

विद्याचारित्रबन्धुशीलसम्पन्नाय दद्यादिति ।

विद्या श्रुतिस्मृतिरूपा । चारित्रमनुष्ठानम् । बन्धुः प्रशस्ताभिजनः । शीलं धर्मरतिः । एतत्सम्पन्नाय कन्यां दद्यादित्यर्थः ।

आपस्तम्बोऽपि, बन्धुशीललक्षणसम्पन्नः श्रुतवान् अरोग इति वरसम्पदिति ।

शातातपोऽपि,

वरो वरयितव्योऽर्थी कुलशीलसमन्वितः ।
रूपवान्पण्डितः प्राज्ञो युवा दोषविवर्जितः ॥

वरयितव्यः, कन्यापित्रेति शेषः ।

मनुरपि,

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः ॥ इति ।

अप्राप्ताम् अप्राप्तविवाहसमयां बालिकामपीत्यर्थः ।

बौधायनोऽपि,

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

यत्तु,

काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि ।
नत्वेवैनां प्रयच्छेत गुणहीनाय हि क्वचित् ॥

इति मनुवचनं, तद् गुणवति सम्भवति गुणहीननिषेधपरम्। न तु सर्वथा गुणहीननिषेधपरम्।नो चेत् "अपि वा गुणहीनाय" इति बौधायनोक्तोऽनुकल्पो निर्विषयः स्यात् । ऋतुमत्यपि तिष्ठेदिति तु उक्तरीत्या न स्वार्थे पर्यवस्यति । अतो नोपरुन्ध्याद्रजस्वलामित्यनेन न विरुध्यते ।

अत एव वसिष्ठः,

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥ इति ।

याज्ञवल्क्यः,

एतैरेव गुणैर्युक्तस्सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः ॥ इति ।

एतैः पूर्वोक्तैर्लक्षण्यादिभिः कन्यागुणैः । तत्र लक्षणानि पूर्वोक्तानि । अनन्यपूर्वकत्वं चाविप्लुतब्रह्मचर्य इत्यादिनोक्तमेव । यद्यपि—

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवर्ती पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥
सुरापी व्याधिता धूर्त्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥

इत्यादिना द्वितीयाद्युद्वाहविधानादनन्यपूर्वकत्वं वरस्य नावश्यकमिति प्रतीयते तथापि—

अदग्धहस्ते यद्दत्तं तदनन्तफलं स्मृतम् ।
दग्धहस्ते तदर्धं स्यान्निष्फलं बहु शूद्रतः ॥

इत्याद्यदग्धहस्तदानस्य फलातिशयदर्शनात्फलातिशयकामस्य तदावश्यकता सिध्यति । कान्तत्वं च लौकिकप्रमाणसिद्धमेव । असपिण्डत्वं च शब्दशक्त्यैव सिध्यति । सापिण्ड्यस्योभयनिरूप्यत्वात् । यवीयस्त्वं तु त्र्यष्टवर्षोऽष्टवर्षामित्यादिस्मृत्या बाधितमेवेति नातिदिश्यते । अरोगित्वं च सामर्थ्यादेव सिध्यति । भ्रातृमत्त्वं चापेक्षितमेव ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

इति वरमरणे देवरेण तदुद्वाहस्मरणात् । असमानार्षगोत्रजत्वं तु सापिण्ड्यवच्छब्दशक्त्यैव सिध्यति । एतेनानन्यपूर्वकत्वयवीयस्त्वभ्रातृमत्त्वव्यतिरिक्तैर्युक्त इति केषांचिद्व्याख्यानं निरस्तम् । सवर्ण इत्युत्कृष्टवर्णस्याप्युपलक्षणम् । श्रोत्रियः अधीते-

कशाखः । पुंस्त्वे प्रजननशक्तौ यत्नान्नानोपायैः प्रत्यक्षानुमानिकैः परीक्षितः ।

परीक्षोपायमाह नारदः,

परीक्ष्य पुरुषं पुंस्त्वे निजैरेवाङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥
सुबद्धजत्रुर्जान्वस्थिसुबद्धांसशिरोधरः ।
यस्याप्सु प्लवते वीर्यं ह्रादि मूत्रं च फेनिलम् ॥
पुमान्स्याल्लक्षणैरेतैर्विपरीतस्तु पण्ढकः । इति ।

विपरीतः यथोक्तलक्षणाभाववान् षण्ढ इत्युच्यते । स चैकविंशतिविधः । तत्र सप्तविधः—

कर्मविपाकसंग्रहे,

षण्ढकश्चातकः षण्ढः पण्डः क्लीवो नपुंसकः ।
सकीलश्चेति सप्तैवं क्लीबभेदा विभाषिताः ॥
तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा षण्ढको भवेत् ।
पुमान् भूत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैवच ॥
स्त्री च पुम्भावमास्थाय पुरुषाचारवद्गुणा ।
चातको नाम षण्ढःस्यात् स्त्रीषण्ढो वापि नामतः ॥
असल्लिङ्गोऽपि षण्ढः स्यात् पण्डस्तु म्लानमेहनः ।
अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकः ॥
सकीलक इति ज्ञेयो यः क्लैब्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

चतुर्दशविधस्तु नारदेन दर्शितः,

चतुर्दशविधः षण्ढः शास्त्रे दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥
निसर्गपण्डो बध्रश्च पक्षषण्ढस्तथैवच ।

अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैवच ॥
ईर्ष्यापण्डश्च सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तो मोघबीजश्च शालीनोऽन्यापतिस्तथा ॥ इति ।

निसर्गपण्डः स्वभावतो लिङ्गवृषणहीनः । बध्रश्छिन्नमुष्कः । पञ्चदशदिनानन्तरं सकृद्भोगक्षमः पक्षपण्ढः । गुरुशापपण्डादयस्त्रयः स्पष्टाः । ईर्ष्यया परसम्भोगदर्शनेन पुंस्त्वमुत्पद्यते यस्य स ईर्ष्याषण्ढः । उपचारविशेषेण पुंस्त्वोत्पत्तिर्यस्य स सेवापण्डः । वातोपहतरेतस्को वातरेताः । यस्य मुखएव पुंस्त्वशक्तिर्न योनौ स मुखेभगः । रेतोनिरोधात् पण्डीभूतः आक्षिप्तपण्डः । गर्भाधानासमर्थरेता मोघबीजः । अप्रगल्भतया क्षोभाद्वा नष्टपुंस्त्वः शालीनः । यस्य स्वभार्यापरिहारेणान्यासु पुरुषभावः सोऽन्यापतिरिति । एषां चात्रान्तरविशेषेणापौनरुक्त्यादेकविंशतित्वमविरुद्धम् । युवेत्यनेनानुद्भूतवीर्यस्य बालस्याभिभूतवीर्यस्य वृद्धस्य च व्यावृत्तिः । धीमान् लौकिकवैदिकव्यवहारनिपुणमतिः । जनप्रियः सकलजनप्रेमपात्रम् । स्मितमृदुपूर्वाभिभाषीति मिताक्षरा ।

## अथ वरदोषाः ।

तत्र नारदः,

उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः ।
कन्यादोषौ च यौ पूर्वावेष दोषगणो वरे ॥

उन्मत्तो वात्यादिना । पतितो ब्रह्महत्यादिना । दुर्भगो भाग्यहीनः । त्यक्तबान्धवः अदुष्टान्बन्धून्विहाय स्वतन्त्रव्यवहारः । कन्यादोषौ च यौ पूर्वाविति ।

दीर्घकुत्सितरोगार्त्तव्यङ्गा संस्पृष्टमैथुना ।
दृष्टान्यगतभावा च कन्यादोषाः प्रकीर्त्तिताः ॥

इत्यत्र उक्तौ पूर्वौ प्रथमौ दीर्घकुत्सितरोगव्यङ्गत्वरूपौ ना-

रदोक्तावेव।

**वसिष्ठोऽपि,**

कुलशीलविहीनस्य षण्ढादिपतितस्य च।
अपस्मारिविधर्म्मस्य रोगिणां वेषधारिणाम्॥
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैवच। इति।

अत्र सगोत्रपदं सपिण्डाया अप्युपलक्षणम्। तुल्यन्यायत्वात्।

**पराशरोऽपि,**

कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया।
कुरूपायाकुलीनाय स प्रेतो जायते नरः॥

**वसिष्ठोऽपि,**

अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले।
वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते॥

**कात्यायनोऽपि,**

निष्क्रान्तस्तेन विद्विष्टस्तथा त्यक्तः स्वबन्धुभिः।
अन्यजातिः क्षयी दासो लिङ्गस्थश्चोदरी यदि॥
उन्मत्तः पतितः कुष्ठी तथा षण्ढः सगोत्रजः।
चक्षुःश्रोत्रविहीनश्च तथा ऽपस्मारदूषितः॥
वरदोषा स्मृता ह्येते कन्यादोषाः प्रकीर्त्तिताः।
प्राक् पश्चाद्वा समुत्पन्ना दानं तत्र निवर्त्तयेत्।

निष्क्रान्तः देशान्तरगमनशीलः। तेन निष्क्रमेण विद्विष्टः रहितः, अत्यन्तं प्रवासभीरुरिति यावत्।

तथाच **महाभारते,**

द्वाविमौ ग्रसते भूमिस्सर्पो बिलशयानि वा।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्॥ इति।

लिङ्गस्थः वेदबाह्यलिङ्गधारी। उदरी जलोदरव्याधिमान्। प्रा-

क् वाग्दानात्। पश्चाद्वाग्दानानन्तरम्। अन्यानपि वर्ज्यानाह स एव,

दूरस्थानामवेद्यानां मोक्षमार्गानुसारिणाम्।
शूराणां च निवृत्तानां न देया कन्यका बुधैः॥ इति।

षण्ढो वर्जनीय इत्युक्तं, तद्वर्जने कारणमाह—

नारदः,

अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं वीजिनो नराः।
क्षेत्रं बीजवले देयं नावीजी क्षेत्रमर्हति॥

## अथ परिवेत्त्रादिनिर्णयः॥

तत्र गर्गः,

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्।
आवसथ्ये तथाऽऽधानं पतितस्त्वन्यथा भवेत्॥ इति।

यस्तं कुर्यात्स पतितः परिवेत्तेत्युच्यते।

तथाच मनुः,

अग्रजे ब्रह्मचर्यस्थे योऽनुजो दारसङ्ग्रहम्।
कुरुते परिवेत्ता स परिवित्तोऽग्रजो भवेत्॥

अग्रजोऽत्र सोदर्यो विवक्षितः। पूर्ववाक्यानुरोधात्। तथा,

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥
परिवित्तिः परिवेत्ता च यया च परिविद्यते।
ते सर्वे नरकं यान्ति दातृयाजकपञ्चमाः॥ इति।

सोदर्यत्वं चात्र त्रिविधं, पित्रैक्यान्मात्रैक्यादुभयैक्याच्च। तत्र पित्रैक्येन सोदर्यत्वं "पुरुषे ह वा अयमादितो गर्भो भवती"त्यादिगर्भोपनिषत्सु प्रसिद्धम्।

महाभारते च,

पितुः स जठरे स्थित्वा शुक्रद्वारेण मातरम्।

अविश्य शोणितासक्तः पञ्चधा तनुमाददे ॥ इति।

देवयानीं प्रति कचोक्तिश्च,

यस्मिन्नेवोदरे तातस्यावसस्त्वं शुभानने।

तस्मिन्नेवाहमवसं तेन त्वं भगिनी मम ॥

इत्यादिहेतुभिरविवाह्यत्वप्रतिपादिका। मात्रैक्यादिना सोदरत्वं स्पष्टमेव। तत्रैकैकं निमित्तमादाय निषेधप्रवृत्तावपवादमाह—

शातातपः,

पितृव्यपुत्रसापत्नपरनारीसुतेषु च।

ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणां तु कनीयसाम् ॥

दाराग्निहोत्रसंयोगे न दोषः परिवेदने। इति।

पितृव्येण देवरादिना देवदत्तमातर्युत्पादितः पुत्रः पितृव्यपुत्र इत्युच्यते। स मात्रैक्येन देवदत्तस्य सोदरः। संविदा तूभयोरिति गौतमस्मरणेन तस्य द्व्यामुष्यायणत्वात्। एतेषु त्रिष्वपि सोदर्यत्वेन निषेधप्राप्तावयमपवादः। अत एवापवादादपरिणीतेऽपि युधिष्ठिरे भीमसेनस्य परिणयो न दोषाय।

यमोऽपि,

पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ॥ इति।

अत्राद्यौ द्वौ व्याख्यातौ। परपुत्रः परस्यैव पुत्रार्थमुत्पादितो न स्वार्थमपि। सोऽपि पित्रैक्यादेव देवदत्तस्य सोदरः।

गौतमोऽपि,

भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे।

दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ इति।

दत्तः पित्रा ऽन्यस्मै पुत्रत्वेन, तस्य सोदरज्येष्ठापेक्षया प-

रिवेदनप्राप्तौ तदपेक्षया च तत्सोदरकनिष्ठस्येत्युभयैक्यापवादः। तृतीयः पुत्रिकैवेति वसिष्ठोक्तेः पुत्रिकापुत्रे सति कनिष्ठे औरसे परिवेदनप्राप्तावग्रजपदेनापवादः। तदेवमपवादतया वाक्यत्रयोपपत्तौ—

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।

इत्यत्राग्रजस्य व्यतिरेकमुखेन सोदर्यत्वविवक्षार्थं वाक्यत्रयारम्भ इति निरस्तम्। सोदर्ये तिष्ठति ज्येष्ठे इत्यनेनैकवाक्यतयैव तत्सिद्धेः। न ह्यग्रजस्य सोदर्यत्वासिद्ध्यर्थं वाक्यत्रयारम्भो युज्यते। न हि घट इति वक्तव्ये अनघट इति वदन्ति विद्वांस इति न्यायापातात्। किञ्च सोदर्यत्वमात्रविवक्षार्थत्वे पितृव्यपुत्रादिपदानामविवक्षितार्थतया मातृष्वसृपितृष्वसृमातुलपुत्राणामप्यपरिणयनमापद्येत। तेषामप्यग्रजत्वेन दोषापादकत्वसम्भवात्। सम्भवति चापवादत्वेन विवक्षितार्थत्वे ऽविवक्षाया अन्याय्यत्वात्।

यच्च—

षण्ढान्धबधिरादीनां विवाहोऽस्ति यथोचितम्।
विवाहासम्भवे तेषां कनिष्ठो विवहेत्तदा॥
पितृव्यपुत्रे सापत्ने परदारसुतादिषु।
विवाहाधानयज्ञादौ परिवेदो न दूषणम्॥

इति मनुना,

देशान्तरस्थक्लीबैकवृषणानसहोदरान्।
वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः॥
जडमूकान्धबधिरकुब्जवामनकुष्ठकान्।
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा।

कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥

इति कात्यायनेन,

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एवच ।

राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम् ॥

इति कार्ष्णाजिनिना च ज्येष्ठमात्रएव विषयविशेषेऽपवादोऽभिहितस्सोपि सोदर्यविषय एव । अन्यत्राप्राप्त्यभावेनापवादत्वासम्भवादित्यलं बहुना । ज्येष्ठानुजयोश्च पुंस्त्वं विवक्षितम् । अप्राप्तोद्देश्यविशेषणत्वात् । अष्टवर्षं ब्राह्मणमित्यत्राष्टवर्षत्वादिवत् । तेनापरिणीतायामपि ज्येष्ठभगिन्यां कनिष्ठस्य भ्रातुः परिवेदनं न भवति । तथा अपरिणीते ज्येष्ठभ्रातरि कनिष्ठाया भगिन्याश्च न भवति । अत एव भगिन्योरपि परिवेदनाभावप्राप्तौ वचनारम्भः ।

यदाह गार्ग्यः,

एकमातृप्रसूतानां पुत्रीणां परिवेदने ।

न भवेत्सर्ववर्णेषु न दोषो भिन्नमातृषु ॥ इति ।

मातृपदं पितुरप्युपलक्षणम् ।

तेन भिन्नपितृकास्वपि न दोषः । ततश्च पितृव्यपुत्रादिवाक्योपात्ता विशेषा अत्राप्यनुसन्धेयाः । सोदर्यास्वपि क्वचिदपवादमाह—

वृद्धमनुः,

विवाहेऽनधिकारी स्याज्ज्येष्ठकन्या स्थिता यदा ।

तदनुज्ञां विना वापि कनिष्ठामुद्वहेत्तदा ॥ इति ।

अनधिकारीति छान्दसो लिङ्गव्यत्ययः । वाशब्दोऽनुज्ञापक्षं गमयति । ततश्चानधिकारिण्यां ज्येष्ठायां तदनुज्ञां विनापि कनिष्ठामुद्वहेत् । अधिकारिण्यां तदनुज्ञयापिवेति वाशब्दार्थः । अनधिकारश्च कुष्ठापस्मारवैरूप्यादिभिः । अरोगिणीं भ्रातृमती-

मिति स्मरणात् ।

नाग्निहोत्रं न वा वेदा न च वेदव्रतान्यपि ।
नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च ॥
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिता ।

इति कात्यायनस्मरणाच्च । जातारणिपरिग्रहेण जातमात्राहिताग्नेरग्निहोत्रवेदाध्ययनवेदव्रतैः परिवेदनदोषो नास्ति । किं तु दारेण पारिवेद्यम् । जातारण्यभावे तु उपनीतस्याध्ययनाधिकाराद्रुपनयपरे परिवेदनदोषोऽस्त्येवेति गमयितुं वेदग्रहणम् ।

न जन्ममासे दिवसे च ऋक्षे ज्येष्ठेऽनुपेते परशाखया च ।
न चान्यगोत्रावुपदं च कुर्यान्न बह्वृचाः पञ्चमषष्ठयोश्च ॥

इति ज्योतिष्पाराशरनिषेधात् । एतेन वेदपदमुपनयपरमिति निरस्तम् । अग्नयः श्येनचित्यादयो यज्ञाः ज्योतिष्टोमविकारानाग्निष्टोमातिरात्रौ । तयोः प्रथमप्रयोगे परिवेदनापादकत्वात् ।

यथाह त्रिकाण्डमण्डनः,

दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् ।
अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ॥
न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्वति । इति ।

प्रयोगे प्रथमे स्थितमिति दर्शेष्ट्यादीनां यूथे लिङ्गं विशेषणम् । तेन प्रथमप्रयोगएवैषां परिवेदनापादकत्वं न द्वितीयादिप्रयोगेष्विति । सोमेज्या प्रकृतिभूतो ज्योतिष्टोमः । तपांसि चान्द्रायणादीनि । श्राद्धं दर्शादौ पार्वणादि । एते कनिष्ठं भ्रातरं न परिविन्दन्ति । विरूपिता अङ्गेन्द्रियादिविकला ज्येष्ठा कनिष्ठां भगिनीं च न परिविन्दतीति वाक्यद्वयार्थः ।

अत्र विशेषमाह वसिष्ठः, परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत तामेवोपयच्छेतेति । तस्मै ज्येष्ठाय

दत्त्वा निवेद्य पुनर्निर्विशेत पुनरुद्वहेत । कामिसापेक्षायां तामेवेति । अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसन्धेयः ।

अत एव गौतमः, परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूपतिदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यमिति ।

अकृताधाने ज्येष्ठे कनिष्ठेनाधाने ज्येष्ठः पर्याहितः कनिष्ठः पर्याधाता ।

अग्रेदिधिषूलक्षणमाह देवलः,

ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।

या साऽग्रेदिधिषूः प्रोक्ता पूर्वा तु दिधिषूः स्मृता ॥ इति ।

तत्राह वसिष्ठः,

अग्रेदिधिषूपतिः कनिष्ठापतिः कृच्छ्रं कृत्वा तां ज्येष्ठाम् अन्योढां समुद्वहेत ।

दिधिषूपतिर्ज्येष्ठापतिः स्वोढां ज्येष्ठां कनिष्ठापतये दत्त्वा स्वयमन्यामुद्वहेदिति । देशान्तरस्थिते ज्येष्ठे प्रतीक्षाकालमाह—

वसिष्ठः, अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति । अनिविष्टमकृतविवाहाग्निहोत्रम् । कालविकल्पस्त्वेवं विज्ञेयः । तत्र पुनः श्रूयमाणे सुप्रदेशस्थिते द्वादश वर्षाणि । किञ्चिच्छ्रूयमाणे नातिसुप्रदेशस्थिते दश । नदीपर्वतचौराद्याकुलदूरतरदेशस्थिते अश्रूयमाणे चाष्टौ वर्षाणीति ।

अथाधाने विशेषः । यत्र ज्येष्ठोऽधिकार्यपि आधानं न करोति तत्र तदनुज्ञया कनीयसा कर्त्तव्यम् ।

यथाह सुमन्तुः,

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैवचाश्रयेत् ।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

वृद्धवसिष्ठोऽपि,

अग्रजस्तु यदा ऽनग्निराद्ध्यादनुजस्तदा ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

हारीतोऽपि, अधिकारी भ्रात्रनुज्ञापूर्वकमाधानमनुजानीते न तु विवाहम् ।

सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

विशेषान्तरमाधानप्रकरणे वक्ष्यामः ।

## अथ वधूवरयोर्विवाहकालः ।

तत्र विष्णुपुराणम्,

वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् ।

मनुयमौ,

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

महाभारते,

त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा स पूर्वेषामवाप्नुयात् ॥

नग्निकाऽनागतार्त्तवा । पूर्वेषां, लोकमिति शेषः । अत्रायं समुदायार्थः । अष्टवर्षान्ता कन्या त्रिगुणवयसा विवाह्या । अष्टवर्षामारभ्य द्वादशवर्षान्ता तत्सार्द्धद्विगुणवयसा विवाह्या । द्वादशवर्षामारभ्य षोडशवर्षपर्यन्ता तदष्टमांशन्यूनद्विगुणवयसा विवाह्या । अनाश्रमित्वादिना धर्म्मे सीदति सति सत्वरः उक्तप्रमाणान्न्यूनवयस्कोऽपि न्यूनवयस्कामुद्वहेत् । अन्ये पुनरुक्तपरिमाणादून्यूनपरिमाणो न्यूनपरिमाणामुद्वहन् धर्म्मे सीदति, धर्म्मातिक्रमकारी भवतीत्याहुः ।

आपस्तम्बः,

त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम्।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्॥

आश्वलायनोऽपि,

कुलशीलवयोवृद्धरूपाढ्यां नग्निकां शुभाम्।
विधिना तु वरः कन्यामुद्वहेदात्मनः समाम्॥

समा कुलशीलादिभिर्न वयसा। तथा,

सप्ताब्दा कन्यकानाम्नी शैशवी स्याच्छुभान्विता।
तामष्टादशवर्षीयो विवहेद्विधिवत् पुमान्॥
अष्टवर्षा भवेद्गौरी पुत्रपौत्रप्रवर्धिनी।
पञ्चविंशतिवर्षीयस्तां कन्यामुद्वहेद्द्विजः॥
रोहिणी नववर्षा स्याद्धनधान्यविवर्धिनी।
तामुद्वहेत मतिमान् सर्वकामार्थसिद्धये॥
ऊर्ध्वं दशाब्दाद्याकन्या प्राग्रजोदर्शनात्तु सा।
गान्धारी स्यात्समुद्वाह्या चिरं जीवितुमिच्छुना॥ इति।

यमः,

दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः। इति।

वसिष्ठगौतमावपि,

प्रयच्छेन्नग्निकां कन्याम् ऋतुकालभयादिह।
ऋतुमत्यां तु तिष्ठन्त्यां दोषः पितरमृच्छति॥ इति।

नग्निकालक्षणमाह ब्रह्मपुराणं,

यावन्न लज्जां जानाति कन्या पुरुषसंनिधौ।
योन्यादीन्नावगूहेत तावद्भवति नग्निका॥

अमरसिंहस्तु, गौरी तु नग्निकाऽनागतार्त्तवेत्याह। व्याख्यातं चैतल्लिङ्गिभट्टेन। मनसा विवाहं प्रत्युद्गच्छतीति गौरी। गु-

री उद्यमे। नज्जते व्रीडतीति नग्निका। नज्जी व्रीडने। अत्र नग्निकाशब्दो विरुद्धलक्षणया गौर्यां वर्त्तते। अनागतमार्त्तवमस्या इत्यनागतार्तवा। अनूढसप्तवर्षाधिकानां नामानीति।

अत एव संवर्त्तः,

अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत्।

दशमे कन्यका प्रोक्ता द्वादशे वृषली मता॥ इति।

वृषल्यत्र रजस्वला।

तथाच देवलः,

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा।

अपरा वृषली ज्ञेया कुमारी वा रजस्वला॥

बृहस्पत्यात्रिकश्यपा अपि,

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता।

भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषली स्मृता॥

विष्णुरपि,

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।

सा कन्या वृषली ज्ञेया हरंस्तां च न दुष्यति॥ इति।

न दुष्यति न दण्ड्यो भवतीत्यर्थः।

यमोऽपि,

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला॥ इति।

रोहिणीति नग्निकायाः संज्ञान्तरम्।

भविष्यपुराणे,

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी।

अव्यञ्जनकुचा कन्या कुचहीना तु नग्निका॥

सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका।

द्वादशे तु भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

कश्यपः,

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥ इति ।

अङ्गिराः,

अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकुचा श्यामा कुचहीना तु नग्निका ॥
व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्ते तु कन्यकाम् ।
पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलाम् ॥
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

कश्यपः,

भुञ्जीत व्यञ्जने सोमो गन्धर्वस्तु पयोधरे ।
वलिवर्णागमे वायू रजस्यग्निः प्रतिष्ठितः ॥
तस्माद्व्यञ्जनोपेतामरजस्कामपयोधराम् ।
नोपभुक्तां तु सोमाद्यैर्दद्याद् दुहितरं पिता ॥

संवर्त्तः,

रोमकालेतु संप्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ।
रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने ॥
तस्मादुद्वाहयेत्कन्यां यावन्नर्त्तुमती भवेत् ।
इति वदता ऋतुमत्या विवाहे दोष इत्युक्तं भवति ।

अत्रिबृहस्पती,

व्यञ्जने तु कुलं हन्यात्पितॄन् हन्यात् पयोधरे ।
हन्यादिष्टं च पूर्त्तं च प्राप्ते रजसि कन्यका ॥

भविष्यपुराणे,

अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत् ।

महद्देनः स्पृशेदेनमन्यथैव विधित्सतः ॥ इति ।

बौधायनोऽपि,

दद्याद्गुणवते कन्यां नग्निकां धर्म्मचारिणीम् ।

अपित्रा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥ इति ।

ऋतुमत्या दाने दोषमाह नारदः,

यावन्तश्चर्त्तवस्तस्याः समीयुः पतिना विना ।

तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम् ॥

वसिष्ठोऽपि,

यावन्तु कन्यामृतवः स्पृशन्ति तुल्यैस्सकामामपि याच्यमानाम् ।

भ्रूणानि तावन्ति हतानि तासां मातापितृभ्यामिति धर्मवादः ॥

पितुः प्रमादात्तु यदीह कन्या वयःप्रमाणं समतीत्य तिष्ठेत् ।

सा हन्ति दातारमदीयमाना कालातिरिक्ता गुरुदक्षिणेव ॥

यमोऽपि,

कन्या नर्त्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत् ।

न चेत्प्रदद्युस्तां तत्र ते स्युर्भ्रूणहनः समाः ॥

बौधायनोऽपि,

नयाचते च देयं स्याद्याचते च पृथक् पृथक् ।

एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत् ॥

त्रीणि वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।

स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयः ॥

गौतमोऽपि,

त्रीन्कुमार्यृतूनतीत्य स्वयं युज्येतानिन्दितेनोत्सृज्य पैत्रानलंकारानाप्रदानं प्रागृतोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके ।

याज्ञवल्क्योऽपि,

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।

यमपराशरापस्तम्बाः,

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासिमासि रजस्तस्याः पिबन्ति ऋतुशोणितम् ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्त्तते ॥

पराशरः,

माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच ।
त्रयोऽपि नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

पैठीनसिः, यावन्नोद्भतौ स्तनौ तावद्देया अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देयेति ।

ऋतुमतीप्रतिग्रहे दोषमाह बृहस्पतिः,

यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीसङ्गृहीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिनेदिने ॥

आपस्तम्बः,

प्राप्ते च द्वादशे वर्षे रजः स्त्रीणां प्रवर्त्तते ।
यस्तां विवाहयेन्मोहात्स ज्ञेयो वृषलीपतिः ॥

अत्रिकश्यपौ,

यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥ इति ।

अत्र ब्राह्मणपदोपादानाद्ब्राह्मणस्यैवायं रजस्वलापरिणयननिषेधो न क्षत्रियादीनाम् । कुन्त्यादिषु तथा दर्शनात् । यत्तु—

काममामरणात्तिष्ठेद् गृहे कन्यर्त्तुमत्यपि ।

न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥

इति मनुवाक्यं, तद् गुणवद्वरप्रशंसार्थं न स्वार्थे प्रमाणम् ।

अथ स्वयंवरः ।

तत्र नारदः,

यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं परीक्ष्य वरयेत्स्वयम् ॥
सवर्णमनुरूपं च कुलरूपवयःश्रुतैः ।
सहधर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥

ततस्तस्माद्वरात् ।

याज्ञवल्क्यः,

गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् ।

गम्यं कुलशीलादिभिर्गमनार्हम् ।

मनुरपि,

त्रीणि वर्षाण्युपासीत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
अदीयमाना भर्त्तारमधिगच्छेत्स्वयं यदि ।
नैनः किंचिदवाप्नोति न च यं साऽधिगच्छति ॥
अलङ्कारं नाददीत पितृदत्तं स्वयंवरा ।
मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥
पित्रे दद्यान्न शुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥

बौधायनः,

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थवर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

वसिष्ठः, ऋतुमती त्रीणि वर्षाण्युपासीत ऊर्ध्वं त्रिवर्षेभ्यः पतिं विन्देत तुल्यम् ।

विष्णुः,

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्सदा ॥

यमः,

कन्या द्वादश वर्षाणि सा ऽप्रदत्ता गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥
एवं चोपनता पत्नी नावमान्या कदाचन ।
न च तां बन्धकीं कुर्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥

इदं च वर्षत्रयप्रतीक्षणं पित्रादीनां यत्नवतामपि केनचित्कारणेन दानासम्पत्तौ । ऋतुत्रयप्रतीक्षणं तु यथोक्तवरसम्पत्तावपि पित्रादीनामुपेक्षायाम् । तुल्यैस्सकामामपि याच्यमानामित्यादिपूर्वोक्तवासिष्ठवचनात् ।

## अथ वधूवरयोः कूटविचारः ।

तत्र प्रश्नप्रकारमाह वसिष्ठः,

शुभे दिने दैवविदं स्वभिज्ञं ताम्बूलपुष्पाक्षतपूर्णपाणिः ।
प्रष्टा च गत्वा प्रणिपत्य पृच्छेन्निवेद्य तस्मै वरकन्ययोर्भम् ॥ इति ॥

भमिति नाम्नोऽप्युपलक्षणम् ।

तथाच बृहस्पतिः,

विवाहसमये काले सुखासीनं शुभप्रदम् ।
दैवज्ञं भक्तितो गत्वा सम्पूज्यादौ यथाबलम् ॥
उडुनी नामनी चोक्त्वा संपृच्छेत्सकृदेव तम् । इति ।

दैवज्ञमनोहरे,

वर्णश्च वश्यं च मिथश्च तारा योनिश्च मैत्री खगयोर्गणश्च ।

भमेलको नाडिकशुद्धिरेते यथोत्तरं स्युर्बलिनोऽष्टभेदाः॥ इति।
एवंऽष्टौ कूटभेदा यथोत्तरम् उत्तरोत्तरं बलिनः गुरवोऽधिका वेदितव्याः। तत्र वर्णकूटलक्षणमाह—

नारदः,

शव्यालिककर्कटा विप्राः सिंहमेषतुला नृपाः।
नृयुक्चापघटा वैश्या मृगकन्यावृषान्त्यजाः॥

जगन्मोहनेऽपि,

कर्कान्त्यवृश्चिका विप्राः क्षत्राः सिंहधनुस्तुलाः।
मेषयुग्मघटा वैश्याः शूद्रा वृषमृगाङ्गनाः॥
अन्त्यो मीनः। वर्णपरिग्रहे विशेषमाह—

नारदः,

झषालिकर्कटा विप्रास्तदूर्ध्वाः क्षत्रियादयः।
पुंवर्णराशेः स्त्रीराशौ समे हीने तथा शुभम्॥
वर्णज्येष्ठा तु या नारी वर्णहीनस्तु यः पुमान्।
विवाहं यदि कुर्वीत तस्या भर्त्ता विनश्यति॥
हीनवर्णे वरे उत्तमवर्णा नारी पतिघ्नी भवतीत्यर्थः।

अथ वश्यकूटः।

बृहस्पतिः,

मेषस्य वश्यौ सिंहाली कर्किजूकौ वृषस्य तु।
युग्मस्य कन्या वश्या स्यात्कर्किणश्चापवृश्चिकौ॥
तुला सिंहस्य वश्या स्यात्कन्याया यममत्स्यभे।
मृगकन्ये तु जूकस्य कर्की स्याद्वृश्चिकस्य तु॥
मीनश्चापस्य वश्यः स्यान्मकरो मीनवश्यकृत्।
कुम्भस्य कन्या वश्या स्यान्मीनो मेषस्य वश्यकृत्॥
एवं वश्यसमायोगे दंपत्योः प्रीतिरुत्तमा।

वश्याभावेऽपि दंपत्योर्विवाहः कलहप्रदः ॥

गर्गोऽपि

सिंहाली कर्किजूकौ च कन्या वृश्चिककार्मुकौ।
तुला मीनयमौ नक्रः कन्याकर्कटकौ तिमिः ॥
मेषकुम्भावजो नक्रो मेषादेर्वश्यराशयः।
एतानि वश्यकूटानि दंपत्योः शुभसंपदे ॥

अलिर्वृश्चिकः। जूकस्तुला। युग्मं मिथुनम्। यमो मिथुनम्। मत्स्यभं मीनः। नक्रो मकरः।

श्रीधरोऽपि,

मेषे वृश्चिकसिंहौ च वृषे कर्कटकस्तुला।
मिथुने कन्यका वश्यं कर्कटे धनुवृश्चिकौ ॥
सिंहे वश्यन्तुला चैव युवत्यां मीनको यमः।
तौल्या वश्यं मृगश्चैव वृश्चिके कन्यकर्कटौ ॥
चापे मीनमिदं वश्यं मकरे मेषकुम्भयोः।
कुम्भे मीनमिदं वश्यं मीने च मकरस्तथा ॥ इति।

वश्यानाह चिन्तामणिः,

हित्वा मृगेन्द्रं नरराशिवश्याः सर्वे तथैषां जलजाश्च भक्ष्याः।
सर्वेऽपि सिंहस्य वशे विनाऽलिं ज्ञेयं नराणां व्यवहारतोऽन्यत् ॥

नरराशयो मिथुनकन्यातुलाः। एवां मेषादयस्सर्वेऽपि सिंहं त्यक्त्वा वश्याः। ननु जलचराणां सहानवस्थानात्कथं वश्यत्वं तत्राह। जलजाश्च भक्ष्या इति। एषां नरराशीनां जलजाः मकरकुम्भमीनकर्कास्तु भक्ष्याः किं पुनर्वश्या इति सूचयितुं तुशब्दः। सिंहस्यालिं वृश्चिकं विना सर्वे वश्याः। अन्यदनुक्तं चतुष्पदानां जलचराणां वश्यावश्यं नराणां मनुष्याणां व्यवहारतो ज्ञेयम्। वश्यकूटं वश्यभक्ष्यवैरभेदेन त्रिधा। तत्र नरराशेः स्त्रीराशौ वश्ये

सति गुणद्वयम् । भक्ष्ये एको गुणः । वैरे गुणाभावः । अस्याप-
वादमाह—

**वसिष्ठः,**

विवाहकरणे नॄणामवश्यं वश्यमिष्यते ।
तदभावेऽपि राशिश्च गणरज्जुयुतः शुभः ॥ इति ।

## अथ ताराकूटम् ।

**संग्रहे,**

जन्म संपत् विपत् क्षेम प्रत्यरिः साधको वधः ।
मैत्रं परममैत्रं च जन्म चेति पुनः पुनः ॥
स्त्रियो वै जन्मताराया विपत्प्रत्यरिनैधनाः ।
पर्याये प्रथमे वर्ज्या द्वितीयाद्यचतुस्त्रयः ॥
तारास्त्याज्याः तृतीये तु सर्वास्ताराश्च शोभनाः ।

**बृहस्पतिः,**

आद्यसंविपदाख्यर्क्षे प्रत्यरौ च चतुर्थकम् ।
वधाख्ये च तृतीयांशं विना शेषा न शोभनाः ॥

**नारदः,**

स्त्रीभमारभ्य गणने नव पर्यायतः क्रमात् ।
जन्मत्रिपञ्चसप्तस्थं पुंभं स्याद्वरनाशनम् ॥
पुम्भमारभ्य गणने स्त्रीभं जन्मादिके स्थले ।
स्त्रीविनाशो भवेत्तस्माद्दिनकूटं विवर्जयेत् ।

अस्यापवादः सङ्ग्रहे,

स्त्रीदीर्घगणसद्भावे दिनं यदि न विद्यते ।
तथापि दिनमस्त्येव चन्द्रताराबलान्विते ॥

**गर्गोऽपि,**

स्त्रीदीर्घगणयोरसत्त्वे चन्द्रताराबले सति ।

असत्त्वं दिनकूटस्य न दोषं जनयेद् ध्रुवम् ॥
दिनकूटमिति ताराकूटस्यैव संज्ञान्तरम् ।
चन्द्रताराबलमत्र जन्मलग्नकालीनं वेदितव्यम् ।

## अथ योनिकूटम् ।

तत्र वसिष्ठः,
अश्वेभमेषभुजगद्वयकुक्कुरोतु-
मेषोतुमूषकमथोन्दुरुगोलुलायाः ।
शार्दूलमाहिषगवारिमृगद्वयञ्च
कीशोऽथ बभ्रुयुगकीशगजाश्वसिंहाः ॥
गोकुञ्जराविति यथाक्रममाश्विनादि-
भानां भवन्ति खलु कल्पितयोनिरूपाः ।
आसां वैरमाह स एव,
बभ्रूरगं श्वैणमिभेन्द्रसिंहमोत्वाखुसंज्ञं त्वजवानरं च ।
गोव्याघ्रमश्वोत्तममाहिषं च वैरं नृनार्योर्नृपभृत्ययोश्च ॥
ओतुर्बिडालः । लुलायो महिषः । गवारिर्व्याघ्रः । कीशो वानरः। बभ्रुर्नकुलः। युगं नक्षत्रद्वयम् । एवं द्वयशब्देऽपि द्रष्टव्यम् ।
अस्यापवादमाह स एव,
योनेरभावे नोद्वाहस्स तु कार्यो वियोगदः ।
राशिवंश्यं च यद्यस्ति कारयेन्न तु दोषभाक् ॥
अस्य फलमाह अत्रिः,
एकयोनिषु सम्पत्त्यै दंपत्योः सङ्गमस्सदा ।
भिन्नयोनिषु मध्यः स्यादरिभावे नचैतयोः ॥
बृहस्पतिः,
अरिभावकृतोद्वाहः शीघ्रं मरणमाप्नुयात् ।

## अथ ग्रहमैत्री ।

तत्र वसिष्ठः,

रवेः समो ज्ञः सितसूर्यपुत्रावरी परे ये सुहृदोऽम्बराद्याः।
चन्द्रस्य नारी रविचन्द्रपुत्रौ मित्रे समाः शेषनभश्चराः स्युः॥
समौ सितार्कौ शशिजश्च शत्रुर्मित्राणि शेषाः पृथिवीसुतस्य।
शत्रुः शशी सूर्यसितौ च मित्रे समाः परे स्युः शशिनन्दनस्य॥
गुरोर्ज्ञशुक्रावरिसंज्ञकौ तौ शनिः समोऽन्ये सुहृदो ग्रहेन्द्राः।
शुक्रस्य मित्रे बुधसूर्यपुत्रौ समौ कुजार्कावितरावरी तौ॥
शनेस्समो वाक्पतिरिन्दुसूनुः शुक्रश्च मित्रे रिपवः परे स्युः।
एवं ग्रहाणां चतुराननेन शत्रुत्वमित्रत्वसमत्वमुक्तम्॥

अम्बराद्याः ग्रहाः।

अस्याः फलमाह स एव,

अन्योन्यमित्रं शस्तं स्यात्सममित्रं तु मध्यमम्।
उदासीनं कनिष्ठं स्यान्मृतिदं शात्रवं स्मृतम्॥
शत्रुमित्रं च विज्ञेयं दंपत्योः कलहप्रदम्।
अन्योन्यं समशत्रुत्वं दंपत्योर्विरहप्रदम्॥

अस्यापवादमाह स एव,

राशिनाथे विरुद्धेऽपि सबलावंशकाधिपौ।
तन्मित्रेऽपिच कर्त्तव्यं दंपत्योः शुभमिच्छता॥
राशिनाथे विरुद्धेऽपि मित्रत्वे चांशनाथयोः।
विवाहं कारयेद्धीमान् दंपत्योस्सौख्यवर्धनम्॥
अदीर्घे रज्जुकूटे च राशौ नाड्यां स्थिते सति।
ग्रहाणां मैत्र्यभावेऽपि विवाहः शुभदो भवेत्॥

राशिनाथानाह श्रीधरः,

मेषवृश्चिकपतिर्महीसुतो भार्गवो वृषतुलाधरेश्वरः।
बोधनस्तु मिथुनाङ्गनापतिर्भास्करिर्मकरकुम्भनायकः॥

सिंहकर्कटकयोरिनोडुपौ मीनधन्वपतिरिन्द्रपूजितः ।
अंशका नवनव व्यवस्थिताः शौनकादिमुनिभिः प्रकीर्तिताः ॥
इति ।

अथ गणकूटम् ।

तत्र वसिष्ठः,
दस्रादितीज्यमृगमैत्रकरानिलान्त्य-
लक्ष्मीशभानि नव देवगणः प्रदिष्टः ।
पूर्वात्रयान्तकविधातृहरोत्तराणि
धिष्ण्यानि मानुषगणोऽत्र नव प्रदिष्टः ॥
पितृाद्विदैवाग्निशतेन्द्रमूलवस्वाहिचित्रर्क्षगणोऽसुराख्यः ।
देवासुराणां मनुजासुराणां वैरं महत्स्नेहमथेतरेषाम् ॥
अस्यार्थमाह श्रीधरः,
अश्वी मृगशिरो हस्तस्वाती पुष्यपुनर्वसू ।
मैत्रश्रवणरेवत्य एते देवगणाः स्मृताः ॥
भरणी रोहिणी चैव आर्द्रा पूर्वात्रयं तथा ।
त्रीण्युत्तराणि विज्ञेया मानुषाः परिकीर्त्तिताः ॥
ज्येष्ठामूलमघाश्लेषाविशाखास्वात्वाष्ट्रवारुणाः ।
कृत्तिका च धनिष्ठा च राक्षस्यस्तु प्रकीर्त्तिताः ॥ इति ।
गणविशेषेणोत्तमाधमव्यवस्थां फलं चाह—
नारदः,
स्ववर्गे चोत्तमं विद्यान्मध्यमं दैवमानुषम् ।
वैरं दितिजदेवेषु मरणं मानुषासुरे ॥
देवासुरगणे पुंसि यदि स्त्री मानुषे गणे ।
एतावुत्तममध्याख्यौ विपरीतौ न शोभनौ ॥
राक्षसी यदि वा नारी नरो भवति मानुषः ।

मृत्युस्तत्र न सन्देहो विपरीतः शुभावहः ॥
पुत्रमित्रकलत्रादियोगः स्वांशे सुशोभनः ।
मध्यमो नृसुरांशे च जघन्या देवराक्षसाः * ॥

* एतदनन्तरं पञ्चषपत्रपर्याप्तग्रन्थस्त्रुटितोऽस्ति । पुस्तकान्तराभावान्न मुद्रितः ।

तत्र वर्षेशमासेशज्ञानं सूर्यसिद्धान्तेनोक्तम्,

मासाब्ददिनसंख्याप्तं द्वित्रिघ्नं रूपसंयुतम्

सप्तोद्धृतावशेषौ तु विज्ञेयौ मासवर्षपौ ॥ इति ।

अयनर्त्तुस्वामिज्ञानमाह शौनकः,

अयनादयनं सूर्यो दिने यस्य तु गच्छति ।

अमृतं तस्य विज्ञेयं शुभं वा यदिवा ऽशुभम् ॥

शुक्रारचन्द्रसौम्यानां गुरोर्मन्दस्य च क्रमात् ।

अत्र सर्वत्र विरुद्धतिथिवारनक्षत्रेषु सिद्धियोगे सति विवाहः कार्यः ।

तदुक्तं व्याससंहितायाम्,

शनैश्चरदिने माघे यदा रिक्ता तिथिर्भवेत् ।

तस्मिन्विवाहिता कन्या सर्वसौख्यैस्समेधते ॥

रिक्ता शनिदिने चेत्स्यात्स्थिता पतिगृहे सदा ।

चन्द्रस्य च दिने ऽप्येवं किन्तु सापत्न्यमाप्नुयात् ॥

बृहस्पतिः,

रविवारे शुभं कर्म कर्त्तव्यं योगतः शुभे ।

योगाच्छुभे कुजे मन्दे कन्योद्वाहादि कारयेत् ॥ इति ।

बृहस्पतिः,

पौष्णोत्तरामघाहस्तमूलं श्रवणसप्तभाः ।

सूर्यवारयुता दोषहालाहलगणोद्धराः ॥

मित्रोऽश्विन्यर्यमा पूषा साहिर्बुध्न्या च रोहिणी ।

भौमवारेण संयुक्ता योगाः स्युर्दोषघस्मराः ॥

श्रवण इति अभिजितोऽप्युपलक्षणम् । तेन सप्तभत्वं सिध्यति । अहिर्बुध्न्यः उत्तराभाद्रपदा । दोषघस्मराः दोषभक्षकाः ।

कृत्तिकारोहिणीस्वातीशततारार्किचारणाः ।

शुभयोगा महादोषकैरव्यादिसवर्चसाः ॥ इति ।
कैरव्यं कुमुदसमूहः ।

अथ नक्षत्राणि ।

तत्र वसिष्ठः,
तिस्रोत्तरामूलमघान्त्यमैत्रप्राजेशचन्द्रार्कसमीरभेषु ।
तदा प्रशस्तः खलु कन्यकानां पाणिग्रहोऽन्येषु विवर्जितस्तु ॥
वात्स्यः,
उत्तरात्रितयं सौम्यं प्राजापत्यं तथाऽनिलम् ।
हस्तो मूलं तथा मैत्रं पूषदैवतमेवच ॥
विवाहे निर्दिशेद्धर्मयशोऽर्थी कालवित्सदा ।
उक्तवर्ज्येषु या मोहात्कन्यका परिणीयते ॥
सा भर्तृमरणव्याधिशोकदारिद्र्यभागिनी ।
अत्र विशेषश्चतुर्वर्गचिन्तामणौ कालखण्डे,
आद्ये मघाचतुर्भागे नैर्ऋतस्याद्यएवच ।
रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशनः ॥
षड्भागशेषेष्वन्येषु नक्षत्रेषु न दृश्यते । इति ।
नक्षत्रफलानि तु विस्तरभयान्नेहोच्यन्ते ।

अथ योगाः ।

ांश्च फलमुखेनाह शौनकः,
यतीपातवज्रवैधृतिपरिघे शूले च वित्तहानिः स्यात् ।
भाग्यसुखानि स्युः प्रीत्यादिषु शेषयोगेषु ॥ इति ।

अथ करणानि ।

बृहस्पतिः,
न्यादिचतुष्केषु करणेष्वपि विष्टिषु ।
लिकेषु शुभं वर्ज्यमशुभान्यत्र कारयेत् ॥

गुणायुतैर्युतेऽप्यस्मिन् शकुन्यादिचतुष्टये ।
काले नैव शुभं सर्वं कृतं सम्यग्विनश्यति ॥ इति ।

शौनकोपि,

ध्रुवकरणैः शकुनाद्यैः पाणिग्रहणे ध्रुवो भवति मृत्युः ।
मासान्मासत्रितयाद्विंशतिरात्राच्चथाऽब्दार्धात् ॥ इति ।

अथ लग्नानि ।

श्रीधरीये,

श्रेष्ठास्तौलियमाङ्गनाघटधनुर्गोकार्किकण्ठीरवाः
मध्यास्सौम्ययुतास्तथोर्ध्ववदनास्सर्वे विवाहे हिताः ।

विवाहपटलेऽपि,

कन्यातुलायमघटेषु विवाहकर्म
श्रेष्ठं तदन्यभवनेषु शुभावहं स्यात् ।
केचित्प्रशस्तमपि तेषु वदन्ति तज्ज्ञा
बाहुल्यभोगरतितच्चरभेषु योगाः ॥

नारदस्तु अभिजिद्गोधूलिकयोः शुभत्वमाह,

चतुर्थमभिजिल्लग्नमुदयर्क्षाच्च सप्तमम् ।
गोधूलिकं तदुभयं विवाहे पुत्रपौत्रदम् ॥
प्रख्यानं च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम् ।
अभिजित्सर्वदेशेषु मुख्यदोषविनाशकृत् ॥
मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः ।
नाशयत्यखिलं दोषं पिनाकी त्रिपुरं यथा ॥

संहितान्तरेऽपि,

मध्यंदिनगते भानौ सकलं दोषसञ्चयम् ।
दहत्येवाभिजिल्लग्नं तूलराशिमिवानलः ॥ इति ।

अथ लग्नफलानि ।

तत्र वराहः,

क्रिये कुमारी पररक्तचित्ता विहीनवित्ता गवि गोव्रता च।
कुलद्वयानन्दकरी तृतीये कुलीरलग्ने कुलटा नृशंसा ॥
हरौ प्रसूता सकृदाश्रिता पितुः पतिप्रिया च श्वशुरस्य षष्ठे।
रूपाभिमानार्थवती तुलाधरे तथालिनि क्रन्दति नित्यमस्थिरा॥
धनुषि कुलटा तत्पूर्वार्द्धे सतीत्यपरे जगुः ।
मृगघटझषेष्वन्यासक्ता जरामुपगच्छति ॥ इति ।

क्रियो मेषः। गौर्वृषः। तृतीयं मिथुनम्। कुलीरः कर्कः। हरिः सिंहः। षष्ठं कन्या। अलिर्वृश्चिकः। मृगो मकरः। अथ प्रत्येकं नवांशकफलम्।

तत्र वसिष्ठः,

द्विभर्तृका मेषनवांशके स्यात् वृषांशके स्यात् पशुशीलयुक्ता।
धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाऽतिहिंस्रा ॥
सिंहांशके सा पितृमन्दिरस्था कन्यांशके वित्तयुता सुशीला।
चापांशकाद्ये धनिनी द्वितीयभागेऽन्यसक्ता मलिना गदात्मा।
निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा॥
मीनांशके भर्तृसुतार्थहीना शुभग्रहैर्युक्तनिरीक्षितेऽपि ।
तस्मात्सदैवोक्तनवांशकेषु कुर्याद्विवाहं गुणसम्प्रवृद्धौ ॥
अन्त्यांशकश्चेद्धि शुभांशकानां मध्ये य एको न शुभप्रदस्सः ।
स एव वर्गोत्तमसंज्ञकश्चेच्छुभप्रदश्चाखिलमङ्गलेषु ॥

तथा,

वर्गोत्तमं विनाऽन्त्यांशे विवाहो न शुभप्रदः। इति ।

अथ लग्ने एकविंशतिमहादोषाः ।

तत्र नारदः,

एकविंशतिदोषाणां नामरूपफलानि च ।

पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः ॥
पञ्चाङ्गशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्त्तितः ।
उदयास्तशुद्धिहीनो द्वितीयः सूर्यसंक्रमः ॥
तृतीयः पापषड्वर्गो भृगुषष्ठः कुजाष्टमः ।
गण्डान्तकर्त्तरी रिःफषडष्टेन्दुश्च सङ्ग्रहः ॥
दंपत्योरष्टमं लग्नं राशिर्विषघटी तथा ।
दुर्मुहूर्तो वारदोषः खार्ज्जूरिकसमाङ्घ्रिभम् ॥
ग्रहणोत्पातभं क्रूरविरुद्धर्क्षं क्रूरसंयुतम् ।
कुनवांशो महापातो वैधृतिश्चैकविंशतिः ॥ इति ।

अथ पञ्चाङ्गशुद्धिलक्षणम् ।

तत्र स एव,

तिथिवारर्क्षकरणयोगाः पञ्चाङ्गसंज्ञिताः ।
पञ्चाङ्गस्य च या शुद्धिः पञ्चशुद्धिरुदाहृता ॥
तच्छुद्धिहीने यत्कर्म तन्निरर्थकमीरितम् ।
त्यजेत्पञ्चाष्टिकं चापि विषसंयुक्तदुग्धवत् ॥ इति ।

पञ्च अष्टयो यस्मिन्निति पञ्चाष्टिकम् ।
अष्टिः हानिः दोष इति यावत् ।

अथोदयास्तशुद्धिः ।

तत्र नारदः,

लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ ।
नचेद्वाऽन्योन्यपतिना शुभमित्रेण वा तथा ॥
वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ ।
एवं तौ न युतौ दृष्टौ मृत्युर्वध्वाः करग्रहे ॥ इति ।

अथ संक्रान्तिदोषः ।

नारदः,

त्याज्याः सूर्यस्य सङ्क्रान्तेः पूर्वतः परतस्तथा ।
विवाहादिषु कार्येषु नाड्यः षोडशषोडश ॥

अत्र संक्रान्तिपदं हरिपदषडशीतिमुखपरम् । विषुवदयनयोर्दिनत्रयं परिहार्यत्वस्मरणात् ।

तथाच वसिष्ठः,

विषुवतोरयनयोर्दिनत्रयं हरिपदेषु षडशीतिमुखेषु ।
पूर्वतोऽपि परतोऽपि संक्रमान्नाडिकाश्च खलु षोडश त्यजेत् ॥

इति ।

अथ षड्वर्गशुद्धिः ।

नारदः,

त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते ।
लग्नत्रिभागो द्रेष्काणो नवांशोऽपि नवांशकः ॥
द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशकः ।
षड्वर्गाः कथिता ह्येते तेषामीशा इमे स्मृताः ॥
मेषवृश्चिकयोर्भौमस्तुलावृषभयोस्सितः ।
कन्यामिथुनयोर्बोधः कर्कटस्य पतिः शशी ॥
चापान्त्ययोर्गुरुः स्वामी शनिर्मकरकुम्भयोः ।
रविः सिंहस्य चैतेषामंशानामधिपा इमे ॥
शुक्रचन्द्रज्ञगुरवः शुभा ह्यन्ये शुभेतराः ।
क्षीणः शशी तथाऽन्ये च पापयुक्तो बुधोऽशुभः ॥
होरयोरोजराशौ तु रवीन्दू क्रमतः पती ।
समराशौ तु चन्द्रार्कौ होरेशौ क्रमतो वदेत् ॥
स्युर्द्रेष्काणेषु चाद्येषु नव राशीश्वराः क्रमात् ।
नवमांशा मेषसिंहचापेष्वजादयः क्रमात् ॥
क्रमाद्वृषमृगकन्यासु ज्ञेयाः स्युर्मकरादयः ।

तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः ॥
अलिकर्कटमीनेषु क्रमात्स्युः कर्कटादयः ।
लग्नराशिं समारभ्य द्वादशांशेश्वराः क्रमात् ॥
कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः ।
भागाः स्युर्विषमे ते तु समराशौ विपर्ययात् ॥
षड्वर्गो भवति सदा शुभखचरसमुद्भवः शुभदः ।
पापसमुत्थस्त्वशुभस्तस्माद् ग्राह्यस्तु सौम्यषड्वर्गः ॥ इति ।

अथ भृगुषष्ठदोषः ।

**नारदीये,**

भृगुषष्ठाष्टमो दोषो लग्नादष्टगते सिते ।
उच्चगे शुभसंयुक्ते तल्लग्नं सर्वथा त्यजेत् ॥ इति ।

अथ कुजाष्टमदोषः तत्रैव,

कुजोऽष्टमो महादोषो लग्नादष्टमगे कुजे ।
शुभत्रययुतं लग्नं त्यजेन्न तुङ्गगे यदि ॥ इति ।

अथ गण्डान्तदोषः ।

**नारदीये,**

पूर्णानन्दाख्ययोस्तिथ्योस्सन्धिर्नाडीद्वयं सदा ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥

अथ नक्षत्रगण्डान्तः ।

सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांशा भमन्धयः ।
तदग्रेष्वाद्यपादांशभानां गण्डान्तसंज्ञकाः ॥
उग्रं च सन्धित्रितयं गण्डान्तात्रितयं महत् ।
मृत्युप्रदं जन्मयानविवाहस्थापनादिषु ॥

अथ लग्नगण्डान्तः ।

कुलीरसिंहयोः कीटचापयोर्मीननमेषयोः ।

गण्डान्तमन्तरालं स्याद् घटिकार्द्धं मृतिप्रदम् ॥ इति ।

अथ कर्त्तरीदोषः ।

**नारदीये,**

लग्नाभिमुखयोः पापग्रहयोरुभयस्थयोः ।
सा कर्त्तरीति विज्ञेया दम्पत्योर्गलकर्त्तरी ॥
कर्त्तरीदोषदुष्टं यत्तल्लग्नं परिवर्जयेत् ।
अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितम् ॥ इति ।

अस्यापवादमाह **वसिष्ठः,**

पापयोः कर्त्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः ।
यदा चास्तगयोर्वापि कर्त्तरी नैव दोषदा ॥ इति ।

अथ रिःफषडष्टेन्दुदोषः तत्रैव,

षडष्टरिःफगे चन्द्रे लग्नाद्दोषः स्वसंज्ञकः ।
तल्लग्नं वर्जयेद्यत्नाज्जीवशुक्रसमन्वितम् ॥
उच्चगे नीचगे चापि मित्रगे शत्रुराशिगे ।
अपि सर्वगुणोपेतं दम्पत्योर्निधनप्रदम् ॥

अस्यापवादमाह **वसिष्ठः,**

जन्मेशमृत्युराशीशौ मिथो मित्रे यदा तदा ।
जन्माष्टमर्क्षे चन्द्रश्च दोषो भङ्गं समाप्नुयात् ॥ इति ।

अथ सङ्ग्रहदोषः ।

**नारदः,**

शशाङ्के ग्रहसंयुक्ते दोषः सङ्ग्रहसंज्ञकः ।
तस्मिन् सङ्ग्रहदोषे तु विवाहं नैव कारयेत् ॥
सूर्येण संयुते चन्द्रे दारिद्र्यं भवति ध्रुवम् ।
कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता ॥
दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण तु ।

प्रकृत्या सूर्यपुत्रेण राहुणा कलहं सदा ॥
केतुना संयुते चन्द्रे नित्यं कष्टदरिद्रता ।
पापग्रहयुते चन्द्रे दम्पत्योर्मरणं भवेत् ॥
शुभग्रहयुते चन्द्रे स्वोच्चस्थे मित्रराशिगे ।
दोषाय न भवेल्लग्नं दम्पत्योः श्रेयसे सदा ॥
स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो यदि ।
पापग्रहयुतश्चन्द्रः करोति मरणं तयोः ॥
अथाष्टमलग्नदोषः तत्रैव,
दम्पत्योरष्टमं लग्नम् अष्टमो राशिरेव वा ।
यदि लग्नगतः सोऽपि दम्पत्योर्मरणप्रदः ॥
स राशिः शुभसंयुक्तो लग्नं वा शुभसंयुतम् ।
लग्नं विवर्जयेद्यत्नात्तदंशांश्च तदीश्वरान् ॥
दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः ।
अर्थहानिस्तयोर्यस्मात्तदंशस्वामिनं त्यजेत् ॥
जन्मराश्युद्गमं चैवं जन्मलग्नोदयं शुभम् ।
तयोरुपचयस्थानं यदि लग्नगतं शुभम् ॥
अस्यापवादमाहतुः कश्यपबृहस्पती,
जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ ।
जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः ॥
कालदीपे,
कर्त्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना ।
मूर्तिं व्ययं च सर्वत्र एकमित्राधिपादृतः ॥ इति ।
अथ विषघटिकादोषः नारदीये,
खमार्गणा ५० वेदपक्षाः २४ खरामा ३० व्योमसागराः ४० ।
अब्धिचन्द्रा १४ रूपदस्राः २१ खरामा ३० व्योमबाहवः २० ॥

द्विरामाः ३२ खाग्नयः ३० शून्यदस्राः २० कुञ्जरभूमयः २८।
रूपपक्षाः २१ व्योमदस्राः २० वेदचन्द्राः १४ चतुर्दश १४॥
शून्यचन्द्रा १० वेदचन्द्राः १४ षडक्षा ५६ वेदबाहवः २४।
शून्यदस्राः २० शून्यचन्द्राः १० पूर्णचन्द्रा १० गजेन्दवः १८॥
तर्कचन्द्राः १६ वेदपक्षाः २४ खरामा ३० श्चाश्विभाक्रमात्।
आभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिताः ॥
विवाहादिषु कार्येषु विषनाडीश्च वर्जयेत् । इति ।

अथ दुर्मुहूर्त्तदोषः तत्रैव,

भास्करादिषु वारेषु ये मुहूर्त्ताश्च निन्दिताः ।
विवाहादिषु ते वर्ज्या अपि लक्षगुणैर्युताः ॥

मुहूर्त्तलक्षणमाह कश्यपः,

अह्नः पञ्चदशो भागो मुहूर्त्तोऽथ तथा निशि । इति ।

तांश्चाह श्रीपतिः,

रुद्राहिमित्रपितरो वसुवारिविश्वा
वेधा विधिः शतमुखः पुरुहूतवह्नी ।
नक्तञ्चरेशवरुणा यमयोनयश्च
प्रोक्ता दिने दश च पञ्च तथा मुहूर्त्ताः ॥
निशामुहूर्त्ता गिरिशाजपादाहिर्बुध्न्यपूषाश्वियमाग्नयश्च ।
विधातृचन्द्रादितिजीवविष्णुतिग्मद्युतित्वष्टृसमीरणाश्च ॥ इति ।

एतांस्तु वारविशेषेण वर्जनीयानाह वसिष्ठः,

आर्यम्णो भानुवारे शशिधरदिवसे राक्षसब्राह्मसंज्ञौ
पित्राग्नेयौ कुजाहे शशिसुतदिवसे योऽभिजित्संज्ञकस्तु ।
जीवाहे राक्षसाख्यो भृगुसुतदिवसे राक्षसब्राह्ममैत्राः
सौरावेते विवर्ज्यास्सततनिधनदा मङ्गले दुर्मुहूर्त्ताः ॥
वारस्य लक्ष्मीं निखिलां निहन्ति संवत्सरार्धे कुमुहूर्तदोषः ।

दुर्वाससः शाप इव प्रमत्तमहेन्द्रलक्ष्मीमसमां समग्राम् ॥
करोति नष्टं कुमुहूर्त्तदोषः कुमारमुद्राहितमाशु नूनम् ।
सप्ताङ्गराज्योत्कटराजरत्नं नयं यथा द्यूतकिरातवर्त्मा ॥ इति ।
अथ वारदोषः नारदीये,
न हिता वारदोषा ये सूर्य्यवारादिषु क्रमात् ।
अपि सर्वगुणोपेतास्ते वर्ज्यास्सर्वमङ्गले ॥
तत्र वारदोषलक्षणमाह संग्रहः,
अहःप्रमाणं वसुधा विभज्य तद्वारगः स्यात्प्रथमोऽन्त्यभागः ।
शेषाः षडंशाः क्रमशोऽपि नेयाः शनेस्तु भागाः कुलिका वदन्ति॥
शन्यंशः कुलिको ज्ञेयो गुर्वंशो यमघण्टकः ।
अर्द्धप्रहरसौम्यांशो ह्यर्कांशः कालसंज्ञकः ॥ इति ।

अस्यार्थः । वारस्याहःप्रमाणमष्टधा विभज्य तत्र प्रथमान्त्यभागौ वाराधिपत्यंशौ ज्ञेयौ । शेषाः क्रमेण तद्ग्रहांशा भवन्ति । यः शन्यंशः स कुलिको भवति । यो बृहस्पत्यंशः स तु यमघण्टको भवति । यः सौम्यांशः सोऽर्द्धप्रहरसंज्ञकः । यस्त्वादित्यांशः स कालसंज्ञको भवति ।

एतेषां फलमाह बृहस्पतिः,
निधनं प्रहरार्द्धे तु निःस्वत्वं यमघण्टके ।
कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥
वसिष्ठः,
कुलिके निधनं विद्याद्यमघण्टेऽर्थनाशनम् ।
यामार्द्धे कार्यनाशश्च प्रोक्तो यामार्द्धसंख्यया ॥
निशासु वारप्रभवा हि दोषास्त्याज्यास्सदा टङ्कणसंज्ञदेशे ।
दिवाऽपि त्याज्यकालप्रमाणमाह संग्रहकारः,
अर्द्धप्रहरकादौ तु मध्ये तु यमघण्टके ।

कुलिकेऽन्त्ये विवर्ज्याः स्युस्तिस्रो द्वे एकनाडिका ॥ इति ।

अथ खार्जूरिकदोषः । तल्लक्षणमाह—

श्रीपतिः,

एकामूर्ध्वगतां त्रयोदश तथा तिर्यग्गताः स्थापयेत्

रेखाचक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु ।

व्याघातादिषु मूर्ध्नि भं तु कथितं तत्रैकरेखास्थयोः

सूर्याचन्द्रमसोर्मिथो निगदितो दृक्पात एकार्गले ॥ इति ।

अस्यार्थमाह स एव,

व्याघातशूलपरिघव्यतिपातपूर-

गण्डातिगण्डकुलिशेषु सवैधृतेषु ।

आदित्यचान्द्रपितृसार्पभदस्रमूल-

मैत्राख्यतिष्यसुरवर्द्धकिभानि मूर्ध्नि ॥

पूरो विष्कम्भः । कुलिशं वज्रः । सुरवर्द्धकिभं चित्रा । शेषाः प्रसिद्धाः । एतेषु पूर्वार्द्धोक्तेषु व्याघातादिषु नवसु योगेष्वन्यतमेन योगेन यथाक्रममपरार्द्धगतेषु पुनर्वस्वादिषु नवसु नक्षत्रेषु अन्यतमं नक्षत्रं योजयित्वा तन्नक्षत्रं मूर्ध्नि लेखनीयम् । तदारभ्य प्रादक्षिण्येन सर्वाणि नक्षत्राणि सर्वेषु रेखाग्रेषु लेखनीयानि। तत्र सूर्याचन्द्रमसौ एकरेखास्थौ यदा भवेतां तदा मिथस्तद्दृष्टिपातजनित एकार्गलदोषो भवेदिति । एकार्गल इति तस्यैव संज्ञान्तरम् ।

तथाच नारदीये,

एकार्गलसमाङ्घ्रिश्च तत्र लग्नं विवर्जयेत् ।

अपि शुक्रेज्यसंयुक्तं विषसंयुक्तदुग्धवत् ॥ इति ।

अथ ग्रहणोत्पातदोषः नारदीये,

ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ।

यावच्च रविणा भुक्ता भुक्तदग्धकाष्ठवत् ॥ इति ।

ग्रहणात्पुरः पश्चाच्च त्याज्यदिवससंख्यामाह स एव,
उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे।
नाखिले त्रिदिनं नेष्टं नेष्टं तद्वद्दतुत्रयम्॥
ग्रस्तेऽस्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा।
सन्ध्यायां तु त्रित्रिदिनं विशेषे सप्तसप्त च॥
बृहस्पतिः,
पश्चादेवोपरागे तु दोषः स्यान्नैव पूर्वतः।
गृहदाहादयो दोषा यथा स्युर्दहनात्परम्॥ इति।
महोत्पातानाह स एव,
उल्कापाते महापाते महाशनिनिपातने।
नभोऽशनिनिपाते च भूकम्पपरिवेषयोः॥
ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते न शोभनम्।
केतवो यत्र दृश्यन्ते स धूमा वा पृथग्विधाः॥
ग्रहाणां ग्रहणं चैव वर्जयेद्दिनसप्तकम्।
युद्धे ग्रहाणामन्योन्यं निर्घाते वा कुकम्पने॥
महोत्पातयुतात्कालात्सप्तरात्रं शुभं त्यजेत्। इति।
अथ क्रूरविद्धर्क्षदोषः नारदीये,
मङ्गलेषु त्यजेत्क्रूरविद्धर्क्षं क्रूरसंयुतम्।
अखिलर्क्षं पञ्चगव्यं सुराबिन्दुयुतं यथा॥
पादएव शुभैर्विद्धं भाशुभं नैव कृत्स्नभम्।
क्रूरविद्धं युतं धिष्ण्यं निखिलं नैव याचतः॥
आद्येनान्त्यपदं बाध्यमन्त्ये नाद्यं तु बाध्यते।
द्वितीयेन तृतीयं स्यात्तृतीये न द्वितीयकम्॥ इति।
क्रूरविद्धनक्षत्रस्वरूपं च पञ्चशलाकाचक्रेण ज्ञातव्यम्।
तदुद्धारक्रममाह विवाहवृन्दावनम्,

याम्योत्तराः प्रागपराश्च पञ्च द्वे द्वे च रेखे विचरेद्विदिक्षु ।
विदिग्द्वितीयार्गलिताग्नितारं तत्रालिखेत्साभिजितं भवर्गम् ॥
इति ।
तस्मिन्नभिन्नाग्रगतं भिनत्ति ग्रहो विवाहर्क्षमशेषमेव ।
स्त्रीपुंसयोरायुरसौम्यवेधः सौम्यग्रहो हन्ति सुखानि शश्वत् ॥
इति ।
अथ प्रत्येकं वेधफलानि ।
तत्र वराहः,
रविवेधे वैधव्यं पुत्रविनाशं करोति कुजवेधः ।
वन्ध्या पण्डितवेधे दीक्षाकरणं करोति गुरुवेधः ॥
भृगुसुतवेधे पुत्री दासी रविजेन्दुराहुसम्भूतः ।
पण्डितो बुधः । दीक्षाकरणं प्रव्राजिकात्वम् ।
अथ कुनवांशदोषः नारदीये,
तुलामिथुनकन्यांशा धनुरन्त्यार्द्धसंयुताः ।
एते नवांशाः शुभदाः यदि नान्त्यांशकाः खलु ॥
अन्त्यांशास्तेऽपि शुभदाः यदि वर्गोत्तमाह्वयाः ।
अन्ये नवांशा न ग्राह्या यतस्ते कुनवांशकाः ॥
कुनवांशकलग्नं यत् त्याज्यं सर्वगुणान्वितम् । इति ।
वर्गोत्तमलक्षणमाह वराहमिहिरः,
वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-
पर्य्यन्तगाः शुभफला नवभागसंज्ञाः । इति ।
अथ महापातवैधृतिदोषौ नारदीये,
यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे ।
अपि सर्वगुणोपेतं दम्पत्योर्मृत्युदं यतः ॥ इति ।
सङ्ग्रहे तु,

महापातस्य वैधृत्या यावत्कालं स्थितिर्भवेत्।
तावत्कालं त्यजेत्पूर्वं तावत्कालं त्यजेत्परम्॥ इति।
महापातवैधृतिलक्षणं तु सूर्यसिद्धान्ते,
एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा।
तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः॥
विपरीतायनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः।
समास्तदा व्यतीपातो भगणार्द्धे तयोर्युतौ॥
तुल्यांशजालसम्पर्कात्तयोस्तु प्रवहाहतः।
तादृक्क्रोधोद्भवो वह्निर्लोकाभावाय जायते॥ इति।
अथ दश दोषाः व्यवहारोच्चये,
वेधश्च लत्ता च तथा च पातः खार्ज्जूरवेधो दशयोगचक्रम्।
युतिश्च जामित्रमुपग्रहाश्च बाणाख्यवज्रे दश चैव दोषाः॥
तत्र वेधश्च पञ्चशलाकाचक्रे प्राङ् निरूपितः।

अथ लत्ता॥

तत्र श्रीपतिः,
ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः
षष्ठं चाष्टममर्कजः स्वपुरतो हन्ति स्फुटं लत्तया।
पश्चात्सप्तममिन्दुजः स्वनवमं राहुः सितः पञ्चमं
द्वाविंशं परिपूर्णमूर्त्तिरुडुपः सन्ताडयेन्नेतरः॥

अथ पातः,

सूर्याधिष्ठितभाद् भुजङ्गपितृभत्वाष्ट्रेषु मैत्रे श्रुतौ
पौष्णे च क्रमशोऽश्विभाद्गणनया शीतांशुना संयुते।
धिष्ण्ये तावतिथे पतत्यवितथे चण्डीशचण्डायुधम्
तस्मिन्नात्महितेप्सुभिर्निगदितं कार्यं न कार्यं बुधैः॥ इति।
अस्यार्थः। सूर्याक्रान्तनक्षत्रमारभ्य नक्षत्राणि रेखारूपाणि

लिखेत् । तन्मध्ये आश्लेषाचित्रामघानुराधाश्रवणरेवतीषु सङ्केतमन्यं कुर्यात् । पश्चादश्विन्यादिगणनया तावतिथे सङ्केतस्थाने पतितनक्षत्रे तीक्ष्णं खड्गायुधं पतति ।

खार्जूरवेधोऽपि प्रागेव निरूपितः । अथ दशयोगचक्रम् ।

व्यवहारोच्चये,

शून्यैकवेदऋतवो दशरुद्रयुक्ताः
पञ्चैकनागशिशिराश्च नवैकखाश्वि ।
सोध्यर्क्षमिन्दुयुतभानुसमन्वितं च
भागश्च देय उडुभिर्दशयोगचक्रम् ॥

लल्लः,

मरुन्मेघाग्निभूपाला मृत्युश्चोरो रुजोऽशनिः ।
कलिर्हानिर्दशोद्वाहे सन्त्याज्यास्ते सदा बुधैः ॥

अथ युतिः । विवाहवृन्दावने,

यस्मिन्भवने चन्द्रस्तस्मिन् यदि जायते ग्रहः कश्चित् ।
युतिरतिदोषः स तदा ऽशुभयुक्ते केचिदिच्छन्ति ।

अथ जामित्रम् ।

जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः ।
तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्जयेत् ॥

अथोपग्रहः विवाहवृन्दावने,

भूकम्पः सप्तमर्क्षे भवति सवितृभात्पञ्चमे विष्कमुल्का
शूलं चैवाष्टसंख्येऽशनिरिति दशमे केतुरष्टादशे च ।
दण्डाख्यः पञ्चसंख्ये सनवदशमिते नूनमुल्का प्रदिष्टा
धिष्ण्ये द्विः सप्तसंख्ये मुनिभिरभिहितश्चात्र निर्घातपातः ॥
भादेकविंशतिमितात्कथितास्तु मोह-
निर्घातकम्पकुलिशाः परिवेषयुक्ताः ।

एष्विन्दुगेषु न शुभं खलु कर्म कार्यं
सिद्धिं प्रयाति दहनास्त्रविषादिसाध्यम् ॥
अथ बाणः। ब्रह्मयामले,
गततिथियुतलग्नं पञ्चधा स्थापितं स्या-
त्तिथिरविदशनागैर्वेदयुक्तं क्रमेण।
नवहृतशरशेषं यत्र तत्पञ्चकं स्यात्
रुगनलनृपचौरं मृत्युदं वर्जनीयम् ॥
ज्योतिःप्रकाशे,
नृपाख्यं नृपसेवायां गृहगोपेऽग्निपञ्चकम्।
याने चौरं व्रते रोगं विवाहे मृत्युपञ्चकम् ॥
रोगं चौरं त्यजेद्रात्रौ दिवा राजन्यपञ्चकम्।
सन्ध्ययोर्मृत्युदं त्याज्यं सर्वदा वह्निपञ्चकम् ॥
तैलं रोगेऽनले होमं दद्यात्किञ्चिन्नृपेर्हणाम्।
चौरे द्रव्यं जलं मृत्यौ पञ्चकारिष्टशान्तये ॥
फलप्रदीपे,
रवौ रोगं कुजे वह्निं शनौ च नृपपञ्चकम्।
वर्ज्यं पुनः कुजे चौरं बुधवारे च मृत्युदम् ॥ इति।
अथैकविंशतिमहादोषाणां मध्ये केषाञ्चिद्भङ्गा उच्यन्ते।
तत्र संग्रहदोषापवादः।
तत्र वसिष्ठः,
स्वगृहविधुगृहोद्यत्सौम्यभागास्थितश्चेद्
गुरुरुपचययातः स्वांशगोऽसौ बलाढ्यः।
यदि गुरुतरदोषा यान्ति नाशं यथैव
श्रुतिरपि समधीता पापनाशाय दृष्टा ॥
उदयभवनतोऽरित्र्यायगादित्यपापा

निजगृहगतसौम्याः प्राणिनः कण्टकस्थाः ।
यदि शशिनि शुभस्थे कर्मणा प्रस्थिते वा
निजमुदयगदोषं नाशयेच्छीतरश्मिः ॥
अथ पापांशस्थितचन्द्रदोषापवादः ।
लग्ने केन्द्रे त्रिकोणे वा शुभस्थाने बलान्विते ।
पापांशेन्दूत्थदोषौघं विजहाति न संशयः ॥
स्ववर्गस्थः शुभः केन्द्रे त्रिकोणे वा स्वतुङ्गगः ।
विधौ पापांशगे दोषाञ्जहाति बलसंयुतः ॥
अथ दुर्मुहूर्त्तादिदोषापवादः ।
मुहूर्त्तपापषड्वर्गकुनवांशग्रहोत्थिताः ।
प्रदोषास्तान्निहन्त्येव यत्रैकादशगः शशी ॥
अथ वारदोषापवादः ।
पापग्रहोऽपि वारेशो लग्नत्र्यायारिवित्तगः ।
स्ववारकथितं दोषं न शुभोपरि यच्छति ॥
पापग्रहोऽपि वारेशो लग्नाद् दुश्चिक्यगः शुभात् ।
दद्यात्ताराजितो वक्री शुभकर्माणि वृत्रहन् ॥
दुश्चिक्यं तृतीयस्थानम् ।
अथ कुलिकापवादः ।
सौम्यग्रहेऽथ वारेशे बलाढ्ये लग्नगेऽथवा ।
कुलिकोदयदोषोऽत्र नास्तीति श्रुतिचोदितम् ॥ इति ।
अथ यमकण्टकापवादः ।
शुभांशे शुभकार्यस्थाशुभः केन्द्रे शुभेक्षितः ।
लग्नादुपचये चन्द्री यमकण्टकनाशनः ॥
अथ सर्वदोषभङ्गः ।
**नारदीये,**

बृहस्पतिः केन्द्रगतः शुक्रो वा यदि वा बुधः ।
एतेषां दोषसङ्घानां करोत्येव विनाशनम् ॥
गुरुरेकोऽपि लग्नस्थः सकलं दोषसञ्चयम् ।
विनाशयति घर्मांशुरुदितस्तिमिरं यथा ॥ इति ।

अन्येऽपि दोषास्तदपवादाश्च ग्रन्थान्तरादवगन्तव्याः विस्तरभयान्नेहोच्यन्ते ।

अथ ग्रहसंस्थानम् ।

तत्र वराहः,

मूर्त्तौ करोति विधवां दिनकृत्कुजश्च
राहुर्विपन्नतनयां रविजो दरिद्राम् ।
शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वीम्
आयुःक्षयं च कुरुतेऽथ विभावरीशः ॥
कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये ।
वित्तेश्वरीमविधवां गुरुशुक्रसौम्या
नारीं प्रभूततनयां कुरुते शशाङ्कः ॥
सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सदा बहुसुतां धनभागिनीं च ।
व्यक्तं दिवाकरसुतः सुभगां करोति
मृत्युं ददाति नियतं खलु सैंहिकेयः ॥
स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्नमपिच क्षितिजोऽल्पवित्तां
दद्याद् भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥
नष्टात्मजां रविकुजौ खलु पञ्चमस्थौ

चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगान्
कन्याविनाशमचिरात्कुरुते शशाङ्कः ॥
षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रा-
मर्यां शशाङ्कतनयः कलहप्रियां च ॥
सौर्यारजीवबुधराहुरवीन्दुशुक्रा
दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनकुलक्षयवित्तनाशं
व्याधिप्रवासमरणानि यथाक्रमेण ॥
स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सुरुजां महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥
धर्मे स्थिता भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजः सरोगाम् ।
राहुश्च सूर्यतनयश्च करोति बन्ध्यां
कन्याप्रसूतिजठरां कुरुते शशाङ्कः ॥
राहुर्नभस्तलगतो विधवां करोति
पापे रतिं दिनकरश्च शनैश्चरश्च ।
मृत्युं कुजोऽर्थरहितां कुलटां च चन्द्रः
शेषा ग्रहा धनवतीं सुभगां च कुर्युः ॥
आये रविर्बहुसुतां सधनां च चन्द्रः
पुत्रान्वितां क्षितिसुतो रविजो धनाढ्याम् ।

आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोत्यविधवां भृगुरर्थयुक्ताम् ॥
अन्ते गुरुर्धनवतीं दिनकृद्दरिद्रां
चन्द्रो धनक्षयकरीं कुलटां च राहुः ।
साध्वीं भृगुः शशिसुतो बहुपुत्रपौत्रां
यां च प्रशस्तहृदयां रविजः कुजश्च ॥ इति ।
गोधूलिके तु सर्वदोषापवादमाह स एव,
गोपैर्यष्ट्या हतानां खुरपुटदलिता या च भूमिर्दिनान्ते
सोद्वाहे सुन्दराणां विपुलधनसुतारोग्यसौभाग्यकर्त्री ।
तस्मिन्काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगः
ख्यातः पुंसां सुखार्थे शमयति दुरितान्युत्थितं गोरजस्तु ॥
इति ।

अथ लग्नसाधनाय घटीयन्त्रनिर्माणप्रकारमाह—
तत्र वामनः,
दशपलशुद्धकपाले संशुद्धान्ते षडङ्गुलोच्छ्राये ।
द्वादशमुखपरिणाहे षष्ट्यम्बुपलपरिमिता घटिका ॥
चतुरङ्गुलशलाकावृत्तं कुर्यात्सुवर्णपादेन ।
तत्परिमितया छिद्रे जलस्थिते शोभना घटिका ॥

अथ घटीयन्त्रस्थापनप्रकारः ।

प्रागुदक्प्रवणे देशे गोमयेनोपलेपिते ।
मृन्मयं कुण्डकायुग्मं स्थापयेदव्रणं शुभम् ॥
कुङ्कुमाक्तेन सूत्रेण परिवेष्ट्य परस्परम् ।
स्थले च वारिणा पूर्णं तण्डुलानामथोपरि ॥
निश्चले सलिले स्थाप्य कुण्डिकाया जलोपरि ।
स्थापयेद्घटिकायन्त्रं सूर्यबिम्बानुदर्शनात् ॥

अथ स्थापनायां घटिकानिमन्त्रणमन्त्रः ।

मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मिता पुरा ।
भावाभावाय दम्पत्योः कालसाधनकारणम् ॥ इति ।

अथ घटीयन्त्रभ्रमणफलम् ।

यद्रूपं प्रथमं करोति घटिका पूर्वादिदिक्षु क्रमात्
सौभाग्यं निधनं यशोविरहितं युक्तं च रोगैः क्रमात् ।
कन्यावल्लभतामुपैति नियतं या निश्चला सर्वदा ।
स्यात्साध्वी सुतवित्तबन्धुसहिता नन्दत्यलं भूतलम् ॥ इति ।

अथात्रापेक्षितरविगुर्वादिबलम् ।

तत्र वराहः,

गुरौ रवौ वा विषमास्पदस्थे स्त्रियो विपर्यस्तफलं लभन्ते ।
वराग्यलाभे च तथाऽतिकाले पूजाभिषेकैः शुभदो विवाहः॥

इति ।

गर्गः,

स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण निश्चितम् ॥ इति ।

गुरोः पूज्यतास्थानान्याह वराहः,

दुश्चिक्यजन्मारिखमध्यभेषु जन्मर्क्षतो वाञ्छति वज्रपाणेः ।
पूजां पुरोधा न स एव काङ्क्षत्यथाष्टमं प्राप्तरसातलस्थः ॥
पूजाभिलाषं प्रति निःस्पृहेऽपि कुर्याद् गुरौ शुद्धिविवर्जितेऽपि।
वराग्यलाभे शुभदं विवाहं वदन्ति गर्गच्यवनादिमुख्याः॥इति।

लल्लोऽपि,

द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ते पाणिग्रहणे जीवे वैधव्यमाप्नोति ॥
बन्धौ तृतीये रिपुराशिसंस्थे वाञ्छन्ति पूजां दशमे सुरेज्ये।

नेच्छन्ति पूजां जनिके व्ययस्थे पुरातना अष्टमगेऽपि सूरौ ॥
रवेः पूज्यतास्थानान्याह बृहस्पतिः,
पुंसो भानुस्त्रिषष्ठाये शनिभौमौ च शोभनौ ।
अन्यत्र शान्तिमेतेषां कृत्वा कर्म समारभेत् ॥ इति ।

अथ गुरुशान्तिविधिः ।

तत्र शौनकः,
कन्यकोद्वाहकाले चेदानुकूल्यं न विद्यते ।
ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः ॥
सुवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टितम् ।
ऐशान्ये धवलं कुम्भं धान्योपरि निधाय च ॥
दमनं मधुपुष्पं च तथा पीतं च सर्षपम् ।
मांसी गुडूच्यपामार्गो विडङ्गी शङ्खिनी वचा ॥
सहदेवी हरिद्रान्ता सर्वौषधिशतावरी ।
कृत्वाऽऽज्यभागपर्यन्तं स्वशाखोक्तविधानतः ॥
गृह्योक्तमण्डलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः ।
देवपूजोत्तरे काले ततः कुम्भानुमन्त्रणम् ॥
अश्वत्थसमिधश्चाज्यं पायसं सर्पिरन्वितम् ।
यवव्रीहितिलास्साज्या मन्त्रेणैव बृहस्पतेः ॥
अष्टोत्तरशतं सर्वं होमशेषं समापयेत् ।
दारपुत्रसमेतस्य त्वभिषेकं समाचरेत् ॥
प्रतिमां वस्त्रकुम्भं च आचार्याय प्रदापयेत् ।
ब्राह्मणान् भोजयेत् पश्चाच्छुभदः स्यान्न संशयः ॥

अथादित्यशान्तिः ।

तत्र स एव,
ब्राह्मणस्योपनयने नानुकूलो भवेद्रविः ।

तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः ॥

अत्रोपनयनं विवाहस्याप्युपलक्षणम् । रविगुरुशुद्धौ व्रतोद्वाहाविति स्मरणात् ।

उपनयनात्पूर्वेद्युः कृत्वा पुण्याहवाचनम् ।
गृहस्येशानदिग्भागे गोमयेनोपलेपयेत् ॥
कुङ्कुमेन लिखेत्पद्ममष्टपद्मं सकेसरम् ।
सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारिणम् ॥
कृत्वाऽऽज्यभागपर्यन्तं तन्त्रं कृत्वा तु पूर्ववत् ।
पूर्ववद्ग्रहयज्ञवत् ।
स्वशास्त्रोक्तविधानेन आचार्यो होममाचरेत् ॥
आकृष्णेनेति मन्त्रेण समिदाज्यचरून् हुनेत् ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
तिलव्रीहीं श्च हुत्वाऽथ होमशेषं समापयेत् ।
दारपुत्रसमेतस्य ऋत्विजो अभिषेचयेत् ॥
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः ।
ऋत्विजे दक्षिणां दद्यादन्येभ्यश्च स्वशक्तितः ।
प्रतिमां वस्त्रकुम्भं च आचार्याय प्रदापयेत् ॥
एवं यः कुरुते सर्वः सूर्यदोषो विनश्यति ॥

अथ सिंहस्थनिर्णयः ।

तत्र लल्लः,

उद्यानचूडाव्रतबन्धदीक्षाविवाहयात्रादिवधूप्रवेशम् ।
तडागकूपात्रिदशप्रतिष्ठां बृहस्पतौ सिंहगते न कुर्यात् ॥

पुनरपि स एव,

नीचस्थे वक्रसंस्थे त्वतिचरणगते बालवृद्धेऽस्तगे वा
संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधश्च दीक्षा ।

मौञ्जीबन्धो नराणां परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च ॥
राजमार्त्तण्डोऽपि,
सिंहे यदा तिष्ठति देवपूज्यः पापं तदा वत्सरमादिशन्ति ।
वैधव्यमाप्नोत्यचिरेण कन्या विवाहिता स्याद्यदि माधवेन ॥
यात्रां चूडां विवाहं श्रुतिविवरविधिं शङ्खसद्मप्रवेशं
प्रासादोद्यानहर्म्यं सुरनरभवनारम्भविद्याविधानम् ।
मौञ्जीबन्धं प्रतिष्ठां मणिकनकरदाभूषणं कुर्वते ये
मृत्युः सिंहस्थितेज्ये गुरुदिनकरयोरेकराशिस्थयोश्च ॥
गर्गोऽपि,
न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपि वा ।
क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म वा ॥
श्रीपतिरपि,
यदि गुरुरविवारे जीवसंवत्सरान्ते
भवति च अधिमासे सिंहसंस्थे च जीवे ।
अनुगतरविरास्ते नीचगे निर्जिते वा
ह्युपनयनमनिष्टं यज्ञयात्राविवाहाः ॥
अन्यत्रापि सिंहस्य साम्यमाह वात्स्यः,
वक्रे चैवातिचारे त्रिदशपतिगुरौ देवपूज्ये च लुप्ते
गुर्वादित्ये ऽधिमासे दिवसकरविधौ सङ्गमे चैत्रपौषे ।
धिष्ण्ये केतूद्गमे वा शरदि सुरगुरौ सिंहसंस्थे ऽमरेज्ये
वर्षे लुप्तेऽपि चोढा सुनियतमरणा देवकन्यापि भर्त्तुः॥इति ।
अत्र निमित्तविशेषेण प्रतिप्रसवमाह स एव,
गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखा मुनीन्द्राः ।
यदा तु माघी मघसंयुता स्यात्तदा न कन्योद्वहनं वदन्ति ॥

माघ्याश्च मघायोगो गुर्वनधिष्ठितमघाविषयो न यथाकथंचित्।

माघी च मघसंयुक्ता मघायां च गुरुर्यदा ।
महामाघस्तदा प्रोक्तो व्रतोद्वाहं च वर्जयेत् ॥

इति लल्लस्मरणात् । अत्र व्रतग्रहणात्पूर्ववाक्येऽपि कन्योद्वहनं व्रतोपलक्षणम् । प्रतिप्रसवतदपवादयोस्तुल्यविषयत्वान्यथानुपपत्तेः । देशविशेषेणापि व्यतिरेकमुखेन प्रतिप्रसवमाह—

लल्लः,

गोदावर्य्युत्तरतो यावद्भागारथीतटं याम्यम् ।
तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये ॥

विवाह इति व्रतबन्धस्याप्युपलक्षणम् ।

भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ।
विवाहो व्रतबन्धो वा सिंहस्थेज्ये न दुष्यति ॥

इति वासिष्ठेन गङ्गागोदान्तरालातिरिक्तदेशे विवाहव्रतबन्धयोरभ्यनुज्ञानात् । एतेन—

विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु ।

इति वासिष्ठं वाक्यान्तरमपि व्याख्यातम् । विवाहस्य व्रतोपलक्षणत्वात् । इतरत्र गोदागङ्गान्तराले । न गङ्गोत्तरे । तत्र पूर्ववाक्येन विधानात् ।

तथा च गर्गः,

भागीरथ्युत्तरे कूले गोदावर्य्याश्च दक्षिणे ।
व्रतोद्वाहादिकर्माणि सिंहस्थेऽपि न दुष्यति ॥

कुर्वन्निति शेषः । सिंहस्थेज्ये इत्यत्र मघाव्यतिरिक्तसिंहस्थे इति ध्येयम् । मघासंस्थे—

गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ ।
मघासंस्थे सर्वदेशे तथा मीनगते रवौ ॥

इति पराशरेण सर्वदेशेषु निषेधात् । यत्तु—

सिंहस्थिते सिंहनवांशके वा गोदावरीदक्षिणकूलजातैः ।
उद्वाहकालात्ययदोषभीतैः कार्यो विवाहश्च्यवनो ब्रवीति ॥

इति वाक्येन गोदादक्षिणस्थितानामुद्वाहकालात्ययेऽप्यनुद्वाहप्रसङ्गेन गोदादक्षिणस्थत्वविशेषणानर्थक्येन दक्षिणदेशविवाहकालात्ययरूपनिमित्तद्वयपरमेव वाच्यम् । यच्च—

कण्ठीरवस्थे धिषणे विवाहं कुर्यान्न यात्रां व्रतबन्धदीक्षाम् ।
गोदावरीमुत्तरतो हि दोषा गोदावरीदक्षिणतो न सन्ति ॥

इति गौतमवाक्ये सामान्यतो गोदावरीमुत्तरत इत्युक्तं, तद् गोदागङ्गान्तरालविषयं द्रष्टव्यम् । गोदाभागीरथीमध्यइति पराशरस्मरणात् । यद्यपि—

व्रतबन्धप्रतिष्ठां विवाहमन्दिरप्रवेशं च ।
यात्रां च याम्यदेशे कुर्यादार्ये न सिंहांशे ॥

इति देवलेन याम्यदेशे इति सामान्यतोऽभिहितं, तदपि भागीरथ्या याम्ये इति द्रष्टव्यम् । एतेन याम्यदेशे यात्रामित्यन्वयो निरस्तः । राजमार्त्तण्डोऽपि निमित्तविशेषेण देशविशेषे व्यतिरेकमुखेन प्रतिप्रसवमाह,

सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः ।
नर्मदोत्तरकूले तु न दोषो दक्षिणामुखे ॥
सिंहे सिंहांशगे जीवे कलिङ्गे गौडगुर्जरे ।
कालमूर्त्तिरयं योगो दम्पत्योर्निधनप्रदः ॥

तुशब्दोऽवधारणे । तेन नर्मदोत्तरकूले एव दोषो न दक्षिणामुखे इत्यर्थः ।

विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु ।

इति वसिष्ठस्मरणात् । अनेन नर्मदोत्तरकूलएव न दोष इत्य-

न्वयभ्रमो निरस्तः। तस्य गङ्गागोदान्तरालदेशत्वेन सर्वविषयनिषेधविषयत्वात्। गौतमीयदक्षिणकूले विधानाच्च। एतावान्परं विशेषो यदत्र नर्मदोपादानं, वासिष्ठे गोदोपादानमिति। दक्षिणकूलत्वं त्वविशिष्टम्। सिंहे सिंहांशगे इति सिंहराश्यन्तर्गतसिंहांशे इति द्रष्टव्यम्। सिंहराशौ तु सिंहांशे इति पूर्ववाक्ये वैशिष्ट्याभिधानात्।

यत्तु—

न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपि वा।

इति विकल्पाभिधानं, तद् राश्यन्तर्गतासिंहांशकाभिप्रायेण। अन्यथा सिंहराशिस्थनिषेधे विकल्पानुपपत्तेः। एतेन—

सिंहस्थिते देवगुरौ विवाहं नेच्छन्ति यात्रामुपनायनं वा।
कलिङ्गवङ्गेष्वथ मागधेषु दोषः प्रयुक्तो न तथाऽन्यदेशे॥

इत्यगस्त्यवाक्यस्थं सिंहस्थिते इति पदं सिंहांशकपरं वेदितव्यम्। सिंहसिंहांशगस्यैव कलिङ्गादौ निषेधात्। कालविशेषेणापि प्रतिप्रसवमाह—

**वसिष्ठः,**

पाणेस्तु ग्रहणं कार्यं सिंहस्थो वाक्पतिर्यदा।
भानौ मेषगते शस्तमित्याहुः शौनकादयः॥
सिंहगते सुरमन्त्रिणि कन्या मेषगते तपने परिणीता।
भूषणरत्नयुता च सुशीला सत्यवती सुतकीर्त्तिसमेता॥
सिंहेऽपि भगदैवत्ये गुरौ पुत्रवती भवेत्।
अत्यन्तं सुभगा साध्वी धनधान्यसमन्विता॥ इति।

**मौञ्जीपटले,**

जन्मभादष्टगे सिंहे नीचस्थे शत्रुभे गुरौ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ॥ इति।

## अथ मकरस्थनिर्णयः।

देवीपुराणे,

यथा सिंहस्थिते जीवे तथैव मकरस्थिते ।
देवागारतडागादिव्रतोद्यानगृहाणि च ॥
विवाहादि महाभाग महाभयकरम्भवेत् ।

मकरस्थे इति मकरे मकरांशस्थे इति व्याख्येयम् ।

तथाच व्यवहारचण्डेश्वरः,

नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु ।
नीचांशकगतस्त्याज्यो यस्मादंशेषु नीचता ॥

अत एव वामनपुराणे,

वापीकूपतडागादि निषिद्धं सिंहगे गुरौ ।
मकरस्थे तु तत्कार्यं न दोषः काललोपतः ॥

इति मकरांशव्यतिरिक्तमकरस्थे एव दोषाभावकीर्त्तनं पर्यवस्यति । काललोपः कालदौष्ट्यम् ।

स्कन्दपुराणेपि,

सिंहस्थिते गुरौ राजन् विवाहादि न कारयेत् ।
मकरस्थे तु कर्त्तव्यं यदीच्छेदात्मनः शुभम् ॥

गरुडपुराणेऽपि,

यदि सिंहगतो जीवो नैव कल्याणमाचरेत् ।
मकरस्थे तु कर्त्तव्यं नात्र कार्या विचारणा ॥ इति ।

एतदपि वाक्यद्वयं पूर्वेण व्याख्यातम् । निषेधस्य मकरांशविषयत्वात् । देशविशेषेण प्रतिप्रसवमाह—

लल्लः,

नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डक्याः पश्चिमे भागे मकरस्थो न दोषभाक् ॥

यत्तु दैवज्ञमनोहरेणाभिहितं,

मगधे गौडदेशे च सिन्धुदेशे च कोङ्कणे ।
व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ ॥ इति,

तद् दोषगौरवाभिप्रायेण । अन्यथा सामान्यनिषेधेनैव सिद्धौ विशेषनिषेधानर्थक्यापत्तेः । उपसंहारपक्षे सामान्यनिषेधाप्रवृत्त्या प्रतिप्रसवासङ्गतेश्च ।

अथ कन्यावरणम् ।

तत्र नारदः,

पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते ।
विवाहभस्योदये वा कन्यावरणमाचरेत् ॥
भूषणैः फलताम्बूलगन्धपुष्पाक्षतादिभिः ।
शुक्लाम्बरैर्गीतवाद्यैर्विप्राशीर्वचनैस्सह ॥
गच्छेच्च कन्यकागेहं वरः प्रणयपूर्वकम् ।
तदा कुर्यात्पिता तस्याः प्रदानं प्रीतिपूर्वकम् ॥ इति ।
कुलशीलवयोरूपवृत्तविद्यायुताय च ।
वराय रूपसंयुक्तां कन्यां दद्याद्यवीयसीम् ॥
संपूज्य प्रार्थयित्वा च शचीं देवीं गुणाश्रयम् ।
त्रैलोक्यवल्लभां दिव्यगन्धमाल्याम्बरान्विताम् ॥
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।
अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ॥
विलासिनीसहस्रोघैः सेव्यमानामहर्निशम् ।
एवंविधां कुमारीं तां पूजान्ते प्रार्थयेदिति ॥
देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहभाग्यमारोग्यं पुत्रलाभञ्च देहि मे ॥ इति ।
वरस्यापि वरणं चण्डेश्वरेणोक्तम्,
उपवीतं फलं पुष्पं वासांसि विविधानि च ।

देयं वराय वरणे कन्याभ्रात्रा द्विजेन च ॥ इति।

## अथ प्रसङ्गात्प्रातिकूलनिर्णयः।

तत्र वृद्धगार्ग्यः,

वधूवरार्थे घटिते सुनिश्चिते वरस्य पक्षे त्वथ कन्यकायाः।
मृतिर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः॥

घटिते घटने कर्त्तव्यतया निश्चिते सतीत्यर्थः।

तथा,

कृते वाङ्निश्चये पश्चान्मरणं यस्य कस्य चित्।
न तत्र मङ्गलं शस्तं नारीवैधव्यशङ्कया॥ इति।

अत्र यद्यपि कस्याचिदित्यविशेषेणोक्तं तथापि—

वाङ्निश्चये कृते यत्र सपिण्डानां मृतिर्भवेत्।
प्रतिकूलं सपिण्डेषु नान्येषामिति गोभिलः॥

इति स्मरणेन सपिण्डमरणस्यैव प्रतिकूलत्वम्। अत्र वाङ्निश्चयग्रहणं मानसनिश्चयस्याप्युपलक्षणम्।

वाचया मनसा वापि वरणं निश्चितं भवेत्।
कथं तत्र प्रकर्त्तव्यं वद सत्यवतीसुत॥

इति पृष्टे व्यासः,

साधु पृष्टं त्वया विप्र कर्त्तव्यं शान्तिकं नरैः।
त्रयोदशदिनादूर्ध्वं तद्भवेद्विधिपूर्वकम्॥

इति वाक्येन वाचिके मानसेऽपि वरणे शान्तिकर्मोपदेशात्।

तद्विधिमाह व्यासः,

यमायेतिं च मन्त्रेण हवनं तिलसर्पिषा।
प्रमाणं चायुतं तत्र कृष्णा गौर्दक्षिणा भवेत्॥
जपहोमौ प्रकर्त्तव्यौ प्रीत्यै मृदुगणेशयोः।

अयुतं वा तदर्धं वा शक्त्या च हवनं भवेत् ॥
पूर्णाहुत्यभिषेकादि कृत्वा ब्राह्मणभोजनम् ।
एवं यः कुरुते लोके पुत्रपौत्रयुतो भवेत् ॥ इति ।

वाग्दानानन्तरं तु निषेधमाह—

**माण्डव्यः,**

वाग्दानानन्तरं माता पिता वापि विपद्यते ।
विवाहो नैव कर्त्तव्यः स्ववंशहितमिच्छता ॥

**वृद्धवसिष्ठोऽपि,**

वरवध्वोः पिता माता पितृव्यश्च सहोदरः ।
एतेषां प्रतिकूलं चेन्महाविघ्नप्रदं भवेत् ॥

**शौनकोऽपि,**

पिता पितामहश्चैव माता चैव पितामही ।
पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता ॥
एतैरेव विपन्नैस्तु प्रतिकूलं तु वै स्मृतम् ।
अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेदिति ॥

भ्राताऽत्र एकोदर उपनीतश्च विवक्षितः । पितृव्यपुत्रस्य पृथङ्निर्देशात् ।

दम्पत्योः पितरौ भ्राता चोपनीतः सहोदरः ।

इति वाक्यान्तराच्च । उक्तस्यापि निषेधस्य कालविशेषेण व्यवस्थोक्ता मेधातिथिरत्नावलीभ्याम् ।

पितुरब्दं महाशौचं तदर्धं मातुरेवच ।
मासत्रयं तु भार्यायाः तदर्धं भ्रातृपुत्रयोः ॥
अन्येषां तु सपिण्डानामाशौचं माससंमितम् ।
तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते ॥ इति ।

यत्तु ज्योतिःप्रकाशवचनम्,

प्रतिकूलेऽपि कर्त्तव्यो विवाहो मासतः परम् ।
शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः ॥
इति, तत् पित्रादिभिन्नसपिण्डमात्रप्रतिकूलविषयम् ।
प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ।
विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥
इति स्मृतिरत्नावल्यां मासानन्तरं विवाहविधानात् । अन्येषां तु सपिण्डानामिति वचनेन तेषां मासपरिमितमहाशौचविधानाच्च ।

यदपि वचनम्,
प्रतिकूले न कर्त्तव्यं लग्नं यावदृतुत्रयम् ॥ इति,
तदपि मातृप्रतिकूलविषयम् । तदर्धं मातुरेवचेत्यनेन तस्या एव ऋतुत्रयं महाशौचविधानात् ।

यदपि मेधातिथिवचनम्,
वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥
इति, तत् पितृप्रतिकूलविषयम् । तस्यैव संवत्सरं महाशौचोक्तेः । तदेतत्प्रातिकूल्यं पुरुषत्रयपर्यन्तं चतुःपुरुषपर्यन्तं वा ।

तथाच मेधातिथिः,
पुरुषत्रयपर्यन्तं प्रतिकूलं सगोत्रिणाम् ।
प्रवेशान्निर्गमस्तद्वत्तथा मुण्डनमण्डने ॥
प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥ इति ।

विशेषान्तरमाह गर्गः,
ज्वरस्योत्पादनं यस्य शुभं तस्य न कारयेत् ।
दोषनिर्गमनात्पश्चात्स्वस्थः कर्म समाचरेत् ॥
हर्म्यदाहे मृते चैव विवाहं यः करोति च ।

तयोरेकं विनश्येत मनुः स्वायंभुवोऽब्रवीत् ॥
नान्दीमुखे कृते पश्चात् गृहदाहो भवेद्यदि ।
पाणिग्रहो न कर्त्तव्यो नारीवैधव्यदो यतः ॥
केचिदूचुर्गृहस्थस्य दारुणः कस्यचिज्ज्वरः ।
तावन्मङ्गलकार्यं च न कार्यं निश्चितं बुधैः ॥ इति ।

पूर्वं तदन्ते शान्तिकं कृत्वेत्यनेन प्रतिकूले जाते शान्तिकं कार्यमित्युक्तम् । तद्विधानमाह—

शौनकः,

पुण्येऽह्नि विप्रकथिते कृत्वा पुण्याहवाचनम् ।
नान्दीश्राद्धे कृते पश्चाद् द्विजांश्चैव प्रपूजयेत् ॥
सौवर्णान्कारयेद्देवान्यथावयवनिर्मितान् ।
पूजयेत्प्रयतो देवान् क्षीरादिस्नपनं ततः ॥
श्रियं शक्तिं शिवं विष्णुं मृत्युं चैव विशेषतः ।
श्रीसूक्तेन श्रियं विष्णुमिदंविष्णुतृचेन च ॥
गौरीर्मिमायेति शिवां त्र्यम्बकेति महेश्वरम् ।
परंमृत्योरस्तुमन्त्रेण मृत्युं संपूजयेत्ततः ।
शिवां शक्तिम् ।
गन्धमाल्यादिवस्त्रैश्च उपचारान्समर्पयेत् ।
अथाज्यभागपर्यन्तं कृत्वा उल्लेखनात्ततः ॥
दूर्वातिलाज्यचरुभिः समिद्भिश्च शताष्टकम् ।
प्रत्येकं जुहुयात्तत्र कृत्वा पूर्णाहुतिं ततः ॥
होमान्ते दक्षिणां दद्याद्गां सवत्सां पयस्विनीम् ।
दक्षिणां च यथाशक्त्या अभिषेकं च कारयेत् ॥
शतानां पञ्चसंख्यातमेकैकस्य यथाविधि ।
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ॥

एवं यः कुरुते शान्तिं वंशस्तस्य विवर्धते। इति।

इयं च शान्तिः कन्यापित्रा कार्या। वरपित्रा तु—

उद्वहेद्यदि वाग्दत्तां प्रातिकूल्येऽपि यः पुमान्।

स याति नरकं घोरं कुले वाऽप्यशुभं भवेत्॥

इति संवर्त्तवचनेन परिणयने दोषश्रवणात्।

अकृत्वा शान्तिकं यस्तु निषेधे सति दारुणे।

यः करोति शुभङ्कर्याद्विघ्नं तस्य पदेपदे॥

इति शान्तिं विना निषेधात्, स्नुषायै सुखं वर्द्धतामिति मन्त्रलिङ्गाच्च वृद्धवसिष्ठोक्ता शान्तिः कर्त्तव्या।

तथाच स एव,

प्रतिकूलेऽपि संजाते विवाहं नैव कारयेत्।

अन्ते दोषविनाशाय कुर्याच्छान्तिमिमां शुभाम्॥

श्रिये जात इति श्रियम्, इदंविष्णुरिति विष्णुं, गौरीर्मिमायेति गौरीं, त्र्यम्बकमिति त्र्यम्बकं, परंमृत्योरिति यमं पूजयित्वा तिलाज्यमष्टोत्तरशतं जुहुयात्। भूस्त्वादिर्मृत्युर्नश्यतात् स्नुषायै सुखं वर्द्धताम्।

ततो होमशेषं समाप्य गोद्वयं दक्षिणां दद्यादिति। दुर्भिक्षादावानुकूल्यप्रतीक्षा नास्तीत्युक्तं—

ज्योतिःसागरे,

दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये।

प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते॥ इति।

तथा दीर्घरोगाद्यभिभूतादिमरणे प्रातिकूल्यं नास्ति।

तदुक्तं शौनकेन,

दीर्घरोगाभिभूतस्य दूरदेशे स्थितस्य वा।

उदासवर्त्तिनश्चैव प्रतिकूलं न विद्यते॥ इति।

एतादृशे विषये प्रतिकूले जाते याज्ञवल्क्योक्तां विनायकशान्तिं कृत्वा विवाहादि कुर्यात् ।

तदुक्तं तेनैव,

सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥ इति ।

अथ विवाहादौ आरम्भात्प्राक् सूतकादावुपस्थिते तदतीत्य शुद्धः सन्कुर्यात् । सन्निहितलग्नान्तरस्याभावे कन्यायास्त्वधार्यत्वे-

विष्णुराह,

अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद् घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥

तथा,

सङ्कटे समनुप्राप्ते सूतके समुपागते ।
कूष्माण्डीभिर्घृतं हुत्वा गां च दत्त्वा पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् । इति ।

कूष्माण्डैः कूष्माण्डसंज्ञकैर्यद्देवादेवहेडनमित्यादिभिः । आरम्भोत्तरं तु आशौचपाते आरब्धत्वात्सद्यः शुद्धिरिति । तदुक्तं-

स्मृतिचन्द्रिकायां याज्ञवल्क्येन,

ऋत्विजां दीक्षितानां च याज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ।
आपद्यपिच कष्टायां सद्यः शौचं विधीयते ॥ इति ।

तथा,

विवाहयज्ञयोर्मध्ये अन्तरा मृतसूतके ।
पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥ इति ।

आरम्भोऽत्र नान्दीश्राद्धमेव ।

आरम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

इति सङ्ग्रहोक्तेः । यदि तु बलवत्यनुपपत्तिस्तदाऽशौचसम्भावनायां पूर्वमपि नान्दीमुखं कर्त्तव्यमित्युक्तं—

तत्रैव,

भाव्यं तु सूतकं ज्ञात्वा मातॄणां पूजनं भवेत् ।
सूतकं न विशेत्तत्र मातरो यत्र पूजिताः ॥ इति ।

तस्य च कियद्दिनं पूर्वमनुष्ठानमित्यपेक्षायां तत्रैवोक्तम्,

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
पञ्चोपनयने चैव चौले चैव त्रिरात्रकम् ॥ इति ।

वधूवरयोरन्यतरजनन्याः रजोदर्शने निर्णयः शान्तिकं च चौलप्रकरणे पूर्वोक्तमिति नेहोच्यते ।

विशेषस्तु माधवीये,

आरम्भात्प्राक् विवाहस्य माता यदि रजस्वला ।
निवृत्तिस्तत्र कर्त्तव्या सहत्वश्रुतिचोदनात् ॥ इति ।

## अथ मण्डपनिर्माणविधिः ।

तत्र वसिष्ठः,

षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥ इति ।
अष्टहस्तं तु रचयेन्मण्डपं वा द्विषट्करम् । इति ।

द्विषट्करं द्वादशकरम् ।

सप्तर्षिमते विवाहपटले,

मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः ।
कार्यः षोडशहस्तो वा दृन्यूनहस्तो दशावधिः ॥
स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता ।

द्वारादिदेहलीविद्धा कूपवृक्षव्यधा तथा ॥
न कार्या वेदिका तज्ज्ञैः कार्या मङ्गलकर्मणि ।

**विवाहवृन्दावने,**

वेदिकां विरचयेद्यथा तथा स्यादियं प्रविशतस्तु दक्षिणे ।
स्युर्जनाश्रययवोप्तिवर्णकाः षण्णवत्रिदिवसेषु नाग्रतः ॥

## अथ वैवाहिककर्मकालः ।

**तत्र वात्स्यः,**

कण्डनदलनप्रवारकमण्डपमृद्वेदिवर्णकाद्यखिलम् ।
तत्सम्बन्धि गतागतमृक्षे वैवाहिके कुर्यात् ॥

**तथा,**

वैवाहिके तु दिवसे ऽशुभे वाथ तिथौ शुभे ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

**दैवज्ञमनोहरः,**

चित्रा विशाखा शततारकाऽश्विनी ज्येष्ठा भरण्यौ शिवभाच्चतुष्टयम् ।
हित्वा प्रशस्तं फलतैलवेदिकाप्रदानकं कण्डनमण्डपादिकम् ॥ इति ।

## अथ वेदिनिर्माणविधिः ।

**तत्र नारदः,**

हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनि ॥
समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम् ।
प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः ॥
विचित्रेणाङ्कितां कुम्भैर्विहितैस्तोरणाङ्कुरैः ।
भृङ्गारपुष्पनिकरैर्वर्णकैः समलङ्कृताम् ॥
विप्राशीर्वचनैः पुण्यस्त्रीभिर्दीपैर्मनोरमाम् ।
वादित्रनृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम् ॥

एवंविधामारुरुक्षेन्मिथुनं साग्निवेदिकाम् । इति ।

वसिष्ठः,

तुल्यां समन्ताद् गृहवामभागे हस्तोच्छ्रितामुक्तशुभांशयुक्ताम् ।
समण्डपां प्राक्प्रवणामुदग्वा सोपानरम्यां निविडां ककुप्सु ॥

वराहः,

विस्तीर्णतो हस्तचतुष्टयेन हस्तोच्छ्रितां मन्दिरवामभागे ।
स्तम्भैश्चतुर्भिः कृतनिश्चलाङ्गीं वेदिं विवाहे प्रवदन्ति तज्ज्ञाः ॥

हस्तपरिमाणं तु कन्याया एव ।

कन्याहस्तैः सप्तभिः पञ्चभिर्वा वेदी कार्या कूर्मपृष्ठोन्नतांसा ।

इति ग्रन्थान्तरोक्तेः ।

## अथ वरस्य कन्यागृहगमनविधिः ।

तत्र शौनकः,

पुण्ये मुहूर्त्ते कुर्वीत विवाहं विधिवद् द्विजः ।
तत्राभ्युदयिकं श्राद्धं कुर्यात्स्वस्ति च वाचयेत् ॥
अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः ।
भूषितो गन्धमाल्याद्यैर्वन्दिताभीष्टदेवतः ॥
ब्राह्मणान् भोजयित्वा तैः कृतपुण्याहवाचनः ।
कृतकौतुकबन्धश्च मित्रबान्धवसंयुतः ॥
यानं यथार्हमारुह्य यातव्यं च वधूगृहम् ।
तस्य द्वाराद् बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ॥
प्रदीपपूर्णकुम्भादिपाणिभिर्वनिताजनैः ।
कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः ॥ इति ।

ब्रह्मपुराणेऽपि,

पूर्वेद्युः स्वस्तिवचननान्दीश्राद्धसमन्वितः ।
अपरेद्युः कृतस्नानोऽहतवस्त्रधरो वरः ॥

भुक्त्वा निश्यह्नि पूर्वाह्ने उद्वहेन्निशि सर्वदा ।
भूषणैः फलताम्बूलैर्गन्धपुष्पाक्षतादिभिः ॥
शुक्लाम्बरधरैर्वाद्यैर्विप्राशीर्वचनैस्सह ।
गच्छेच्च कन्यकागेहं वरश्च स्त्रीपुरस्सरम् ॥ इति ।

अथ वरयानानि ।

तत्र हिरण्यकेशी,
आनयन्त्यस्मै रथमश्वं हस्तिनं वेति ।
आनयन्ति कन्यापित्रादयः ।

अथ वधूवरयोर्भोजननिर्णयः ।

तत्र व्यासः,
भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥ इति ।
बौधायनोऽपि,
स्रग्वी भुक्तवान् प्रतोदपाणिरपदातिर्गत्वा वधूज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां दत्तां वधूं समीक्षते इति ।

अथ मधुपर्कविधिः ।

तत्र विश्वामित्रः,
सम्पूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ।
अपूज्य कारयन्कर्म किल्बिषेणैव युज्यते ॥ इति ।
ऋत्विज इति वैवाह्यादीनामुपलक्षणम् ।
तथाच जाबालः,
वैवाह्यमृत्विजं चैव श्रोत्रियं गृहमागतम् ।
अर्हयेन्मधुपर्केण स्नातकं प्रियमेव च ॥ इति ।

याज्ञवल्क्योऽपि,

प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः।
प्रियो वैवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः॥ इति।

स्नातकादयः प्रियान्ताः संवत्सरानन्तरम् अर्घ्याः मधुपर्केणार्च्चनीयाः। वैवाह्यो विवाहाङ्गतया। ऋत्विजस्तु संवत्सराभ्यन्तरेऽपि प्रतियज्ञमर्हणीयाः।

आश्वलायनोऽपि, ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाचार्याय श्वशुरपितृव्यमातुलानां चेति।

पारस्करोऽपि, षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति प्रतिसंवत्सरानर्हयेयुर्यक्ष्यमाणास्त्वृत्विज इति।

तत्रोपस्करानाह आश्वलायनः, विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्तइति।

पारस्करोऽपि, विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येनान्यस्त्रिस्त्रिः प्राहेति। तत्र विष्टरलक्षणम्—

परिशिष्टे,

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः।
पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः॥
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः।
दक्षिणावर्तको ब्रह्मा वामावर्त्तस्तु विष्टरः॥ इति।

पञ्चाशता कुशपिञ्जूलैरित्यर्थः। ऊर्ध्वकेश ऊर्ध्वाग्रः। लम्बकेशास्तिर्यगग्रः। दक्षिणावर्त्तको, ग्रन्थिरिति शेषः। एवं विष्टरेऽपि ज्ञेयम्। पाद्यं पादप्रक्षालनार्थं जलम्। तेन च पादौ प्रक्षालयेद्वरस्य कन्यादाता। पादौ प्रक्षालयतीति दातृपरामर्शात्। दक्षिणमग्रे ब्राह्मणायायच्छत्सव्यं शूद्रायेति लिङ्गाच्च। शूद्रस्य पादप-

क्षालनकर्तृत्वं चाह—

हिरण्यकेशी, अथास्मै पाद्यमिति प्राह तेनास्य शूद्रः शूद्रा वा पादौ प्रक्षालयति सव्यमग्रे ब्राह्मणस्य दक्षिणमितरयोरिति। इतरयोः क्षत्रियवैश्ययोः। अनेन सव्यं पादं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणमिति पारस्करवाक्यमपि व्याख्यातम्। अर्घं हस्तप्रक्षालनार्थं जलम्। आचमनीयम्। आचमनार्थं जलम्। पृथक्पृथग्निर्देशात् तेषां गम्यते। मधुपर्को मधुसंपृक्तं दधि।

कांस्येन कांस्येऽपिहितं दधि मध्वाज्यसंयुतम्।
मधुपर्कमिति प्राहुर्याज्ञिका यज्ञकर्मणि॥

इति परिशिष्टात्। आज्यग्रहणं मध्वलाभे। दधनि मध्वानीय सर्पिर्वा मध्वलाभइत्याश्वलायनस्मरणात्। त्रितयमपि समुच्चितमिति हिरण्यकेशिनः।

तथाच तत्सूत्रम्,

अथास्मा आवसथं कल्पयित्वाऽर्घ इति प्राह कुरुतेति प्रत्याह कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा, दधि मधु घृतमिति त्रिवृत्, दधि मधुघृतमापः सक्तव इति पाङ्क्तः, कांस्ये मध्वानीय दध्यानयति। ह्रसीयस्यानीय वर्षीयसा पिधायानूचीनानि पृथगादापयति। कूर्चं पाद्यमर्घ्यमाचनीयं मधुपर्क इत्यन्वङ्गमनुसंव्राजितासोऽनुपांशुचया वा चैकैकं प्राह कूर्चमिति कूर्चं तस्मिन्प्राङ्मुख उपविशतीति।

आवसथोऽर्चागृहम्। ह्रसीयसि स्वल्पपरिमाणे। वर्षीयसा बृहत्परिमाणेन। अनूचीनानि कूर्चादीनि वस्त्वन्तराणि। आदापयति अन्यैर्ग्राहयति। अन्वङ्गम् अङ्गानां कूर्चादीनामनु पश्चात्। अनुसंव्राजितासो गतान् गृहीतकूर्चादीन्पुरुषान्स्वयमनुगच्छेदित्यर्थः। अनुपांश्वया अनुपांशुकृतया वाचा। एकैकं कूर्चादि।

अथ गोलक्षणम्। तत्र हिरण्यकेशी,

अथास्मै गौरिति प्राह तस्याः कर्मोत्सर्गो वा गौर्धेनुर्भव्येति । अनेनाचान्तोदकाय गां वेदयन्तइत्याश्वलायनादिसूत्रस्थमपि गोपदं धेनुपरतया व्याख्यातम् । स्त्रीत्वस्य तस्या इत्युदाहृतसूत्रात् माता रुद्राणामित्यादिमन्त्रलिङ्गाच्च स्वत एव सिद्धत्वात् । तस्याश्चालम्भनमुत्सर्गो वा । आलम्भनं तु निषिद्धम्—

आदित्यपुराणे,

कन्यायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥ इति ।

धर्मज्ञसमयेऽपि,

वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । इति ।

वराय गन्धमाल्यादिकमपि देयमित्युक्तम्—

भगवता शौनकेन,

दाताऽथ गन्धमाल्याद्यैर्विधितोऽभ्यर्च्चयेद्वरम् ।
पश्चात्तेन सहायातान् तद्बन्धूनपि पूजयेत् ॥ इति ।

आदिशब्दाद् भूषणमपि देयम् ।

तथाच कारिका,

गन्धमाल्याम्बरैस्तद्वद् भूषणैः पूजयेद्वरम् । इति ।

भूषणैः कुण्डलमुद्रिकादिभिः । यज्ञोपवीतमपि शिष्टाचाराद् द्वयम् । अयं च मधुपर्को वरशाखानुसारेणैव कर्त्तव्यः । तथाच गृह्यपरिशिष्टान्तरम् ।

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।
मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि ॥ इति ।

वर इत्यर्हणीयमात्रोपलक्षणम् । मधुपर्काम्नानात् । स चर्त्विजो यच्छाखीयमार्त्विज्यं तच्छाखीयगृह्यानुसारेण कार्यः । आर्त्विज्यशाखीयमधुपर्कसंस्कृतस्यैव तत्तदार्त्विज्याधिकारात् । तत्त-

च्छाखीयोपनयनसंस्कृतस्यैव तत्तच्छाखाध्ययनाधिकारवत् ।

## अथ कन्यादातृनिर्णयः,

तत्र नारदः,

पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमतेः पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥
यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् । इति ।

याज्ञवल्क्योऽपि,

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ । इति ।

प्रकृतिस्थोऽविक्षिप्तचित्तः । विक्षिप्तचित्ततया तु पित्रादिनाऽपि कृतमकृतमेव ।

यथाह नारदः,

स्वतन्त्रोऽपि हि यः कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥ इति ।

अत्रानधिकारिणा कृते दाने कन्यां प्रत्याहृत्याधिकारी पुनस्तस्मा एव दद्यादिति मदनः ।

विष्णुः,

पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति । कन्याप्रदः पूर्वपूर्वाभावे प्रकृतिस्थः परः पर इति ।

कात्यायनः,

स्वयमेवौरसीं दद्यात्पिता ऽभावे स्वबान्धवाः ।
मातामहस्ततोऽन्यां हि माता वा धर्मजां सुताम् ॥

बान्धवाः स्वसपिण्डाः ।
सपिण्डाश्च सनाभयः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥

इति त्रिकाण्डीस्मरणात् । कल्पतरुस्तु बन्धुशब्देन स्मृत्यन्तरोक्तान्पितृष्वसृसुतादीन् व्याचष्टे । अन्याम् अनौरसीम् । धर्मजां नियोगोत्पादिताम् । अभावोऽत्रासान्निध्यमसामर्थ्यं च लक्षयति ।

तथाच स एव,
दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु ।
माता तु समये दद्यादौरसामपि कन्यकाम् ॥ इति ।
पौगण्डो व्यवहारासमर्थः । समये कन्यादानोचितकाले ।

## अथ कन्यानिरीक्षणविधिः ।

तत्राश्वलायनकारिका,
स्नातालंकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः ।
ईक्षेत तण्डुलस्थाया वरस्तस्य मुखं च सा ॥
मुहूर्त्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः ।
सगुडान् जीरकान् कन्या वरयेदथ तां वरः ॥
अस्यामुकगोत्रस्य पुत्रः पौत्रः प्रपौत्रकः ।
एतद्गोत्रामिमामस्य पुत्रीं पौत्रीं च नप्त्रिकाम् ॥
वृणेऽहं कन्यकां साध्वीं श्रीरूपामित्यतः परम् ।
वरेणैवं वृतां कन्यां तत्पिता प्रददाति ताम् ॥ इति ।

## अथ कन्यादानविधिः ।

तत्राश्वलायनः,
अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्तु समानं तद्वक्ष्याम इति ।
उच्चावचधर्मानाह शौनकः,

नानाविधा जानपदा ग्राम्याश्चोद्वाहकर्मणि ।
क्रियन्ते लौकिका धर्मास्तेषु स्वकुलपूरुषैः ॥
पूर्वैरनुष्ठितान्कृत्वा कुर्याद्दारपरिग्रहम् ।
सर्वसाधारणं कर्म यत्तु तावदिहोच्यते ॥
तत्र प्रदेशे कस्मिंश्चिद् बन्धुभिः परिकल्पिते ।
विष्टरे प्राङ्मुखः सम्यगासित्वा चरणौ स्वयम् ॥
प्रक्षाल्याचम्य च कृतप्राणायामः समाहितः ।
उपलिप्य ततोल्लिख्य स्थण्डिलेऽग्निं निधाय च ॥
पश्चादग्नेः प्रतिष्ठाप्य पेषणीमश्मनिर्मिताम् ।
प्रागुत्तरेऽग्नेः संस्थाप्य पूर्णकुम्भमथो वरः ॥
उत्थाय प्राङ्मुखः स्थित्वा प्रत्यगुत्तरतोऽनलात् ।
तदानीमात्मना दत्तं नूतनं वसनद्वयम् ॥
वसित्वाऽऽचान्तसलिलां भूषितां कुसुमादिभिः ।
प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमीपतः ॥
कन्यकां प्रतिगृह्णीत दत्तां पित्रादिभिर्वरः ।
कन्यादानप्रकारश्च पूर्वाचरित उच्यते ॥
वरस्याभिमुखः स्थित्वा कन्यायाः प्रतिपादकः ।
चतुर्थ्यन्तं वरस्योक्त्का नाम तद्गोत्रपूर्वकम् ॥
ततस्सहत्वकर्मभ्य इत्युच्चार्य ततः परम् ।
वरस्य हस्तेऽपो दद्याद्देवतीर्थेन शान्तधीः ॥
तद्यथा गार्ग्यगोत्राय परमेश्वरशर्मणे ।
आत्रेयगोत्रप्रभवां पार्वतीं प्रददाम्यहम् ॥
कन्यां सहत्वकर्मभ्यः करोति प्रतिपादिताम् ।
कन्यकादानकर्मैतमाचरन्ति मनीषिणः ॥
विभवानुगुणं क्षेत्रं सुवर्णरजतादिकम् ।

सर्वं विहितममानुसहोदकम् ।
ततो मङ्गलसूत्रं च ध्यायन्निष्टां च देवताम् ।
बध्वाः कण्ठप्रदेशे स्याद् भूषणानि च शक्तितः ॥ इति ।

गृह्यपरिशिष्टेऽपि,

चतुष्पदे सोत्तरच्छदे हरितदर्भास्तीर्णे भद्रपीठे प्राङ्मुख उपविशेत् । तस्य पुरस्तात्प्राङ्मुखीं भद्रपीठासनां सुस्नातामहतवाससं स्रग्विणीं कन्यां पुरस्कृत्य दाता सामात्य उपविशेद्वरं विधिवदभ्यर्चयेत् । अथ दक्षिणतः पुरोधा उपविश्य मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तैजसमयं पूर्णकलशं निधाय व्रीहियवानोप्य गन्धादिभिरलंकृत्य दूर्वापल्लवैर्मुखमवस्तीर्य अब्लिङ्गाभिर्ऋग्भिरभिमन्त्र्य ताभिरद्भिः प्रयोजयेत् । अथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टं चास्तु दीर्घमायुरस्तु शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसंपदस्त्विति उक्त्वा भार्यादिसमेतः कन्यां प्रगृह्य वत्सगोत्रोऽमुष्य प्रपौत्रीम् अमुष्यपौत्रीम् अमुष्यपुत्रीं सुशीलानाम्नीमिमां कन्यां वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय सुशीलनाम्ने ऽस्मै वराय सम्प्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन्वरस्य पाणौ हिरण्यमवधाय कलशोदकधारामासिञ्चेत् । मनसा प्रजापतिः प्रीयतामिति ब्रूयात् । अथ वरः पुण्याहाशिषो वाचयित्वा दक्षिणेंऽसे कन्यामभिमृश्य क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्विति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयादेवं त्रिः प्रयुज्य पुरोधा दातृवरौ पश्यन् ऋतस्य हि शुधः सन्ति

पूर्वीरिति तिस्रो जपित्वैतद्वः सत्यमृद्धिमदस्त्विति ब्रूयात् ।

अथानयोर्निरीक्षणम्,

स्वलंकृते वेश्मनि मङ्गलगीततूर्यनिर्घोषे पूर्वापरावत्युच्छ्रितौ हस्तान्तरालौ राशी कृत्वा मध्येस्वस्तिकां तिरस्करिणीं धारयेयुरथ पूर्वस्मिन् राशौ प्रत्यङ्मुखीं गुडजीरकपाणिं कन्यां स्थापयेयुरपरस्मिन्प्राङ्मुखं तथाभूतं वरं तौ मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठन्तौ ब्राह्मणाः सूर्य्यसूक्तं पठेयुः पुरन्ध्र्यो मङ्गलगीतीः कुर्युः। अथ तद्विदा काले प्रदिष्टे सद्यस्तिरस्करिणीम् उदगपसार्य कन्यावरौ परस्परस्मिन् गुडजीरकानवकिरतः परस्परं निरीक्षेयाताम् । अभ्रातृघ्नीमिति तामीक्षमाणो जपति अघोरचक्षुरपतिघ्न्येधीति तयेक्ष्यमाणोऽथास्या भ्रुवोर्मध्ये व्याहृतिभिर्दर्भाग्रेण परिमृज्य दर्भं निरस्याप उपस्पृशेदथ ब्राह्मणा बान्धवाः पुरन्ध्र्यस्तावाशीर्भिरभिनन्दयेयुः ।

अथानयोरार्द्राक्षतारोपणं, तैजसेन पात्रेण क्षीरमानीय घृतमासिच्याद्रानक्षततण्डुलानोप्य तथा स्थितयोर्वधूवरयोर्वर्धनकमेतत्कारयेयुः । अमृतं क्षीरमायुर्घृतमरिष्टरक्षता अप एतेषामारोपणमिष्यते । वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विस्तण्डुलानञ्जलिना ऽऽवपति यथा पूर्यते ततो द्विरुपरिष्टादभिघारयेदित्येवं वराञ्जलावन्यस्तण्डुलपूरणं कुर्यादथ दाताऽञ्जलौ हिरण्यमवदधाति । अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेदथ दाता "कन्या तारयतु दक्षिणाः पान्तु बहु देयं चास्तु पुण्यं वर्द्धतां शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्त्विति" उक्त्वा कन्यामुत्क्षिप्य तदञ्जल्यक्षतान् वरमूर्ध्न्यारोपयेत् । वरोऽपि तन्मूर्ध्नि स्वाञ्जल्यक्षतानारोपयेदेवं त्रिः वधूपूर्वम् । वराञ्जलौ वधूस्तण्डुलपूरणं

कुर्यात्तदङ्जलावन्यः । अथ सप्तमं वधूपूर्वमारोपणं कारयेत् । इदानीं दाता वराय गोभूदासीयानशयनमन्नादिकमनुदानं दद्यात् । अथ पुरोधाः कांस्ये ऽप आसिच्यौदुम्बर्याऽऽर्द्रशाखया सपलाशया सहिरण्यपवित्रया सदूर्वापल्लवया निषिञ्चेदाब्लिङ्गाभिर्ऋग्भिः।अथ वधूवरौ स्वशेखरपुष्पं क्षीरघृतेनाप्लाव्य परस्परस्य तिलकं कुरुतः कण्ठे स्रजं चामुञ्चतः कौतुकसूत्रं च करे बध्नीयाताम् । अथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्चपञ्च पूगीफलानि विवाहव्रतरक्षिणं गणाधिपमनुस्मृत्य गणानां त्वा गणपतिं हवामहइत्यातून इन्द्रक्षुमन्तमिति च बध्वोत्तरीयान्तौ च नीललोहितं भवतीति बध्नीयात् । अथ दाता सभार्यो वृद्धाः पुरन्ध्र्यो ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्युरिति । अत्र—

प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमीपतः ।
कन्यकां प्रतिगृह्णीत दत्तां पित्रादिभिर्वरः ॥

इति शौनकेन—

ततः पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत् ।
मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम् ॥

इति ऋष्यश्रृङ्गेण च वरस्य प्रत्यङ्मुखत्वमुक्तम्,

परिशिष्टे तु प्रत्यङ्मुखीं गुडजीरकपाणिं कन्यां स्थापयेयुरपरस्मिन्प्राङ्मुखं तथाभूतं वरमिति वरस्य प्राङ्मुखत्वमुक्तं, तयोर्विरोधे देशाचारतः कुलाचारतो वा व्यवस्थाऽवधेया ।

अथ कन्यादाने पुरुषोच्चारणक्रमः ।

तत्र वृद्धवसिष्ठः,

नान्दीश्राद्धे विवाहे च प्रपितामहपूर्वकम् ।
नाम सङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

ऋष्यश्रृङ्गोऽपि,

वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।
नाम सङ्कीर्त्तयेद्विद्वान्कन्यायाश्चैवमेवहि ॥ इति ।
परिशिष्टेऽप्ययमेव क्रम उदाहृतः । यत्तु—
पुत्रायास्य च पौत्राय नप्त्रे ऽस्यामुकगोत्रिणे ।
अस्मा अमुकगोत्रस्य पुत्री पौऽयस्य नप्त्रिका ॥

इति कारिकायामानुलोम्यक्रमोऽभिहितस्स पूर्वोक्तवृद्धवसिष्ठादिवाक्यविरुद्धत्वान्मूलानुपलब्धेश्च चिन्त्यः । अक्षतारोपणे मन्त्रानाह सङ्ग्रहकृत्,

श्रियो भगो यशश्चैव यज्ञो धर्मः प्रजाश्च षट् ।
समृध्यतामिति वधूर्वरश्चैतान् क्रमाद्वदेत् ॥ इति ।

श्रियः इति वधूः । भग इति वरः । यश इति वधूः । यज्ञ इति वरः । धर्म इति वधूः । प्रजा इति वरः । समृध्यतामित्यन्तान्षण्मन्त्रान्पठेदित्यर्थः ।

तण्डुलराशौ परिमाणमाह यमः, आरुह्य तण्डुलप्रस्थमीक्षेत प्रत्यङ्मुखो वधूमिति ।

अथ कन्यादानमन्त्रौ वायुपुराणे,

कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥
विश्वम्भरः सर्वभूतास्साक्षिण्यः सर्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥ इति ।

अथ वरप्रार्थनामन्त्रौ ऋष्यशृङ्गः,

गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ इति ।

व्यासः,

कन्ये ममाग्रतो भूयाः कन्ये मे देवि पृष्ठतः ।

कन्ये मे सर्वतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥
शय्यादिदानान्याह लिङ्गपुराणम्,
दासीदासासनाद्यं च भूषणानि गृहे ततः।
क्षेत्राणि च धनं चापि तथाऽन्यानि प्रदापयेत् ॥
ऋष्यशृङ्गोऽपि,
भूमिं गां चैव दासीश्च वसनानि स्वशक्तितः।
महिषीर्वाजिनश्चैव दद्यात्स्वर्णमणीनपि ॥
ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत्।
यथाचारं विधेयं च मङ्गल्यं कौतुकानि च ॥ इति।

## अथ कन्यादानफलम्।

तत्र ब्रह्मपुराणं,
कन्यां तु परया भक्त्या ह्यलंकृत्य प्रयत्नतः।
कुलीनाय सुरूपाय गुणज्ञाय विशेषतः ॥
कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः।
लैङ्गे,
कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम्।
यद्दत्त्वा सर्वदानानां फलं प्राप्नोति मानवः ॥
ऋष्यशृङ्गः,
महीदातुश्च गोदातुः कन्यादातुश्च ये तथा।
कन्यादानानुगाः पश्चात्समं यान्ति त्रयो रथाः ॥
अयाचितप्रदातुश्च सत्यवादिन एवच।
नित्यं स्वाध्यायशीलस्य समं यान्ति त्रयो रथाः ॥
मनुः,
अग्निहोत्रादिभिर्यत्स्यादीक्षितब्राह्मणस्य च।
तत्कन्यां विधिवद्दत्त्वा फलमाप्नोति मानवः ॥

स्कान्दे,
वैवाहिकप्रदानं वा यो ददाति तथा परः ।
विमानेन विचित्रेण किङ्किणीजालमालिना ॥
महेन्द्रभवनं याति वीक्ष्यमाणोऽप्सरोगणैः ।
संवर्तः,
अलङ्कृत्य तु यः कन्यां भूषणाच्छादनादिभिः ।
दत्त्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः ॥
कूपदश्चाश्वमेधी च प्राणदाता भयेषु च ।
समं यान्ति रथा एषां त्रयो वै नात्र संशयः ॥
कूपदोऽलङ्कृतकन्यादाता ।
सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूपदः ।
इत्यभिधानात्,
दाने भूषितकन्यायाः कूपो गर्भे महावपि ।
इति वैजयन्तीदर्शनाच्च ।
वह्निपुराणे,
कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम् ।
ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥
तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रितः ।
वर्षान्ते गृह्यते तस्य तिलो राशेस्तु यावता ॥
संक्षयं लभते तावद्ब्रह्मलोकोऽस्य निश्चितम् ।
लैङ्गे,
यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः ।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥
अत्रिः,
वालुकाभिः कृतो राशिर्यावत्सप्तर्षिमण्डलम् ।

गते वर्षसहस्रे तु लवमेकं विशीर्यते ॥
क्षयश्च दृष्टस्तस्यापि कन्यादाने न विद्यते ।
संवर्त्तः,
कन्यकायाः प्रदानेन श्रेयो विन्दति पुष्कलम् ।
सद्भिरित्युच्यते साधुः कीर्त्तिं प्राप्नोति पुष्कलाम् ॥
इतिशब्दः साधुशब्दात्परो बोद्धव्यः ।
तथा,
ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् ।
प्राप्नोति पुरुषीं दत्त्वा होममन्त्रैस्तु संस्कृताम् ॥

पुरुषीं कन्याम् । यद्यपि संस्कृतां दत्त्वेत्यन्वये दानात्संस्कारस्य पूर्वभावित्वं प्रतीयते तथापि मुखं व्यादाय स्वपितीतिवद्दानोत्तरकालत्वमेव संस्कारस्यावगन्तव्यम् । अर्थक्रमस्य बलवत्त्वात् ।

कश्यपः,
अनडुहां सहस्राणां दशानां धुर्यवाहिनाम् ।
सुपात्रे विधिवद्दानं कन्यादानं च तत्समम् ॥
यस्तु सत्येन धर्मेण पिता स्पर्शयते सुताम् ।
स प्रेत्य लभते स्थानं यथा दक्षः प्रजापतिः ॥

सत्येन छलादिराहित्येन धर्मेण धर्मबुद्ध्या स्पर्शयते वरेण ग्राहयतीत्यर्थः ।

बृहस्पतिः,
सहस्रमेव धेनूनां शतं वाऽनडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
तस्मात्सर्वेषु दानेषु कन्यादानं विशिष्यते ॥
आदित्यपुराणे,

श्रुत्वा कन्याप्रदानं तु पितरः सपितामहाः ।
मुक्ता वै सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥
बृहस्पतिदेवलौ,
तिस्रः कन्या यथान्यायं पालयित्वा निवेद्य च ।
न पिता नरकं याति नारी वा स्त्रीप्रसूतिनी ॥
यथान्यायं यथोक्तविधिना । स्त्रीप्रसूतिनी कन्याप्रसूतिनी ।
स्मृत्यन्तरे,
नाग्निहोत्रादिभिस्तस्माद्दक्षणे ब्राह्मणस्य च ।
यत्कन्यां विधिवद्दत्वा फलं प्राप्नोति मानवः ॥
संवर्त्तः,
तां दत्वा च पिता कन्यां भूषणाच्छादनाशनैः ।
पूजयन्स्वर्गमाप्नोति नित्यं वत्सरवृद्धिषु ॥ इति ।
अथ वयोविशेषेण दातुः फलम् ।
तत्र मरीचिः,
गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥ इति ।
गौर्यादिशब्दार्थो यमेन दर्शितः,
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ इति ।
अथ होमादिविधिः ।
तत्र शौनकः
कन्यकां परिगृह्यैनं वरः पूर्ववदासने ।
तत्रैवोपविशेत्पश्चात्तां वधूं मातुलादिकः ॥
स्वजनः परिगृह्याग्रेः उत्तरेण वरस्य तु ।
पश्चिमेन यथा नीत्वा तस्मिन्नेव वरासने ॥

वरस्य दक्षिणे पार्श्वे प्राङ्मुखीमुपवेशयेत् । इत्यादि ।

विशेषान्तरं तत्तत्सूत्रानुसारेण प्रयोगे वक्ष्यते ।

## अथ पाणिग्रहणम् ।

तत्र मनुः,

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥

क्षत्रियया ग्राह्य इति वदता पूर्वं वरेण गृहीतं शरं क्षत्रिया गृह्णीयादित्युक्तं भवति । एवमुत्तरत्रापि ।

याज्ञवल्क्यः,

पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ इति ।

## अथ सप्तपदी,

तत्राश्वलायनः,

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयतीति ।

अपराजिता ऐशानी ।

तथाच शौनकः,

अग्नेः पूर्वोत्तरं देशं नीत्वा तस्याः पुरो व्रजेत् ।
इषएकपदीत्याद्यमुक्त्वा मन्त्रं च मत्र्वकम् ॥
मन्त्रादिपदसंख्यानं प्रत्येकं योजयेत्पदम् । इति ।

पारस्करोऽपि, अथैनामुदीचीं सप्त पदानि प्रक्रामयतीति ।

हिरण्यकेशी, अपरेणाग्निं प्राचीमुदीचीं वा विष्णुक्रमान्क्रामयत्यथैनां संशास्ति दक्षिणेन प्रक्रम्य सव्येनानुप्रक्रामप्रास-व्येन दक्षिणमतिक्रामीरिति ।

अस्यावश्यकत्वमाह मनुः,

पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ इति ।

दारलक्षणं भार्यात्वोत्पत्तौ प्रमाणं विद्वद्भिर्नियतम् । तेषां मन्त्राणां निष्ठा समाप्तिस्सम्पूर्णसंस्कारोत्पादकत्वं सप्तमे पदे अतिक्रान्ते भवति ।

पाणिगृहीती भार्या स्यादितरा सहधर्मिणी ।

इति त्रिकाण्डीस्मरणात् । भार्यात्वं पतित्वस्याप्युपलक्षणम् ।

तथाच यमः,

नोदकेन न वाचा वा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

पतिगोत्रप्राप्तिरपि सप्तमपदातिक्रमे भवति ।

तथाच मनुः,

स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे । इति ।

अथ होमकाले कन्यर्त्तुदर्शने निर्णयमाह—

यज्ञपार्श्वः,

विवाहे वितते तन्त्रे होमकालउपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा ततः कर्मणि योजयेत् ॥

युञ्जानमन्त्रस्तैत्तिरीयशाखायामभिहितः,

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।
अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ इति ।

यद्वा,

विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला ।

त्रिरात्रं दम्पती स्यातां पृथक्शय्यासनाशनौ ॥
चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि । इति ।

## अथविवाहान्तः सूतकपाते निर्णयः ।

ब्रह्मपुराणे,

विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥ इति ।

शेषमन्नं परैर्देयमित्येतत्तु जन्ममरणगृहव्यतिरिक्तगृहविषयम् । न स्पृशेदित्यत्र दोष इति शेषः ।

क्रतुरपि,

विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।
पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥ इति ।

## अथ विवाहमध्ये श्राद्धादिनपाते निर्णयः ।

दीपिकायाम्,

विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् ।
वैधव्यमाप्नोति तदाऽऽशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् ॥ इति ।
विवाहमध्ये यदि तत्क्षयाहं श्रुत्वाऽश्रुमुख्याः पितरो न यान्ति ।
वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्नच दूषयेत्तम् ॥ इति ।

वध्वा चानक्षत्रदर्शनं वाङ्नियमः कार्यः ।

तथाचाश्वलायनः,

ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगारएतां रात्रिं वसेद् ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नी प्रजां विन्देयेतीति ।

अस्यार्थः । समाप्ते होमे रात्रौ ध्रुवादीन् दृष्ट्वा वाचं विसृजेन्मन्त्रेण । हरदत्तस्तु सप्तर्षीनित्यत्रेतिशब्दः प्रकारार्थः । तेन शुक्रादीनामपि यथासम्भवं दर्शनं भवतीति । इदानीं वाग्विसर्जनवि-

धानाद्धोमादारभ्य तावन्तं कालं वाचो नियम इति गम्यते। कस्यायं वाग्विसर्गः, वध्वाः। कुतः, मन्त्रलिङ्गात्। जीवः पतिर्यस्याः सा जीवपत्नी। जीव इति कर्त्तरि पचाद्यच्। पत्युर्नो यज्ञसंयोगे विभाषा सपूर्वस्येति ङीप् नकारादेशश्च।

शौनकोऽपि,

यस्मिन्काले विवाहः स्याद्रजन्यां यदि वा दिवा।
तत्र होममुपक्रम्य प्राग्विवाहसमापनात्॥
वधूर्वाङ्नियमं कृत्वा वर्त्तेतावहिता सती।
निवृत्ते तु विवाहे तां वधूं ध्रुवमरुन्धतीम्॥
सप्तर्षींश्चेक्षयेत्पश्चाद्बध्वा वक्तुमशक्तितः।
वध्वर्थं जीवपत्न्यादिवाक्यं च व्याहरेद्वरः॥ इति।

पारस्करः, अस्तमिते ध्रुवं दर्शयति ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वाऽदाद् बृहस्पतिः।

मया पत्या प्रजावती सञ्जीव शरदः शतमिति सा यदि न न पश्येत्पश्यामीत्येव ब्रूयादिति।

अथौपासनहोमोपक्रमः।

तत्राश्वलायनः, पाणिग्रहणादि गृह्यं परिचरेदिति।

अस्यार्थः। पाणिग्रहणप्रभृति गृह्यं नामाग्निं परिचरेत्। पाणिग्रहणादिवचनं गृहप्रवेशनीयोत्तरकालप्रारम्भशङ्कानिवृत्त्यर्थम्। यद्विधास्यते तत्परिचरणमिति।

गृह्यपरिशिष्टेऽपि, अथ नित्यौपासनं तस्य सायमारम्भ इति। कात्यायनादीनां तु विशेषो वक्ष्यते।

शौनकोऽपि,

यस्मिन्नह्नि विवाहः स्यात्सायमारभ्य तस्य तु।
परिचर्यां विवाहाग्नेर्विदधीत स्वयं द्विजः॥

यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति ।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम् ॥ इति ।

परिशिष्टान्तरेऽपि,

रात्रौ विवाहउत्पन्ने कथं कुर्वन्ति याज्ञिकाः ।
रात्रावतीतकालश्चेच्छ्वः सायं तदुपक्रमः ॥ इति ।

तत्परिमाणमाह सुदर्शनभाष्यकारः, तस्य चारम्भणं रात्रावेव यदि नव नाड्यो नातीताः । अतीताश्चेत्परेद्युः सायमेवाग्निहोत्रवेलायामारम्भ इति ।

सन्ध्याभाष्येऽपि,

प्रातर्होमे सङ्गवान्तः कालस्त्वनुदितेऽथवा ।
सायमस्तमिते होमः कालस्तु नव नाडिकाः ॥ इति ।

अथ वध्वाः प्रथमगृहप्रवेशविधिः ।

तत्र गर्गः,

वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथवाऽह्नि ।
द्वितीयके वाथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात् ॥

नारदोऽपि,

आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने ।
वधूप्रवेशः सम्पत्त्यै दशमे ऽथ समे दिने ॥

वृद्धवसिष्ठोऽपि,

षष्ठेऽष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः ।
पञ्चाङ्गसंशुद्धिदिनं विनापि विधावसङ्कोचरगेऽपि कार्यः ॥

षष्ठस्य विहितप्रतिषिद्धत्वाद्विकल्पः । अयं च युग्मदिनविधिः पञ्चमदिनादूर्ध्वं षोडशादिनादर्वाक् द्रष्टव्यः । षोडशवासरान्तादिति वक्ष्यमाणत्वात् । तदूर्ध्वं विषमे मासि विषमे संवत्सरे वा कार्यः । समे दोषश्रवणात् ।

तथोक्तं तेनैव,

समे वर्षे समे मासे यदि नारी गृहं व्रजेत् ।
आयुष्यं हरते भर्त्तुः सा नारी मरणं व्रजेत् ॥

अयं युग्मवत्सरनिषेधः पञ्चमवत्सरादर्वाक् द्रष्टव्यः । ऊर्ध्वं त्व-नियमः ।

तथाचोक्तं संग्रहे,

विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात् ।
ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमान्तादतः परस्तान्नियमो नचास्ति ॥

तत्र नक्षत्राणि व्यवहारतत्त्वे,

पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु ।
पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः ॥

अथ मासनिर्णयः ॥ जयतुङ्गविवाहपटले,

मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके ।
सुप्रशस्तो भवेद्वेश्मप्रवेशो नवयोषिताम् ॥

## अथ प्रतिशुक्रविचारः ।

तत्र लल्लः,

स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति ॥

माण्डव्यः,

नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु ।
वधूप्रवेशमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः ॥

ज्योतिःप्रकाशः,

वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे ।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरः स्थिते ॥
नवोढायास्तु वैधव्यं यदुक्तं सम्मुखे भृगौ ।

तदेव विबुधैर्ज्ञेयं केवलं तु द्विरागमे ॥
पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणापरे ।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ ॥

तथा भाद्रपदमारभ्य पूर्वादिमुख्यदिक्षु प्रतिदिशं मासत्रयं कण्टकं ज्ञेयम् । चैत्रमारभ्य पूर्वाद्यष्टदिक्षु मुख्यादिक्षु मासद्वयं विदिक्ष्वेकं मासं क्रमेण कण्टकं जानीयात् । इदं द्वयं ग्रामान्तरे च वधूगमने वर्ज्यम् ।

नियतकालेऽपि कदाचिन्निषेधमाह—

गर्गः,

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः ॥

तथा,

अपासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत् । इति ।

इह प्रियं प्रजयेति वधूं गृहं प्रवेश्य सवधूको वरो गणपतिं लक्ष्मीं च यथाचारं सम्पूज्य पुण्याहं वाचायित्वा विप्राशिषो गृह्णीयात् ॥

## अथ नववध्वाः प्रथमवर्षनिषिद्धानि ।

तथाच संग्रहे,

विवाहात्प्रथमे पौषे आषाढे चाधिमासके ।
भर्त्तुर्गृहे वसेन्न स्त्री चैत्रे तातगृहे तथा ॥ इति ।

तथा,

वधूप्रवेशो निश्येव कार्यो न दिवा ।
वधूप्रवेशो न दिवा प्रशस्तो राजप्रवेशो न निशि प्रशस्तः ।
दिवा च रात्रौ च गृहप्रवेशः प्रकीर्त्तितस्तु त्रिविधः प्रवेशः ॥
इति स्मरणात् ।

आश्वलायनः, प्रयाणउपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेदश्मन्वतीरीयते संरभध्वमित्यर्द्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेज्जीवं रुदन्तीति रुदत्यां विवाहाग्निमग्रतोऽजस्रं नयन्ति कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन्परिपन्थिन इति जपेद्वासे वासे सुमङ्गलीरियं वधूरितीक्षकानीक्षेतेह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेद्विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम् आनः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वे देवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वाऽनक्ति हृदयइति ॥

शौनकोऽपि,

तत्र प्रदेशे कस्मिंश्चिदुपलेपनपूर्वकम् ।
निधाय स्थण्डिलं तस्मिन्विवाहाग्निं निधाय च ॥
ततोऽग्नेः पश्चिमे देशे प्राग्ग्रीवोपरिलोमिकाम् ।
त्वचमानडुहं वध्वाः समास्तीर्यासनं क्षमी ॥
उपवेश्य वधूं तत्र ततोऽन्वाधानपूर्वकम् ।
अनूयाजनिधानान्तं पुरस्तात्तं निधाय च ॥
अन्वारब्धस्ततो वध्वा यदीध्माधानपूर्वकम् ।
पुरस्तात्तन्त्रशेषं यद्विधाय जुहुयात्ततः ॥
आनः प्रजामित्यादिभिर्ऋग्भिश्चतसृभिर्घृतम् ।
तत्र प्रत्यृचमित्युक्ते मन्त्रोक्त्यन्ते हुवेद्धविः ॥
प्रक्षिप्य पश्चात्स्वाहेति शब्दं होता समीरयेत् ।
ततः समञ्जन्त्वित्याद्यामृचमुक्त्वा स्वयं दधि ॥
किञ्चित्प्राश्यावशिष्टञ्च दधि तां प्राशयेद्वधूम् ।
अथवाऽऽहुतिशिष्टाज्यशेषेणैवोरसी उभे ॥

समञ्जन्त्वनयैनर्चा स्वस्य वध्वा अपि क्रमात् ।
ततः स्विष्टकृदाद्यूर्ध्वतन्त्रं परिसमापयेत् ॥ इति ।

## अथ दंपत्योर्विवाहव्रतम् ।

तत्राश्वलायनः, अत ऊर्ध्वमक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्यातां त्रिरात्रं द्वादशरात्रं संवत्सरं वैकर्षिर्जायतइति चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यादन्नं ब्राह्मणेभ्योऽथ स्वस्त्ययनं वाचयीतेति ।

अस्यार्थः । अत ऊर्ध्वमक्षारालवणाशिनावित्यादि । अक्षारं क्षारद्रव्यविवर्जितम् अलवणं लवणवर्जितं चाश्नीत इत्यक्षारालवणाशिनौ । अक्षारलवणाहाराविति शौनकवाक्ये तु क्षारं च लवणं च क्षारलवणे तद्वर्जमाहारो ययोस्ताविति । अक्षारमिति लवणविशेषमाह

मेधातिथिः । खारीलवणमिति लोकप्रसिद्धेः । विवाहादारभ्यैते नियमास्सन्त्युभयोः । गृहप्रवेशनीयात्प्रागपि नियमानामिष्टत्वाद्योगविभागः कृतः । उत्तरावधिमाह । अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रम् । अतो गृहप्रवेशनीयादूर्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ स्यातां संवत्सरं वा, एकर्षिकल्पः पुत्रो जायतइति कृत्वा ।

अन्ये त्वाहुः । नियमान्ते एकऋषिकल्पः संपद्यते, पितृगोत्रं विहाय सा पतिगोत्रं भजतइत्यर्थ इति । चरितव्रत इत्यादि । व्रतानन्तरं सूर्याविदे वध्वा उपयमनकाले परिहितं धृतं वस्त्रं दद्यात् । सूर्यया दृष्टो मन्त्रः सूर्या । यथा वृषाकपिरिति । सा च सत्येनोत्तभितेति सूक्तम् । कथं पुनरसौ वेत्ति । स्वरतो वर्णत इत्यादि । शब्दतोऽर्थत इति वा । अन्नं ब्राह्मणेभ्य इत्यादि । दद्यात् । अथ स्वस्त्ययनमित्यादि । ओं स्वस्ति भवन्तो ब्रुवन्त्विति । ओं स्वस्तीति प्रतिब्रूयुरिति ।

शौनकोऽपि,

अत ऊर्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा ।
शक्तिं वीक्ष्य तथाऽब्दं वा चरतां दंपती व्रतम् ॥
अक्षारलवणाहारौ भवेतां भूतले तथा ।
शयीयातां समावेशं न कुर्यातां वधूवरौ ॥
व्रते समाप्ते वध्वा च विवाहसमये धृतम् ।
वस्त्रं प्रदद्यात्तस्मै ब्राह्मणाय विपश्चिते ॥
सूर्या नाम्ना ऋचो वेत्ति शब्दार्थस्वरतश्च यः ।
सप्तेनोत्तभितेत्याद्यामृचमारभ्य या ऋचः ॥
विहिसोतोरसृक्षतनेन्द्रमित्यादिकाः पुरा ।
अधीतास्ता इहोच्यन्ते सूर्याशब्देन सूरिभिः ॥
ब्राह्मणान्भोजयित्वा तैः पुण्याहमथ वाचयेत् । इति ।

तत्र चतुर्षु दिवसेषु कर्तव्यविशेषमाह स एव,

दम्पती रोहिणीसोमौ भूत्वा प्रथमके दिने ।
दाक्षायणीं यजेयातां द्वितीयदिवसेऽपि तौ ॥
पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ ।
अग्निस्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम् ॥
चतुर्थ्यां तौ यजेयातां शाङ्करीं मानवास्त्रियौ ।
एवं प्रतिदिनं कर्त्तुं पूजां तौ दम्पती तदा ॥
चतुर्ष्वेतेषु दिवसेष्वर्चयेतां द्विजान्बहून् ।
वस्त्रहेमादिमिष्टान्नताम्बूलादिप्रदानतः ॥
आशीर्वादैर्बहुविधैश्चतुर्वेदोदितैर्द्विजाः । इति ।

तौ वर्द्धयेयुरिति शेषः ।

सत्यव्रतोऽपि,

विवाहे दंपती स्यातां त्रिरात्रं ब्रह्मचारिणौ ।

अधःशय्यासनौ स्यातामक्षारालवणाशिनौ ॥ इति।

पारस्करोपि, त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयातां संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्तत इति।

हिरण्यकेश्यपि, त्रिरात्रमक्षारालवणाशिनावधःशायिनावलंकुर्वाणौ ब्रह्मचारिणौ वसत इति।

एषां च पक्षाणां व्यवस्थोक्ता ब्रह्मपुराणे,

कृते विवाहे वर्षं तु वस्तव्यं ब्रह्मचारिणा।

यद्यष्टवर्षा कन्या स्यात्तथा तत्त्रिगुणः पुमान् ॥

त्रिगुणश्चतुर्विंशतिवार्षिकः। तथा,

अथ तद् द्वादशाहानि त्रिंशद्वर्षेण सर्वदा।

यदि द्वादशवर्षा स्यात्कन्या रूपगुणान्विता ॥

द्वात्रिंशद्वर्षपूर्णेन यदि षोडशवार्षिकी।

लब्धा तदा तु षड्रात्रं वस्तव्यं संयतेन तु ॥

विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम्।

अत ऊर्ध्वमहोरात्रं वस्तव्यमिति संयतैः ॥ इति।

## अथ चतुर्थीकर्म।

तत्र पारस्करः, चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तर उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीत्यादि।

हिरण्यकेश्यपि, चतुर्थ्यामपररात्रेऽग्निमुपसमाधाय प्रायश्चित्तिपर्यन्तं कृत्वा नव प्रायश्चित्तीर्जुहोतीत्यादि।

## अथ मण्डपोद्वासनविधिः।

तत्र नारदः,

मण्डपोद्वासनं कार्यं समे तु दिवसे बुधैः।

षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥ इति ।

## अथ विवाहभेदाः ।

तत्र मनुः,

चतुर्णामपि वर्णानां प्रेत्येह च हिताहितान् ।
अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ॥
ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमोऽधमः ॥ इति ।

नारदोऽपि,

अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्त्तिताः ।
ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथैवच ॥
आर्षस्तथैव दैवश्च गान्धर्वश्चासुरस्तथा ।
राक्षसोऽनन्तरस्तस्मात्पैशाचश्चाष्टमोऽधमः ॥ इति ।

हारीतोऽपि, अथाष्टौ विवाहा भवन्ति ब्राह्मो दैवो गान्धर्व आसुरो राक्षसः पैशाचो मानुषः क्षात्रश्चेति ।

अत्र मानुषक्षात्रपदाभ्यामार्षप्राजापत्ययोर्ग्रहणमित्यविरोधः ।

विष्णुरपि, अथाष्टौ विवाहा भवन्ति ब्राह्मो दैव आर्षः प्राजापत्यो गान्धर्व आसुरो राक्षसः पैशाचश्चेति ।

यत्तु वसिष्ठेन षड्विवाहा ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषश्चेति षट्त्वमेव विवाहानामुक्तं, तन्नेतरव्यवच्छेदकम् । किन्तु ब्राह्मणकर्त्तव्यतयोक्तषड्विवाहपरम् ।

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥

इति मनुस्मरणात् ।

## अथ ब्राह्मादिलक्षणानि ।

तत्र मनुः,

आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दानं कन्यायाः ब्राह्मो धर्मः प्रकीर्त्तितः ॥

आच्छाद्य वाससा, अर्हयित्वा स्रक्चन्दनादिभिः । वरमिति शेषः, न कन्यामिति । आहूयेत्यस्यापेक्षितत्वात् । स्वयमिति न वरप्रार्थनाव्युदासः । कन्यावरणविधिविरोधापत्तेः । श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने दीयतइति स ब्राह्म इति बौधायनवाक्ये ब्राह्मविवाहेऽप्यर्थनाश्रवणाच्च । ब्रह्मचारिणे अविप्लुतब्रह्मचर्याय । तच्चार्थनं वरणरूपमेव । स्वयमेव वरस्याह्वानमपूर्वं ब्राह्मविवाहाङ्गत्वेन विधीयते । अत एव दाक्षिणात्यशिष्टाचारोऽपि तथा ।

विष्णुरपि, आहूय गुणवते कन्यादानं ब्राह्मः विवाहं आहूय दीयते शक्त्यलङ्कृतेति ।

संवर्तोऽपि,

अलङ्कृत्य स्वलङ्कारैर्वराय सदृशाय च ।
ब्राह्मेण तु विवाहेन कन्यां दद्यात्सुलक्षणाम् ॥

देवलः,

ततो निवीतां कल्याणीं कन्यां सुवलयान्विताम् ।
अलङ्कृत्यार्हते दद्याद्विवाहो ब्राह्म उच्यते ॥

निवीतां निवीतप्रावरणवतीम्। कल्याणींमुक्तकन्यालक्षणवतीम् । सुवलयान्वितामभिनवकङ्कणवतीम् । तेन गजदन्तकङ्कणधारणरूपो दाक्षिणात्यशिष्टाचारोऽप्यनुगृहीतो भवति ।

व्यासः,

आच्छाद्यालङ्कृतां कृत्वा त्रिः परिक्रम्य पावकम् ।
नामगोत्रे समुद्दिश्य दद्याद्ब्राह्मो विधिस्त्वयम् ॥

पावकपरिक्रमणं च शाखान्तरेऽग्निं प्रतिष्ठाप्य कन्यया सह तं त्रिः परिक्रम्य तां दद्यादिति क्रमदर्शनादत्रोक्तमिति ध्येयम् ।

यमः,

अद्भिर्या दीयते कन्या ब्रह्मदेयेति तां विदुः ।

ब्रह्मदेयेति संज्ञा श्राद्धे ब्रह्मदेयानुजातश्चेत्यनेन तज्जातस्य पङ्क्तिपावनत्वव्यवहारार्थम् । यत्तु अनिन्दन्नन्यैरवितर्कयन् विधिवद्वस्त्रयुगं दत्त्वा सहधर्म्मश्चर्यतामिति स ब्राह्म इति हारीतेन ब्राह्मविवाहेऽपि सहधर्मचरणमुक्तं, तद् न ब्राह्मपदार्थघटकं, गौरवापत्तेः। किन्तु प्रैषवचनमात्रार्थानुवादः । अनिन्दन्दोषाभिधानमकुर्वन्। अन्यैरवितर्कयन् अन्यैस्सह दोषमनाशङ्कमानः । ब्राह्मविध्युपक्रमे हि धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयं नातिचरामीति काठकगृह्योक्तदातृप्रतिगृहीतृप्रैषानुवादः। विधिवन्मधुपर्कादिपूर्वम्।

आपस्तम्बः,

ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजासहत्वकर्मभ्यः प्रतिपादयेत् । यथाशक्त्यलङ्कृत्य प्रजार्थधर्मकर्मसु सहभावाय यथोक्तविधिना प्रतिपादयेदित्यर्थः ।

आश्वलायनः,

यथाशक्त्यलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः।

शङ्खलिखितौ, तत्र सवर्णः सवर्णाय विदितायैव नग्निकां दद्यात्स ब्राह्मः। विदितः कुलादिभिः। नग्निकामनागतार्तवाम्।

पैठीनसिः, तस्मान्नग्निकां कन्यां सहिरण्यां दद्यादयं ब्राह्मो विवाह इति ।

ब्रह्मपुराणे,

ईदृशाय यदा कन्यां दद्ध्वं श्रद्धयाऽन्विताः ।
अलङ्कृत्य यथाशक्त्या पूरयित्वा धनेन च ॥

ईदृशाय पूर्वोक्तगुणयुक्ताय ।

## अथ दैवलक्षणम् ।

तत्र मनुः,

यज्ञे तु वितते सम्यक् ऋत्विजे कर्म कुर्वते।

अलङ्कृत्य सुतादानं दैवं धर्म्यं प्रचक्षते॥

सम्यगतिसौष्ठवेन कर्म कुर्वते ऋत्विजे इत्यन्वयः।

याज्ञवल्क्यः, यज्ञस्थऋत्विजे दैवः।

आश्वलायनः, ऋत्विजे वितते कर्मणि दद्यादलङ्कृत्य स दैवः।

देवलः,

अन्तर्वेदि समानीय कन्यां कनकमण्डिताम्।

ऋत्विजे तु ददाद्येनां विवाहो दैवसंज्ञकः॥

यमः,

ऋत्विजं समलङ्कृत्य विवाहो दैव उच्यते।

हारीतः,

वेद्यन्ते मैथुनं दत्त्वा स दैवः। वेद्यन्ते वेदिमध्ये मैथुनं गोमिथुनं दत्त्वा, वरायेति शेषः।

बौधायनः, दक्षिणासु दीयमानास्वन्तर्वेदि यदृत्विजे स दैवः।

अथार्षलक्षणम्।

तत्र मनुः,

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।

कन्याप्रदानं विधिवदार्षो धर्मोऽयमुच्यते॥

धर्मतः कुलधर्मतः। आर्षधर्मतो वा। न तु शुल्कत्वेन।

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।

अल्पो वापि महान्वापि विक्रयस्तावदेव सः॥

इति मनुना गोमिथुनस्य शुल्कत्वेनोपादानापाकरणात्। शुल्कत्वं तु गोमिथुनस्यापि लोभेन गृह्यमाणस्य भवति।

तथाच स एव,

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी ॥ इति ।

अत एव लोभं विना गृह्यमाणमपि अर्हणमेव भवति कुमारीणां न शुल्कमित्याह—

स एव,

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं हि केवलम् ॥ इति ।

आनृशंस्यमपापिष्ठमित्यर्थः।वाशब्दादधिरथं गोशतमपि देयम्।

तथाचापस्तम्बः, विवाहे दुहितृमते काम्यं धर्मार्थं श्रूयते तस्माद् दुहितृमतेऽधिरथं शतं देयम् तन्मिथुनं कुर्यादिति तस्यां क्रयशब्दः संश्रुतिमात्रं धर्माद्धि सम्बन्ध इति।

अस्यार्थः ।

दानं विक्रयधर्मश्चापत्यस्य न विधीयते ।

इति निषेधात्कथं गोमिथुनादिग्रहणमित्यत आह । विवाहइति। विवाहे आर्षे, तस्यैवोपसंहारात् । तत्र यत्कन्यापित्रे दीयते तत्काम्यम् । ऋषितुल्यपुत्रोत्पत्तिकामनया दीयमानत्वात् ।

तथाच स्मृतिः, यथा युक्तो विवाहस्तथा युक्ता प्रजा भवतीति । तन्मिथुनं कुर्यादिति । तद् दत्तं रथाधिकं गोशतं कन्यावरौ मिथुनं कुर्यात् । जायापतित्वमापादयेदित्यर्थः । यस्तु तस्यामार्षोढायां क्रयशब्दः स शब्दमात्रं न वास्तवः क्रय इति कल्पतरुः। वस्तुतस्तु तस्यां दानक्रियायामिति व्याख्येयम् । आर्षोढायां क्रीताशब्दप्रयोगापेक्षणात् क्रियावाचिनः क्रयशब्दस्य प्रयोगानुपपत्तेः। अत्र हेतुः धर्माद्धि सम्बन्ध इति । धर्मनिमित्तो ह्यसौ सम्बन्धो न लोभनिमित्तक इति । गोमिथुनग्रहणं च स्वयं कन्योपकरणदानासमर्थस्य तद्दानार्थं वेदितव्यम् ।

प्रदानं यत्र कन्यायाः सह गोमिथुनेन च ।
शस्ताय चासगोत्राय तमार्षमृषयो विदुः ॥

इति देवलस्मरणात् । गोमिथुनेन वरादुपात्तेनेत्यर्थः । शुल्कत्वेन ग्रहणे तु दोषः । वक्ष्यमाणदोषश्रवणात्त्वाचार्यैरभिहितं "देशकालानुरूपं हि मूल्यं शुल्कं भवति, लोके तथा दर्शनात् । गोमिथुनं हि न शुल्कम् । शास्त्रे नियतपरिमाणत्वादिति । तच्चिन्त्यम् । अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीत्यत्र सोमक्रयण्यां गवि व्यभिचारदर्शनात् । तस्माच्छास्त्रेऽपि नियतपरिमाणं शुल्कं भवति । हिरण्येन क्रीणाति वाससा क्रीणातीत्याद्युपक्रम्य तां दशभिः क्रीणातीति तत्रैव शुल्कपरिमाणदर्शनात् । तस्माद्यथोक्तमेव साधु ।

याज्ञवल्क्यः, आदायार्षस्तु गोद्वयमिति ।

शङ्खलिखितौ, गोमिथुनेन वस्त्रयुगलेन वा ऽऽर्षः सर्वेष्वलङ्कारः स्त्रीधनं च देयमिति ।

सर्वेषु विवाहेषु । स्त्रीधनम् अलङ्कारातिरिक्तं वनक्षेत्रादि ।

बौधायनः, पूर्वे लाजाहुती हुत्वा गोभ्यां स आर्षः ।

पूर्वे चतसृणां लाजाहुतीनामाद्ये द्वे गोभ्यां सह देये इत्यर्थः । एतेन गोमिथुनप्रत्यावृत्ते कन्यादानकालात्कालान्तरमुक्तं भवति ।

आश्वलायनः, गोमिथुनं दत्त्वोपयच्छेत स आर्ष इति ।

### अथ प्राजापत्यलक्षणम् ।

तत्र मनुः,

सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥

देवलः,

सहधर्मक्रियाहेतोर्दानं समयबन्धनात् ।

अलंकृत्यैव कन्याया विवाहः स प्रजापतेः ॥

गौतमः, संयोगमन्त्रः प्राजापत्ये सहधर्मश्चर्यतामिति ।

याज्ञवल्क्यः,

इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने । स कायः ॥ इति ।

आश्वलायनः, सह धर्मं चरत इति प्राजापत्यः ।

कन्यादानसमयेऽन्योन्याव्यभिचारेण सहोभौ चरतां धर्ममित्यनेन वाक्येन समयं कृत्वा यत्कन्यादानं स प्राजापत्य इति कल्पतरुप्रभृतयः । देवस्वामिनस्तु यद्यप्यन्येष्वपि विवाहेषु सहधर्मचरणमस्त्येवं तथाप्यत्र सहधर्मचरणमेव न मध्ये आश्रमान्तरप्राप्तिर्नापि स्त्र्यन्तराविवाह इति विशेष इत्यव्यभिचारपदार्थं व्याचख्युः ।

विष्णुस्तु लक्षणान्तरमाह ।

प्रार्थितायाः याचितायाः कन्यायाः यत्पित्रा प्रकर्षेणोक्तविधिना दानं तेन प्राजापत्य इत्येकार्थतां वर्णयन्ति ।

यत्तु धर्मशब्दोऽर्थकामयोरुपलक्षणम् । धर्मे चार्थे च कामे च नातिचारितव्या त्वया त्वियमितिस्मृत्यन्तरादिति । तन्न । तस्य वाक्यस्य काठकगृह्यपरिशिष्टे ब्राह्मविवाहोपक्रमपाठितत्वेन तन्मात्रविषयत्वात् । सह धर्मश्चर्यतामिति प्राजापत्ये गौतमेन मन्त्राभिधानाच्च ।

## अथासुरलक्षणम् ।

तत्र मनुः,

ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।

कन्याऽऽप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

आप्रदानम् आदानं ग्रहणमिति यावत् । स्वाच्छन्द्यात्स्वेच्छया, न तु कन्यापितुः पारतन्त्र्येण । क्रयेणैव स्वत्वोत्पत्तेः ।

देवलः,

शुल्कं प्रदाय कन्यायाः प्रत्यादानं विधानतः ।
वित्तहेतुर्विवाहो ऽयमासुरः षष्ठ उच्यते ॥
वित्तहेतुर्वित्तसाध्यः ।

पैठीनसिः, शुल्केन पणित्वा ददतोरासुरः ।

पणित्वा विक्रीय । ददतोः मातापित्रोः । ददतोरर्पयतोः, दानाभावादिति केचित् । तन्न ।

मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ।
प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥
ब्राह्मादिषु विवाहेषु पञ्चस्वेषु विधिः स्मृतः ।
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥

इति मनुनारदाभ्यां मान्यविशेषाभ्यामष्टस्वपि विवाहेषु दानप्रतिपादनात् । स्वस्त्ययनं स्वस्तिवाचनादि । प्रजापतियज्ञः प्राजापत्यश्चरुहोमः । एषविधिर्दानलक्षणः । गुणो ब्राह्मण्यम् । तस्यैव सम्प्रदानविशेषणेषु प्राधान्यात् । ब्राह्मणादीनां प्रतिलब्धेऽसाधारणस्वत्वाच्च । तदपेक्ष्यासुरादिष्वपि त्रिषु दानं भवति ।

हारीतः, शौल्केन मानुषः ।

मानुष इत्यासुरस्यैव संज्ञान्तरम् ।

पैठीनसिः, शुल्केन कन्यामाददतो राक्षस इति । इदमप्यस्यैव संज्ञान्तरम् ।

वसिष्ठः, पणित्वा धनक्रीता स मानुषः । क्रये श्रुतिं प्रमाणयति, तस्माद्ग्राहयितृमतेऽधिरथशतं देयमिति ह क्रयो विज्ञायतइति । तस्मादित्युक्तोपसंहारः । ग्राहयितुः कन्यादातुः । मते-संमते । अधिको रथो यस्मिन् शते तदधिरथं, तच्च तच्छतं च, गवामिति शेषः । अनुक्तसंख्या गोगामिनीति न्यायात् । तद् वरेण देयम् । इतिहशब्देनोक्तस्यार्थस्य प्रसिद्धिं दर्शयति । याच पत्युः

क्रीता साऽन्यैश्चरतीति ह चातुर्मास्येष्वित्ति क्रयप्रदर्शनाय श्रुत्युपन्यासः ।

याज्ञवल्क्यः, आसुरो द्रविणादानादिति ।

आश्वलायनोऽपि, धनेनोपयच्छेत स आसुरः ।

हारीतस्तु लक्षणान्तरमाह, दम्भच्छद्मभ्यां परैस्तर्किताय यद्दीयते प्रतिपाद्यते स आसुर इति ।

अस्यार्थः । परैरन्यैर्दम्भच्छद्मभ्यां दाम्भिकत्वेन छाद्मिकत्वेन वा तर्किताय ज्ञाताय स्वयमेव वा दाम्भिकत्वं छाद्मिकत्वं प्रतिपद्य ज्ञात्वा यत्र दानं स आसुरः । आसुरनिन्दामाह —

कश्यपः,

क्रीतद्रव्येण या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥ इति ।

आपस्तम्बः,

दानं विक्रयधर्म्मश्चापत्यस्य न विधीयते ।
न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि ॥
गृह्णन्हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी ।
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत् ॥
शुल्कं हि गृह्णन्कुरुते छन्नं दुहितृविक्रयम् । इति ।

यमः,

नानुशुश्रुम जात्वेतत्पूर्वेष्वपिहि जन्मसु ।
शुल्कसंज्ञेन मूल्येन पापं दुहितृविक्रयम् ॥
स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।
नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥

कश्यपः,

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः ।

आत्मविक्रयिणः पापा महाकिल्विषकारकाः ॥
पतन्ति निरये घोरे घ्नन्ति चासप्तमं कुलम्।
गमनागमने चैव सर्वं शुल्कोऽभिधीयते ॥
गमनागमने कन्याप्रार्थनार्थं कन्यापितृगृहगमनागमने।

यमोऽपि,

यो मनुष्योऽपि यत्किञ्चिद्विक्रीय धनमिच्छति।
तस्य मूत्रं पुरीषं च स परत्रोपजीवति ॥
कन्याविक्रयिणो मूर्खाः महाकिल्विषकारकाः।
पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम् ॥

पराशरः,

कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया।
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥

अत्र प्रायश्चित्तमुक्तम् ऋग्विधाने,

महत्तरोमवर्गं च लक्षं चेद्विष्णुमन्दिरे।
कन्याविक्रयदोषस्तु प्रणश्यति न संशयः।

इदं च दोषाभिधानं लोभेनात्मार्थं धनग्रहणे, कन्यार्थं धनग्रहणे तु न दोषस्तस्यार्हणरूपत्वादित्युक्तं प्राक्।

## अथ गान्धर्वलक्षणम्।

तत्र मनुः,

इच्छया ऽन्योन्यसंयोगः कन्यायाश्च वरस्य वा।
गान्धर्वस्स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥

अन्योन्यसंयोगः अन्योन्यं सम्प्रतिपत्तिः। मैथुन्यः मिथुनसाध्यकर्मार्हः। कामसम्भवः कामोद्रेकसम्भवः।

देवलः,

विविक्ते स्वयमन्योन्यं स्त्रीपुंसोर्यस्समागमः।

प्रीतिहेतुः स गान्धर्वो विवाहः पञ्चमो मतः ॥

समागमः पतिभार्यात्वसम्प्रतिपत्तिः ।

गौतमः, इच्छन्त्याः स्वयं संयोगो गान्धर्वः । स्वयमिच्छन्त्या वध्वा इच्छतो वरस्य संयोगो गान्धर्वः । स्वयमिति वचनात्स्वयमेव स्वस्य दानं कर्त्तव्यमिति गम्यते, तन्त्रापेक्षयेति ।

द्वयोस्सकामयोर्मातापितृदानरहितो गान्धर्व इति विष्णुस्मरणात् । मातापितृदानरहितः मातापितृकर्तृकदानरहितः ।

हारीतः, स्वयं कन्या वरयते स गान्धर्वः ।

वसिष्ठः, सकामां कामयमानः सदृशीं यो निरुन्ध्यात् स गान्धर्वः ।

याज्ञवल्क्यः, गान्धर्वः समयान्मिथः ।

आश्वलायनः, मिथः समयं कृत्वोपयच्छेत स गान्धर्वः ।

अथ राक्षसलक्षणम् ।

तत्र मनुः,

हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ।

प्रसह्य कन्यां हरतो राक्षसो विधिरुच्यते ॥

हत्वा ताडयित्वा, प्रतिबन्धकानिति शेषः । छित्त्वा, प्रतिबन्धकशिरांसीति शेषः । भित्त्वा, शस्त्रप्रहारैरिति शेषः । क्रोशन्तीं स्वजनानाह्वयन्तीम् । अनेन युद्धमुपलक्ष्यते ।

तथाच याज्ञवल्क्यः, राक्षसो युद्धहरणादिति ।

आश्वलायनोऽपि, हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः ।

रुदद्भ्यः, कन्यासम्बन्धिभ्य इति शेषः ।

हारीतः, राजाश्रयेण बान्धवाभिघातदण्डापविशेषाद्राक्षसः ।

देवलः, विक्रमेण प्रसह्य स्यात्कुमारी ।

हरणं पुनः * ।

वीर्यहेतुर्विवाहः स सप्तमः समुदाहृतः ॥

विक्रमेण पराक्रमेण। प्रसह्य बलात्कारेण। वीर्यहेतुर्बललक्षणः।

वसिष्ठः, यां बलेन हरन्ति स राक्षसः।

केचित्तु यां प्रमथ्य बलेन हरेत्स क्षात्र इत्यपि पठन्ति । क्षात्र इति राक्षसस्यैव संज्ञान्तरम्।

हारीतः, अलङ्कृतामभिजयतः क्षात्रः ।

विवाहार्थम् अलङ्कृतां कन्यां युद्धे विजयमानस्य यो विवाहः स क्षात्र इत्यर्थः ।

विष्णुः, युद्धहरणेन राक्षसः ।

गौतमः, प्रसह्यादानाद्राक्षस इति ।

## अथ पैशाचलक्षणम् ।

तत्र मनुः,

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।

स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥

विष्णुः, सुप्तप्रमत्ताभिगमनात्पैशाचः ।

सुप्ता निद्रिता प्रमत्ता प्रमदातिशयेन नष्टचेतना । तस्यामभिगमनं मैथुनं तस्मात्पैशाचः ।

गौतमः, असंविज्ञातोपसङ्गमनात्पैशाचः ।

अत्र उपगमनाभिगमनशब्दाभ्यां मैथुनमेवाभिधीयते ।

ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ।

यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति ।

---

* विक्रमेण प्रसह्य स्यात् कुमारी । इति पूर्वपृष्ठस्थान्तिमपङ्क्तौ हरणं पुनः इति च अस्मिन् पृष्ठे पृथग् मुद्रितं प्रमादात्। अपेक्षितं तु- विक्रमेण प्रसह्य स्यात् कुमारीहरणं पुनः । इति ।

ऋतावुपेयादित्यादिप्रचुरप्रयोगदर्शनात् । तदवस्थानां कन्याहरणमेव पैशाच इत्यन्ये ।

सुप्तमत्तोन्मत्तकन्याहरणं व्यसनादपि ।

प्रमादहेतुः पैशाचो विवाहोऽष्टम उच्यते ॥

इति देवलस्मरणात् । सुप्तानां निद्राक्रान्तानां, मत्तानां मदनीयद्रव्येण, उन्मत्तानां ग्रहाद्यावेशेन, व्यसनाद् राजाद्युपद्रवाद्याकुलानां कन्यायाः यद्धरणं स पैशाचः । प्रमादः पूर्वोक्तादिनिमित्तैरसावधानता । प्रमादोऽनवधानतेति कोशात् ।

आश्वलायनः, सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचः ।

याज्ञवल्क्यः, पैशाचः कन्यकाछलात् ।

कन्यकाछलं कन्यकाप्रतारणम् ।

हारीतः, स्त्रीपानमद्यभोगसम्प्रयोगात्पैशाचः ।

स्त्रियाः कुट्टन्याः, पानस्य दुग्धपानकादेः, मद्यस्य द्वादशविधस्य, भोगस्य वस्त्रालङ्कारादेः सम्प्रयोगात् सम्यक् पौनःपुन्येन प्रयोगात्प्रेषणात्कन्यायाः वशीकरणं पैशाचः । कन्यापित्रादेर्वा ।

अथैषां वर्णविशेषेण व्यवस्था ।

तत्र मनुः,

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरो ऽवरान् ।

विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥

विप्रस्य क्रमेण ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वाः षट् विवाहा धर्म्याः । तत्र चत्वारो मुख्याः द्वावनुकल्पौ ।

तथाच स एव,

चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः । इति ।

तत्रापि द्वौ मुख्यतरौ ।

तथाच महाभारते,

ब्राह्मणानां सतामेष ब्राह्मो धर्म्मो युधिष्ठिर । इति ।

दैवोऽपि ब्राह्मणस्यैव, ऋत्विक्सम्प्रदानकत्वात् । न क्षत्रियादेः, आर्त्विज्याभावात् । क्षत्रियस्य अवरान् अन्त्यान् चतुरः । प्राजापत्यासुरगान्धर्व्वराक्षसान् । नासुरगान्धर्वराक्षसपैशाचान् । पैशाचस्य सर्वनिषिद्धत्वात् ।

**तथाच स एव,**

स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः । इति ।

तत्र राक्षसो मुख्यः प्राजापत्यासुरगान्धर्व्वा अनुकल्पाः ।

**तथाच स एव,**

राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ।

विट्शूद्रयोस्तु तानेव चतुरः प्राजापत्यासुरगान्धर्व्वान् राक्षसं विहाय । तत्रासुरो मुख्यः प्राजापत्यगान्धर्व्वावनुकल्पौ । आसुरो वैश्यशूद्रयोरित्युदाहृतवचनात् । क्रयविक्रयप्रधानत्वाच्च । यत्तु वैश्यस्य राक्षसः श्रेयानिति पैठीनसिवचनं, तद् आसुरमभिप्रेत्य । शुल्केन कन्यास्वादददतो राक्षस इति तेनैव परिभाषणात् ।

**नारदोऽपि,**

चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्व्वराक्षसौ ।

राज्ञस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥

अन्त्यः पैशाचः स गर्हितो न कस्यापि योग्य इत्यर्थः ।

पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ।

इति मनुस्मरणात् । यद्वा । यो गर्हितः पैशाचः स आन्त्यः अन्त्याः शूद्रास्तद्योग्य इत्यर्थः । पैशाचः शूद्रस्येति पैठीनसिवचनात् । अन्त्याः प्रतिलोमजा इति वा । पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानां चेति प्रचेतःस्मरणात् । असंस्कृतप्रसूताः कुण्डगोलकादयः ।

**बौधायनोऽपि,** तेषां चत्वारः पूर्व्वे ब्राह्मणस्य तेष्वपि पूर्व्वः

पूर्वः श्रेयानितरेषामुत्तरोत्तरः पापीयानिति ।

देवलोऽपि,

पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानकाः ।

अशुल्काः ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ॥ इति ।

तत्रापि षष्ठसप्तमौ क्षत्रधर्मानुगतौ । तत्पूर्वकत्वात्क्षत्रस्य । पञ्चमाष्टमौ वैश्यशूद्रयोः । अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति कर्षणशुश्रूषाधिकृतत्वात्, गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वादिति । चत्वारः, प्रशस्ता इति शेषः । पूर्वः पूर्वस्त्वातिशयेन प्रशस्त इत्यर्थः । इतरेषां गान्धर्वादीनाम् । उत्तरोत्तरोऽप्रशस्तः । षष्ठसप्तमौ आसुरराक्षसौ क्षत्रधर्मानुगतौ क्षत्रियधर्मानुसारिणौ तद्धर्मश्च धनप्रदानबलसम्पत्तिरूपः । पञ्चमाष्टमौ गान्धर्वपैशाचौ वैश्यशूद्रयोः । अयन्त्रितकलत्राः असङ्कोचितस्त्रीकाः । कलत्रमत्र कन्योच्यते । असङ्कोचितकलत्रत्वं च तयोः कर्षणशुश्रूषाधिकृतत्वात् । अनेन वैश्यशूद्रकन्यानामपि कर्षणशुश्रूषे दर्शिते भवतः । सर्वेषां वर्णानां जातीनां च स्नेहस्य सर्वसाधारण्यात् ।

## अथ ब्राह्मणादीनामापत्कल्पः ।

तत्र मनुः,

पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्तव्यौ कथञ्चन ॥
पृथक्पृथग्विमिश्रौ वा विवाहौ पूर्वचोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ इति ।

क्षत्रस्य चतुरोऽवरानित्युपक्रान्ताः ये प्राजापत्यादयः पञ्च तेषामपि मध्ये आसुरस्य वैश्यशूद्रयोरेव मुख्यत्वात्पैशाचस्य च सर्वेषां निन्दितत्वादवशिष्टास्त्रयः प्राजापत्यगान्धर्वराक्षसाः धर्म्या विप्रस्य । आपद्यनन्तरवर्णवृत्त्याश्रयणवदनन्तरवर्णविवाहा-

नामप्यौचित्यात्। क्षत्रियस्यापत्कल्पमाह। पृथगिति। पृथगसङ्कीर्णौ। मिश्रौ सङ्कीर्णौ। यथा प्रथमं गान्धर्वेण प्रतिगृह्य तद्बन्धुषु विरोधप्रवृत्तेषु युद्धेन हरणं, रुक्मिणीहरणवत्। अत्र मिश्रावित्यापत्कल्पः। पृथगित्यनुकल्पः। तद् अनुवादमात्रम् असङ्कीर्णात्सङ्कीर्णस्यातिनिन्दितत्वप्रदर्शनार्थम्। तेन वर्णान्तराणामप्यसङ्कीर्णविवाहासम्भवे आपदि सङ्कीर्णस्याप्यनुष्ठानमभ्यनुज्ञातम्। सर्वनिषिद्धस्य पैशाचस्य विवाहमध्ये परिगणनं वैश्यशूद्रयोरापदि तस्यापि प्राप्त्यर्थम्।

तथाच वत्सः,

सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य च।
चौर्येणापि विवाहेन सा विवाह्या रहःस्थिता॥ इति।

चौर्येण पैशाचेन। नचासुरादिषु विवाहेषु सप्तपदाभिक्रमणाभावात्पतित्वभार्यात्वयोरनुपपत्तिरित्याशङ्कनीयम्। तत्रापि स्वीकारानन्तरं संस्कारविधानात्।

तथाच देवलः,

गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः।
कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः॥

समयेन संवादेन। समर्थेनेत्यपि पठन्ति। तस्मिन्पक्षे सम्यगर्थः समर्थः भार्यात्वोत्पत्तिलक्षणं प्रयोजनं तेन हेतुनेत्यर्थः।

गृह्यपरिशिष्टेऽपि,

गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते॥

परिणयः स्वीकारः। अकृते तु होमे न भार्यापतिभावः।

तदुक्तं वसिष्ठबौधायनाभ्यां,

बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता।

अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

संस्कारावश्यकत्वमाह **यमः**,

नोदकेन विना चायं कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

आसुरादिविवाहेषु प्रायश्चित्तमप्युक्तं—
**त्रिकाण्डमण्डनेन**,

अधर्म्येषु विवाहेषु ताम्बूलमनुमोदनम् ।
वाहनं भोजनं चैव वर्जयेत्सर्वथा द्विजः ॥
आसुरे तूपवासः स्याद् गान्धर्वे तु त्रिरात्रकम् ।
राक्षसे चैव पैशाचे कार्यं चान्द्रायणं तथा ॥ इति ।

## अथैषां फलानि ।

तत्र **मनुः**,

यो यस्यैषां विवाहानां मनुना कीर्त्तितो गुणः ।
सर्वं शृणुत तं विप्राः समाकीर्त्तयतो मम ॥ इति ।

**आश्वलायनः**, तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयत इति ।

अस्यार्थमाहुर्**देवस्वामिनः**, तस्यां ब्राह्मविवाहोढायां जातः पुत्रः उभयतो मातृवंशे पितृवंशे च द्वादशावरानुत्पत्स्यमानान्द्वादश परान् पित्रादीन् मातामहादींश्च पुनातीत्यर्थः । आत्मानं च पञ्चविंशम् । आत्मानमिति मनुवाक्ये दर्शनात् ।

**शौनकोऽपि**,

या ब्राह्मेण विवाहेन सम्यग्दत्ता कुमारिका ।
तज्जातः पावयेत्पुत्रो मातापितृकुलोद्भवान् ॥
द्वादशद्वादशातीतान्पुरुषान् भाविनस्तथा ।
वस्त्रेण च समाच्छाद्य भूषयित्वा च शक्तितः ॥ इति ।

संख्यान्तरमाह मनुः,

दश पूर्वान्परान्वंश्यानात्मानं चैकविंशतिम् ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन् ॥

ब्राह्मी ब्राह्मविवाहोढा । पितृशब्दः पुत्रादीनामप्युपलक्षणम् ।

विष्णुरपि, ब्राह्मीपुत्रः पुरुषानेकविंशतिं पुनीतइति ।

याज्ञवल्क्योऽपि,

तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् । इति ।

गौतमोपि, दश पूर्वान्दशापरानात्मानं च । ब्राह्मीपुत्र उभयतो दशावरान्दश परान्पुनाति आत्मानं चैकविंशम् । एवमुत्तरत्राप्यात्माऽनुसन्धेयः ।

शौनकोऽपि,

ऋत्विजे कन्यकादानं वितते यज्ञकर्मणि ।
दैवो नाम विवाहोऽसौ ज्ञेयो दैवेन सम्मतः ॥
दैवोढकन्यकाजातो मातापितृकुलोद्भवान् ।
दशावरान्दश परान्पुनात्युभयतो नरान् ॥ इति ।

संख्यान्तरमाह मनुः,

दैवोढजासुतश्चैव सप्तसप्त परावरान् । इति ।

दैवेन विवाहेनोढा तस्यां जातः दैवोढजः । संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वम् । आत्मानं चेत्यनुवर्त्तते । एवं स्मृत्यन्तरवाक्येष्वपि ।

विष्णुरपि, दैवीपुत्रश्चतुर्दश । दैवी दैवविवाहोढा ।

याज्ञवल्क्योऽपि, चतुर्दश प्रथमजः पुनातीति । प्रथमजः दैवविवाहजः ।

गौतमोऽपि संख्यान्तरमाह, दश दैवादिति । पञ्चावरान् पञ्च परानुभयत इति दश ।

अथार्षफलम् ।

तत्राश्वलायनः, सप्तावरान्सप्त परान्पुनात्युभयत इति। आर्षविवाहोढायां जातः पुत्रः सप्तावरान्सप्त परान्पुनातीति उभयतः।

शौनकोऽपि,

यत्र गोमिथुनं दत्त्वा प्रदात्रभ्यः कुमारिकाम्।
उद्वहेदार्षनामाऽसौ विवाह ऋषिसंमतः॥
तस्यां जातः सुतो मातुः पितुश्च कुलसम्भवान्।
सप्तावरान्सप्त परान्पुनात्युभयतो नरान्॥ इति।

संख्यान्तरमाह मनुः, आर्षोढजः सुतस्त्रींस्त्रीनिति।

आर्षोढजः आर्षविवाहोढजः।

विष्णुः, आर्षीपुत्रश्च सप्त। आर्षोढापुत्रस्त्रीन्पूर्वांस्त्रीनपरान्दातारं च सप्तमं पुनाति।

याज्ञवल्क्योऽपि, उत्तरजश्च षडिति।

गौतमोऽपि, त्रिपुरुषमार्षात्। त्रिपुरुषमित्यत्र वीप्सा द्रष्टव्या। तथाच त्रीन्पूर्वान् त्रीन्परानिति सिध्यति। स्मृत्यन्तरवाक्यैकवाक्यत्वात्।

अथ प्राजापत्यफलम्।

तत्राश्वलायनः, अष्टावरानष्ट परान्पुनात्युभयत इति। प्राजापत्यविवाहोढायां जातः पुत्रः उभयतोऽप्यवरानष्ट परान्पुनाति।

शौनकोऽपि,

सह धर्मं चरत इत्युक्त्वा यत्र कुमारिका।
प्रदीयते विवाहोऽसौ प्राजापत्य इति स्मृतः॥
अष्टावरानष्ट परान्पुनात्युभयतो नरान्। इति।

संख्यान्तरमाह मनुः,

षट्षट् कायोढजः सुत इति।

याज्ञवल्क्योऽपि,

पावयेत्तज्जः षट्षट् वंश्यान्सहात्मजान् । इति ।

विष्णुः, प्राजापत्यश्चतुरः । चतुर इत्यत्र वीप्सा द्रष्टव्या । तथाच चतुरः पूर्वान् चतुरः अवरानिति सिध्यति ।

गौतमः, दशैव प्राजापत्याद् । पञ्च पूर्वान्पञ्चावरानिति दश ।

शङ्खलिखितौ, सप्ताद्यन्तयोरात्मानं च प्राजापत्यः पञ्चार्षः त्रीन्दैव उत्तरेषु क्रियाप्राधान्यम् ।

आदौ पित्रादीन् सप्त अन्ते पुत्रादींश्च सप्त आत्मानं च पञ्चदशं प्राजापत्ये पुनाति । एवं पञ्च पञ्चार्षः । त्रीन्दैवः । उत्तरेषु आसुरादिषु क्रियया विवाहक्रियया प्राधान्यं भार्यात्वोत्पत्तिमात्रं न फलसम्बन्ध इत्यर्थः । अत्र पुरुषसंख्यातारतम्यं कन्यालङ्काराद्युपस्कारतारतम्येन द्रष्टव्यम् ।

फलान्तरमाहतुर्मनुयमौ,

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्राः जायन्ते शिष्टसंमताः ॥
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्म्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥

विष्णुरपि, ब्राह्मेण विवाहेन कन्यां ददद् ब्रह्मलोकं गमयति दैवेन स्वर्गम् आर्षेण वैष्णवं प्राजापत्येन देवलोकं गान्धर्वेण गन्धर्वलोकं गच्छतीति ।

उक्तलक्षणेन ब्राह्मेण विवाहेन कन्यां ददद्दाता पूर्वोक्तसंख्याकान् स्वपितॄन् ब्रह्मलोकं गमयति । स्वयं च गच्छतीति

वक्ष्यमाणेन सम्बन्धः । एवमुत्तरत्रापि द्रष्टव्यम् । गान्धर्वेण कन्यां ददद्गन्धर्वलोकं स्वयं च गच्छति न पितॄन्गमयति । पुरुषसंख्याविशेषाश्रवणेन गमयतेरनन्वयात् । इदं च विवाहफलं स्वस्वजातीयवरसम्प्रदानके कन्यादाने । ब्राह्मणसम्प्रदानके दाने तु तस्मिन्नेव फलेऽतिशयः कल्पनीयः ।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
अधीते शतसाहस्रं प्राधीतेऽनन्तमुच्यते ॥

इति दक्षस्मरणात् ।

## अथ पुनर्विवाहनिर्णयः ।

**तत्र नृसिंहः,**

पुनर्विवाहं वक्ष्यामि दंपत्योः शुभवृद्धिदम् ।
भग्नेन्दुलग्नयोर्दोषे ग्रहताराादिसम्भवे ॥
अन्येष्वशुभकालेषु दुष्टयोगादिसम्भवे ।
विवाहे त्वथ दंपत्योराशौचादिसमुद्भवे ॥

अत्राशौचशब्देन वरपित्रोराशौचम् । अन्याशौचे दोषाभाववचनात् । आदिशब्देन गृहदाहाद्युत्पातो गृह्यते ।

तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह्यमुच्यते ।
अयनं चोत्तरं श्रेष्ठं वर्द्धयेत्तु विशेषतः ॥
आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषाः शुभावहाः ।
विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गजः ॥
करणायोगसंज्ञानिग्रहगोचरयोगगाः ।
तस्मिन् विवाहसमये शुभदाश्च तथैव च ॥
पूर्वाह्णे पूर्वरात्रौ च विवाहः शुभदो भवेत् ।

इति पुनर्विवाहनिर्णयः ।

## अथ बालवैधव्यपरिहारार्थं व्रतम् ।

व्रतखण्डे,

सावित्र्यादिव्रतादीनि भक्त्या कुर्वन्ति याः स्त्रियः।
सौभाग्यं च सुहृत्त्वं च भवेत्तासां सुसन्ततिः॥ इति।

व्रतग्रहणप्रकारस्तु व्रतप्रकाशे ऽवगन्तव्यः।

व्रतान्तरमुक्तं ज्ञानभास्करे,

बलवद्विधवायोगे बाल्ये सति मृगीदृशाम्।
पिता रहसि कुर्वीत तद्भङ्गं शास्त्रसम्मतम्॥
सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते।
व्रतारम्भं प्रकुर्वीत बालवैधव्यनाशकम्॥
सुस्नातां चित्रवस्त्राढ्यां कन्यां पितृगृहाद् बहिः।
नीत्वाऽश्वत्थं शमीस्थाने यद्वा बदरिकाश्रमे॥
आलवालं प्रकुर्वीत विपुलं मृदु कर्षितम्।
कुमार्याचार्यनिर्दिष्टं कृतसङ्कल्पमादरात्॥
करकाम्बुप्रपूर्णेन सिञ्चनं प्रतिवासरम्।
चैत्रे चाश्विनमासे च तृतीयासितपक्षतः॥
यावत्कृष्णतृतीयायां मासमेकं यथाविधि।
ब्राह्मणानां तथा स्त्रीणां पूजनं च समाचरेत्॥
तदाशिषाऽऽप्नुयात्कन्या सौभाग्यं च सुखान्वितम्।
प्रतिमां पार्वतीशानीं वैणवे भाजनेऽर्चयेत्॥
चन्दनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि।
उपचारैर्यथा भक्त्या नैवेद्यैः प्रतिवासरम्॥
एवं व्रतप्रभावेण बालवैधव्यनिष्कृतिः।
जायते कन्यकानां च ततः पाणिग्रहक्रिया॥ इति।

**अथ बालवैधव्यपरिहारार्थं कुम्भविवाहः।**

**तत्र मार्कण्डेयः,**

बालवैधव्ययोगेऽपि कुम्भद्रुप्रतिमादिभिः ।
कृत्वा लग्नं रहः पश्चात्कन्योद्वाह्येति चापरे ॥ इति ।

कुम्भविवाह इति मन्थन्या अप्युपलक्षणम् । द्रुर्वृक्षोऽश्वत्थ एव । प्रतिमा विष्णोः सौवर्णी करशिरोऽवयवादिसहिता न शालग्रामादिरूपा । तत्प्रकारोऽभिहितः —

सूर्यारुणसंवादे,

विवाहात्पूर्वकाले च चन्द्रताराबले शुभे ।
विवाहोक्ते च मन्थन्या कुम्भेन सह चोद्वहेत् ॥
पिता सङ्कल्प्य वाह्यं च विवाहविधिपूर्वकम् ।
सूत्रेणावेष्टयेत्पश्चात् दशतन्तुविधानतः ॥
कुङ्कुमालङ्कृतं देहं तयोरेकान्तमन्दिरे ।
ततः कुम्भं च निस्सार्य प्रभज्य सलिलाशये ॥
ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः ।
तत्सर्वं वस्त्रपूजायां ब्राह्मणाय निवेद्य च ॥
अन्यालङ्कारवस्त्राद्यं ब्राह्मणाय निवेदयेत् ।
अथ कुम्भप्रार्थना ।
वरुणाङ्गस्वरूप त्वं जीवनानां समाश्रय ।
पतिं जीवय कन्यायाः चिरं पुत्रान्सुखं वरम् ॥
देहि विष्णुवरान्देव कन्यां पालय दुःखतः । इति ।

## अथाश्वत्थविवाहः ।

तत्रैव,

द्विजान् गुरून्सुहृन्नारीर्मङ्गलोच्चारणैस्संभ्रमम् ।
आहूयोद्वाहकाले च रम्यभूमौ समण्डपे ॥
गत्वा प्रणम्य गौरीं च गणनाथं च भूरुहम् ।
भवानीं चैव मन्थानीं पिता मन्त्रमुदीरयेत् ॥

उद्वाहयिष्ये विधिवदश्वत्थेन मनोहराम् ।
कन्यां सौभाग्यसौख्यार्थहेतवेऽहं द्विजोत्तमः ॥
नमस्ते विष्णुरूपाय जगदानन्दहेतवे ।
पितृदेवमनुष्याणामाश्रयाय नमोनमः ॥
वनानां पतये तुभ्यं विष्णुरूपाय भूरुह । इति ।

अत्र विवाहविधिस्तु कुम्भविवाहवदेवावगन्तव्यः । अथैवमेव सौवर्ण्या विष्णुप्रतिमया सह विवाहं विधाय प्रतिमां ब्राह्मणाय दद्यात् ।

दानप्रकारस्तत्रैव,

शुभे मासे सिते पक्षे सानुकूलग्रहे दिने ।
ब्राह्मणं साधुमामन्त्र्य सम्पूज्य विविधार्हणैः ॥
तस्मै दद्याद्विधानेन विष्णोर्मूर्त्तिं चतुर्भुजाम् ।
शुद्धवर्णसुवर्णेन वित्तशक्त्याऽथवा पुनः ।
निर्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम् ।
दधानां वाससी पीते कुमुदोत्पलमालिनीम् ॥
सदक्षिणां च तां दद्यान्मन्त्रमेतमुदीरयेत् ।
यन्मया पूर्वजनुषि घ्नन्त्या पतिसमागमम् ॥
विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया ।
प्राप्यमाणं महाघोरं यशःसौख्यधनापहम् ॥
वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये ।
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ॥
सौवर्णीं निर्मितां शक्त्या तुभ्यं सम्प्रददे द्विज ।
अनघाऽद्याहमस्मीति त्रिवारं प्रवदेदिति ॥
एवमस्त्विति विप्राशीर्गृहीत्वा स्वगृहं विशेत् ।
ततो वैवाहिकं तातो विधिं कुर्यान्मृगीदृशः ॥ इति ।

अत्र च पुनर्भूत्वदोषो न भवति ।

तथाच विधानखण्डे,

स्वर्णाम्बुपिप्पलानां च प्रतिमा विष्णुरूपिणी ।
तयोः सह विवाहे च पुनर्भूत्वं न जायते ॥ इति ।

अत्राम्बुशब्देन जलपूर्णो घटो लक्ष्यते ।

तथा,

लक्ष्मीरूपा सदा कन्या हरिरूपं सदा जलम् ।
हरेर्दत्तं च यद्दानं दातुः पापहरं सदा ॥
लक्ष्मीनारायणप्रीत्यै यावता कन्यका बुधैः ।
तारयेत्सकलं दातुः कुलं पूर्वापरं सदा ॥
चन्द्रवन्ह्यम्बुगन्धर्वशिवसोमस्मरा इमे ।
पतयः कन्यकानां च बाल्यात्सन्ति सदैव ते ॥
तदुद्वाहविधिर्यत्नात्कृतो नो जनयेदघम् ।
यथाऽतिभुक्तं कमलं देवानां पूजनाय वै ॥
अर्हं भवति सर्वत्र तथा कन्या नृणां भवेत् ।

कमलं जलम् । अतिभुक्तं स्नानपानादिना ।

श्रुतावपि,

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ इति ।

विधानखण्डे,

मन्थन्या भास्करो यत्नात्कृतवान्दुहितुर्विधिम् ।
रेणुकोऽपि स्वकन्यायास्तरूद्वाहं चकार सः ॥ इति ।

अत एव मनुष्योऽप्युद्वहेत् । तमेवोद्वाहपदार्थं कात्यायन आह,

पित्रा मात्रा तथा भ्रात्रा दत्ता या तोयधारया ।
विप्राग्निसुहृदां साक्ष्यं कृत्वा सोद्वाहिता भवेत् ॥ इति ।

## अथाधिवेदनम् ।

तदुक्तमैतरेयकब्राह्मणे, तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवस्सह पतय इति ।

सहशब्दसामर्थ्यात्क्रमेण पत्यन्तरं भवतीति गम्यते । अत एव

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति मनुना स्त्रीणामपि पत्यन्तरं स्मर्यते ।

श्रुत्यन्तरमपि, तस्मादेको बह्वीर्जाया विन्दतइति ।

तन्निमित्तान्याह याज्ञवल्क्यः,

सुरापी व्याधिता धूर्त्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ इति ।

मनुरपि,

मद्यपा ऽसत्यवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता वाऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥

मद्यपाऽत्र द्विजातिस्त्री बोद्धव्येति प्राञ्चः ।

वस्तुतस्तु,

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
चातुर्वर्ण्यैरपेया सा तत्स्त्रीभिश्चैव पण्डिताः ॥

इति बृहन्नारदीयवचनात्सस्त्रीकाणां चतुर्णामपि वर्णानां त्रिविधसुरापाननिषेधस्सिध्यति । द्वादशविधमद्यनिषेधस्तु ब्राह्मणानामेव न क्षत्रियादीनामिति प्रपञ्चयिष्यते प्रायश्चित्तप्रकाशे । असत्यवृत्ता असदाचारा मिथ्याभाषिणी वा । प्रतिकूला भर्त्तुरनिष्टकारिणी । व्याधिता गृहकृत्यासामर्थ्यापादकव्याधियुक्ता । हिंस्रा पुत्रदास्यादिताडनशीला । अर्थघ्नी उत्पादितार्थविनाशकारिणी । सर्वदेत्यस्यासत्यवृत्तादिभिरन्वयः ।

शङ्खलिखितावपि, अप्रियशीलां पुरुषद्वेषिणीमननुकूलां चाधिविन्देतेति ।

स्मृतिभास्करेऽपि,

व्याधिता स्त्रीप्रजा वन्ध्या उन्मत्ता विगतार्त्तवा ।
अदुष्टा लभते त्यागं तीर्थतो न तु धर्मतः ॥

तीर्थतो योनितः । एतन्निमित्ताभावे नाधिवेत्तव्या—

इत्याहापस्तम्बः,

धर्मप्रजासंपन्नेषु नान्यान् कुर्वीतान्यतराभावे कार्या प्रागग्न्याधेयादिति ।

अस्यार्थः । यदि प्रथमोढा स्त्री धर्मेण श्रौतस्मार्त्ताग्निसाध्येन प्रजया पुत्रपौत्रादिना च संयुक्ता तदा नान्यान्विवहेत् । अन्यतराभावे अग्न्याधानात्प्राग्विवोढव्येति । अग्न्याधानात्प्रागिति मुख्यकल्पाभिप्रायं, नोत्तरत्र निषेधार्थम् । अन्यथा ऽधिवेदनस्य पुनराधाननिमित्ततानुपपत्तेः ।

स्मृत्यन्तरेपि,

अपुत्रः सन्पुनर्दारान्परिणीय ततः पुनः ।
परिणीय समुत्पाद्य नो वेदापुत्रदर्शनात् ॥
विरक्तश्चेद्वनं गच्छेत्संन्यासं वा समाश्रयेत् । इति ।

अस्यार्थः । प्रथमायां भार्यायामपुत्रः सन् पुनर्दारान्परिणीय, पुत्रानुत्पादयेदिति शेषः । तस्यामपि पुत्रानुत्पत्तौ आपुत्रदर्शनात्, परिणयेदिति शेषः । स्पष्टमन्यत् । हितायां विशेषमाह—

मनुः,

या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ।
साऽनुज्ञाप्याऽधिवेत्तव्या नावमान्या हि कर्हिचित् ॥ इति ।

हितेत्युपलक्षणम् ।

तथाच याज्ञवल्क्यः,

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।

त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ इति ।

त्यजन् अधिविन्दन् ।

देवलोऽपि,

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।

समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत् ॥ इति ।

अत्राशक्तं प्रत्याह स एव,

अधिविन्दन् स्त्रियै दद्यादाधिवेदनिकं समम् ।

न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥

तस्याप्यसम्भवे भरणमात्रमेव ।

अद्रव्यो भरणं स्त्रिया इति तेनैवाभिधानात् । अधिवेदने प्रतीक्षाकालमाह—

मनुः,

वन्ध्याऽष्टमेऽधिवेद्या स्याद्दशमे तु मृतप्रजा ।

एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

हारीतः,

अप्रजा नवमे वर्षे दशमे तु मृतप्रजा ।

एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

देवलः,

आकाङ्क्षेताष्ट वर्षाणि भर्त्ता ऽतिप्रसवां स्त्रियम् ।

दश वन्ध्यां च निन्द्यां च द्वादश स्त्रीप्रसूतिनीम् ॥

ततो विन्देत विधिना पुत्रार्थी धर्मतः स्त्रियम् ।

पुत्रलाभात्परं लोके नास्ति हि प्रसवा हिताः ॥

अस्यार्थः । अतिप्रसवाऽतिपुत्रा । हिता इहामुत्रोपकारका इति।

**संग्रहे,**

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥ इति ।

अत्राष्टदशवर्षादिकालप्रतीक्षायां विकल्पो वयःशक्त्याद्यपेक्षया अव्यवस्थितो बोद्धव्यः । येष्वधिवेदननिमित्तेषु न कालविशेषः श्रूयते तेषु यावता कालेन सुरापीत्वनिश्चयो भवति यावता वा व्याधेरसाध्यत्वनिश्चयो भवति तावन्तं कालं प्रतीक्षेत । यथा दीर्घरोगेऽधिविन्देतेति ।

या त्वधिविन्ना रोषेण गृहान्निर्गच्छेत्तां प्रत्याह—

**मनुः,**

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥ इति ।

कुलं तत्पित्रादि । धर्मकार्ये ज्येष्ठैव सहाधिकारिणीत्याह—

**कात्यायनः,**

अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठया गर्हिता नचेत् ॥

अस्यार्थः । अग्निशुश्रूषा दर्शपूर्णमासादीनि कर्माणि । शिष्टशुश्रूषा अतिथ्यभ्यागतादिपूजा । अनेनान्येऽपि पत्नीसहाधिकारकगृहस्थधर्मा उपलक्ष्यन्ते । तदेतत्सकलं धर्मजातं सवर्णासवर्णासमवाये सवर्णयैव सह कार्यम् । सवर्णासमवाये ज्येष्ठयैव सह कार्यम् ।

**तथाच योगीश्वरः,**

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु विधौ धर्मे ज्येष्ठया न विनेतरा ॥ इति ।

गर्हाशब्दोऽत्र धर्मायोग्यत्वोपपादकदोषोपलक्षणार्थः । अने-

न पूर्वोक्तदोषवत्या ज्येष्ठयाऽपि सवर्णया धर्मकार्यं न कारयेदित्युक्तं भवति, किं तु निर्दोषया कनीयस्यैवेति । अयं च ज्येष्ठाया अग्निपरिचर्यानियमस्तयैव सहाधानपक्षे । उभाभ्यां सहाधाने तूभयोरपि तुल्योऽधिकारः । आधानोत्तरपरिणीतायाः पुनराधानं विना न सहाधिकार इति हेमाद्रिः । स्मार्ताग्निपरिचरणं तूभाभ्यामपि कार्यम् । उभयाग्निसंसर्गविधानात् । तच्चोपरिष्टाद्वक्ष्यामः । प्रथमां पत्नीं प्रशंसति—

कात्यायनः,

प्रथमा धर्मपत्नी स्याद् द्वितीया रतिवर्द्धिनी ।
दृष्टमेव फलं तत्र नादृष्टमुपपद्यते ॥ इति ।

## अथाधिवेदनेऽग्निनियमः ।

तत्र कात्यायनः,

सदारोऽन्यान्पुनर्दारानुद्वोढुं कारणान्तरात् ।
यदीच्छेदग्निमाकुर्वन् क्व होमोऽस्य विधीयते ॥
स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन। इति ।

स्वाग्नौ पूर्वपरिगृहीताग्नौ । तदभावे लौकिकेऽग्नौ । यदा लौकिकेऽग्नौ तदा पूर्वेणाग्निनाऽस्याग्नेः संसर्गः कार्यः। तदेवाग्रे निरूपयिष्यते । अत्र नान्दीश्राद्धादिकं वरेणैव कार्यम् ।

तथाच कात्यायनः,

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे सुतः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥ इति ।

तच्च येभ्यः पिता दद्यात्तेभ्यः कार्यम् ।

तथाच स एव,

येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः । इति ।

साग्निक इति कर्तृमात्रोपलक्षणम् । अन्यथा निरग्निकस्य

जीवत्पितृकस्य वृद्धिश्राद्धाभावप्रसङ्गात् । इष्टापत्तौ—

नानिष्ट्वा तु पितॄन् श्राद्धे वैदिकं किञ्चिदाचरेत् ।

इतिवचनविरोधः । अधिवेदने तृतीयविवाहनिषेधमाह—

पैङ्ग्यः,

ब्रह्मचर्यं समाप्यैकां भार्ययोर्द्वितयं तथा ।
तृतीयां नोद्वहेद्विप्र इति धर्मकृतो विदुः ॥

अत्र तृतीयापरिणयननिषेधो मानुषीविषयः ।

तथाच मात्स्ये कश्यपवाक्यम्,

अपाकृत्य ऋणं चार्षं लक्षण्यां स्त्रियमुद्वहेत् ।
एकां तु पितृदेवार्थं रत्यर्थमपरां तु वा ॥
तृतीयां मानुषीं नैव चतुर्थीं च समुद्वहेत् ।
पुत्रपौत्रादिसम्पन्नः कुटुम्बी साग्निको वरः ॥
उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ।
मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम् ॥
नश्यत्येव न सन्देहो गार्ग्यस्य वचनं यथा । इति ।

तथा,

धर्मरागनिमित्तोऽपि नोद्वहेन्मानुषीं स्त्रियम् ।
तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ॥

मानुषीं नोद्वहेदिति वदता आर्कीमुद्वहेदित्युक्तं भवति ।

तथाच सङ्ग्रहे,

तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ॥
चतुर्थादिविवाहाय तृतीयेऽर्कं समुद्वहेत् ॥ इति ।

अथ तद्विधिमाह स एव,

आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे ।
शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् ॥

दिगादिनियममाह ब्रह्मपुराणम्,

ग्रामात्प्राच्यामुदीच्यां वा सपुष्पफलसंयुतम् ।
परीक्ष्य यत्नतोऽधस्तात् स्थण्डिलादि यथाविधि ॥

व्यासः,

स्नात्वाऽलंकृतवासास्तु रक्तगन्धादिभूषितम् ।
सपुष्पफलशाखैकमर्कगुल्मं समाश्रयेत् ॥
सल्लक्षणेन संयुक्तमर्कं संस्थाप्य यत्नतः ।
अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा ॥
अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीश्राद्धे हिरण्येन अष्टवर्गान्प्रपूजयेत् ॥
पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ।
यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणम् ॥
उष्णीषं गन्धमाल्यादि वरायास्मै प्रदापयेत् ।
स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत् ॥

ब्रह्मपुराणे,

कृत्वाऽर्कं पुरतस्तिष्ठन्प्रार्थयेत द्विजोत्तमः ।
त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ॥
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ।
तत्राध्यारोप्य देवेशं छायया सहितं रविम् ॥
वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेणैव पूजयेत् ।

तन्मन्त्रेण आकृष्णेनेत्यादिना ।

स्मृत्यन्तरेऽपि,

श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः ।
गन्धपुष्पैः समभ्यर्च्याप्यब्लिङ्गैरभिषिच्य च ॥
गुडौदनं च नैवेद्यं ताम्बूलं च समर्पयेत् ।

व्यासः,

अर्कं प्रदक्षिणं कुर्वन् जपेन्मन्त्रमिमं पुनः ।
मम प्रीतिकरा येयं मया सृष्टा पुरातनी ॥
अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु ।
पुनः प्रदक्षिणीकुर्यान्मन्त्रेणानेन मन्त्रवित् ॥
नमस्ते मङ्गले देवि नमस्सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥
अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च ।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥
तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय ।
ततश्च कन्यावरणं त्रिपुरुषं कुलमुद्धरेत् ॥
आदित्यः सविताऽऽचार्यः पुत्री पौत्र्यस्य नप्त्रिका ।
गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् ॥
मुहूर्त्तैकं निरीक्षेत स्वस्तिसूक्तमुदीरयेत ।
आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥
अथाचार्यं समाहूय विधिना तन्मुखाच्च ताम् ।
प्रतिगृह्य ततो होमं गृह्योक्तविधिना चरेत् ॥

आचार्यस्य दानमन्त्रमाह—

व्यासः,

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ इति ।
ततः सर्वाणि कर्माणि कृत्वा कङ्कणपूर्वकम् ।
यावत्पश्चावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥
स्वशाखोक्तेन मन्त्रेण गायत्र्या वाऽथवा जपेत् ।
पश्चीकृत्य पुनः सूत्रं स्कन्धे बध्नाति मन्त्रतः ॥

बृहत्सामेतिमन्त्रेण ।
अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥
कुम्भांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये ।
सवस्त्रं प्रतिकुम्भं च त्रिः सूत्रेणैव वेष्टयेत् ॥
हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् ।
प्रतिकुम्भं महाविष्णुं सम्पूज्य परमेश्वरम् ॥
पाद्यार्घ्यादि निवेद्यान्तं कुर्यान्नाम्ना च मन्त्रवित् ।
अत्र होमप्रकारमाह शौनकः,
तृतीये स्त्रीविवाहे तु सम्प्राप्ते पुरुषस्य तु ।
अर्कविवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥
अर्कसन्निधिमागत्य तत्र स्वस्त्यादिकं चरेत् ।
नान्दीश्राद्धं प्रकुर्वीत स्थण्डिलं च प्रकल्पयेत् ॥
अर्कमभ्यर्च्य सौर्या च गन्धपुष्पाक्षतादिभिः ।
सौर्या सूर्यदैवतया आकृष्णेनेत्यादिकया च ।
स्वर्णेनालंकृत्य यत्नेन वस्त्रमाल्यादिभिः शुभैः ।
अर्कस्योत्तरदेशे तु एतया अर्ककन्यया ।
उल्लेखनमिदं कुर्यादाभ्यन्तरमतः परम् ॥
आज्याहुत्यादयः पश्चादन्ते पुण्याहमाचरेत् ।
अत्र पञ्चमदिनकृत्यमुक्तं ब्राह्मपुराणे,
चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूजयेत् ।
विसृज्य होममग्निं च विधिना मानुषीपराम् ॥
उद्वहेदन्यथा नैव पुत्रपौत्रानभिव्रजेत् ।
न पशून्न च मित्राणि न फलं चैव गच्छति ॥
एवमेव द्विजश्रेष्ठः विधिना सम्यगुद्वहेत् ।
धनधान्यसमृद्धिश्च इज्याशक्तिः परत्रच ॥ इति ।

अथ कृताधिवेदनस्याग्निद्वयसंसर्गविधिरभिधीयते।

शौनकः,

अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।
सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः ॥
अरोगामुद्वहेत्कन्यां धर्मलोपभयात्स्वयम् ।
कृते तत्र विवाहे च व्रतान्ते तु परेऽहनि ॥
पृथक्स्थण्डिलयोरग्नी समाधाय यथाविधि ।
तन्त्रं कृत्वा ऽऽज्यभागान्तमन्वाधानादिकं ततः ॥
जुहुयात्पूर्वपत्न्यग्नौ तयाऽन्वारब्ध आहुतीः ।
अग्निमीळेपुरोहितंसूक्तेन नवर्चेन तु ॥
समिध्येनं समारोप्य अयन्तेयोनिरित्यृचा ।
प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय तम् ॥
आज्यभागान्ततन्त्रादि कृत्वाऽऽरभ्य तदादितः ।
समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयाद् घृतम् ॥
चतुर्गृहीतमेताभिः ऋग्भिः षड्भिर्यथाक्रमम् ।
अग्नावग्निश्चरतीत्यग्निनाऽग्निः समिध्यते ॥
अस्तीदमिति तिसृभिः पाहिनोअग्नएकया ।
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ॥
गोयुगं दक्षिणा देया श्रोत्रियायाहिताग्नये ।
पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः ॥
आदधीतान्यया सार्धमाधानविधिना गृही । इति ।

अयमग्निद्वयसंसर्गः लौकिकाग्नौ विवाहहोमपक्षे । संस्कृताग्नौ विवाहहोमपक्षे तु नायं संसर्गविधिः ।

विवाहहोमेनैव संसृष्टत्वात् । द्वयोर्मध्ये एका म्रियेत तदा तेनैवाग्निना तां दग्ध्वा स्वयम्पुनरन्यमादध्यात् ।

*अत्र बहुवचनोपदेशात् सर्वासु पक्षादिषु एतत्कार्यम् । तदुक्तम्—

देवयाज्ञिकधृतभारद्वाजगृह्ये,

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन् गच्छत्यधोगतिम् ॥ इति ।

चरुः पक्षादौ क्रियमाणस्थालीपाकः ।

छन्दोगपरिशिष्टे च,

पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम् । इति ।

आश्वयुज्यां पौर्णमास्यां प्रातर्नित्येषु स्थालीपाकमन्वायातयतीति मैत्रायणीयगृह्येऽप्याश्वयुजीस्थालीपाकविधिपरे वाक्ये अस्य नित्यत्वप्रदर्शनाच्च । एतच्च पूर्वेद्युरुपवसथिकाशनादिकं कृत्वा परेद्युः कर्त्तव्यम् । तदाह—

गोभिलः, अथ दर्शपूर्णमासयोः सन्ध्यां पौर्णमासीमुपवसेदुत्तरामेके । यदहश्चन्द्रमा न दृश्येतताममावास्याम् । पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः । आमावास्येन हविषा पूर्वपक्षमभियजते पौर्णमासेनापरपक्षम् । यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः सन्निकर्षः साऽमावास्या । यदहस्त्वेव चन्द्रमा न दृश्येत ताममावास्यां कुर्वीत दृश्यमानेऽप्येकदा गताध्वा भवतीति । त्रयः पौर्णमासीकाला भवन्ति । सन्ध्या वाऽस्तमितोदिता वोच्चैर्वा । अथ यदहः पूर्णो भवति । पृथगेवैतस्य ज्ञानस्याध्यायो भवत्यधीयीत वा तद्विद्भ्यो वा पर्वागमयेत । अथ यदहरुपवसथो भवति तदहः पूर्वाह्न एव प्रातराहुतिं हुत्वेति ।

---

* अर्कविवाहान्तः संस्कारप्रकाशः पूर्वं मुद्रितः । सार्धसहस्रपरिमितो ग्रन्थः बाबूगोविन्ददासीयपुस्तके त्रुटितः पुस्तकान्तरानुपलब्ध्या न मुद्रितः । अनन्तरं बहुदिनानि अन्विष्यापि तदनुपलम्भात् उपलभ्यमानोऽग्रिमो ग्रन्थो मुद्रयितुमुपक्रम्यते ।

अस्य भाष्यविवेचितोऽर्थः। अथ बलिकर्मादिकथनानन्तरम्। दर्शपूर्णमासयोः, विधिर्व्याख्यास्यत इति सूत्रशेषः। सन्ध्यां पौर्णमासीमुपवसेत्। रात्र्यह्नयोः सन्धिः सन्ध्या तस्यां सन्ध्यायां या पौर्णमास्यवच्छिद्यते सा सन्ध्येत्युच्यते। अत्राविशेषात् सन्ध्याद्वयमपि गृह्यते। एवं च समस्तमहोरात्रं व्याप्य स्थिता सती या उदयसन्ध्यायां तिष्ठति, या वा अहरेव केवलं व्याप्य स्थिता सती अस्तमयसन्ध्यायां तिष्ठति, तामुपवसेत् वक्ष्यमाणनियमयुक्तो भवेत्।

**तथाच स्मृतिः,**

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयो न शरीरस्य शोषणम्॥ इति।

उत्तरा प्रतिपत्।

तथाच श्रुतिः, द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये तस्मात्प्रतिपद्युपवसन्नेव यजेतापरेद्युर्वेति।

माध्यन्दिनश्रुतावपि, एषा ह सम्वत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वेति प्रतिपदः उत्तरपौर्णमासीत्वदर्शनात्। यदहश्चन्द्रमा न दृश्येत। यस्मिन्नहनि चन्द्रमाः सोमः न दृश्येत आगमादिना अतिक्षीण इत्युपलभ्यते ताममावास्याम् उपवसेदित्यनुषङ्गः। पक्षान्ता उपवस्तव्याः। पक्षोऽर्द्धमासः पूर्वपक्षोऽपरपक्षश्च। बहुवचनमावृत्त्यपेक्षम्। तदन्ताः अवसानतिथयः पक्षान्ताः ते वक्ष्यमाणविधिना उपवस्तव्याः। पक्षादयोऽभियष्टव्याः।पक्षाणां आदयः पक्षादयः प्रतिपदः ताश्च अभियष्टव्याः आभिमुख्येन पूर्वाह्णादिसम्पादनेन यष्टव्याः। आमावास्येन हविषा पूर्वपक्षं शुक्लपक्षम् अभियजते। पूर्वपक्षप्रतिपदिष्ट्या कृत्स्नः पूर्वपक्ष इष्टो भवतीति तात्पर्यम्। पूर्ण-

मासे उपक्लृप्तं हविः पौर्णमासं तेन पौर्णमासेन हविषा अपरपक्षं कृष्णपक्षम् आभियजते । कृष्णपक्षप्रतिपदिष्ट्या कृत्स्नः कृष्णपक्ष इष्टो भवतीति तात्पर्यम् । यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी । यः परमो महान् विप्रकर्षः व्यवधानं महदन्तरमितियावत् । सूर्याचन्द्रमसौ प्रसिद्धौ । यः परमः सन्निकर्षः साऽमावास्या । यः परमः महान् सन्निकर्षः सन्निधानं, सूर्याचन्द्रमसोरित्यनुषङ्गः । यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत । यदहः यस्मिन्नहनि चन्द्रमा न दृश्येत ताममावास्यां कुर्वीतताममावास्याम् उपवसेत् । तुशब्दः चशब्दार्थः।एवकारश्चावधारणे। यद्यपि अयमर्थः पूर्वसूत्रेणैव सिद्धस्तथापि अस्य सूत्रस्य चतुर्दशीमिश्रामावास्याविषयत्वकल्पनात् पूर्वसूत्रस्य च तदतिरिक्तामावास्याविषयत्वकल्पनाच्च न पौनरुक्त्यम् । दृश्यमानेऽप्येकदा । यदा दृश्यमानेऽपि चतुर्दश्यामपि क्षीणशेषायामपराह्णे श्राद्धमारभेत तदाऽवश्यममावास्यां प्रतीक्षेत एकदा न सर्वदा । यदाऽतिविप्रकृष्टत्वादमावास्यायाः प्रतीक्षणे सन्ध्यासमीपं स्यात्तदा न प्रतीक्षेत अन्यदा प्रतीक्षेतेति । गताध्वा भवति। गतः अध्वा स्वकीयं स्थानं परिपाटिगणनमार्गो यस्याः अमावास्यायाः सेयं गताध्वा । चतुर्दश्यामेव तस्याः क्षीणत्वात् । तदुक्तम्—

छन्दोगपरिशिष्टे,

संमिश्रा या चतुर्दश्या अमावास्या भवेत्क्वचित् ।
खर्विकां तां विदुः केचिद्गताध्वामिति चापरे ॥ इति ।

त्रयः पौर्णमासीकाला भवन्ति।सन्ध्या वाऽस्तमितोदिता वोचैर्वा । त्रयः त्रिसङ्ख्याकाः पौर्णमासीकालाः भवन्ति । पौर्णमास्येव कालः पौर्णमसीकालः स त्रिप्रकारो भवतीत्यर्थः।सन्ध्या वा सन्ध्या उक्तलक्षणा। अपरा अस्तमितोदिता यस्यां सवितुः अस्त-

मयानन्तरमेव चन्द्रमा उदेति सा अस्तमितोदिता । अन्या उच्चैः पौर्णमासी । यस्यामीषत् उच्चैः स्थिते चन्द्रे पश्चात्सविता अस्तमेति सेयमुच्चैः पौर्णमासी । अथ यदहः पूर्णो भवति । अथेति सूत्रा दिज्ञापनार्थः । अन्यथा पूर्वसूत्रेणैक्यभ्रमः स्यात् । यदहः यस्मिन्नहनि । पूर्णः षोडशकलोपचययोगादखण्डमण्डलः चन्द्रमा भवति तामुपवसेदित्यनुवर्तते । पृथगेवैतस्य ज्ञानस्याध्यायो भवति । पृथगेव अन्य एतस्य ज्ञानस्य अध्यायः ग्रन्थो ब्रह्मसिद्धान्तादिको भवति । तमधीयीत वा जानीयाद्वा । तत् ज्योतिःशास्त्रं विदन्ति त इमे तद्विदः तेभ्यो वा सकाशाद्दर्शपूर्णमासाख्यं पर्व आगमयेत् जानीयात् । एवं उपवसथादिनं निर्णीय यदहरुपवसथो भवति तदहः वक्ष्यमाणं कुर्यादिति ।

शाङ्खायनश्च,

अथ दर्शपूर्णमासावुपोष्य प्रातर्यत्रैतन्महावृक्षाग्राणि सूर्य आतपति स यागकालः स्वस्त्ययनतमः सर्वासामावृतामन्यत्र निर्देशात् । सुमनाः शुचिः शुचौ वरूथ्यदेशे पूर्णाविम्बनं चरुं श्रपयित्वा दर्शपूर्णमासदेवताभ्यो यथाविभागं स्थालीपाकस्य जुहोतीति ।

आश्वलायनश्च,

अथ पार्वणस्थालीपाकस्तस्य दर्शपूर्णमासाभ्यामुपवास इध्मबर्हिषोश्च सन्नहनं देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जं काम्या इतरास्तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपतीति ।

तत्र दर्शपूर्णमासयोः उपवसथादिनवर्ज्यादिमाह—

देवयाज्ञिकधृतपरिशिष्टम्,

शाकं मांसं मसूरं च चणकं कोरदूषकान् ।
माषान् मधु परान्नं च वर्जयेदौपवस्तके ॥ इति ।

कात्यायनश्च,

लवणं मधु मांसं च क्षारान् श्वो येन हूयते ।
उपवासे न भुञ्जीत नोरु रात्रौ न किञ्चन ॥ इति ।

परिशिष्टान्तरं च,

तिलमुद्गादृते शैम्यं सस्ये गोधूमकोद्रवौ ।
पिण्याकं देवधान्यं च सर्वशाकं तथैक्षवम् ॥
सज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च ।
व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथा ॥ इति ।

अत एव सामुद्रमिति लवणविशेषणात्सैन्धवमानसादेरसामुद्रस्य न निषेध इति केचिदाहुः । हविष्यत्वमपि तस्योक्तं स्मृतौ-

मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥ इति ।

अक्षारलवणं सैन्धवमिति निबन्धकाराः ।

सैन्धवं लवणं यच्च यच्च मानससम्भवम् ।
पवित्रे परमे ह्येते प्रत्यक्षे अपि सर्वशः ॥ इति ।

लवणं मधु मांसं चेति वाक्येन सामान्यत एव औपवसथ्याहे लवणभक्षणप्रतिषेधः ।

व्रतस्थो वर्ज्जयेन्नित्यं सामुद्रं लवणं तथा ।

इतिवाक्येन च व्रतसामान्ये लवणविशेषप्रतिषेधः । एवं चानयोर्विभिन्नविषयत्वान्नैकतरेणान्यतरस्योपसंहारो युक्त इति तु काश्चित् ।

जाबालिसाङ्ख्यायनौ च,

कलहं क्रीतविक्रीतं प्रहासं बहुभाषणम् ।
तूर्यादिकं वृथाशय्यां यक्ष्यमाणो विवर्ज्जयेत् ॥
करम्भांश्च कुलत्थांश्च वर्ज्जयेत्कोद्रवांस्तथा ।
अनृतं बहुभाषां च क्रयं विक्रयमेव च ॥

दन्तधावनं पूर्वेद्युर्यागस्यैतानि वर्ज्जयेत् । इति ।

अशनद्रव्यादिनियममाह—

आपस्तम्बः,

अमाषममांसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वेति।

एतच्च व्रतमावश्यकम् । तदाह—

गोभिलः,

अहुता वा एतस्य मानुष्याहुतिर्य औपवसथिकं नाश्नात्यनीश्वरो ह क्षोधुको भवति अकाम्यो जनानां पापीयसी हास्य प्रजा भवति य औपवसथिकं भुङ्क्ष ईश्वरो ह भवत्यक्षोधुकः काम्यो जनानां वसीयसी हास्य प्रजा भवति तस्माद्यत्कामयेतौपवसथिकं भुञ्जीयातामथ एवैतां रात्रिं शयीयातां तौ खलु जाग्रन्मिश्रावेवैतां रात्रिं विहरेयातामितिहासमिश्रेण वा केनचिद्वा जुगुप्सेयातां त्वेवाव्रतेभ्यः कर्मभ्यो न प्रवसन्नुपवसेदित्याहुः। पत्न्या व्रतं भवतीति । यथा कामयेत तथा कुर्यात् इति । अत एव जागरणादिकमपि कर्त्तव्यमिति ।

अत्र पारस्करसूत्रानुसारिणां स्थालीपाकात् पूर्वदिने उक्तोपवासादिकं न भवति पारस्करसूत्रेऽनुक्तत्वात् । न च पारस्करसूत्राविरोधेन आश्वलायनादिगृह्योक्तत्वात्तद्भवतीति वाच्यम् । तथासति इध्माबर्हिषोः सन्नहनादिकरणस्याप्यापत्तेः । न चेष्टापत्तिः । अनेकगृह्योक्ततत्तदविरुद्धयावत्पदार्थस्य करणेऽसामर्थ्यात् । न च यथासामर्थ्यमेव उपसंहर्त्तव्यम् ।

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्त्तितम् ।<br>
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

इति कात्यायनेन स्वगृह्योक्तमात्रकरणेऽपि साङ्गोपाङ्गकर्मसिद्धेः प्रदर्शितत्वात् । को हि मन्दमतिः स्वल्पायाससाध्यादपि

तावत्फलसिद्धौ बह्वायाससाध्ये प्रवर्तेत इति । न च

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमाग्निहोत्रादिकर्मवत् ॥

इति कात्ययनेनैवाविरोधिपरकीयस्यापि अनुष्ठेयत्वोक्तेर्बह्वल्पं वा स्वगृह्योक्तमिति वाक्यस्य गृह्यान्तराद्युक्तोपसंहारासमर्थपरत्वमिति वाच्यम् । उक्तातिप्रसङ्गापत्तिबलेन यन्नाम्नातमिति वाक्यस्य परकीयाकाङ्क्षितमात्रग्रहणपरत्वात् । भवति हि परोक्तमप्याकाङ्क्षितं गृह्यते च ।

यथा,

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीताऽन्यानि मन्त्रवत् ॥

इति मेखलादिग्रहणे मनुना सामान्यतो मन्त्रवत्त्वोक्तौ मन्त्रविशेषानुक्तौ च विशेषतो मन्त्राकाङ्क्षायां गृह्यविशेषपरिपठिता मन्त्रविशेषा गृह्यन्ते । न चेह स्थालीपाकपूर्वदिनकर्त्तव्योपवासादेः कथञ्चिदाकाङ्क्षा समस्ति । सामान्यशब्देनार्थतो वा स्वसूत्राद्यसूत्रितत्वादिति । न चैवं शाखान्तराधिकरणविरोधः । बह्वल्पं वा स्वगृह्योक्तमिति वाक्येन गृह्यान्तरोक्ताङ्गस्य व्यवस्थितविकल्पस्वीकारादिति बहवः । अत्र पक्षादिषु स्थालीपाकं श्रपयित्वेति सूत्रे यद्यपि पक्षादिष्वित्येवोक्तं तथापि जैमिनिसूत्रभाष्यकारमते दर्विहोमानां यागरूपत्वेन एतस्यापि तथात्वात् ।सन्धिमभितो यजेतेतिवाक्येन च यागस्य सन्धिमभितो विधानात् तत्रत्यपक्षादिपदं सन्धिपूर्वापरकालपरम् । एवं च—

पर्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः ॥

तथा,

पूर्वाह्णे चापि मध्याह्ने यदि पर्व समाप्यते ।
तदैव यागकालः स्यात्परतश्चेत्परेऽहनि ॥

तथा,

सन्धिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

इत्यादिवाक्यैर्यागकालं निर्णीय स्थालीपाकः कार्य इति। विशेषतो यागादिकालनिर्णयश्च समयप्रकाशे करिष्यत इति।

अन्ये तु स्थालीपाकादिहोमानामयागरूपत्वस्य वार्त्तिकादौ सिद्धान्तितत्वात् न"सन्धिमभितो यजेत"इति वाक्यबलेन पक्षादिपदस्य पर्वसन्धिपूर्वापरकालपरत्वं किन्तु यथाश्रुतपक्षादिमात्रपरत्वमेव । एवञ्च पूर्वाह्णो वै देवानामित्यादिश्रुतेः पूर्वाह्णे यद्दिने प्रतिपत् तद्दिन एव स्थालीपाको भवतीत्याहुः । एतच्च आधानानन्तरपौर्णमाससम्बन्धिन्यां प्रतिपदि आरब्धव्यं न दर्शसम्बन्धिन्याम् ।

सायमादिप्रातरन्तमेकं कर्म प्रचक्षते ।
दर्शान्तं पौर्णमासाद्यमेवमेव मनीषिणः ॥

इति कात्यायनेन—

सायंप्रातःक्रियाणां च सायमारम्भ इष्यते ।
पूर्णमासस्य दर्शस्य प्रारम्भः पूर्णमासतः ॥

इति बौधायनेन च पौर्णमासस्य आदित्वकथनात् । न च

ऊर्द्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽथ वाऽग्रिमः ।
य आयाति स होतव्यः स एवादिरिति श्रुतिः ॥

इति कात्यायनेनैव दर्शस्याप्यादित्वकथनात् कथमेवमितिवाच्यम् । तद्वाक्यस्य यत्र पौर्णमासहोमानन्तरं पुनराधाननि-

मित्तमापतितं ततो मासाद्युत्तरं चामावास्यातः पूर्वं च पुनराधानं कृतं तत्र तदमावास्यासम्बन्धिन्यां प्रतिपदि दर्शहोमो न प्राप्नोति। यतः पूर्वप्रक्रान्तपौर्णमाससम्बन्धिदर्शकालस्यातीतत्वात् दर्शपूर्णमासकर्मणश्च दर्शान्तत्वेन दर्शादित्वाभावादिति तत्र पूर्वप्रक्रान्तपौर्णमाससम्बन्धिदर्शस्य विधानार्थत्वात् । नचैवं स एवादिरिति श्रुतिरिति दर्शस्यादित्वकथनं विरुध्यत इति वाच्यम् । विच्छिन्नस्य पुनस्ततः सन्धानेन गौण्या वृत्त्या तस्या आदित्वस्योक्तत्वात् । अत एव श्रौतस्य स्मार्त्तस्य वा पौर्णमासस्य करणानन्तरं कृष्णपक्षे यजमानस्य मरणाशङ्कायां तदानीमेव दर्शकरणं कल्पसूत्रे स्मृतौ च कात्यायनादिभिरुक्तं न क्वापि दर्शानन्तरं तच्छङ्कायां पौर्णमासकरणमिति ।

कल्पसूत्रं च,

सायमाहुत्यां हुतायां चेद् दुर्बलः स्यात्तदैव प्रातराहुतिस्ततसंस्था श्रुतेरग्निहोत्रस्य । जीवेच्चेत्पुनः काले न वा कृतत्वात्पौर्णमासान्तेचामावास्यमग्निहोत्रवादिति ।

सूत्रान्तरं च,

तच्चेदपरपक्षे प्रयाणं शङ्केत यावत्योऽपरपक्षस्य शिष्टा रात्रयः स्युस्तासां सायम्प्रातराहुतीः प्रतिसङ्ख्याय हुत्वा प्रत्याहृत्यामावास्येन हविषेष्ट्वा समापयेयुरेवं यज्ञाविलोप इति । पूर्वपक्षे चेद्रात्रौ प्रातराहुतिरेवेति ।

कात्यायनस्मृतौ,

पौर्णमासे कृते यागे मुमूर्षुर्यदि याज्ञिकः ।
दर्शयागस्तदैव स्यादपकृष्याहुतीः पृथग् ॥ इति ।

किञ्च ऊर्ध्वं पूर्णाहुतेर्दर्श इति कात्यायनवाक्येनैव पूर्णाहुत्यनन्तरमनुष्ठीयमानस्य दर्शस्य पौर्णमासस्य वा आदित्व-

सिद्धौ तदितरस्य वाऽन्तत्वसिद्धौ—

दर्शान्तं पौर्णमासादिमेवमेव मनीषिणः ।

इति तद्वाक्यस्य वैयर्थ्यापत्तेः । गङ्गाधरकारिकाकारादयस्तु यथाश्रुतवाक्यबलात् पूर्णाहुत्यनन्तरमनुष्ठीयमानस्य दर्शस्य पौर्णमासस्य वा आदित्वं तदितरस्य चान्तत्वम् । एवं च आधानानन्तरं दर्शो वा पौर्णमासो वा य एवायाति तत्रैव पक्षादौ स्थालीपाकप्रारम्भः कार्य इत्याहुः । अत्र श्रौतस्मार्त्तयोरुभयोः समावेशे श्रौतं कृत्वा स्मार्त्तं कर्त्तव्यं, श्रौतस्य प्रधानत्वात् । तदाह—

गर्गः,

यो वैदिकमनादृत्य कर्म स्मार्त्तेतिहासकम् ।
मोहात्समाचरेद्विप्रो न स पुण्येन लिप्यते ॥
प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठः प्रधानं हि हित्वा गच्छत्यधोगतिम् ॥

भारद्वाजोऽपि,

होमं वैतानिकं कृत्वा स्मार्त्तं कुर्याद्विचक्षणः ।
स्मृतीनां वेदमूलत्वात्स्मार्त्तं केचित्पुरा विदुः ॥ इति ।

अथ प्रकृतमभिधीयते । स्थालीपाकꣳ श्रपयित्वा । स्थालीपाकं चरुम् उक्तविधिना श्रपयित्वा । दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति । तत्र अग्निः अग्नीषोमौ अग्नीषोमौ चेति पौर्णमासदेवताः । अग्निः विष्णुः इन्द्राग्नी विष्णुस्थानेऽग्नीषोमौ वा इति असन्नयतो दर्शदेवताः । सन्नयतश्च इन्द्राग्निस्थाने इन्द्रः महेन्द्रो वेति । एताभ्यो देवताभ्यो हुत्वा जुहोतीति ।

अत्रेदं विचारणीयम् । किं पौर्णमास्यां दर्शे च एताभ्यः सर्वाभ्यो जुहोति, उत पौर्णमास्यां पौर्णमासदेवताभ्यो दर्शे च

दर्शदेवताभ्य इति । किं तावत्प्राप्तम् । दर्शपूर्णमासदेवताभ्यो जुहोतीत्यविशेषेणोपदेशात् उभयत्रापि सर्वाभ्यो जुहोति । नच पौर्णमास्यां क्रियमाणस्य स्थालीपाकस्य पौर्णमासरूपत्वेन तत्र पौर्णमासदेवताभ्य एव होमः समुचितः, एवं दर्शेऽपि दर्शदेवताभ्य एवेति वाच्यम् । प्रमाणेन प्राप्तस्यौचित्यमात्रेण विशेषे व्यवस्थापनायोगात्। तस्मादुभयत्रापि सर्वाभ्यो जुहोतीति । मैवम् । अग्नीषोमीयस्थालीपाकः पौर्णमास्यामैन्द्राग्नोऽमावास्यायामुभयत्र चाग्नेय इति मैत्रायणीयगृह्ये स्पष्टतरं पौर्णमास्यां पौर्णमासदेवताभ्यो दर्शे च दर्शदेवताभ्य एव स्थालीपाकस्याभिधानात् ।

गोभिलेन च, "आग्नेय एवानाहिताग्नेरुभयोर्दर्शपूर्णमासयोः स्थालीपाकः स्यात् आग्नेयो वाऽग्नीषोमीयो वाऽऽहिताग्नेः पौर्णमास्याम्, ऐन्द्रो वैन्द्राग्नो वा माहेन्द्रो वाऽमावास्यायाम् अपि वाऽऽहिताग्नेरप्युभयोर्दर्शपूर्णमासयोराग्नेय एव स्यात्" इत्यनेन देवतासमुदायहोमस्य पौर्णमास्यां दर्शे चानुक्तत्वात् । न च गोभिलसूत्रैकवाक्यतयाऽनाहिताग्नेः पारस्करसूत्रानुसारिण आहिताग्नेर्वा उभयत्राग्नेय एव आहिताग्नेरग्नीषोमीयो वाऽऽग्नेयो वा पौर्णमास्यां दर्शे चासन्नयत ऐन्द्राग्नः सन्नयतश्चैन्द्रो माहेन्द्रो वा स्थालीपाकोऽस्तु । न चैवं दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोतीति पारस्करसूत्रस्थबहुवचनानुपपत्तिः, सर्वपक्षाभिप्रायेण बहुवचनस्योक्तत्वादिति वाच्यम् । गोभिलसूत्रेणैकवाक्यतया एवमनुष्ठानं सूत्रान्तरैकवाक्यतयाऽन्यथा वेत्यत्र विनिगमकाभावात्। तस्मात् सन्दिग्धार्थस्य सूत्रस्य सूत्रान्तरेणार्थनिर्णयः । स च सम्भवति सर्वैकवाक्यत्वे नान्यथा कल्प्यते। एवं च मैत्रायणीयगृह्ये पौर्णमास्यामाग्नेयस्याग्नीषोमीयस्य चोभयोर्नियमतः करणमुक्तं गोभिलसूत्रे चैकतरस्य । न चोभयोः करणे एकतरकरणं विरुध्यते। उभयोः कृते एकतरस्य कृ-

तत्वात्। एकतरकरणे तूभयोः करणं विरुद्ध्यत एवेत्यविरोधाय पौर्णमास्यां तदुभयकरणम्।दर्शे च आग्नेयस्य चैन्द्राग्नस्य चोभयोः करणं मैत्रायणीये उक्तम्। गोभिलसूत्रे च आग्नेयस्य ऐन्द्राग्नस्यैन्द्रस्य माहेन्द्रस्य च प्रत्येकं विकल्पेन करणमुक्तम्। तत्राष्टदोषदुष्टविकल्पापेक्षया व्यवस्थितविकल्पस्य लघुत्वेन गोभिलीयैरप्यैन्द्राग्नस्य ऐन्द्रमाहेन्द्राभ्यां व्यवस्थित एव विकल्पः समाश्रीयते। व्यवस्था च प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालोऽसन्नयत इत्यादिश्रौतसूत्रे दृष्टा। एवं च एकवाक्यत्वानुरोधाय मैत्रायणीयगृह्ये आग्नेयनियमस्योक्तत्वाद्दर्शे नियमतोऽग्निदेवत्यो होमः, सन्नयनमकुर्वतो नियमत एव ऐन्द्राग्नहोमः, सन्नयनं कुर्वतश्च इन्द्रदेवत्यो महेन्द्रदेवत्यो वा होम इति। तदिदमुक्तं "दर्शपूर्णमासदेवताभ्यो हुत्वा" इति। श्रौते दर्शपूर्णमासयोर्हि एवमेवैतासां देवतानां यागः। अत एव अथ पार्वणस्थालीपाक इत्युपक्रम्य तस्य दर्शपूर्णमासाभ्यामुपवास इत्युक्त्वा देवताश्चोपांशुयाजमहेन्द्रवर्जमित्याश्वलायनेनोक्तम्। महेन्द्रनिषेधश्च तच्छाखीयमात्रपरः। अन्यथा गोभिलगृह्यादिविरोधादिति।

अन्ये तु मैत्रायणीयगृह्यैकवाक्यतया दर्शे सन्नयतोऽसंन्नयतो वा ऐन्द्राग्न एव भवति नैन्द्रादिः। अन्यथा तत्र नियमतः श्रुतस्यैन्द्राग्नस्य पाक्षिकत्वं स्यात् इत्याहुः। अत्र पौर्णमास्यां पौर्णमासदेवताभ्यो होमद्वयं न तु होमत्रयम्। तथाहि। पौर्णमासेष्टौ हि त्रयो यागाः। तत्र एकः आग्निदेवत्यः। अपरौ च द्वौ यागौ अग्नीषोमदेवत्यौ। तत्रापि प्रथमः आज्यहविष्कः द्वितीयस्तु पुरोडाशहविष्कः। न चाग्निर्भिन्नः सोमो भिन्न इति। यतः अग्नीषोमयोश्च देवतात्वं व्यासज्यवृत्ति न प्रत्येकम्। न चाज्ययागपुरोडाशयागयोर्भेदात्तयोर्देवताभेद आवश्यकः। तथा च आ-

ज्ययागसम्बन्धिनौ अग्नीषोमौ भिन्नौ पुरोडाशयागसम्बन्धिनौ च भिन्नावेव ताविति वाच्यम् । यद्देवत्यः पशुर्भवति तद्देवत्यं पशुपुरोडाशमनुनिर्वपतीति क्वचित् यागभेदेऽपि देवताया अभेदस्य श्रुत्या दर्शपूर्णमासदेवताभ्यो जुहोतीति प्रकृतसूत्रेण च प्रदर्शितत्वात् । न चोच्चैस्त्वादिधर्मभेदेन तद्भेदः।वागन्तेन दीक्षणीया, नीचैस्तरां नीचैस्तरामितरे, उपांशूपसद इत्याद्यनेकवाक्यविहितस्वरभेदवत्त्वात्तत्तादिष्टीनां तत्तदिष्टिसम्बद्धप्रयाजादिदेवानां भेदापत्तेः । किञ्च एकमुद्दिश्य उच्चैस्त्वादिधर्मकशब्देन मनसैवान्यथा वाऽनेकप्रकारेण त्यज्यमाने द्रव्ये तदुद्देश्यभेदापत्तेः । न च शब्दमयी देवता शब्दश्च तत्र विभिन्न एवेति तद्भेदोऽपि सिद्ध एवेति वाच्यम् । सोऽयं गकार इत्यादिप्रत्यभिज्ञाबलेन तत्तद्गकारादीनामैक्यस्य व्यवस्थापितत्वात् । अथोत्पन्नोऽयं गकार इत्यादिप्रतीतीनां का गतिरिति चेत्, भ्रमत्वमेव । अन्यथा शिखामात्रनाशेऽपि शिखी विनष्ट इत्यादिप्रतीतिबलात्तद्विशिष्टप्रतियोगिकतदुत्पादविनाशावपि स्याताम् । न चैवं सेयं प्रदीपकलिकेत्यादिप्रतीतिबलेनैतासामपि अभेद एव सिद्ध्येत्। सिद्ध्येदेव यदि तत्र परिमाणादिभेदो नोपलभ्येत।अथ सोऽयं गकार इति प्रत्यभिज्ञायाः प्रमात्वं गकारो नष्ट इत्यादिप्रतीतीनां च भ्रमत्वमित्यत्र किं विनिगमकमिति चेत्, लाघवम्। अनन्तगकारव्यक्तिकल्पनामपेक्ष्य एकस्यैव गकारस्य कल्पनाया उचितत्वात् । न च तत्तदुत्पादविनाशाद्यनेकप्रतीतीनां भ्रमत्वकल्पनमपेक्ष्य एकस्या एव प्रत्यभिज्ञाया भ्रमत्वकल्पनस्योचितत्वेन विपरीतमेव लाघवमिति वाच्यम् । तद्वतितत्प्रकारकत्वादिरूपप्रमात्व- तदभाववतितत्प्रकारकत्वादिरूपभ्रमत्वयोरन्यतरस्यावश्यं बहुषु कल्पनीयत्वेन लाघवाभावात् । प्रत्यभि-

ज्ञाव्यक्तीनामप्यनन्तत्वेन तदपेक्षया स्वल्पत्वाभावाच्च । नन्वेवं गकारादौ तारत्वादयो विरुद्धधर्माः प्रतीयन्त इति विरुद्धधर्माध्यासादेव भेदसिद्धिरिति चेत्, न। ध्वनिगतानामेव तारत्वादीनां तत्र प्रतीतेः । अवर्णात्मकवीणादिजन्यध्वनिरूपशब्देषु तारत्वादेः क्लृप्तत्वात् । एवम् अभिव्यञ्जकवाय्वादिसंयोगगतानामेव ध्वंसादीनां तत्र प्रतीतिरिति । अभिव्यञ्जकवायुसंयोगानां द्विक्षणावस्थायित्वेन च क्षणद्वयमेव तत्तच्छब्दप्रतीतिरिति। अथैवं घटादेरपि न कथं नित्यत्वम् । ध्वंसादिप्रतीतेश्चान्यथैवोपपत्तिसम्भवात् इति चेत्, न । नित्यत्वग्राहकप्रमाणाभावात् । प्रकृते च लाघवानुगृहीतप्रत्यभिज्ञाबलेन गकारादीनामभेदसिद्धौ अनादित्वसिद्ध्या तत्सिद्धेः । तस्मादभिन्ना एव गकारादयो नित्याः । एवं च य एवाग्नीषोमशब्दः आज्ययागे देवतात्वमध्यारोहति स एव पुरोडाशयागेऽपीति । यदि च देवतानां विग्रहः स्वीक्रियते तदा शब्दभेदेऽपि न विरुद्धं देवतैक्यमिति । तस्मात्पौर्णमास्याम् अग्नये स्वाहेति हुत्वा अग्नीषोमाभ्यां स्वाहेति एकवारमेव जुहुयात् न पुनरग्नीषोमाभ्यां स्वाहेति द्वितीयवारमपि। एवं होमद्वयमेव पौर्णमासदेवताभ्यो न होमत्रयमिति। अत एव मैत्रायणीयगृह्ये अग्नीषोमीयस्थालीपाकः पौर्णमास्यामैन्द्राग्नोऽमावास्यायामुभयत्र चाग्नेय इत्येवोक्तम् , न तु अन्तरा अग्नीषोमाभ्यामुपांशु यष्टव्यमित्युक्तम् । आश्वलायनगृह्ये तु देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जमित्युपांशुयागः पर्युदस्त एव । अथैवम् आश्वलायनगृह्यैकवाक्यतया दर्शेऽपि विष्णुयागो मास्त्विति चेत्, न। शाखाभेदेन व्यवस्थितगृह्यान्तरानुरोधेन सामान्यतः प्रवृत्तदर्शपूर्णमासदेवताभ्यो हुत्वेतिसूत्रसङ्कोचस्यानुचितत्वात् । अग्नीषोमीयरूपोपांशुयाजाकरणे च एतत्सूत्रसङ्कोचस्याभावात् । ह-

रिहरादयस्तु पौर्णमासदेवताभ्यो होमत्रयं दर्शदेवताभ्योऽपि होमत्रयमेव। तत्र पौर्णमास्यामग्नये स्वाहेति हुत्वा उपांशु अग्नीषोमाभ्यां स्वाहेति च हुत्वा पुनरग्नीषोमाभ्यां स्वाहेति जुहुयात्। दर्शे चाग्नये स्वाहेति हुत्वा विष्णवे स्वाहेति च हुत्वा इन्द्राग्निभ्यां स्वाहेति जुहुयात् । इन्द्रमहेन्द्रादिदेवत्यहोमस्तु न भवति ।

**कारिकाकारोऽपि,**

अभिघार्य चरुं तेन जुहुयात्प्रथमाग्नये ।
अग्नीषोमाभ्यां द्वितीया ताभ्यामेव तृतीयका॥
अग्नये विष्णवे इन्द्राग्निभ्यां दर्शे जुहोत्यपि।
सान्नाय्यवत्यपीमाः स्युर्दर्शे नेन्द्रो न महेन्द्रः ॥ इति ।

अथ प्रकृतमुच्यते ।

जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति ।

स्थालीपाकमित्यनुवर्त्तते । ब्रह्मणे स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्यां स्वाहा इत्येवम् ।

विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय च ।

बलिहरणमित्यनुषज्यते । एतच्च बलिहरणं स्थालीपाकादेव द्रव्यान्तरानुपदेशात् । स्थालीपाकस्य प्रस्तुतत्वाच्च । बलिपरिमाणमाह—

**छन्दोगपरिशिष्टे कात्यायनः,**

न चावराध्यां बलयो भवन्ति महामार्ज्जारश्रवणप्रमाणात्। एकत्र चेत् कृत्स्ना भवन्तीतरेतरमसंक्ताश्चेति ।

अत एव न स्रुवेणैव बलिहरणनियमः । आहुत्यर्द्धं बलेः प्रमाणमिति गर्गः। हरिहरादयश्च स्रुवेणैव बलिहरणं भवतीत्याहुः।

**कारिकाकारोऽपि,**

ततो बलित्रयं तस्माच्चरोरुत्तरतोऽग्नितः ।
प्राक्संस्थं स्यादुदक्संस्थं वा स्रुवेण नमोऽन्तिकम् ॥ इति।
मन्त्रस्तु विश्वेभ्यो देवेभ्यो नम इत्येवंरूपः ।
तथाच छन्दोगपरिशिष्टे कात्यायनः,
अमुष्मै नम इत्येवं बलिदानं विधीयते ।
बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥
स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । इति ।

अत्र च चतुर्थ्या त्यज्यमानहविरुद्देश्यत्वं विश्वेषां देवानामन्येषां च प्रत्याय्यते । तच्च त्यागमन्तरेण न सम्भवतीति त्यागोऽप्यवश्यं कार्यः । अत एव हरिहरादयः इदं विश्वेभ्यो देवेभ्यो न ममेत्येवं त्यागो भवतीति लिलिखुः । केचित्तु अमुष्मै नम इति न नमस्कारचतुर्थ्यन्तयोः क्रमपरं, किन्तु चतुर्थ्यन्तनमस्काराभ्यां बलिर्देय इत्येतावन्मात्रपरम् । अत एव गोभिलसूत्रे विकृतौ वास्तुबलौ नमो ब्रह्मण इति दर्शनमुपपद्यते । एवं च पारस्करसूत्रे नमास्त्रियै नमः पुंसे वयसे इति आदौ नमःशब्दस्य दर्शनात् वैश्वदेवप्रकरणे पितृभ्यः स्वधा नम इति दक्षिणत इत्यत्र अन्ते दर्शनात् नमो विश्वेभ्यो देवेभ्यो नमो भूतगृह्येभ्यो नम आकाशायेत्येवमपि मन्त्रप्रयोगो युज्यत इत्याहुः । छन्दोगपरिशिष्टीयनारायणभाष्येऽप्येवमेवोक्तमिति । इदं च बलित्रयं शालायामेव । अवचने शालायां क्रियमाणस्थालीपाकसम्बद्धस्य कर्मणः शालायामेव कर्त्तुं युक्तत्वात् । अग्रेतनबलीनां बाह्यतः स्त्रीबलिं हरतीत्यनेन शालाया बाह्यतोऽभिधानाच्च ।

वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति ।

विश्वे देवा देवता अस्येति व्युत्पत्त्या वैश्वदेवशब्देन सर्वा-

र्थः पाकोऽभिधीयते । तस्य वैश्वदेवस्य । षष्ठी चेयं तदेकदेशलक्षणार्था । तथा च सर्वार्थपाकादवदाय जुहोति । तत्र मन्त्रः अग्नये स्वाहेत्यादिः । अग्नौ जुहोतीति तु अग्नावेवास्य होमो नान्यत्रेति । तेन बलिकर्म ततो न भवतीति कर्काचार्याः । अत्र केचित् पौष्णस्य जुहोतीत्यत्र पौष्णमिव वैश्वदेवं चरुं कुर्वन्ति । तदयुक्तम् । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । न हि पौष्णशब्दवाच्यः चरुः प्रकारान्तरेण तत्र सिद्धः । वैश्वदेवस्तु पाको विद्यत एव । यथा च वक्ष्यति "वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात्" इति । अग्नये स्विष्टकृते स्वाहेति तु प्रयोगदर्शनार्थम् । प्राजापत्यं स्विष्टकृच्चेति प्रदेशान्तरे अभिहितम्, प्रयोगश्च नोपदर्शित इति तदिहोपदर्श्यते । अपि च स्थालीपाकेन दर्शपूर्णमासदेवतादीनां होमविधानस्यावसरविधित्सया तत्कथनम् । प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविरिति प्रदेशान्तरे उक्तम् । तेन महाव्याहृतिहोमादाज्यभागोत्तरकालं चावसरोऽवगम्यत इति कर्काचार्याः । वस्तुतस्तु एतादृशप्रयोगप्रदर्शनमन्तरेणापि आज्यभागादीनामिव प्रयोगोपपत्तेराज्यभागव्याहृतिहोमान्तरालरूपावसरस्य च सीमन्तोन्नयनान्नप्राशनादिप्रधानहोमावसरस्यैव कथनं विनापि प्राप्तेश्च नैतदुभयं तत्प्रयोजनम् । किन्तु वैश्वदेवादन्नात्स्विष्टकृन्न प्राप्त इति तद्विधानार्थम् । कथमप्राप्तिरिति चेत्, न । अशेषत्वात् । यावद्धविरुत्तरार्द्धात्स्विष्टकृतस्तत एव होमो नाज्यादशेषादिति वदता कात्यायनेन शेषात्स्विष्टकृते समवद्यतीति प्रदर्शनात् । अशेषत्वं कुत इति चेत्, अग्रेऽप्येतत्सम्बद्धप्रधानस्य विद्यमानत्वात् । किं तत्प्रधानमिति चेत्, वैश्वदेवादिः । कथमस्य तदर्थतेति चेत्, शब्दसामर्थ्यात् । विश्वे देवाः देवपितृमनुष्यरूपा देवता अस्येति वैश्वदेवशब्दस्य व्युत्पादनात् । अत एव वैश्व-

देवे स्विष्टकृन्न क्रियते तदग्रेऽपि तत्सम्बद्धप्रधानस्य विद्यमानत्वादिति। न चैवं प्रकृतस्थालीपाकादपि स्विष्टकृन्न स्यात् तस्यापि शेषत्वाभावादिति वाच्यम्। दर्शपूर्णमासदेवताभ्यो यो होमस्तदुत्तरं तस्य शेषत्वसम्भवात्। अग्नीषोमीयस्थालीपाकः पौर्णमास्यामैन्द्राग्नोऽमावास्यायामुभयत्र चाग्नेय इति मैत्रसूत्रेण पूर्वलिखितगोभिलसूत्रेण सूत्रान्तरेण च दर्शपूर्णमासदेवताकहोमस्यैव दर्शपूर्णमासशब्दवाच्यत्वाभावात्कथमेवमिति चेत्, न। पूर्वं तु दर्शपूर्णमासाभ्यामन्वारम्भणीयदेवताभ्यो जुहुयादापौर्णमासाद्दर्शस्यानतीतः काल आदर्शात्पौर्णमासस्येति शाङ्खायनसूत्रे, होमद्वयात्यये दर्शपौर्णमासात्यये तथा पुनरेवाग्निमादध्यादिति छन्दोगपरिशिष्टेऽन्यत्र च दर्शपूर्णमासपदेन बहुशस्तद्व्यवहारदर्शनेन तस्य तत्पदवाच्यत्वावसायात्। आज्याच्चेह स्विष्टकृदर्थं नावदेयं, शेषत्वाभावात्। गृह्यान्तरेषु स्थालीपाकवति कर्मणि स्थालीपाकादेव स्विष्टकृतो दर्शनाच्च।

तथाच मैत्रगृह्यम्,

स्विष्टकृते समवद्यत्युत्तरार्द्धात्सकृद्विमात्रं द्विर्वा। यदि पञ्चावदानस्यावत्तं द्विरभिघार्य नात ऊर्द्धं स्थालीपाकं प्रत्यभिघारयति। अग्नये स्विष्टकृते स्वाहेत्यसंसक्तमुत्तरार्द्धे जुहोतीति।

गोभिलगृह्यं च,

स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्द्धपूर्वार्द्धात्सकृदेव भूयिष्ठं द्विरभिघारयेद्युपञ्चावत्ती स्याद्विरुपस्तीर्यावदाय द्विरभिघारयेन्न प्रत्यनक्त्यवदानस्थानं यातयामताया अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्वार्द्धे जुहुयान्महाव्याहृतिभिराज्येनाभिजुहुयादिति।

अत्र होमक्रमेण पूर्वस्थालीपाकात्सौविष्टकृतमवदाय ततो वैश्वदेवादन्नादवदाय एकदैव अग्नये स्विष्टकृते स्वाहेति जुहोति।

ननु अङ्गुष्ठपर्वमात्रमेकैकमवदानं तयोर्द्वयोरङ्गुष्ठपर्ववृत्तपुष्करेण एकेन स्रुवेणैकदा कथं होम इति चेत्, सत्यम्। अर्थपरिमाणेन स्रुवान्तरेणैव तद्धोमस्य स्वीकारात्। वसोर्द्धारादौ तथा दृष्टत्वात्। न च स्रुवं प्रतप्येत्यत्र स्रुवमित्येकवचनान्तपदोपादानात् एकस्य स्रुवस्य प्रतपनमुक्तम्। तथा च तत्र एक एव स्रुवो भवतीत्यवगम्यते इति वाच्यम्। एकत्वस्योद्देश्यगतत्वादविवक्षितत्वेन स्रुवान्तरप्रतपनस्य स्रुवान्तरस्य वा अर्थतोऽप्यनिराकरणात्, "शूलगवपशुबन्धे अवदानहोमार्थं स्रुवे उपस्तीर्य हिरण्यशकलमवधाय हृदयाद्यङ्गेभ्यः प्रत्येकं द्विर्द्विरवदायावदाय स्रुवे क्षिप्त्वा स्थालीपाकाच्च सकृदवदाय क्षिप्त्वा उपरि हिरण्यशकलं दत्त्वा सकृदभिघार्य असर्वाणि चेत्क्षताभ्यङ्गं कृत्वा अग्नये स्वाहेति जुहोति" इति हरिहरादिभिर्लिखनादप्येतस्यार्थस्य स्वीकारात्। तस्यासादनं तु वैश्वदेवान्नादुत्तरं पूर्णपात्राच्च पूर्वं भवति कार्यक्रमस्य तथैव सत्त्वात्। प्रोक्षणमपि तथैव। प्रतपनसंमार्जनप्रतपनाभ्युक्षणानि च प्रधानार्थस्रुवप्रतपनाद्युत्तरं भवन्ति। न च गृहमेधीयेष्टौ सौविष्टकृतपीशीलकस्येवात्रापि सौविष्टकृतस्रुवस्यासादनादिकं मास्तु इति वाच्यम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। वाजिनोत्पत्त्याद्यप्रयोजकस्य वाजिनयागस्येव अन्यदीयद्रव्योपजीवकस्य हि स्विष्टकृतो न तद्द्रव्योत्पत्तितत्संस्कारतद्द्रव्याधिकरणपात्रसंस्कारादिप्रयोजकत्वम् इति तत्रेष्टौ वचनात्पृथग्भूतेऽपि स्विष्टकृद्द्रव्येऽन्यथानुपपत्त्या तदधिकरणपात्रमात्राक्षेपेऽपि न तत्संस्कारस्याक्षेपः। स्रुवस्य तु वचनसामर्थ्याभ्यामङ्गप्रधानसाधारण्येन द्रवद्रव्यावदाने होमपात्रमनादेश इति वचने च होममात्रे एव विनियुक्तस्योपादिश्यमानः संस्कारो यावदङ्गप्रधानार्थद्रवद्रव्यग्रहणहोमार्थ इति भवति स्रुवादिसंस्कारस्य प्रयो-

कः स्विष्टकृत् । अत एव दर्शपूर्णमासयोः विस्मृतस्रुवजुहूसंमा-
ंकरणमाकर्मापवर्गादिति देवयाज्ञिकादयो लिखन्ति स्म ।
अन्येतु जुह्वाऽवचन इति सूत्रेण होममात्रानुवादेनैव जुह्वा विहितेति
त्र स्थालीपाकादावपि जुहूः कार्या । न च स्रुवं प्रतप्येत्या-
ना स्रुवमात्रस्यैव प्रतपनाद्युपदेशात्कथमेवमिति वाच्यम् ।
ज्यमधिश्रित्येत्यत्र आज्यपदस्य स्थालीपाकोपलक्षकत्व इव
ग्नि कृत्वा तूष्णीं स्रुक्स्रुवौ संमृज्यादिति मैत्रायणीयगृह्यैकवा-
तया स्रुवपदस्यापि जुहूपलक्षकत्वे विरोधाभावात् । एवं च
ज्यभागानन्तरं जुह्वामुपस्तीर्य स्थालीपाकस्य मध्यात्पूर्वार्द्धा-
वदाय पश्चावत्तिनां तु मध्यात्पूर्वार्द्धात्पश्चार्द्धाच्चावदाय प्रत्यु-
ीर्य क्षताभ्यङ्गं कृत्वा प्रधानदेवताभ्यो जुहोति । स्विष्टकृद्धो-
 च जुह्वामुपस्तीर्य स्थालीपाकस्योत्तरार्द्धात्सकृदवदाय प-
त्तिनां द्विरवदाय द्विः प्रत्युपस्तीर्य क्षताभ्यङ्गमकृत्वैव
रपूर्वार्द्धे जुहोति ।

तथा मैत्रायणीयगृह्ये, उपस्तीर्य उपस्पृश्य मेक्षणेन स्थाली-
स्यावद्यति मध्यात्पूर्वार्द्धाद् द्वितीयं पश्चार्द्धात्तृतीयम् । यदिदं
वदानस्यावत्तमभिघार्य स्थालीपाकं प्रत्याभिघारयति अग्नये
ति मध्ये जुहोति यो देवानामसीति रौद्रस्य जयान् हुत्वा-
यस्य स्विष्टकृते समवद्यति उत्तरार्द्धात्सकृद्विमात्रं द्विर्वा यदि
वदानस्यादवत्तं द्विरभिघार्य नात ऊर्द्ध्वं स्थालीपाकं प्रत्य-
रयत्यग्नये स्विष्टकृते स्वाहेत्यसंसक्तमुत्तरार्द्धे जुहोतीत्युक्त्वा
स्थालीपाकेन स्थालीपाकाः सर्वे व्याख्याता इत्युक्तम् ।
आश्वलायनगृह्येऽपि, अथ पार्वणस्थालीपाक इत्युप-
मध्यात्पूर्वार्द्धाच्च हविषोऽवद्यति मध्यात्पूर्वार्द्धात्पश्चार्द्धा-
पश्चावत्तिनामुत्तरार्द्धात्सौविष्टकृतं नात्र हवींषि प्रत्यभि-

घारयतीत्युक्तम् ।

गोभिलगृह्येऽपि, यच्चुवा उपस्तीर्णाभिघारितं जुहुयेदाज्यभागावेव प्रथमौ जुहुयाच्चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तं तु भृगूणामग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दाक्षिणतः प्राकृशो जुहुयात् । अथ हविष उपस्तीर्यावद्यति मध्यात्पूर्वार्द्धाच्चतुरवत्ती चेद्भवति मध्यात्पूर्वार्द्धात्पश्चार्द्धादिति । पञ्चावत्ती चेद्भवत्यभिघारयत्यवदानानि प्रत्यनक्त्यवदानस्थानान्ययातयामताया अग्नये स्वाहेति मध्ये जुहोति सकृद्वा त्रिर्वैतेनैव कल्पेन । अथ स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्द्धपूर्वार्द्धात्सकृदेव भूयिष्ठं द्विरभिघारयेद्यद्यु पञ्चावत्ती स्याद्द्विरभिघारयेन्न प्रत्यनक्त्यवदानस्थानं यातयामताया अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धे पूर्वार्द्धे जुहुयान्महाव्याहृतिभिराज्येनाभिजुहुयात् प्राक् स्विष्टकृत आवापो गणेष्वेकं परिसमूहनमिध्मो बर्हिःपर्युक्षणमाज्यभागौ च सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोतीति ।

अत एवाज्यभागावपि चतुर्गृहीतेनैव होतव्यौ न सकृद्गृहीतेन । आज्यभागप्रधानस्विष्टकृदतिरिक्तहोमानां तु चतुरवत्तत्वस्य गृह्यान्तरेष्वप्यदर्शनात् सकृद्गृहीतार्थावाप्तेरवषट्कारातिरेकाच्चेति कात्यायनसूत्राच्च सकृत्सकृदवदाय ते होमाः कर्त्तव्याः । अत एव पाकयज्ञेष्ववत्तस्यासर्वहोम इति सूत्रव्याख्यायां स्रुचि स्रुवे वाऽवत्तस्येति देवयाज्ञिकैरुक्तम् । एवं च प्रकृते जुह्वाः सत्त्वात्तयैवानेकहविष्कस्विष्टकृदादिसिद्धेर्द्वितीयस्यार्थपरिमाणस्रुवस्य प्रसक्तिरेव नास्तीत्याहुः । तदपरे न क्षमन्ते । स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते इत्यादिगोभिलादिसूत्रेषु स्रुङ्नियमस्य चतुरवत्ततानियमस्य चादर्शनात् । पारस्करेण च स्रुवसंस्कारमात्रस्य कथनात् पारस्करसूत्रानुया-

यिनां स्रुवेणैव होमो भवतीतित्युन्नयनात्। न च मैत्रायणीयगृह्याद्येकवाक्यतया स्रुवं प्रतप्य संमृज्येति सूत्रस्थस्रुवपदस्य जुहूपलक्षकत्वावश्यकत्वे कथमेवमिति वाच्यम्। तत्सूत्रज्ञापकादिकमन्तरेणैव सूत्रान्तरमात्रानुरोधात्तत्सूत्रस्थपदे लक्षणा स्वीकारानौचित्येन तत्रत्यस्रुवपदस्य जुहूपलक्षकत्वाभावात्। अन्यथा रौद्रस्य जयान् हुत्वाऽऽज्यस्य स्विष्टकृते समवद्यतीति मैत्रायणीयसूत्राद्येकवाक्यतया आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्चैतन्नित्यं सर्वत्रेति सूत्रस्थस्विष्टकृदादिशब्दस्य जयाहोमाद्युपलक्षकत्वापत्तेः। अस्त्विति चेत्, न। विभिन्नपदार्थबोधकगृह्यान्तरानुरोधेन लक्षणास्वीकारे एतत्सूत्रस्य पदमात्र एव लक्षणास्वीकारापत्तेः। तस्मान्न जुह्वा होमः किन्तु स्रुवेणैवेति। स्विष्टकृद्धोमार्थं तु अर्थपरिमाणस्रुव उपादेय एवेति। अत्र होमार्थं वैश्वदेवपाकादवत्तस्य सर्वहोमः न संस्रवपरिशेषणम्। परिभाषया प्राप्तस्यापि स्वाहाकारस्य अग्नये स्वाहेत्यादौ पुनरुपादानेन संस्रवोऽत्र न भवतीति ज्ञापनात्। वैश्वदेवप्रकरणीय—वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयादितिसूत्रव्याख्याप्रस्तावे स्वाहाकारैर्जुहुयादिति संस्रवव्युदासार्थमिति कर्काचार्यलिखनादिति केचित्। अपरे तु स्वाहाकारान्तमन्त्रान्तराणामिव कस्याञ्चिच्छाखायां क्रमपरिपठितानामग्नये स्वाहेत्यादीनामप्युपनिबन्धसम्भवान्न स्वाहाकारोपादानमात्रेण संस्रवव्युदासः। अन्यथा सर्वत्र स्वाहाकारान्तमन्त्रान्तरकरणकहोमस्थले संस्रवानापत्तेः। सन्दिग्धतात्पर्यकसूत्रानुरोधेन निर्णीतार्थकपाकयज्ञेष्ववत्तस्यासर्वहोम इति सूत्रसङ्कोचापत्तेश्च। अत एव कारिकाकारेणापि—

नेच्छन्ति संस्रवान् केचिद्वैश्वदेवान्नहोमतः।

स्वाहान्तत्वाच्च मन्त्राणां न युक्तं वचनादिदम् ॥
संस्रवास्तु भवन्त्यत्र भाष्यकारादिसंमतम् ।
पाकयज्ञेष्वत्रत्तस्य प्रत्यक्षवचनाद्यतः ॥
इत्युक्तमित्याहुः ।

बाह्यतः स्त्रीबलिं हरति । बाह्यतः स्त्रीबलिम् स्त्र्यादिभ्यो बलिः स्त्रीबलिः तं स्त्रीबलिं हरति ददाति, नमः स्त्रियै इत्यादिभिर्मन्त्रैः । बलिपरिमाणादिकं पूर्वलिखितमेव ग्राह्यम् । केचित्तु स्त्रीभ्यो बलिः स्त्रीबलिरिति न समासः किन्तु स्त्रीति भिन्नं पदम्। एवं च स्त्री बाह्यतो बलिं हरतीत्यर्थः । तथा च सीतायज्ञे—

पारस्करः, स्त्रियश्चोपयजेरन्नाचारितत्वादिति । स्त्री च पत्न्येव नान्या काचिदप्रकृतेत्याहुः । तन्न । एतादृशार्थकरणापेक्षया पूर्वव्याख्याने लाघवात् । एतादृशव्याख्याने हि स्त्रीणां तत्तद्बलिप्रदानानुकूलविद्याकल्पना स्यात् । यत्र चान्यथा वाक्यार्थो न सम्भवति तत्र वचनबलेनैव विद्या कल्प्यते। न चात्र तथास्ति। तस्मात्स्त्र्यादिभ्यो बलिः स्त्रीबलिरिति समासेनैकपद्यमेवेति । इदं च बलिहरणं स्थालीपाकादेव वैश्वदेवान्नात् । वैश्वदेवस्याग्नौ जुहोतीति सूत्रस्याग्नावेव होमो न बलिहरणमिति व्याख्यानात् । प्रस्तुतत्वाद्वैश्वदेवपाकादेव बलिकर्म भवतीति तु गर्गः । आगन्तूनामन्ते निवेश इतिन्यायाच्च प्राशनान्त एव एतत्कार्यम् । अत एव—

कारिकाकारः,

आज्येन नव भूराद्याः प्राशमाद्याविमोकतः ।
शालाया बाह्यतस्तस्माच्चरुशेषाच्च पूर्ववत् ॥
नमस्त्रियादिभिर्मन्त्रैः पञ्चभिर्बलिपञ्चकम् ।
पञ्चमे बलिदाने स्युर्देवतास्तु स्त्रियादिकाः ॥ इत्याह ।

शेषमद्भिः प्रप्लाव्य । शेषं स्थालीपाकशेषम् । अद्भिः जलेन प्रप्लाव्य प्रकृष्टं प्लावयित्वा । एतच्च प्लावनं प्रणीतोदकेन प्रणीतानां सर्वार्थत्वस्वीकारात् इति बहवः । अपूर्वकार्यार्थत्वान्न प्रणीतोदकेन, किन्तु जलान्तरेणैव तदित्यपरे ।

कारिकाकारोऽपि,

अद्भिः प्रप्लाव्य तच्छेषं लौकिकाभिश्चरुं ततः ।
वासुदेवादयः प्लावे प्राहुः प्राणीतकं जलम् ॥
अस्याप्राकृतकार्यत्वान्नेच्छन्त्यन्ये च तद्विदः । इति ।

ततो ब्राह्मणभोजनमिति तु व्याख्यातम् ।

अथ सम्प्रदायानुसारेण प्रचरद्वस्थं पक्षमवलम्ब्य प्रयोगो लिख्यते ।

तत्र आधानानन्तरम् अव्यहितपौर्णमास्यां मातृपूजापूर्वकमाभ्युदयिकश्राद्धं कृत्वा मध्याह्ने अमाषममांसमक्षारमलवणं हविष्यं व्रत्यान्नं भुक्त्वा रात्रावग्निसमीपे पृथक् भूमौ दम्पती शयीयाताम् । ततः प्रातः स्नानादिहोमान्तं विधाय वैश्वदेवान्नं पाचयेत् स्वयं वा पचेत् । तत उदिते सूर्ये पौर्णमासं स्थालीपाकमारभेत। तत्र प्रथमतः अग्नेः पश्चात्प्राङ्मुख उपविश्य अद्येहेत्यादिदेशकालौ सङ्कीर्त्य पक्षादिकर्माहं करिष्य इति सङ्कल्पं विधाय ग्रन्थकारलिखनात् देवताभिध्यानं करोति । तद्यथा, पक्षादिकर्माहं करिष्ये तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, अग्निमग्नीषोमावुच्चैः, अग्नीषोमौ ब्रह्माणं प्रजापतिं विश्वान् देवान् द्यावापृथिव्यौ चरुणा, विश्वान् देवान् भूतगृह्यमाकाशं च बलिभिः, अग्निं प्रजापतिं विश्वान् देवान् वैश्वदेवान्नेन, स्विष्टकृतं शेषेण, अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्निम् अयसं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं चाज्येन, स्त्रियं पुमांसं वयसं वयसं कृष्ण-

दन्तं पापिनां पतिं ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वा-ऽरण्ये तान् बलिभिरहं यक्ष्ये। ततः ब्रह्मोपवेशनादि आज्यभागा-न्तमाधानवत् कुर्यात्। तत्र विशेषः। पूर्णपात्रदक्षिणेन वरदक्षिणेन वा पक्षादिकर्मणाऽहं यक्ष्ये, तत्र मे त्वं ब्रह्मा भवेति ब्रह्मवरणम्। प्रणिकोदकेन प्रणीताप्रणयनम्। पात्रासादनं तण्डुलानन्तरं वैश्वदेवान्नस्यासादनम्। स्विष्टकृदर्थपरिमाणस्रुवोपादानपक्षे पूर्ण-पात्रात्पूर्वं तस्याप्यासादनम्। एतेषां प्रोक्षणं च। प्रधानहोमा-र्थस्रुवप्रतपनाद्युत्तरं च द्वितीयस्रुवस्यापि प्रतपनसंमार्जनप्रतप-नाभ्युक्षणानि तथैव कर्त्तव्यानि। ततः आज्यभागहोमान्ते स्था-लीपाकमभिघार्य स्रुवेणादाय पूर्णमासदेवताभ्यो जुहोति। तद्यथा, अग्नये स्वाहा इदमग्नये न मम। उपांशु अग्नीषोमाभ्यां स्वाहा इदम-ग्नीषोमाभ्यां न मम। उच्चैः अग्नीषोमाभ्यां स्वाहा इदमग्नीषोमाभ्यां न मम। ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम। प्रजापतये स्वाहा इदं प्रजापतये न मम। विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवे-भ्यो न मम। द्यावापृथिवीभ्यां स्वाहा इदं द्यावापृथिवीभ्यां न मम। अत्र पूर्वपूर्वेण होमः, उत्तरोत्तरेण त्यागो बोध्यः। एवमग्रेऽपि। ततो हुतशेषाच्चरोः महामार्ज्जारश्रवणपरिमाणादन्यूनपरिमाणं ब-लिं स्रुवेण वाऽन्येन वा आदायादाय बलीन् हरति। तद्यथा, विश्वेभ्यो देवेभ्यो नम इदं विश्वेभ्यो देवेभ्यो न मम। भूतगृह्येभ्यो नम इदं भूतगृह्येभ्यो न मम। आकाशाय नमः इदमाकाशाय न मम। एवं बलित्रयं दत्त्वा त्यागं च कृत्वा वैश्वदेवान्नमभिघार्य ततः स्रुवेणादायादाय जुहोति। अग्नये स्वाहा इदमग्नये न मम, प्रजा पतये स्वाहा इदं प्रजापतये न मम, विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यो न मम। एवमाहुतित्रयं हुत्वा पूर्वासा-दितावदानद्वयग्रहणयोग्ये स्रुवे स्थालीपाकोत्तरार्द्धाद्वैश्वदेवोत्तरा-

र्द्धांच्चावदाय अग्नये स्विष्टकृते स्वाहेति तेनैव स्रुवेण अग्नौ उत्तरार्द्धे जुहोति । इदमग्नये स्विष्टकृते न ममेति त्यागः । तत ऋष्यादिस्मरणपूर्वकं भूरित्यादिप्रजापत्यन्ता नवाहुतीर्जुहुयात् । ततः संस्रवप्राशनं मार्जनं पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे दक्षिणादानं च कुर्यात् । ततः चरुशेषमादाय शालाया बहिरुपलिप्तायां भूमावुपविश्य बलीन् हरति । नमः स्त्रियै इदं स्त्रियै न मम । नमः पुꣳसे वयसे वयसे इदꣳ पुꣳसे वयसे वयसे न मम । नमः शुक्लाय कृष्णदन्ताय पापिनां पतये इदं शुक्लाय कृष्णदन्ताय पापिनां पतये न मम । नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्य इदं ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो न मम । नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददतु । इदं स्त्रियै पुꣳसे वयसे वयसे शुक्लाय कृष्णदन्ताय पापिनां पतये ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो न मम । इदमेभ्य इति वा त्यागः । ततः चरुशेषम् अद्भिः प्रप्लाव्य एकं ब्राह्मणं भोजयेदिति । दर्शे तु विशेषः । अमावास्यायामपराह्णे वक्ष्यमाणविधिना पिण्डपितृयज्ञं कुर्यात् । ततः प्रातराज्यभागान्तं पौर्णमासवत्कृत्वा दर्शदेवताभ्यो जुहोति । तद्यथा, अग्नये स्वाहा इदमग्नये न मम । विष्णवे स्वाहा इदं विष्णवे न मम । इन्द्राग्निभ्यां स्वाहा इदमिन्द्राग्निभ्यां न मम इति असन्नयतः । सन्नयतस्तु इन्द्राग्निस्थाने इन्द्राय स्वाहा इदमिन्द्राय न मम । अथवा इन्द्राग्निस्थाने महेन्द्राय स्वाहा इदं महेन्द्राय न मम इति । शेषं पौर्णमासवत् ।

इति पार्वणस्थालीपाकप्रयोगः ।

अथ पिण्डपितृयज्ञः ।

तत्र पिण्डपितृयज्ञमुक्त्वा कर्कादिधृतश्रुतिः, अप्यनाहिताग्निना कार्य इति । अपराह्णे पिण्डपितृयज्ञ इत्यादिना पिण्डपितृयज्ञविधिमुक्त्वा—

कात्यायनश्च, अनाहिताग्नेरप्येष इति ।

न आहिताः गार्हपत्यादिरूपा अग्नयो येन स अनाहिताग्निः कृतावसथ्यः तस्य अनाहिताग्नेः । एषः उक्तप्रकारः पिण्डपितृयज्ञः, भवतीति शेषः । नन्वेवमकृतावसथ्योऽप्यनाहिताग्निर्भवत्येव तस्यापि अनेन सूत्रेण पिण्डपितृयज्ञः किं नस्यादिति चेत्, न । गोभिलेन अनाहिताग्निकर्तृकपिण्डपितृयज्ञस्य शालाग्नावेव विधानात् ।

तद्यथा, अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातोऽमावास्यायां तच्छ्राद्धमितरदन्वाहार्यं मासीनं दक्षिणाग्नौ हविषः संस्करणं ततश्चैवातिप्रणयः शालाग्नावनाहिताग्नेरिति ।

अस्यार्थः । श्वस्ततोऽन्वष्टक्यमित्यादिना अन्वष्टक्यस्थालीपाकविधिरुक्तः । तं पिण्डपितृयज्ञेऽतिदिशति, अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यात इति । अमावास्यायां तच्छ्राद्धम् । अमावास्यायां दर्शे तत् पिण्डपितृयज्ञाख्यं श्राद्धं, कर्त्तव्यमिति शेषः । इतरत् पिण्डपितृयज्ञाद्भिन्नं श्राद्धम् । अन्वाहार्यम् अनु पिण्डपितृयज्ञस्य पश्चात् आहार्यं कर्त्तव्यम् । मासीनं मासि क्रियते तत् मासीनम् । दक्षिणाग्नौ हविषः संस्करणम् । गार्हपत्ये संस्कारा इति कात्यायनसूत्रेणाहिताग्नेर्गार्हपत्य एव हविषः संस्करणं प्राप्नोति तन्निराकरणार्थमुक्तं दक्षिणाग्नाविति । ततश्चैवातिप्रणयः । ततः दक्षिणाग्नेः सकाशात् अतिप्रणयः अतिप्रणयनम् । चशब्दात् होमश्च दक्षिणाग्नावेव । शालाग्नावनाहिताग्नेः । हविषःसंस्करणम् अतिप्रणयनं होमश्च अनाहिताग्नेः शालाग्नावेव

भवतीति । तस्य कालमाह—

कात्यायनः,

अपराह्णे पिण्डपितृयज्ञः चन्द्रादर्शनेऽमावास्यायामिति ।

अपराह्णः त्रेधा विभक्तस्य अह्नः तृतीयो भागः । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणामिति वाक्यशेषात् । वाक्यशेषेणाप्यर्थनिर्णयस्य अक्ताः शर्करा उपदधातीत्यादिषु स्वीकारात् । अनन्तयाज्ञिकादयस्तु समं द्वेधा विभक्तस्य अह्नः अपरो भागः अपराह्णः । शब्दसामर्थ्यात् । भागद्वये च कृते आद्यः पूर्वः द्वितीयश्च अपरो भवति, न भागत्रये पञ्चभागे वा कृते । पूर्वाह्णो वै देवानामित्यादिवाक्ये तु पूर्वाह्णापराह्णयोरेवैकदेशस्य मनुष्यादिभोजनाङ्गस्य मध्याह्नत्वेन कीर्त्तनम् । न तु ताभ्यां पृथग्भूतस्य । अवयवशक्त्यैव निर्वाहे अपराह्णादिशब्दस्य रूढ्यन्तरकल्पनानौचित्यात् । तस्मात् द्वेधा विभक्तस्यैव अह्नः अपरो भागः अपराह्ण इत्याहुः । पिण्डपितृयज्ञ इति पिण्डैः पितृयज्ञः इति व्युत्पत्त्या पिण्डदानाख्यस्य कर्मणः संज्ञा । होमश्च तदङ्गम् । स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यो देवान् वा एष उपावर्तते य आहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत् पितृयज्ञेनैवाचारी तदु देवेभ्यो निह्नुते स दैवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्य इति श्रुतेः । किञ्च मासि मासिवोशनमिति प्रकृत्य यद्देवैष न पुरस्तान्न पश्चाद्ददशेऽथैभ्यो ददातीत्यादिना श्रुतौ पिण्डदानमेवोक्तं न होमजपादिकमित्यतोऽपि पिण्डदानमात्रस्य प्राधान्यमवगम्यत इति । चन्द्रादर्शनेऽमावास्यायामिति । चन्द्रादर्शनमभ्रादिनाऽपि सम्भवतीत्यतोऽमावास्यापदमुपात्तम् । चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्यामित्यादिप्रयोगदर्शनादमावास्यापदेनामावास्यं कर्माप्युच्यते इत्यतश्च-

न्द्रादर्शने इत्युपात्तम् । अदर्शनपदेन च परमक्षयो लक्ष्यते । एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एतां रात्रिं क्षीयते तस्मिन् क्षीणे ददातीति श्रुतेः । एवं च चन्द्रस्य परमक्षयविशिष्टे अमावास्यारूपकाले अपराह्णे पिण्डपितृयज्ञो भवतीति सूत्रार्थः । अत एव खर्विकामावास्यायां दृष्टेऽपि चन्द्रमसि अपराह्णे परमक्षय इति क्रियत एव तत्र पिण्डपितृयज्ञः । यदैवैष न पुरस्तान्न पश्चाद्दृश इति श्रुतेश्च तस्मिन् क्षीणे ददातीत्येकतया परमक्षयोपलक्षकत्वमेव । तेन खर्विकामावास्यायां पिण्डपितृयज्ञकरणे न दोषः । विशेषतस्तु पर्वनिर्णयः समयप्रकाशे वक्ष्यते । तदितिकर्त्तव्यतामाह —

कात्यायनः, दक्षिणाग्नौ श्रपण्ँ होमश्च । परिस्तीर्य तं पूर्ववत् पात्रासादनमेकैकशोऽपरेण गार्हपत्यं चरुमपूर्ण्ँस्रुवं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् । सकृत् फलीकरोति । सारतण्डुलमपूर्ण्ँ श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोति। अग्नय इति सोमाय इति च प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा उल्मुकं परस्तात्करोति येरूपाणीति । उदपात्रेणावनेजयत्यपसव्य्ँसव्येन वोद्धरणसामर्थ्यादसाववनेनिक्ष्वेतियजमानस्य पितृप्रभृतित्रीन् । उपमूल्ँसकृदाच्छिन्नानि रेखायां कृत्वा यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति । ये च त्वामन्विति चैके । अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनादाव्रत्त्यामीमदन्तेति जपत्यवनेज्य पूर्ववन्नीविं विस्र्ँस्य नमो व इत्यञ्जलिं करोत्येतद्व इत्यपास्यति सूत्राणि प्रतिपिण्डमूर्णादशां वा वयस्युत्तरे यजमानलोमानि वोर्जमिति पयो निषिञ्चत्यवधायावजिघ्रति यजमान उल्मुकसकृदाच्छिन्नान्यग्नौ इति ।

अस्यार्थः । दक्षिणाग्नौ श्रपण्ँ होमश्च । दक्षिणस्यां दि-

श्यवस्थापितोऽग्निः दक्षिणाग्निः तत्र चरुश्रपणं होमश्च भवति। विशेषवचनं चैतत् । अतो गार्हपत्ये संस्कारा इति परिभाषासूत्रेण गार्हपत्ये श्रपणस्य, आहवनीये होमः श्रुतिसमाख्यानाभ्यामिति परिभाषया च आहवनीये प्राप्तस्य होमस्य च व्युदासः। एतच्चाहिताग्निविषयम् । अनाहिताग्नेस्तु शालाग्नावेव श्रपणं होमश्च शालग्नावनाहिताग्नेरिति पूर्वलिखितगोभिलसूत्रादवसेयम् । परिस्तीर्य तम् । यत्र होमादिरुक्तः तमग्निं परिस्तीर्य। परिस्तरणप्रकारस्तु पूर्वोक्तोऽध्यवसेयः । पूर्ववत्पात्रासादनमेकशः । पूर्ववत् श्रपणस्य पश्चादुत्तरतो वा । पात्रासादनं शूर्पादेः प्रयोजनवतश्च स्थापनम् । एकैकशः एकैकस्य। एकैकश इत्युक्त्वा-त्प्राप्ताया द्वन्द्वताया निरासः । अपरेण गार्हपत्यं चरुमपूर्णं स्त्रुवं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् । अपरेण गार्हपत्यं गार्हपत्यस्य पश्चिमतः। सजघनेन गार्हपत्यमिति श्रुतेः । चरुमपूर्णं स्त्रुवं वा तूष्णीं गृहीत्वा । चरुशब्दः चरुस्थालीवचनः। स्त्रुक् चात्र वारणकाष्ठमयी। वारणान्यहोमसंयुक्तानीति कात्यायनसूत्रात् । ग्रहणे च अपूर्णता उभयोः । अपूर्णं पितॄणामिति कर्कादिधृतवचनात्। तूष्णीमिति तु लौकिकवागुच्चारणप्रतिषेधार्थम् । मन्त्रस्यानुपदेशादेवाप्राप्तेः ।

तथा चाश्वलायनसूत्रम्, दक्षिणतोऽग्निष्ठमारुह्य चरुस्थालीं पूर्णां निमृजेत् ।

आपस्तम्बादिसूत्रानुयायिनां तु मन्त्रेण वा तूष्णीं वा ग्रहणं तत्सूत्रादौ तथैवोक्तत्वात् ।

तद्यथा, दक्षिणतः प्राग्नीषं व्रीहिमत् शकटमवस्थितं भवति । अध्वर्युरुपवीती स्थालीमेकपवित्रेणान्तर्द्धाय तया दक्षिणतः शकटादधिनिर्वपति । उत्तरतः प्राचीनावीती तां पूरयित्वा निमार्ष्टि ।

निर्वपाति पितृभ्यो जुष्टं निर्वपामीति वा तूष्णीं वेति ।

शाङ्खायनानां तु पितॄणां ध्यानमात्रं न मन्त्रः ।

तथाच शाङ्खायनः, गार्हपत्यस्य पश्चाद्दक्षिणाग्रेषु कुशेषु स्फ्यं निधायोपरिष्टाद्व्रीहीन् पात्र्यां पुरस्ताच्छूर्पे स्थालीम् आच्य सव्यं जानुनी वा मुष्टिना व्रीहीन् गृह्णाति पितॄन् ध्यायन् यथाधोबिलाश्रुतः स्यादिति ।

एवं च आपस्तम्बसूत्रानुसारिणां मन्त्रविकल्पः, शाङ्खायनानां तु पितॄणां ध्यानमात्रम् , अन्येषां मन्त्रस्यानुक्तत्वात्तूष्णीमिति। न चान्येषामप्यापस्तम्बोक्तो मन्त्रो विकल्पेनास्त्विति वाच्यम् । आकाङ्क्षितस्यैव परोक्तस्य ग्रहणात् । अत एव कात्यायनसूत्रानुसारिणां शकटात् पात्रीतो वा न ग्रहणम् । न वा स्थाल्यां पवित्राद्यवधानम् । किन्तु कुतश्चित्पात्रान्तराद्ग्रहणमिति । उत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् । दक्षिणाग्नेरुत्तरतः अदूरे कण्डनं करोति ऊर्ध्वीभूतः । अत्र सर्वमपि दक्षिणाभिमुखेन प्राचीनावीतिना च कर्त्तव्यम् ।

तथाच श्रुतिः, सजघनेन गार्हपत्यं प्राचीनावीती भूत्वा दक्षिणासीन एतं गृह्णाति । स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणां तिष्ठन्नवहन्ति सकृत्फलीकरोतीति ।

एवं पदार्थान्तरेष्वपि दक्षिणामुखत्वादिकं तत्र तत्र श्रुतावुक्तम् । कात्यायनोऽपि विपर्यस्य पित्र्येषु सकृद्दक्षिणा चेति पित्र्यकर्ममात्र एव दक्षिणामुखत्वादिकमुक्तवान् । एतच्च कण्डनमुदग्रीवं कृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तत्र व्रीहीन् प्रक्षिप्य मुसलमादाय दक्षिणामुखस्तिष्ठन् करोति । दर्शपूर्णमासयोः कृष्णाजिनास्तरणं प्रकृत्य तस्मादध्यवहननमधिपेषणं भवत्यस्कन्नं हविरसादितिग्रदेवात्र तण्डुलो वा पिष्टं वास्कन्दा-

त्तद्यज्ञे यज्ञः प्रतितिष्ठादिति तस्माद्ध्यवहननमधिपेषणं भवतीति श्रुतत्वात् । सूत्रान्तरेषु च कृष्णाजिनास्तरणस्योक्तत्वात् ।

तथाचापस्तम्बः, अपरेणान्वाहार्यपचनं प्रत्यग्ग्रीवे कृष्णाजिने प्रतिष्ठिते दक्षिणा प्राची तिष्ठती पत्न्यहवान्ति परापातमविवेकं च सकृत्फलीकरोति दक्षिणाग्नौ जीवतण्डुलं श्रपयतीति ।

आश्वलायनश्च, कृष्णाजिने उलूखलं कृत्वेतरान् पत्न्यवहन्यादविवेचमवहतान् सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयेदिति ।

अन्ये तु कात्यायनसूत्रे श्रुतौ च कृष्णाजिनास्तरणस्यानुक्तत्वात् सूत्रान्तरोक्तस्यानाकाङ्क्षितस्याग्रहणात् तस्माद्ध्यवहननमधिपेषणं भवतीत्यादेर्दर्शपूर्णमासप्रकरणीयकृष्णाजिनास्तरणस्तावकत्वाच्च नात्र कृष्णाजिनास्तरणमित्याहुः । सकृत्फलीकरोति । एकवारं कण्डननिष्पन्ननाविवेकीकरणैः फलीभूतान् करोति। नन्वत्र सकृदिति व्यर्थम् । विपर्यस्य पित्र्येषु सकृद्दक्षिणा चेति परिभाषयैव सकृत्करणप्राप्तेरिति चेत्, न । फलीकरोतीत्येतावन्मात्रे कथिते यावता फलीकरणं भवति तावतः कर्त्तव्यत्वे प्राप्ते एतत्सूत्रानुरोधेनैव परिभाषायाः सङ्कुचितत्वेन न परिभाषया नियमतः सकृत्करणं प्राप्नोतीत्यतः सकृत्करणनियमार्थं तदुपादानात् । सारतण्डुलमपूर्णꣳ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमाय इति च । सारशब्दः सकलतण्डुलवाची, प्रसिद्धेः। एवं च सम्पूर्णं तण्डुलं श्रपयित्वेत्यर्थः । तच्च ईषत् श्रपणे कृते सम्पूर्णं तिष्ठति न बहुश्रपणे कृते । दृश्यते च वाक्यशेषेषु पित्रर्थौदनस्येषत्स्विन्नता शृताशृतं पितॄणामिति । अपूर्णम् । यथा शृतेन चरुणा चरुस्थाल्याः पूरणं न भवति तथा कर्त्तव्यम् ।

श्रुतिरपि, पूर्णं वै देवानामर्द्धपूर्णं मनुष्याणामुपर्यर्द्धं पि-

तृणामिति।

श्रपयित्वा। उक्तरूपं चरुं श्रपणेन सम्पाद्य। अभिघार्य अभिघारणं कृत्वा। एतच्चाभिघारणमाज्येन भवति। तच्छ्रपयति तस्मिन्नधिश्रुतआज्यं प्रत्यानयतीति श्रुतेः। उद्वास्य मेक्षणेन जुहोति। तं चरुम् अग्नेः सकाशादुत्तार्य मेक्षणेन जुहोति। उत्तारणं च दक्षिणतः। पित्र्यत्वात्। शृतमभिघार्य दक्षिणत उद्वासयतीति मानवसूत्राच्च। तत्र होमे मन्त्रः अग्नये कव्यवाहनाय स्वाहेति, सोमाय पितृमते स्वाहेति। अयं च दैवोऽपि होमः प्राचीनावीतिना दक्षिणाभिमुखेन च कार्यः। पित्र्यकर्माङ्गत्वात्। अङ्गानां प्रधानोपचारन्यायात्। महापितृयज्ञे प्रयाजाद्यर्थं यदाज्यग्रहणं तत्र स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णातीति यज्ञोपवीतित्वस्य पुनर्विधानाच्च। न चायं प्राप्तानुवादः। अनन्यपरत्वाद्वाक्यस्य। अग्नौकरणं प्रकृत्यैव—

कात्यायनश्च,

अपसव्येन वा कार्यो दक्षिणाभिमुखेन च। इति।

न चैवम्,

अग्नौकरणहोमश्च कर्त्तव्य उपवीतिना।

इति कात्यायनवाक्येनैव विरोधः। एतद्वाक्यस्य यच्छाखायां यज्ञोपवीतिना होम उक्तस्तच्छाखीयपरत्वात्। उक्तश्च तथा होमः-

शाङ्खायनसूत्रे, यज्ञोपवीती प्राङासीनो मेक्षणेन जुहोतीति।

आपस्तम्बसूत्रे च, अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य तेनावदायाभिघार्येति।

न चैवं शाङ्खायनादिसूत्रैकवाक्यतया सर्वेषामेव यज्ञोपवीतिनैव होमोऽस्त्विति वाच्यम्। अपसव्येन वा कार्य इति कात्यायनवाक्यस्य निर्विषयत्वापत्तेः। ऐच्छिकविकल्पस्वीकारे च गौ-

रवापत्तेः। तस्मात्प्राचीनावीतिना होमः कार्य इति।

कश्चित्तु अनन्तयाज्ञिकमतानुयायितया यज्ञोपवीतिनैव होमः कर्त्तव्य इत्याह।

प्रास्य तत्। तत् मेक्षणम् अग्नौ प्रक्षिप्य। अत्र केचित् सव्येन होमपक्षे मेक्षणप्रासनमपि सव्येन। अपसव्येन होमपक्षे त्वपसव्येनैव। होमाङ्गत्वात्तस्य। होमाङ्गत्वं च अग्नौ मेक्षणमभ्यादधाति तत्स्विष्टकृद्भाजनमिति श्रुतेरित्याहुः। तन्न। होमाङ्गत्वे प्रमाणाभावात्। प्रयाजाद्युपक्रमणादीनामिवावान्तरप्रकरणस्याभावात्। स्विष्टकृत्स्थानापन्नस्यापि तस्य प्रकरणेन प्रधानाङ्गत्वात्। अत्र पिण्डदानस्यैव प्रधानत्वात्। पित्रर्थचरुचालनार्थमुत्पन्नस्यापि तस्य प्रासनरूपप्रतिपत्तिविशेषविधानेन पित्रर्थत्वस्यापरित्यागात्। तस्मात्प्राचीनावीतिनैव तस्य प्रासनं भवतीति। दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा। प्रस्तुतत्वाद्दक्षिणाग्नेः दक्षिणतः अदूरे तत्पश्चिमतो वा अदूरे अपहता असुरा रक्षाꣳसि वेदिषद इति मन्त्रेण दक्षिणसंस्थां लेखां करोति। एतच्च रेखाकरणं स्फ्येन। तथाच—

**आपस्तम्बः**, सकृत्स्फ्येनोल्लिख्येति।

**आश्वलायनश्च**, स्फ्येन लेखामुल्लिखेदपहता इतीति। उल्मुकं परस्तात्करोति येरूपाणीति। रेखायाः परस्ताद्दक्षिणप्रदेशे येरूपाणीति मन्त्रेण उल्मुकं दक्षिणाग्नेरेकदेशं निदधाति। उदपात्रेणावनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यात्। उदकपूर्णं पात्रम् उदपात्रं तेनोदपात्रेण। अवनेजयति अवनिक्तान् शुचीन् करोति। अपसव्यं सव्यादपेतम् अपसव्यम्। क्रियाविशेषणमेतत्। अपसव्यत्वे हेतुः सव्येन वोद्धरणसामर्थ्यादिति। वाशब्द एवार्थे। उद्धरणं च मनुष्येभ्यो दानम् तत्रैव सव्येन।

सामर्थ्यात्। पितृभ्यस्तु सव्येन दातुं न शक्यते। तथा च अपसव्येनैव पितृभ्यो देयमिति भावः। अत्र कनिष्ठिकामूलेन यद्दानादि तत्सव्येन। तद्विरुद्धं तर्जन्यङ्गुष्ठयोरन्तरालप्रदेशेन यद्दानादि तदपसव्येन। तथाचाभिनयेन तर्जन्यङ्गुष्ठयोरन्तरालप्रदेशेन पितृभ्यो दानमाह—

श्रुतिः, स वा इति ददातीतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितॄणां तस्मादिति ददातीति।

तत्रावनेजने मन्त्रः असाववनेनिक्ष्वेति। असावित्यत्र अवनेज्यनामग्रहणम्। तच्च अवनेनिक्ष्वेतिनिर्देशात् सम्बुद्ध्यन्तं ग्राह्यम्। अवनेज्यानाह यजमानस्य पितृप्रभृति त्रीनिति। यजमानस्य पितृपितामहप्रपितामहान् अवनेजयति। उपमूलꣳ सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति। मूलसमीपे एकेनैव प्रयत्नेन छिन्नानि दर्भतृणानि रेखायामास्तीर्य अवनेजनक्रमेण पितृपितामहप्रपितामहानां पिण्डान् ददाति असावेतत्त इति मन्त्रेण। एतच्च आस्तरणं दक्षिणाग्रैः कुशैः दक्षिणासंस्थं च कर्त्तव्यम्। तानि दक्षिणोपस्तृणानि तत्र ददातीतिश्रुतेः। असावित्यस्य स्थाने च पितॄणां संबुद्ध्यन्तनामादेशः। साकाङ्क्षत्वादेतत्त इत्युत्तरम् अन्नमित्यध्याहार्यम्। वाक्यान्तरात्स्वधेति च।

द्विपितृकस्य आपस्तम्बसूत्रे विशेषः। यदि द्विपितृकः स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति।

ये च त्वामन्विति चैके। एके ये च त्वामनु इति पिण्डदानमन्त्रस्य शेषं कुर्वन्ति। स ददात्यसावेतत्त इत्येवं यजमानस्य पित्रे ये च त्वामन्वित्युहैक आहुरिति श्रुतेः। एतस्मिन् पक्षे च पितुर्नाम उच्चार्य एतत्तेऽन्नं ये च त्वामनु तस्मै स्वधेत्येव प्रयोगः।

तथा च मानवसूत्रम्, पिण्डान्निदधाति पितुर्नाम्नाऽसावेतत्ते ये च त्वामनु तस्मै स्वधेति प्रथमं, पितामहस्य नाम्नः स्थवीयांसं मध्यमं, प्रपितामहस्य नाम्ना स्थविष्ठं दक्षिणमिति।

पित्रादीनां नामाज्ञाने विशेष उक्तो मानवसूत्र एव। यदि बन्धुनाम न विद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं दद्यात्, स्वधापितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयं, स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयमिति।

शौनकस्मृतौ च, नामान्यजानन् पितः पितामह प्रपितामहेति।

पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः॥

इति ब्रह्मपुराणे श्राद्धमात्रमुपक्रम्य गोत्रोच्चारणस्योक्तत्वात्। पिण्डपितृयज्ञस्यापि श्राद्धत्वेन बहुशो व्यवहारात् अत्रापि गोत्रोच्चारपूर्वकं दानं भवतीति। गोत्राज्ञाने तु विशेषमाह—

व्याघ्रपात्, गोत्राज्ञाने तु काश्यप इति।

एवं चावनेजनादावपि गोत्राद्यज्ञाने काश्यपगोत्र पितः पृथिवीषत् अवनेनिक्ष्वेतिरीत्याऽवनेजनादिकं बोध्यम्।

अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनात्। अत्र पितर इतीमं मन्त्रं पिण्डसंमुख एवोक्त्वाऽप्रदक्षिणं पर्यावृत्त्य उदङ्मुखो भूत्वा श्वासधारणं कृत्वा उपाविशेत्। आतमनात्। तमु ग्लानौ इत्यनुशासनात् तमनं ग्लानिः। उदङ्मुखाद्यस्थानमात्रेण ग्लानिर्न सम्भवतीति श्वासावरोधोऽपि सूत्रकारस्याभिमेत इत्युन्नीयते। सूत्रान्तरे च श्वासावरोधः स्पष्टतयैवोक्तः। तथाच—

आश्वलायनसूत्रम्, यथाशक्त्यप्राणन्नासित्वेति।

अप्राणन् प्राणनिरोधं कृत्वेत्यर्थः। तदाह—

विष्णुः, यथाशक्ति प्राणनिरोधं कृत्वाऽऽसीतेति ।

स वा आतमितोरासीतेति । स वा आतमितोरासीतेत्या-हुरेतावान् ह्यसुरिति स वै मुहूर्त्तमेवासित्वेतिश्रुतिबलादप्ययमर्थोऽवसीयते । अत्र पितर इति मन्त्रवचनं च जपधर्मेण । तत्र जपत्यत्रपितरो मादयध्वमिति श्रुतेः । जपधर्मश्च स्वरः । एकश्रुतिदूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जमिति सूत्रेण सुब्रह्मण्यासामजपाद्यतिरिक्तेष्वेवैकश्रुत्यविधाना-देतेषु स्वरो भवतीत्यवगमात् । स्वरश्चात्र संहितास्वरः । आवृत्याऽमीमदन्तेति जपति।प्रदक्षिणं प्रत्यावृत्त्य पिण्डसंमुखो भूत्वा अमीमदन्तेति मन्त्रं स्वरेण पठति । अवनेज्य पूर्ववन्नीविं विस्रंस्य नमोव इत्यञ्जलिं करोति । पूर्ववदिति यजमानपितृपितामहप्र-पितामहेभ्यस्तैरेव मन्त्रैः तत्तत्स्थानेषु च उदपात्रेण अवनेजनं करोति । नन्वेवं पूर्वं भूमाववनेजनस्य कृतत्वादिदमप्यवनेजनं भूमावेव कार्यमिति चेत्, सत्यम् । पूर्ववदित्यनेन स्थानातिदेशो-ऽपि प्राप्यते । तत्तत्स्थानेषु च पिण्डानां निहितत्वात्साक्षात्तत्र कर्त्तुमशक्यत्वेन पिण्डोपरि क्रियमाणं तत्र कृतं भवतीति पिण्डो-पर्येव क्रियते।नन्वेवं भूम्यधिकरणं बाधिष्यते इति चेत्, बाध्यताम् तत्प्रदेशविशेषप्रापकेण। न चैवं प्रापकस्य समानत्वात्तत्प्रदेशविशेष-स्यैव कथं न बाध इति वाच्यम् । पिण्डोपरिक्रियमाणं तत्प्रदेशविशेषे परम्परया भूमौ च कृतं भवतीति तदुभयानुग्रहाय पिण्डोपर्येव तस्य कर्त्तुं युक्तत्वात् । नीविं विस्रंस्य । परिहितवस्त्रग्रन्थिविशेषं विस्रंस्य । परिहितवस्त्रमध्येऽवगूहितं वस्त्रप्रान्तं विस्रंस्येति तु श्रीदत्तः । विस्रंसनोपदेशाच्च प्रारम्भे नीविमत्परिधा-नम् । नमो व इत्यञ्जलिं करोति । नमो वः पितरोरसायेत्यादि-भिर्मन्त्रैः षट् अञ्जलीन् करोति । अथ नीविमुद्गृह्य नमस्करो-

ति पितृदेवत्या वै नीविस्तस्मान्नीविमुद्गृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वा ऋतव ऋतवः पितरस्तस्मात्षट्कृत्वो नमस्करोतीति श्रुतेः। सूत्रकारेणानुपसंहारान्नेति चेत्, न। महापितृयज्ञे सूत्रकृतोपसंहृतत्वात्। षड्वा नमस्कारानिति श्रुतेश्चोभयत्रापि तुल्यत्वात्। प्रतिनमस्कारमञ्जलिकरणं भवतीति तु श्रीदत्तः। गृहान्न इत्यस्यापि पठनम्। गृहान्नः पितरो दत्तेति गृहाणाऽ ह पितर ईशत एषो एतस्याशीः कर्मण इति श्रुतेः। एतद्व इत्यपास्यति सूत्राणि प्रतिपिण्डम्। एतद्वः पितरो वास इति मन्त्रेण तन्तून् प्रतिपिण्डं प्रक्षिपति। बहुवचनोपदेशात् त्रीन्। ऊर्णादशा वा। अपास्यतीत्यनुवर्तते। वेत्युक्तत्वाद्विकल्पः। वयस्युत्तरे यजमानलोमानि वा। शतायुःपुरुषः। तत्र पञ्चाशद्वर्षादुत्तरम् उत्तरं वयः। तस्मिन् यजमानलोमानि वा अपास्यति। तानि च लोमानि हृदयादिप्रदेशोद्भवानि ग्राह्याणि। प्रदेशान्तरोद्भवानामशुद्धत्वात्। ऊर्जमित्यपो निषिञ्चति। ऊर्जमित्यनेन मन्त्रेणापः निषिञ्चति तर्पयत मे पितॄनिति मन्त्रलिङ्गात्। पिण्डानां पित्राधिष्ठानत्वाच पिण्डेषु निषिञ्चति। पिण्डमूलेष्विति तु केचित्। अवधाय जिघ्रति यजमानः। अवधानं त्वध्वर्युः करोति, अवघ्राणं तु यजमानः। अध्वर्युः कर्मसु वेदयोगादिति परिभाषासूत्रेण सामान्यतः कर्ममात्र एवाध्वर्योः कर्तृत्वबोधनात्। न चात्रावधायावजिघ्रतीति अवधानावघ्राणयोः समानकर्तृकताबोधकल्यप्प्रत्ययदर्शनात् कथमेवमिति वाच्यम्। ल्यप्प्रत्ययस्यात्र तदुत्तरकालतामात्रबोधकत्वात्। निरुप्याज्यं प्रातर्दोहनमन्यस्मिन्नित्यादावपि तथादर्शनात्। अवघ्राणं च यजमानसंस्कारः। अथावजिघ्रति प्रत्यवधाय पिण्डान् स यजमानभाग इति श्रुतेः। ततश्च प्रस्थिते यजमा-

ने लुप्यते। एतच्च प्रत्यवधानमुख्यायां भवति प्रत्यवधायेत्युक्तत्वादिति सम्प्रदायः। उल्मुकसकृदाच्छिन्नान्यग्नौ। आदधातीति शेषः। अत्र प्रथमतः सकृदाच्छिन्नानि अग्नौ आदधाति। तदुत्तरमुल्मुकम्। अग्नौ सकृदाच्छिन्नान्यभ्यादधाति पुनरुल्मुकमपि सृजतीति श्रुतेः इति।

अत्र स्मार्त्ते अध्वर्य्वादेरभावाद्यजमानः स्वयमेव सर्वं करोति। न चानाहिताग्नेरप्येप इति सूत्रेणानाहिताग्निकर्तव्यत्वेन साङ्गपिण्डपितृयज्ञस्योक्तत्वादनाहिताग्निकर्तव्यपिण्डपितृयज्ञेऽध्वर्युणा भवितव्यमिति वाच्यम्। स्मार्त्तपाकयज्ञेषु ब्रह्मव्यतिरिक्तऋत्विजां ब्रह्मैवैकार्त्विक् पाकयज्ञेषु स्वयं होता भवतीति गोभिलेन निराकरणात्।

अत्रैव पिण्डपितृयज्ञे गुणकाममाह—

**कात्यायनः**, आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा। अस्यार्थः। आधत्त पितरो गर्भमिति मन्त्रेण मध्यमपिण्डं यजमानपत्नी पुत्रकामा प्राश्नाति, प्रसवसमर्थेति सूत्रशेष इति भाष्यकाराः। अयं पिण्डपितृयज्ञः यस्य पिता पितामहः प्रपितामहश्च मृतः तस्य भवति नान्यस्य। तदाह—

**कात्यायनः**, प्रेतेभ्यो ददातीति।

**तथा**, जीवपितृकस्य होमान्तमनारम्भो वा न व्यवेते जातूकर्ण्यो न जीवन्तमति ददातीति। अस्यार्थः। प्रेतेभ्यः मृतेभ्यः पितृपितामहप्रपितामहेभ्यः ददाति। कुत एतदिति चेत्, स वापराह्णे ददातीत्यादिना अपराह्णस्य पितृणामशनकालत्वमुक्त्वा पिण्डदानस्योक्तत्वात्। न हि अपराह्णः जीवतां पितृणामशनकालः। जीवपितृकस्य जीवत्पितृकस्य। होमान्तं भवति। अग्नये कव्यवाहनाय स्वाहे-

त्यादिर्होमः तदन्तं भवति । एतच्च अनुपपन्नम् । होमस्य पिण्डदानाङ्गत्वात् । पिण्डदानाभावे च होमकरणस्याकरणसमशीलत्वात् । इत्यतः पक्षान्तरमाह अनारम्भो वेति । जीवत्पितृकस्य पिण्डापितृयज्ञानारम्भः यष्टव्यपित्राद्यभावात् । अथैवं यस्य पिता जीवति पितामहादिश्च मृतः तस्य पिण्डदानं विहाय सम्पूर्णः पिण्डपितृयज्ञः स्यादिति । तत्राह—न व्यवेते जातूकर्ण्यो न जीवन्तमति ददातीतिश्रुतेरिति । जातूकर्ण्यः व्यवायं नेच्छति। कुतः न जीवन्तमतिददातीति श्रुतेरिति । अतिददाति अतिक्रम्य ददाति । अत एव जीवपितृकोऽपि जीवान्तर्हितोऽपीतिसूत्रोक्तपूर्वपक्षोऽप्यपास्तः । मानवादिसूत्रे विशेषः ।

जीवत्पितुः पिण्डनिधानं जीवत्पितामहस्य वा । न जीवन्तमतिदद्याद्यदि दद्याद्येभ्य एव पिता दद्यात्तेभ्यो दद्यादिति ।

अथ पिण्डपितृयज्ञप्रयोगः ।

तत्र नित्यानि विधाय त्रिधाविभक्तादिनतृतीयांशरूपे द्विधाविभक्तदिनद्वितीयांशरूपे वाऽपराह्णे पिण्डपितृयज्ञकर्माहं करिष्ये इति सङ्कल्प्य प्राचीनावीती भूत्वा नीविं कुर्यात् । नीविकरणं च कुशतिलसंयुक्तानां वस्त्रदशानां सव्यभागे परिहितवस्त्रेण संवेष्ट्यावगूहनमिति देवयाज्ञिकः । ततो ग्रन्थकारलिखनात् देवताभिध्यानम् । तद्यथा, पिण्डपितृयज्ञेनाहं यक्ष्ये, तत्र अग्निं कव्यवाहनं सोमं पितृमन्तम् अमुकगोत्रान् पितृपितामहप्रपितामहान् अमुकामुकशर्मणः व्रीहिभिरहं यक्ष्ये इति चिन्तयेत् । ततः शालाग्नेर्दक्षिणाग्रैर्दर्भैर्दक्षिणसंस्थमपसव्यं परिस्तरणम् । ततः पात्रासादनम् । अग्नेः पश्चात् उत्तरतो वा दक्षिणासंस्थम् । तद्यथा, स्रुक् उलूखलं मुसलम् शूर्पम् चरुः उदकम् आज्यम् मेक्षणम् वज्रः सकृदाच्छिन्नानि व्रीहयः सूत्रोर्णादशा यजमानलो-

म्नामन्यतममिति । यजमानलोम्नामासादनं च तस्योत्तरे वयासि नान्यदा । स्थाल्यां ग्रहणपक्षे स्रुक्सादनाभावः । स्रुक्सादनोत्तरं कृष्णाजिनस्यासादनमिति केचित् । ततः अग्निमपरेण स्रुचि चरुस्थाल्यां वा अपूर्णता यथा भवति तथा आसादितान् व्रीहीन् तूष्णीं गृह्णीयात् । ततः उत्थाय अग्नेरुत्तरत आगत्य तत्र उदग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तदुपरि उलूखलं निधाय तत्र व्रीहीनोप्य मुसलमादायावधाय दक्षिणाभिमुखस्तिष्ठन्नवहन्ति यावद् व्रीहीणां वितुषीभावो भवति । अत्र कृष्णाजिनास्तरणं न भवतीति तु बहवः । तत उलूखलाद् व्रीहीन् शूर्पे कृत्वा निष्पूय तुषान् पृथक् कृत्वा पुनरुलूखले प्रक्षिप्य फलीकृत्य उलूखलान्निष्काश्य शूर्पे कृत्वा कणान् पृथक् कुर्यात् । ततः सकृत् प्रक्षाल्य तण्डुलान् सोदकचरुपात्रे प्रक्षिप्य अग्नावधिश्रित्य मेक्षणेनाप्रदक्षिणं चालयन्नीषत् शृतं चरुं श्रपयेत् । तत आसादिताज्येन चरुमभिघार्य अग्नेर्दक्षिणत उद्वास्य अप्रदक्षिणं पूर्वेणाग्निमुत्तरत आनीय स्थापयेत् । ततः सव्यं जान्वाच्य मेक्षणेन चरुमादाय, अग्नय इत्यस्य प्रजापतिर्ऋषिः अग्निः कव्यवाहनो देवता यजुर्होमे विनियोग इति स्मृत्वा, अग्नये कव्यवाहनाय स्वाहेति जुहोति । इदमग्नये कव्यवाहनाय न मम इति त्यागः । पुनरपि मेक्षणेनैव चरुमादाय, सोमायेत्यस्य प्रजापतिर्ऋषिः सोमः पितृमान् देवता होमे विनियोग इति स्मृत्वा, सोमाय पितृमते स्वाहेति जुहोति । इदं सोमाय पितृमते न मम इति त्यागः । मेक्षणमग्नौ प्रक्षिप्य ततः अपहता इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः असुरा रक्षांसि च देवताः रेखाकरणे विनियोग इति स्मृत्वा, अपहता असुरा रक्षाꣳसि वेदिषद इति मन्त्रेण अग्नेर्दक्षिणतः पश्चिमतो वा दक्षिणाग्रामेकां रेखां करोति । तत उदकं स्पृष्ट्वा, ये रूपा-

णीत्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः असुरा देवता उल्मुकनिधाने विनियोग इति स्मृत्वा, ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरोनिपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्यस्मात् इति मन्त्रेण उल्मुकं रेखाग्रे निदधाति । तत उदकोपस्पर्शनम् । ततो रेखायाम् अमुकगोत्र अस्मत्पितः अमुकशर्म्मन् अवनेनिक्ष्वेति रेखामूलप्रदेशे पितरमवनेज्य अमुकगोत्र अस्मत्पितामह अमुकशर्मन् अवनेनिक्ष्व इति रेखाया मध्यप्रदेशे पितामहमवनेज्य, अमुकगोत्र अस्मत्प्रपितामह अमुकशर्मन् अवनेनिक्ष्व इति मन्त्रेण रेखाग्रप्रदेशे प्रपितामहवनेजयेत् । इति सम्प्रदायः । स्वसूत्रे सूत्रान्तरे च पिण्डपितृयज्ञसम्बद्धावनेजनादौ गोत्राद्युच्चारणस्यानुक्तत्वात् गोत्राद्युच्चारणमन्तरेणैव अमुकशर्मन् पितरवनेनिक्ष्वेतिरीत्यैवावनेजनपिण्डदानादिकं भवतीत्यन्ये । ततः सकृदाच्छिन्नानि दर्भतृणानि लेखायां दक्षिणाग्राण्यास्तीर्य अमुकगोत्रास्मत्पितः अमुकशर्मन् एतत्तेऽन्नं स्वधा इति मन्त्रेण प्रथमावनेजनस्थाने पितृपिण्डं दद्यात् । ततः अमुकगोत्र अस्मत्पितामह अमुकशर्मन् एतत्तेऽन्नं स्वधा इति द्वितीयावनेजनस्थाने पितामहपिण्डं दत्त्वा, अमुकगोत्रास्मत्प्रपितामह अमुकशर्म्मन् एततेऽन्नं स्वधा इति तृतीयावनेजनस्थाने प्रपितामहपिण्डं दद्यात् । अथ वा अमुकगोत्र अस्मत्पितः अमुकशर्म्मन् एततेऽन्नं ये च त्वामनु तस्मै स्वधेतिरीत्या पिण्डान् दद्यात् । पिण्डान् तदेवमन्यतरप्रकारेण दत्त्वा पिण्डाभिमुखः अत्र पितर इत्यस्य प्रजापतिर्ऋषिः यजुः पितरो देवता जपे विनियोग इति स्मृत्वा, अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् इति स्वरेण पठेत् । ततो अप्रदक्षिणमुदङ्पर्यावृत्य श्वासमवरुध्य आतमनादास्ते । पुनः प्रदक्षिणं पर्यावृत्य पिण्डाभिमुखो भूत्वा

अमीमदन्तेत्यस्य प्रजापतिर्ऋषिः पितरो देवता यजुर्जपे विनियोगः इति स्मृत्वा, अमीमदन्त पितरो यथाभागमावृषायिषत इति स्वरेण पठेत् । ततः पिण्डानामुपरि पिण्डमूलेषु वा पूर्ववदवनेज्य नीविं विस्रंस्य नमो व इत्यादीनां यजुषाम् प्रजापतिर्ऋषिः पितरः लिङ्गोक्ता देवताः अञ्जलिकरणे विनियोग इति स्मृत्वा, नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोरायेति पञ्चभिर्मन्त्रैः पञ्चाञ्जलीन् कृत्वा, नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो व इत्येतावता मन्त्रेण षष्ठमञ्जलिं कुर्यात् । नमो वः पितरो मन्यव इत्येतावतैव मन्त्रेण षष्ठमञ्जलिकरणमिति बहवः । ततो गृहान्न इत्यस्य प्रजापतिर्ऋषिः गृहा देवता यजुःपदेन विनियोग इति स्मृत्वा, गृहान्नः पितरो दत्त इति पठेत् । तत एतद्व इत्यस्य प्रजापतिर्ऋषिः पितरो देवता यजुः सूत्रदाने विनियोग इति स्मृत्वा, एतद्वः पितरो वास इति मन्त्रेण त्रीणि त्रीणि सूत्राणि ऊर्णाया दशा वा उत्तरे वयसि यजमानलोमानि वा प्रतिपिण्डं दद्यात् । ततः ऊर्ज्जं वहन्तीत्यस्य प्रजापतिर्ऋषिः विराट्छन्दः आपो देवता निषेके विनियोगः इति स्मृत्वा, ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वाधास्थ तर्पयत मे पितॄन् इति मन्त्रेण अवनेजनावशिष्टोदकं पिण्डानामुपरि निषिञ्चेत् । ततः पिण्डानुत्थाप्य स्थाल्यां प्रत्यवदधाति । ततो यजमानस्तान् पिंडानवजिघ्रति । ततः सकृदाच्छिन्नान्यग्नौ प्रक्षिप्य उल्मुकं प्रतिप्रास्यति । तत उदकोपस्पर्शनम् । पुत्रकामा गर्भग्रहणयोग्या पत्नी आधत्त इत्यस्य प्रजापतिर्ऋषिः पितरो देवता गायत्री छन्दः पुत्रकामनया मध्यमपिण्डप्राशने विनियोग इति स्मृत्वा, आधत्त पितरो गर्भं कुमारं पु-

ष्करस्रजम् । यथेह पुरुषोसत् । इति मन्त्रेण मध्यमपिण्डं प्राश्नाति । अस्मिन् पक्षे मध्यमपिण्डस्यानवघ्राणम् ।

इति पिण्डपितृयज्ञविधिः ।

अथ नवप्राशनम् ।

तत्र पारस्करः,

अनाहिताग्नेर्नवप्राशनम्।नवं स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति। शतायुधाय शतवीर्य्याय शतोतये। अभिमातिषाहे। शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा।ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवीवियन्ति । तेषां योऽज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहेति । स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्ने अभितत् पृणीहि विश्वांश्च देवः पृतना अविष्यत् । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्ध्येह्यजरन्न आयुः स्वाहेति।अथ प्राश्नाति।अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः। भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहि त्वा । स नो मयोऽभूः पितो आविशस्व शन्तोकाय तनुवे स्योन इति । अन्नपतीयया वा। अथ यवानामेतमुत्यं मधुना संयुतम्।यवꣳ सरस्वत्या अधिवनाय चक्रुषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति । ततो ब्राह्मणभोजनम् । इति ।

अस्यार्थः । आनहिताग्नेर्नवप्राशनम् । अनाहिताग्निरवैतानिकाग्निः आवसथिक इतियावत् । यद्यपि निरग्निरप्यनाहिताग्निरिति वक्तुं शक्यते तथापि गृह्यस्थालीपाकानां कर्मेति गृह्याग्निसाध्यानामेव कर्मणां प्रतिज्ञातत्वात् गृह्याग्निरेवानाहिताग्निरत्रोच्यते । नवप्राशनस्य संस्थासु गणनाच्च । पाकसंस्थास्तु निः-

सन्दिग्धं गृह्याग्निमत एवेति सर्वसम्मतम् । अत एव गोभिलेन अथातः श्रवणाकर्म्मेति श्रवणाकर्मोक्त्वा आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरुरिति च उक्त्वा नवयज्ञे पायसश्चरुरिति अधिकारिकथनं विनैव श्रवणाकर्म्मादिवन्नवप्राशनमप्युक्तम् । तेन यः श्रवणाकर्म्मादावधिक्रियते स एवात्राधिक्रियत इति ज्ञाप्यते । पारस्करस्तु अनाहिताग्नेर्न्नवप्राशनमित्यधिकारिणं ब्रुवन् आहिताग्नेरिदं न भवतीति ज्ञापयति । न त्वनाहिताग्नेर्निरग्नेरिदं भवतीति । सुदर्शनभाष्यमपि अनाहिताग्नेराग्रयणमित्यापस्तम्बसूत्रव्याख्याने अनाहिताग्निग्रहणम् अर्द्धाधानिनोऽप्याहिताग्नेर्नेदं स्मार्त्तमाग्रयणं श्रौतेन समुच्चेतव्यमित्येवमर्थमित्याह । किञ्च अनाहिताग्नेर्नवप्राशनमिति अगृह्याग्निसम्बन्धं नवप्राशनस्य ब्रुवत् नेदं सूत्रं चतुरस्रमर्थमावहति अप्रस्तुतकथनादिति । नवप्राशनमित्यर्थानुगतया संज्ञया एतत्कर्म्म कृत्वैव नवं प्राशितव्यं नाकृत्वेति ।

तथाच छन्दोगपरिशिष्टे कात्यायनः,

आनिष्ट्वा नवयज्ञेन नवान्नं योऽत्त्यकामतः ।
वैश्वानरचरुस्तस्य प्रायश्चित्तं विधीयते ॥ इति ।

अत एवाशनस्य नित्यत्वादिदमपि नित्यम् । तद्विशेषस्तु श्रवणाकर्मप्रकरणादवगन्तव्यः । एतस्य चाग्रयणशब्दवाच्यत्वाभावात् पौर्णमास्यमावास्ययोर्नियमो न भवति । औचित्याच्छरद्वसन्तौ तु भवत इति कर्कः । छन्दोगपरिशिष्टकात्यायनस्तु कालान्तरमप्याह—

शरद्वसन्तयोः के चिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥ इति ।

नवं स्थालीपाकᳲ श्रपयित्वेति वदतः पारस्करस्याप्ययमे-

वाशयो यदैव नव उपलभ्यते तदैवैतद्भवतीति । तथाचोक्तम्—

शाङ्खायनब्राह्मणे, अथ व्रीहिसस्ये यवसस्ये वा आगते।

तथा, वर्षास्वागते श्यामाकसस्ये पक्केषु वेणुयवेष्विति।

वैतानसूत्रे च, पक्कास्वोषधीष्वाग्रयणमिति।

अनाहिताग्नेराग्रयणं नवानां स्थालीपाकं श्रपयित्वेत्याद्यापस्तम्बादिसूत्रेष्वेतस्याग्रयणशब्दवाच्यतादर्शनात्पौर्णमास्यमामावस्ययोर्नियमो भवत्येवेत्यन्ये । अत्र देवयाज्ञिकरेणुदीक्षितादिधृतकारिका नानार्थोपसंग्राहिकाः।

पौष्णद्वये चादितिभद्वये च ब्रह्मद्वये चैव करद्वये च।
त्रिरुत्तरे विष्णुयुगे ज्ञजीवे सिते च रिक्तातिथिवर्ज्जिते च॥
यवैर्वसन्ते यष्टव्यं व्रीहिभिः शरदीष्यते।
श्यामाकैश्च शरद्येव ग्रीष्मकाले च वेणुजैः॥
कृताकृतं वेणुयवैर्वदन्त्याग्रयणं बुधाः।
समानतन्त्रे वा व्रीहिश्यामाकाग्रयणे उभे॥
कात्यायनमतेनैके श्यामाकेष्ट्यां न कुर्वते।
शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः॥
नानिष्ट्वा नवसस्येन पशुना वाऽग्निमान् द्विजः।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः॥
नवेनानार्चितो येन पशुहव्येन वाऽनलः।
प्राणानेवात्तुमिच्छेत्स तस्मादाग्रयणं चरेत्॥
श्यामाकान् वैणवान् व्रीहियवानाग्रयणात्पुरा।
न भुञ्जीतेति विस्पष्टं यज्ञपार्श्वे निरूपितम्॥
दत्त्वैव ब्राह्मणेभ्यश्च कृत्वा वा वैश्वदेविकम्।
अन्यन्नवान्नमश्नीयादिति बौधायनश्रुतिः॥

अनिष्ट्वा वैणवान्नाद्यात् दुर्भिक्षादौ तथाऽऽपदि ।
श्यामाकवैणवेषु स्यात् देवता सोम एव तु ॥
नवाशननिषेधोऽयं दम्पत्योरुभयोः समः ।
नवस्यावध्यपेक्षत्वादस्मिन्नवधिरुच्यते ॥
कियद्दूरं पुराणत्वं नवत्वं कियदन्तिकम् ।
सस्यानामवधिर्ज्येष्ठी पौर्णमासी प्रसिद्धितः ॥
तादृश्योरुभयोः पौर्णमास्योर्म्मध्ये यदुद्भवम् ।
धान्यं तन्नवमित्याहुः तत्कालाग्रयणं प्रति ॥
तदेव च पुराणं स्यादूर्ध्वमाग्रयणेषु च ।
यद्वाऽऽग्रयणशास्त्रे तन्नवत्वावध्यपेक्षणे ॥
ये कालास्तेषु बुद्धिस्थास्तेऽन्योन्यावधयः स्मृताः ।
प्रावृट्कालात्परं पक्वं शरदाग्रयणे नवम् ॥
ऊर्ध्वं वसन्तान्निष्पन्नं प्रावृडाग्रयणे नवम् ।
प्रत्यासन्नतरत्वाद्वा स्वयमेवावधिर्भवेत् ॥
यस्मिन्नाग्रयणं कुर्यादृतौ तदनुसम्भवम् ।
धान्यं तन्नवमित्याहुरर्वाक्पक्वं पुरातनम् ॥
एवं सति शरत्कालमात्राग्रयणकारिणः ।
शरत्पक्वं नवं ज्ञेयमर्वाक्पक्वं पुरातनम् ॥
स्मार्त्तमाग्रयणं कृत्वा तत्रैवर्त्तौ कदाचन ।
यत्रादधीत तत्रर्त्तौ श्रौतस्याग्रयणस्य तु ॥
कालेऽपि वर्त्तमानेऽपि न श्रौताग्रयणं पुनः ।
स्मार्त्तेनाग्रयणेनैव सिद्धं यस्मान्नवाशनम् ॥
सर्वथा व्रीह्यलाभे तु शाल्युपादानमिष्यते ।
यवानामप्यलाभे तु गोधूमानां परिग्रहः ॥
पुराणा वा प्रदीयन्ते ग्रन्थे श्रुतिरुदाहृता ।

अन्ये तु एकपादिकाख्ये द्वितीयकाण्डे देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुराः। उभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशव इत्यादिवाक्यशेषात् तदोत्पन्नलतागुल्माद्यपि न भक्षणीयमित्याहुः।

गृह्यसङ्ग्रहकारस्तु,

नवयज्ञाधिकारस्थाः श्यामाका व्रीहयो यवाः।
नाश्नीयात्ताननहुत्वैवमन्येष्वनियमः स्मृतः॥
ऐक्षवं सर्वशुङ्गांश्च नीवारांश्चणकांस्तिलान्।
अकृताऽऽग्रयणोऽश्नीयात्तेषां नोक्ता हविर्गुणाः॥ इति प्राह।

नवꣳ स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति। नवग्रहणाद् व्रीहिकाले व्रीहीणां यवकाले यवानाम्। स्थालीपाकं चरुं पक्त्वा इत्यादि स्पष्टम्। स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्ने इति। आग्रयणदेवताः श्रौतोक्ताः इन्द्राग्नी विश्वे देवा द्यावापृथिव्याविति। ताभ्यः चरुणा प्रत्येकमेकैकामाहुतिं हुत्वा स्विष्टमग्न इति स्विष्टकृतः पूर्वं पश्चाच्चाज्याहुतीर्जुहोति। तयोर्मध्ये चरुणा सौविष्टकृतम्। ततो महाव्याहृत्यादिप्राजापत्यान्तम्। केचित् स्विष्टकृते चेति चशब्दमानन्तर्य्ये वर्णयित्वा स्विष्टमग्न इति स्विष्टकृद्धोमं मन्यन्ते। स्विष्टकृल्लिङ्गादिति भर्तृयज्ञः। अथ प्राश्नात्यग्निः प्रथमः प्राश्नात्विति। यत् हुतशेषप्राशनं तत्रायं गुणविधिः। यत्प्राश्नाति तदनेन मन्त्रेणेत्यर्थः। पक्षान्तरमाह अन्नपतिशब्दवत्या वा। अन्नपतीयया वेति वाशब्दं केचित् स्वपदविभाषां मन्यन्ते। मन्त्रत्वज्ञापकस्य इति शब्दस्यानुच्चारणात्। ततश्च अग्निः प्रथम इत्यनेन प्राश्नात्येव। अन्नपतेन्नस्य नो देहीत्ययं मन्त्रस्तस्मिन्नेव प्राशने पठनीयो वा न वेतिविकल्प

इति भर्तृयज्ञः । अथ यवानामेतमुत्यमिति । वसन्ते यवानां प्राशने एतमुत्यमिति मन्त्रः । ततो ब्राह्मणभोजनमित्युक्तार्थम् ।

अथ प्रयोगः ।

तत्र शरदि वसन्ते च पूर्वोक्तनक्षत्रादियुक्तकाले पौर्णमास्याममावास्यायां वा नवप्राशनं कर्म्म भवति । तत्र देशकालादिकीर्त्तनान्ते नवप्राशनकर्म्माहं करिष्ये इति सङ्कल्पः । तत आधानप्रकरणलिखित—आधानहोमयोश्चैवेतिवाक्येन प्रथमप्रयोगे एव मातृपूजापूर्वकं श्राद्धं कृत्वा देवताभिध्यानं कुर्य्यात् । तत्र प्रजापतिमिन्द्रमग्निं सोमम् इन्द्रं सर्वान् देवान् आज्येन, इन्द्राग्नी विश्वान् देवान् द्यावापृथिव्यौ चरुणा, अग्निं घृतेन, अग्निं स्विष्टकृतं चरुशेषेण, अग्निमाज्येन, भूरादीनां पूर्ववत् । अभिध्याय आवसथ्येऽग्नौ ब्रह्मोपवेशनाद्याज्यभागहोमान्तमाधानवत् । तत आज्याहुतिद्वयं जुहुयात् । शतायुधायेति परमेष्ठी ऋषिः इन्द्रो देवता त्रिष्टुप्छन्दः होमे विनियोगः । शतायुधाय शतवीर्य्याय शतोतयेऽभिमातिषाहे । शतं यो नः शरदोऽजीजानिन्द्रो नेषदतिदुरितानि विश्वा स्वाहा इति प्रथमाम् । इदमिन्द्राय न मम । ये चत्वार इति परमेष्ठी ऋषिः सर्वदेवतास्त्रिष्टुप्छन्दः होमे विनियोगः । ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां योऽज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहा इति द्वितीयाम् । इदं सर्वेभ्यो देवेभ्यो न मम । ततः स्थालीपाकमभिघार्य तेनाग्रयणदेवताभ्यो होमं कुर्यात् । इन्द्राग्निभ्यां स्वाहा इदमिन्द्राग्निभ्यां न मम । विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यो न मम । द्यावापृथिवीभ्याꣳ स्वाहा इदं द्यावापृथिवीभ्यां न मम । तत आज्येन स्विष्टमग्न इति प्रजापतिर्ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः होमे विनियोगः । स्विष्टमग्ने

अभितत्पृणीहि विश्वांश्च देवः पृतना अविष्यत्। सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्ध्येह्यजरन्न आयुः स्वाहेति हुत्वा इदमग्नय इति त्यागं विधाय स्थालीपाकादग्नये स्विष्टकृते स्वाहेति हुत्वा पुनराज्येन स्विष्टमग्न इति जुहोति। ततो महाव्याहृत्यादिप्राजापत्यहोमान्तं कृत्वा, अग्निः प्रथम इति प्रजापतिर्ऋषिः लिङ्गोक्ता देवता यजुः प्राशने विनियोगः। अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः। भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहि त्वां स नो मयोऽभूः पितो आविशस्व शन्तोकाय तनुवे स्यो न इत्यनेन मन्त्रेण संश्रवं प्राश्नाति। अथ वा अन्नपत इति परमेष्ठी ऋषिः लिङ्गोक्ता देवता बृहती छन्दः प्राशने विनियोगः। अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे। इत्यनेन प्राश्नाति। अत्र यवान्नप्राशने विशेषः। एतमुत्यमिति प्रजापतिर्ऋषिः लिङ्गोक्ता देवता जगती छन्दः प्राशने विनियोगः। एतमुत्यं मधुना संयुतम्। यवꣳ सरस्वत्या अधिवनाय चक्रुषुः। इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इत्यनेन प्राश्नाति। ततो ब्राह्मणं भोजयेत्।

इति नवप्राशनप्रयोगः।

अथ श्रवणाकर्म लिख्यते।

तत्र पारस्करः, अथातः श्रवणाकर्म्म। श्रावण्यां पौर्णमास्याम्। स्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालं पुरोडाशं धानानां भूयसीः पिष्ट्वाऽऽज्याहुती जुहोति। अपश्वेतपदा जहि पूर्वेण चापरेण च। सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा। न वै श्वेतस्याध्याचारेऽहिर्ददर्श कं चन। श्वेताय वैद-

व्याय नमः स्वाहेति । स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति । धानावन्तमिति धानानाम् । घृताक्तान् सक्तून् सर्पेभ्यो जुहोति। आग्नेयपाण्डुपार्थिवानाꣳस-र्पाणामधिपतये स्वाहा श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतये स्वाहाऽभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपतये स्वाहेति । सर्व-हुतमेककपालं ध्रुवाय भौमाय स्वाहेति । प्राशनान्ते सक्तूनामेकदे-शꣳ शूर्पे न्युप्योपनिष्क्रम्य बहिः शालायाꣳ स्थण्डिलमुपलिप्योल्का-यां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयति। आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवाय-वान्तरिक्षाणाꣳ सर्पाणामधिपतेऽवनेनिक्ष्वाभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपतेऽवनेनिक्ष्वेति । यथावनिक्तं दर्व्योपघातꣳ सक्तून् सर्पेभ्यो बलिꣳ हरति । आग्नेयपाण्डुपार्थिवानाꣳ सर्पा-णामधिपते एष ते बलिः श्वेतवायवान्तरिक्षाणाꣳ सर्पाणाम-धिपत एष ते बलिरभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपत एष ते बलिरिति। अवनेज्य पूर्ववत्कङ्कतैः प्रलिखति । आग्नेयपाण्डुपा-र्थिवानाꣳ सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपते प्रलिखस्वाभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपते प्रलिखस्वेति। अञ्जनानुलेपनꣳ स्रजश्चाङ्क्ष्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति।सक्तुशेषꣳ स्थण्डिले न्युप्योदकपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः।स यावत्कामयेत न सर्पा अभ्यु-पेयुरिति तावत्सन्तततयोदकधारया निवेशनं त्रिः परिषिञ्चन् प-रीयादपश्वेतपदा जहीति द्वाभ्याम् । दर्वीशूर्पे प्रक्षाल्य प्रतप्य प्र-यच्छति । द्वारदेशे मार्जयन्त आपोहिष्ठेति तिसृभिः । अनुगुप्त-मेतꣳ सक्तुशेषं निधाय ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य्य द-र्व्योपघातꣳ सक्तून् सर्पेभ्यो बलिꣳ हरेदाग्रहायण्याः । तꣳ हर-

न्तं नान्तरेण गच्छेयुः। दर्व्याचमनं प्रक्षाल्य निदधाति। धानाः प्राश्नन्त्यसꣳस्यूताः। ततो ब्राह्मणभोजनम्। इति।

अथशब्दः प्रकरणविच्छेदार्थः। अतःशब्दश्च हेत्वर्थः। यतः आवसथ्याग्निसाध्यानि कर्म्माणि प्रतिज्ञातानि श्रवणाकर्मणश्चावसथ्याग्निसाध्यत्वम्। अतः श्रवणाकर्म्म व्याख्यास्यत इति सूत्रशेषः। श्रावण्यां पौर्णमास्याम्। श्रवणयुक्तायां पौर्णमास्यां, कर्त्तव्यमिति शेषः।

**तथाच हिरण्यकेशिगृह्यम्**, अथातः श्रवणाकर्म्म तद्या पौर्णमासी श्रवणेन युञ्ज्यात्तस्यामुपरिष्टात्सायमग्निहोत्रस्य दक्षिणाग्निमुपसमादधात्यौपासनमनाहिताग्नेरथोपकल्पयत इत्यादि।

यदा च श्रवणयुक्ता न लभ्यते तदा श्रवणरहिताऽपि श्रावणपौर्णमासी ग्राह्या। अथातः श्रवणाकर्म्म पौर्णमास्यां कृत्य मिति गोभिलगृह्ये पौर्णमासीमात्रस्योपादानात्। यदि पुनस्तस्यां पौर्णमास्यां सूतकादिना कर्त्तुं न शक्यते तदा आग्रहायणीपर्य्यन्तं यदाकदाचिद्बलिवर्जमशेषतः कर्त्तव्यम्। तदाह—

**छन्दोगपरिशिष्टे कात्यायनः**,

श्रवणाकर्म्म लुप्तं चेत्कथञ्चित्सूतकादिना।
आऽऽग्रहायणिकं कुर्याद्बलिवर्ज्जमशेषतः॥ इति।

आ आग्रहायणिकमित्येवं पदच्छेदः। स्थालीपाकꣳ श्रपयित्वा। स्थालीपाकं चरुं श्रपयित्वा। अक्षतधानाश्च। अक्षताः यवाः तत्सम्पाद्याः धानाः अक्षतधानाः। चकारात् श्रपयित्वा श्रपणेन सम्पाद्य।

**तदुक्तं छन्दोगपरिशिष्टे**,

अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते। इति।

यद्वा धानाशब्दस्य भृष्टयवमात्रवाचकत्वात् धानाः श्रपयि-

त्वेत्यनेन निस्तुषयवस्यापि श्रपणप्राप्तेः तन्निरासाय कण्डनादिजन्यक्षतशून्यार्थकस्याक्षतपदस्योपादानम्। एवं च कण्डनादिजन्यक्षतशून्यैः सतुषयवैः धानाः सम्पाद्या इत्यर्थः। धानाश्च कर्परेण भवन्तीति धानार्थं कर्परं चरुस्थाल्यनन्तरम् आसादनीयम्। अर्थवदासाद्येत्यनेन प्रयोजनवतां सर्वेषामेवासादनस्योक्तत्वात्। वक्ष्यमाणपुरोडाशार्थकपालं च कर्परानन्तरमेवेति। एककपालं पुरोडाशम्। एकस्मिन् कपाले संस्कृत एककपालः तम् एककपालम्। श्रपयित्वेत्यनुवर्त्तते। स च पुरोडाशः अश्वशफपरिमाणः स्वेच्छया समुचितपरिमाणो वा कार्य्यः। पुरोडाशपरिमाणस्य तथैव दृष्टत्वात्। तथा च दर्शपूर्णमासप्रकरणे—

श्रुतिः, अश्वशफमात्रं कुर्य्यादित्युहैक आहुः। कस्तद्वेद यावानश्वशफो यावन्तमेव स्वयं मनसा न सत्रा पृथुं मन्यत एवं कुर्य्यादिति।

कपालमपि तावत्परिमाणमेव न न्यूनाधिकपरिमाणम्। उरुप्रथा इति प्रथयति यावत्कपालमनतिपृथुमिति कात्यायनेन पुरोडाशपृथुत्वस्य कपालपरिमितत्वबोधनात्। अत्र स्थालीपाकादिहोमानामितिकर्त्तव्यताविशेषश्रवणेनापूर्वत्वस्य व्यवस्थितत्वात् इह च पुरोडाशादिधर्माणामश्रवणात् पुरोडाशादिश्रपणस्वरूपसम्पादकमात्रेतिकर्त्तव्यतया पुरोडाशादयः कर्त्तव्याः। सा च संयवनकपालाद्युपधानाधिश्रयणप्रथनश्रपणादिरूपा। न चैवं पेषणादिकमपि क्रियेत तद्व्यतिरेकेणापि पुरोडाशस्वरूपासिद्धेरिति वाच्यम्। पेषणादिकमन्तरेणापि सिद्धपिष्टमुपादाय पुरोडाशादिस्वरूपनिष्पत्तिसम्भवेऽन्यथानुपपन्नत्वाभावेन पुरोडाशादिश्रपणविधेस्तदनाक्षेपकत्वादिति। धानानां भूयसीः पिष्ट्वा। धानानां मध्ये भूयसीः धानाः दृषदुपलाभ्यां पिष्ट्वा। दृषदु-

पले चार्थपरिमाणे भवतः। एतच्च पेषणम् आज्यधानापुरोडाशानुद्वास्याज्यमुत्पूयावेक्ष्य प्रोक्षणीश्चोत्पूय पश्चात्कर्तव्यमिति हरिहरः। धानोद्वासनोत्तरं भवतीति तु कश्चित्। आज्यभागाविष्ट्वाऽऽज्याहुती जुहोति। अपश्वेतपदा जहि, न वै श्वेतस्याध्याचार इति द्वाभ्यां मन्त्राभ्यां प्रतिमन्त्रं द्वे आहुती जुहोति। पाकयज्ञेष्ववत्तस्यासर्वहोम इति पूर्वलिखितसूत्रात्सर्वत्र संस्रवस्थापनं च कार्यम्। स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति। स्थालीपाकस्य चरोः विष्णवे स्वाहा श्रवणाय स्वाहा श्रावण्यै पौर्णमास्यै स्वाहा वर्षाभ्यः स्वाहेत्येवं चतस्र आहुतीर्जुहोति। धानावन्तमिति धानानाम्। धानावन्तं करम्भिणमित्येतया ऋचा धानानामेकाहुतिं जुहोति। घृताक्तान् सक्तून् सर्पेभ्यो जुहोति आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतये स्वाहा श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतये स्वाहा अभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपतये स्वाहेति। घृतेन अक्तान् आज्येन अभ्यक्तान् सक्तून् सर्पेभ्यः आग्नेयपाण्डुपार्थिवानामित्यादिभिर्मन्त्रैः प्रतिमन्त्रं जुहोति। एतच्चाञ्जनार्थमाज्यं लौकिकं ग्राह्यं न संस्कृतम्। विषये लौकिकमयुक्तत्वादित्यादिना कात्यायनेन तथैव व्यवस्थापनात्। नन्वत्र सूत्रे सर्पेभ्य इत्यवाच्यम्। मन्त्रलिङ्गादेव सर्पाणां देवतात्वसिद्धेरिति चेत्, न। विजातीयस्यापि स्वजातीयाधिपत्यसत्त्वेन सर्पविजातीयस्यापि सर्पाधिपत्यसम्भवात्। सर्पाधिपतित्वेन रूपेण सर्पभिन्नमुद्दिश्य त्यागकरणनिराकरणाय सर्पविशेष एव सर्पाधिपतिरिति बोधनार्थं सर्पेभ्य इत्यस्य उपादानात्। अथ विजातीयस्य स्वविजातीयाधिपत्यं न क्वापि दृष्टमिति चेत्, न। भूरग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या

वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणामित्यादौ बहुषु त-द्दर्शनात्। सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति। सर्वहुतं यथा स्यात्तथा एककपालं पुरोडाशं ध्रुवाय भौमाय स्वाहेति जुहोति। प्राशनान्ते सक्तूनामेकदेशं शूर्पे प्रक्षिप्य उप समीप एव शालातो बहिरागत्य। शूर्पं चात्र नडवंशेषीकान्यतममयं श्रौते तन्मयस्यैव दृष्टत्वात्। तथा च दर्शपूर्णमासप्रकरणे—

श्रुतिः, अथ शूर्पमादत्ते वर्षवृद्धमसीति वर्षवृद्ध৺ ह्येतद्यदि नडानां यदि वेणूनां यदीषीकाणामिति।

बहिः शालायां स्थण्डिलमुपलिप्य। शालाया बहिः स्थण्डिलं गोमयेन उद्वर्त्य। एतच्च उपलेपनं स्वयमेव कर्त्तव्यम्। तस्य पदार्थतया विहितत्वात्। कर्तृविशेषस्य चानुक्तत्वात्। निष्क्रमणोपलेपनयोर्ल्यबन्तेनोपादानात्। निष्क्रमणेन सह समानकर्तृकत्वलाभाच्च। उल्कायां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयत्याग्नेयेति। ज्वलति काष्ठादावन्येन ध्रियमाणे आवसथ्यस्य मम चान्तरा मागच्छत इत्यर्थकं माऽन्तरा गमत इति प्रैषमभिधाय मौनी सर्पान् आग्नेय–श्वेत–अभिभूरित्यादिभिरवनेनिक्ष्वेत्यन्तैस्त्रिभिर्मन्त्रैः प्राक्संस्थमवनेजयति। यथावनिक्तं दर्व्योपघात৺ सक्तून् सर्पेभ्यो बलि৺ हरत्याग्नेयेत्यादि। अवनेजनक्रमेण दर्व्या सक्तूनुपहत्योपहत्य सर्प्पेभ्यो बलिं आग्नेयेत्यादिभिरेष ते बलिरित्यन्तैर्म्मन्त्रैः प्रतिमन्त्रं ददाति। उपघातमिति णमुल्प्रत्ययान्तः। उपपूर्वो हन्तिर्ग्रहणार्थः। अथ स्रुवेणोपहत्येत्यादिश्रुतौ दर्शनात्। दर्व्याः परिमाणादिकं तु छन्दोगपरिशिष्टे कात्यायनेनोक्तम्—

इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्॥

एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे ।

दर्वी द्व्यङ्गुष्ठपृथ्वग्रा तुरीयोनं च मेक्षणम् ॥ इति ।

इध्मजातीयं खादिरं पालाशं वा। विभीतकादिवर्ज्जं यत्किञ्चिद्वनस्पतिमयं वा ।

तथा च गोभिलः,

अथेध्मानुपकल्पते खादिरान् पालाशान् वा । खादिरपालाशालाभे विभीतकतिल्वकबाधकनीपनिम्बराजवृक्षशाल्मत्न्यरलुदधित्थकोविदारश्लेष्मातकवर्ज्जं सर्ववनस्पतीनामिध्मो यथार्थः स्यादिति ।

इध्मार्द्धप्रमाणं प्रादेशप्रमाणम् । इध्मस्य प्रादेशद्वयपरिमितत्वात् । तदाह—

छन्दोगपरिशिष्टे कात्यायनः,

प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् । इति ।

वृत्तं वर्त्तुलदण्डम्। वार्क्षं वृक्षकाण्डनिर्म्मितं न तु शाखाभवम् । पृथ्वग्रं स्थूलाग्रम्। अवदानक्रियाक्षमम् अवदानग्रहणयोग्यम्। एषैव दर्वी यादृशं मेक्षणमुक्तं तादृश्येव दर्वी। यस्तत्र विशेषः यः दर्वीगतो विशेषस्तमहं ब्रुवे तमहं वदामि । दर्वी द्व्यङ्गुष्ठपृथ्वग्रा । अङ्गुष्ठद्वयपरिमितं पृथु विस्तीर्णम् अग्रं यस्याः सा द्व्यङ्गुष्ठपृथ्वग्रा दर्वी भवति । तुरीयोनं च मेक्षणम् । द्व्यङ्गुष्ठचतुर्थांशन्यूनपरिमाणपृथ्वग्रं मेक्षणं भवति । एवं च प्रादेशपरिमाणा द्व्यङ्गुष्ठपरिमितपृथ्वग्रा खादिरपालाशादिमूलदण्डोद्भवा दर्वी भवति। अवनेज्य पूर्ववत्कङ्कतैः प्रालिखत्याग्नेयपाण्डुपार्थिवानामिति । पूर्ववदवनेजनं दत्त्वा त्रिभिः कङ्कतैः एकतोदन्तैः आग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैः प्रतिमन्त्रं प्रतिबालिं प्रालिखति कण्डूयति । तच्च कङ्कतं प्रादेशमात्रं वैकङ्कतमिति हरिहरः। वारणान्यहोमसंयुक्तानी-

ति कात्यायनपरिभाषातो वारणमेव भवतीत्यन्ये । अञ्जनानुलेपनर्ठं०स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपिनह्यस्वेति । अञ्जनं कज्जलं सौवीरं वा । उभाभ्यामपि चक्षुषः समञ्जनदर्शनात् । अनुलेपनं घृष्टसुरभिचन्दनादि । स्रक् पुष्पमाला । आग्नेयेत्यादिभिर्मन्त्रैः अञ्जस्वानुलिम्पस्व स्रजोऽपिनह्यस्वेत्यन्तैः प्रतिबलिहरणं यथाक्रममेकैकं ददाति । अपरे तु अञ्जस्व अनुलिम्पस्व स्रजोऽपिनह्यस्वेत्येतावत्परिमाणा एव एते मन्त्राः न तु पूर्वमन्त्रस्य शेषभूताः । एवं च अञ्जस्वेत्यादिभिरेव मन्त्रैरञ्जनादिकं ददातीत्याहुः । सक्तुशेषꣳ स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपातिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः । सक्तुशेषं बलिदानावशिष्टं स्थण्डिले शूर्पादिना प्रक्षिप्य । उदपात्रेण उदकपात्रेण । उपनिनीयेत्यस्य जलमिति शेषः। जलनिनयनेन स्थण्डिलप्रक्षिप्तसक्तुशेषं प्रवाह्येत्यत्र तात्पर्यम् । उपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिर्ऋग्भिः सर्पानुपतिष्ठते । बल्यभिमुखः प्राङ्मुखः तिष्ठन् नमोऽस्तु सर्पेभ्य इत्यादीन् मन्त्रान् पठतीत्यर्थः । स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन् परीयादपश्वेतपदाजहीति द्वाभ्याम् । स गृहपतिः यावन्तं देशं सर्पाः न सञ्चरेयुरिति इच्छेत् तावन्तं देशम् अविच्छिन्नया उदकधारया गृहं वारत्रयं परिषिञ्चन् गच्छेत् अपश्वेतपदाजहीति द्वाभ्यां मन्त्राभ्याम् । तत्राद्यं परिक्रमणं मन्त्रेण। द्वितीयं तृतीयं च तूष्णीमेव । एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनमिति कात्यायनसूत्रात् । दर्वीं शूर्पं च प्रक्षाल्य प्रतप्य प्रयच्छति। दर्वीं शूर्पं च क्षालयित्वा तापयित्वा प्रयच्छेत् । तापनं च सन्निधानादुल्कायामेव प्रदानमप्युल्काधारायैवेति कर्कः । द्वारदेशे मार्ज्जयन्त आपोहिष्ठेति तिसृभिः । शालाया द्वा-

रे आपोहिष्ठा, यो वः शिवतमः, तस्मा अरङ्गमाम व इति तिसृभिर्ऋग्भिः उदकेन आत्मानमाभिषिञ्चन्ति । मार्जयन्ते इति बहुवचनोपदेशाद्ब्रह्मयजमानोल्काधारकाः । अनुगुप्तमेतं सक्तुशेषं निधाय । सुरक्षितप्रदेशे होमावशिष्टान् सक्तून्निधाय । ततोऽस्तमितेऽग्निं परिचर्य दर्व्योपघातं सक्तून् सर्पेभ्यो बलिं हरेदाग्रहायण्याः । ततः तत्कालमारभ्य । ततः तेभ्यः सक्तुभ्य इति कर्कः । प्रातिदिनम् आवसथ्यं सायंहोमेन समाराध्य अस्तमिते सूर्ये दर्व्या गृहीत्वा गृहीत्वा शूर्पे न्युप्तान् सक्तून् सर्पेभ्यो बलिं हरेत् आग्रहायणीं पौर्णमासीं यावत् । बलिदानं च अवनेजनादिप्रत्यवनेजनान्तं भवतीति कर्कः । उपलेनादिरेखाकरणान्तमिति हरिहरः । तं हरन्तं नान्तरेण गच्छेयुः । तं गृहपतिं बलीन् हरन्तं तस्य आवसथ्यस्य चान्तरा न गच्छेयुः प्राणिनः । ततः श्वादयोऽपि निवार्याः । दर्व्याचमनं प्रक्षाल्य निदधाति । आचम्यते अनेनेति करणव्युत्पत्त्या आचमनं मुखं तत्प्रक्षाल्य स्थापयति । दर्व्याः मुखं प्रक्षाल्य स्थापयतीत्यर्थः । एतच्च प्रक्षालनं प्रत्यहं भवति बलिदानसंलग्नसक्तुनिर्णेजनार्थत्वात् । सक्तुसम्बन्धस्य च प्रत्यहं भावात् । दर्वीमुखप्रक्षालनस्योपदेशादनु शूर्पप्रक्षालनस्यानुपदेशाच्च शूर्पप्रक्षालनाभावः । धानाः प्राश्नन्त्यसंस्यूताः । धाना भर्जिता यवाः तान् प्राश्नन्ति भक्षयन्ति असंस्यूताः दन्तैरनवखण्डिताः । ततो ब्राह्मणभोजनम् । ततः एकस्य ब्राह्मणस्य भोजनमित्यर्थः । यद्यपि प्रत्यहं क्रियमाणमिदं सर्पबलिरूपं भिन्नमेव कर्म इति श्रवणाकर्मप्रतिपादनावसरे न प्रतिपादयितुमुचितम्, तथापि श्रवणाकर्मसम्बद्धद्रव्योपजीवित्वेन सूत्रकृता श्रवणाकर्मप्रतिपादनावसरे एव एतस्य प्रतिपादितत्वात्तत्प्रतिपादितमिति ।

अथ प्रयोगः ।

तत्र श्रावण्यां पौर्णमास्यां प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा आवसथ्याग्नेः पश्चात्प्राङ्मुखः पत्न्या सह उपविश्य अद्येहेत्यादिदेशकालादिकं सङ्कीर्त्य श्रवणाकर्माहं करिष्ये इति सङ्कल्पं कुर्यात् । ततः अनेकपद्धतिकारलिखनात् देवताभिध्यानं कुर्यात् । तद्यथा, श्रवणाकर्मणाऽहं यक्ष्ये, तत्र प्रजापतिमिन्द्रमग्निं सोमं श्वेतपदं श्वेतवैदर्व्यं घृतेन, विष्णुं श्रावणीं पौर्णमासीं वर्षाश्चरुणा, इन्द्रं धानाभिः, आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतिं श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतिम् अभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपतिं सक्तुभिः, ध्रुवं भौमं पुरोडाशेन, अग्निं स्विष्टकृतं चरुधानासक्तूनां शेषेण, अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् अयसं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं चाज्येनाहं यक्ष्ये इति चिन्तयेत् । ततो ब्रह्मोपवेशनादि आज्यभागान्तं पूर्वोक्तप्रकारेण कुर्यात् । ततः पात्रासादनादौ विशेषः । चरुस्थाल्यनन्तरं भर्जनकर्परम् । तत एकं कपालं क्रियमाणपुरोडाशपरिमाणम् । तण्डुलानन्तरं यवान् । ततस्तण्डुलपिष्टानि । एवं पात्राण्यासाद्य अन्यान्यपि पात्राण्युपकल्पयेत् । दृषदुपले शूर्पोल्के उल्काधारकं च । उदपात्रं दर्वीं कङ्कतत्रयम् अञ्जनम् अनुलेपनं स्रजश्चेति । ततः पवित्रकरणादिप्रोक्षणीनिधानान्ते चरोः स्थानादुत्तरतः अग्नौ भर्जनकर्परमाधिश्रित्य तदुत्तरतः अङ्गारं स्थापयित्वा तदङ्गारोपरि कपालमुपदध्यात् । तत्कपालोपरि पुनरुष्णत्वार्थमङ्गारं निदध्यात् । तत आज्यस्थाल्यामाज्यं निरुप्य चरुस्थाल्यां प्रणीतोदकमासिच्य तण्डुलान् प्रक्षिप्य प्रणीतोदकेन पिष्टानि संयुज्य अश्वशफपरिमाणं यावत्परिमाणे

कृते अत्यधिकपरिमाणता न भवति तावत्परिमाणं वा पुरोडाशं कुर्यात्। ततः युगपत् आज्यादीनां सर्वेषामधिश्रयणम्। तत्र आज्यं ब्रह्माऽधिश्रयति चरुं होमकर्त्ता। अन्यः कश्चित्कर्परे धानाः। कपाले पुरोडाशम् अपर इति। यः पुरोडाशाधिश्रयणं करोति सः अधिश्रयणोत्तरं पुरोडाशस्य प्रथनमपि करोति। प्रथनं च यावत्कपालं पुरोडाशस्य विस्तारणम्। ततः होमकर्ता सर्वेषां पर्यग्निकरणं करोति। ततः स्रुवं संस्कृत्याज्यमुक्तप्रकारेणोद्वास्य चरुं चोद्वास्याज्यस्योत्तरतः स्थापयित्वा धाना उद्वास्य चरोरुत्तरतो निधाय पुरोडाशमुद्वास्य धानानामुत्तरतः स्थापयेत्। तत आज्योत्पवनावेक्षणप्रोक्षण्युत्पवनानि कृत्वा भूयसीर्धाना दृषदुपलाभ्यां पिष्ट्वा स्वल्पा धानाः पृथक् स्थापयित्वा लौकिकघृतेन सक्तूनक्त्वा पद्धतिकारलिखनादरे तु स्थाल्याज्येनैव तदक्त्वा उपयमनकुशादानादि आज्यभागान्तं कर्म कुर्यात्। ततः स्रुवेणाऽऽज्यस्थाल्या आज्यं गृहीत्वा अप श्वेतपदा जहीत्यस्य प्रजापतिर्ऋषिः लिङ्गोक्ता देवता यजुः इति स्मृत्वा "अपश्वेतपदा जहि पूर्वेण चापरेण। सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा" इति जुहोति। इदं श्वेतपदे न ममेति त्यागः। तथैव ऋष्यादिकं स्मृत्वा "न वै श्वेतस्याध्याचारेहिर्ददर्श कं चन। श्वेताय वैदर्व्याय नमः स्वाहा" इति पुनस्तथैव जुहोति। इदं श्वेताय वैदर्व्याय न मम इति त्यागः। ततः स्थालीपाकमभिघार्य स्रुवेण स्थालीपाकस्य चतस्र आहुतीर्जुहोति। तद्यथा, विष्णवे स्वाहा इदं विष्णवे न मम। श्रवणाय स्वाहा इदं श्रवणाय न मम। श्रावण्यै पौर्णमास्यै स्वाहा। इदं श्रावण्यै पौर्णमास्यै न मम। वर्षाभ्यः स्वाहा इदं वर्षाभ्यो न मम। ततो धाना अभिघार्य स्रुवेणादाय धानावन्तमित्यस्य प्रजापत्यश्विसरस्वतीन्द्रा ऋषयः

त्रिष्टुप् छन्दः इन्द्रो देवता होमे विनियोगः—इति स्मृत्वा "धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः स्वाहा" इति होमः । इदमिन्द्राय न मम इति त्यागः । ततः सक्तून् स्रुवेणादाय आग्नेयपाण्डुपार्थिवानामित्यस्य परमेष्ठी ऋषिः लिङ्गोक्ता देवता यजुः होमे विनियोगः—इति स्मृत्वा आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतये स्वाहेति होमः । इदमाग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतये न ममेति त्यागः । पुनस्तथैव ऋष्यादिकं स्मृत्वा श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतये स्वाहेति होमः । इदं श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतये न मम इति त्यागः । पुनस्तथैव ऋष्यादिकं स्मृत्वा अभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपतये स्वाहेति होमः । इदम् अभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपतये न ममेति त्यागः । ततः पुरोडाशमभिघार्य सम्पूर्णं पुरोडाशं स्रुवे गृहीत्वा ध्रुवाय भौमाय स्वाहेति जुहोति । इदं ध्रुवाय भौमाय न मम इति त्यागः । ततः चरुधानासक्तूनामुत्तरार्द्धान्महत्तरे स्रुवे अवदानत्रयं गृहीत्वा अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धे जुहोति । इदमग्नये स्विष्टकृते न मम इति त्यागः । ततो महाव्याहृतिहोमादिब्रह्मदक्षिणादानान्तं कुर्यात् । ततो हुतशेषं सक्तूनामेकदेशं शूर्पे गृहीत्वा उदकपात्रं दर्वीं कङ्कतत्रयम् अञ्जनम् अनुलेपनं स्रजश्चादाय सपत्नीको ब्रह्मणा उल्काधारेण च सह शालाया उदीच्यां दिशि प्राच्यां दिशि वा स्थण्डिलं कृत्वा तदुपलिप्य उल्काधारकेण लौकिकाग्न्युल्कायां ध्रियमाणायां माऽन्तरा गमत इति प्रैषं दत्त्वा वाग्यत उदकपात्रोदकेन आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपते अवनेनिक्ष्व इति स्थण्डिले अवनेज्य तदवनेजनदेशपूर्वतः स्थण्डिले एव पुनः प्राच्यां दिशि श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधि-

पते अवनेनिक्ष्वेति अवनेज्य पुनस्तदवनेजनपूर्वतः स्थण्डिले एव अभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपते अवनेनिक्ष्वेति अवनेज्य भूमौ उदपात्रं निदध्यात् । ततो दर्व्या सक्तून् शूर्पादादायादाय आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपत एष ते बलिः, श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपत एष ते बलिः, अभिभूः सौर्यदिव्यानाꣳ सर्पाणामधिपत एष ते बलिरित्येभिर्मन्त्रैरवनेजनक्रमेण तत्स्थाने बलीन् दद्यात् । ततः पूर्ववदवनेजनं कृत्वा आग्नेयपाण्डुपार्थिवानां सर्पाणामधिपत इत्यादिभिः प्रलिखस्वेत्यन्तैः त्रिभिर्मन्त्रैः कङ्कतत्रयेण प्रतिबलिं प्रतिमन्त्रं प्रलिखति । तत आग्नेयेत्यादिभिरेव मन्त्रैरङ्क्ष्वेत्यन्तैः प्रतिमन्त्रं प्रतिबलिमञ्जनं ददाति । पुनस्तैरेव मन्त्रैरनुलिम्पस्वेत्यन्तैः प्रतिमन्त्रं प्रतिबलिम् अनुलेपनं ददाति। पुनस्तैरेव मन्त्रैः स्रजोऽपिनह्यस्वेत्यन्तैः प्रतिमन्त्रैः प्रतिबलिं पुष्पमालां ददाति । अथ वा अङ्क्ष्वेति अञ्जनदानम् अनुलिम्पस्वेत्यनुलेपनदानम् स्रजोऽपिनह्यस्वेति मालादानम् न पूर्वमन्त्रानुषङ्ग इति । ततः सक्तुशेषं स्थण्डिले प्रक्षिप्य उदपात्रस्थजलेन प्लावयेत् । ततः नमोऽस्तु सर्पेभ्य इति तिसृणां साध्या ऋषयः सर्पा देवता अनुष्टुप् छन्दः उपस्थाने विनियोगः इति स्मृत्वा, “नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ या इषवो यातुधानानां ये वा वनस्पतीं रनु । ये वा वटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ ये वाऽमी रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः” इति तिसृभिर्ऋग्भिः सर्पानुपतिष्ठेत । एतावद्देशं सर्पा न प्रविशेयुरिति यावत्कामयेत तावन्तं देशं सन्ततयोदकधारया परिषिञ्चन् गृहं त्रिः परीयात् । तत्र आद्यं परिक्रमणम् ऋष्यादिस्मरणपूर्वकम् अपश्वेतपदाज-

हीतिपूर्वलिखितमन्त्राभ्याम् । उत्तरं परिक्रमणद्वयं च तूष्णीम् । दर्वीं शूर्पं च प्रक्षाल्य उल्कायां सक्तून्प्रतप्य उल्काधारिणे प्रयच्छति। ततः शालाया द्वारि उपविश्य आपोहिष्ठेत्यादीनां सिन्धुद्वीप ऋषिः गायत्रीछन्दः आपो देवता मार्जने विनियोग इति स्मृत्वा, आपोहिष्ठामयो भुवस्तान ऊर्जे दधातन । महे रणाय चक्षसे॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ।आपो जनयथाच नः॥इति त्र्यृचेन ब्रह्मयजमानोल्काधाराः स्वस्वात्मानं जलेन मार्ज्जयन्ते । ततो ब्रह्मयजमानोल्काधारा अनवखण्डयन्तः धानाः प्राश्नन्ति । ततः एकं ब्राह्मणं भोजयेत् । सक्तुशेषं च सुगुप्ते देशे निदध्यादिति ।

इति श्रवणाकर्मप्रयोगः ।

अथ सर्पबलिहरणप्रयोगः ।

अस्तमिते सूर्ये सायंहोमानन्तरं शूर्पे सक्तून् कृत्वा दर्वीं कङ्कतम् उदपात्रं च गृहीत्वा सपत्नीकः सोल्काधारो बहिः शालायां गत्वा स्थण्डिलोपलेपनादिपारिलेखनान्तं बलिहरणं प्रतिदिनं पूर्ववत्कुर्यात् । माऽन्तरा गमतेति प्रैषाभावः । न कश्चिदन्तरा गच्छेत् । दर्वीमुखस्यैव प्रक्षालनं न सम्पूर्णदर्व्याः शूर्पस्य च । एवम् आग्रहायणीपर्यन्तं कुर्यात् ।

इति बलिहरणप्रयोगः ।

अथेन्द्रयज्ञाख्यं कर्म ।

तत्र पारस्करः, प्रौष्ठपद्यामिन्द्रयज्ञः। पायसमैन्द्रꣳ श्रपयित्वाऽपूपांश्चापूपैस्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीन्द्रायेन्द्राण्या अजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति। प्राशनान्ते मरुद्भ्यो बलिꣳ हरत्यहुतादो मरुत इति श्रुतेः। आश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरिति वचनात्।शुक्रज्योतिरिति प्रतिमन्त्रम्। विमुखेन-

च मनसा । नामान्येषामेतानीति श्रुतेः । इन्द्रं दैवीरिति जपति। ततो ब्राह्मणभोजनम् इति ।

अस्यार्थः । प्रौष्ठपद्यां भाद्रपदपौर्णमास्याम् । यद्यप्यत्र प्रौष्ठपदसम्बन्धिनी या कापि तिथिः प्रतीयते तथापि अथातः श्रवणाकर्म श्रावण्यां पौर्णमास्यामित्युपक्रम्य प्रौष्ठपद्यामिन्द्रयज्ञः आश्वयुज्यां पृषातका इति विधानात् प्रौष्ठपद्यादिभिः पदैः पौर्णमास्येव विशेष्यत्वेनोपतिष्ठते । तस्याम् इन्द्रयज्ञाख्यं कर्म भवति । पायसमैन्द्रꣳ श्रपयित्वाऽपूपांश्च । पायसं पयसा निष्पादितं चरुं परमान्नमिति यावत् ।

पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् ।

इति कोषात्। ऐन्द्रम् इन्द्रदेवतं श्रपयित्वा पक्त्वा। पायसं श्रपयित्वेत्येतावतैव सिद्धे ऐन्द्रमिति देवतातद्धितनिर्देशस्तद्देवत्यहोमविधानार्थः । अवसरस्तूपरिष्टाद्वक्ष्यते । पायसश्रपणार्थं दुग्धस्यापि प्रणयनमत्र कार्यम् । उपदेशातिदेशयोरभावान्न दुग्धस्य प्रणयनमित्यपि केचित्। अपूपांश्च पोलिकापरपर्यायान्। चकारात् श्रपयित्वा ।

पूपोऽपूपः पोलिकास्तु पौलिकापौलियूपिकाः ।

इत्यभिधानचिन्तामणिः । अपूपो मण्डक इत्यष्टकाप्रकरणे कर्कः। तांश्च चतुरः कुर्यात्। प्रतिदिशं संस्तरणार्थं हि ते इति हरिहरः। अन्ये तु यावद्भिः संस्तरणमुपपद्यते तावतोऽपूपानाहुः। अपूपैस्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीन्द्रायेत्यादि । अपूपैः अग्निं स्तीर्त्वा तत आज्यभागाविष्ट्वा इन्द्रायेत्याद्या आज्याहुतीर्जुहोति। इदं च परिस्तरणं न प्राकृतं श्रपणोत्तरं पाठात्। किन्तु अपूर्वम्। अतश्च प्राकृतपर्युक्षणानन्तरमिदं न कार्यम्। किन्तु आज्यभागाव्यवहितपूर्वक्षणे। स्तीर्त्वेत्यनेन क्रमविधानात् । न

चैवं श्रपयित्वेत्यनेनापि क्रमविधानाच्छ्रपणानन्तरमपि किं न स्यात्। तस्य पायसादिश्रपणविधिपरत्वेन क्रमपरत्वाभावात्। आज्यभागाविष्ट्वेत्यस्य तु अनन्यपरत्वात्क्रमपरत्वमेवेति। अन्ये तु नात्रापूर्वं स्तरणं विधीयते। किन्तु प्राकृतस्तरणानुवादेन दर्भकार्येऽपूपविधिर्लाघवात्। अतश्च अपूपास्तरणाज्यभागयोरानन्तर्यं स्तृत्वेति क्त्वाप्रत्ययबोधितमपि प्राकृतं च विकृताविति न्यायेन बाधित्वा पर्युक्षणानन्तरमेवावतिष्ठत आस्तरणमित्याहुः। ग्रन्थकारास्तु उपयमनकुशादानात्पूर्वमेवाहुः। प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविरितिसूत्रेण महाव्याहृतिहोमात्प्राक् स्विष्टकृद्धोमेन भवितव्यम्। न च प्रधानमहुत्वा स्विष्टकृद्धोमस्ततः कर्त्तुं शक्यते। शेषात्स्विष्टकृते समवद्यतीतिवचनात्। तस्मादत्रावसरे इन्द्राय स्वाहेति पायसेनैकाहुतिः। ततः स्विष्टकृदादिप्राजापत्यान्ता नवाहुतयः। प्राशनान्ते मरुद्भ्यो बलिं हरत्यहुतादो मरुत इति श्रुतेः। ततः संस्रवभक्षान्ते मरुद्भ्यः देवताविशेषेभ्यः बलिं हरति बलिं ददाति। बलिमित्येकवचनं जात्यपेक्षम् प्राशनान्तग्रहणं माभूत्तत्कालमेव बलिहरणमित्येतदर्थम्। बलिप्रमाणं पक्षादिप्रकरणेऽभिहितम्। कथमेभ्यो होमो न क्रियते बलिरेव दीयत इत्याह अहुतम् अदन्तीत्यहुतादः तादृशा मरुत इति श्रुतेः। विशेषमाह। आश्वत्थेषु पलाशेषु। मरुतोऽश्वत्थे तस्थुरिति वचनात् अश्वत्थसम्बन्धिषु बलिदानं कर्त्तव्यम्। यत्र च येषामवस्थानं तत्रैव तेषां दानमुचितमित्यभिप्रायः। मन्त्रानाह शुक्रज्योतिरिति प्रतिमन्त्रम्। विमुखेन च मनसा नामान्येषामेतानीति श्रुतेः। ननु नामभिरेवात्रत्यबलिदानं दृष्टं कुतोऽत्र मन्त्रैर्दीयते इत्याह। नामान्येषामेतानीति श्रुतेः। एषां मरुताम्। एतानि शुक्रज्योतिःप्रभृतीनि। अत एव

यावतीषु कण्डिकासु नामबुद्धिः तावतीभिरेव बलिदानम्। ताश्च शुक्रज्योतिरित्यादिषट् । उग्रश्च भीमश्चेत्यादिना अध्येतृप्रसिद्धेन विमुखेन च मनसा मनसैव बलिमन्त्रान् स्मरेत् । न मुखेनोच्चरेत् । इन्द्रं दैवीरिति जपति । इन्द्रं दैवीरित्यमुं मन्त्रं जपति । ततो ब्राह्मणभोजनमित्युक्तार्थम्। इति सूत्रार्थः ।

अथ प्रयोगः ।

प्रथमप्रयोगे भाद्रपदपौर्णमास्यां देशकालादिकीर्त्तनान्ते इन्द्रयज्ञकर्माऽहं करिष्य इति सङ्कल्पः। ततो मातृपूजामाभ्युदयिकं च कृत्वाऽऽवसथ्याग्नौ कर्म कुर्यात् । ततो ब्रह्मोपवेशनमारभ्य संस्रवप्राशनान्ते विशेषः। अपां दुग्धस्य च प्रणयनम्। तत्र प्रणयनपात्रे मध्ये सेतुं कृत्वा मूलभागे जलम् अन्यत्र क्षीरं निनीय प्रणयनं कार्यम् । मूलभागे वा क्षीरमितरत्र जलम्। उपकल्पनीयानि तण्डुलपिष्टम् सप्ताश्वत्थपत्राणीति हरिहरः। यवपिष्टं लौकिकोदकम् अपूपसंयवनार्थं, खर्परं च अपूपार्थमेव, सप्ताश्वत्थपत्राणीति युक्तमेव गङ्गाधरो लिलेखोपकल्पनीयानि। तत आज्यनिर्वापं कृत्वा चरुपात्रे प्रणीतक्षीरमासिच्य तण्डुलान् प्रक्षिपेत् । प्रणीतोदकेन पिष्टं सम्यक् बद्ध्वा तेन चतुरोऽपूपान्निर्माय स्तरणपर्याप्तान् वा निर्माय खर्परेऽधिश्रयेदिति हरिहरः। लौकिकोदकेनैव संयवनमिति गदाधरः। तत्रायं क्रमः। आदौ आज्याधिश्रयणं तदुत्तरतश्चरुः तदुत्तरतोऽपूपानिति। ततः पर्यग्निकरणादिप्रोक्षण्युत्पवनान्तम्। ततोऽपूपैर्यथोक्तं स्तरणं प्रतिदिशं चैकैकेन। तत उपयमनकुशादानाद्याज्यभागहोमान्ते आज्येन पञ्चाहुतीर्जुहोति । आसु च न ब्रह्मणोऽन्वारम्भः। इन्द्राय स्वाहा इदमिन्द्राय। इन्द्राण्यै स्वाहा इदमिन्द्राण्यै। अजा-

यैकपदे स्वाहा इदमजायैकपदे । अहिर्बुध्न्याय स्वाहा इदमहिर्बुध्न्याय । इदमहये बुध्न्यायेति केचित् । प्रौष्ठपदाभ्यः स्वाहा इदं प्रौष्ठपदाभ्यो न ममेति । एवं पञ्चाज्याहुतीर्हुत्वा पायसमभिघार्य स्रुवेणादाय इन्द्राय स्वाहेति हुत्वा इदमिन्द्राय न मम। ततः पायसेनैव ब्रह्मान्वारब्धः स्विष्टकृद्धोमं विधाय तथैव महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवं प्राश्य दक्षिणां दद्यात् । ततोऽग्नेरुत्तरतः प्राक्संस्थानि उदक्संस्थानि वा सप्ताश्वत्थपर्णानि निधाय स्रुवेण पायसशेषमादाय शुक्रज्योतिरित्यादिभिर्नमस्कारान्तैः षड्भिः उग्रश्च भीमश्चेत्येतेन सप्तमेन च नमोऽन्तेन मनसैव स्मृतेन एकैकस्मिन् पत्रे एकैकेन मन्त्रेण बलिं हरति । तत्रेत्थं प्रयोगः । शुक्रज्योतिश्चेति प्रजापतिर्ऋषिः साध्या वा मरुतो देवता उष्णिक् छन्दः मरुद्भ्यो बलिदाने विनियोगः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्च ऋतपाश्चात्यꣳहाः नमः ॥ इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिषे ज्योतिष्मते शुक्राय ऋतपसेऽत्यꣳहसे च न मम । एवमेकं बलिम् एकस्मिन् पत्रे दत्त्वा पुनः स्रुवेणादाय ईदृङ् चेति प्रजापतिर्ऋषिः साध्या वा मरुतो वा देवता गायत्री-छन्दः बलिदाने विनियोगः । ईदृङ्चाऽन्यादृङ् च सदृङ् च प्रतिसदृङ् च । मितश्च संमितश्च सभराः नमः ॥ इदमीदृशेऽन्यादृशे सदृशे प्रतिसदृशे मिताय संमिताय सभरसे च न ममेति द्वितीयपत्रे द्वितीयं बलिं दत्त्वा, पुनस्तथैवावदाय ऋतश्चेति प्रजापतिर्ऋषिः साध्या वा मरुतो देवता उष्णिक् छन्दः बलिदाने विनियोगः। ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च । धर्त्ता च विधर्त्ता च विधारयः नमः ॥ इदमृताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधर्त्रे विधारयाय च न मम इति तृतीयपत्रे दत्त्वा, पुनस्तथैवावदाय ऋतजिच्चेति प्रजापतिर्ऋ-

षिः साध्या वा मरुतो देवता गायत्री छन्दः बलिदाने विनियोगः। ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्च दूरे अमित्रश्च गणः नमः॥ इदमृतजिते सत्यजिते सेनजिते सुषेणाय अन्तिमित्राय दूरेअमित्राय गणाय च न ममेति चतुर्थपत्रे दत्त्वा, पुनस्तथैवावदाय ईदृक्षास इति प्रजापतिर्ऋषिः साध्या वा मरुतो देवता गायत्री छन्दः बलिदाने विनियोगः। ईदृक्षास एतादृक्षास ऊषुणः सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च सम्मितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् नमः॥ इदमीदृक्षेभ्यः एतादृक्षेभ्यः सदृक्षेभ्यः प्रतिसदृक्षेभ्यो मितेभ्यः सम्मितेभ्यः सभरेभ्यो मरुद्भ्यश्च न ममेति पञ्चमे पत्रे दत्त्वा, पुनस्तथैव गृहीत्वा स्वतवांश्चेति प्रजापतिर्ऋषिः साध्या वा मरुतो देवता उष्णिक् छन्दः मरुद्भ्यो बलिदाने विनियोगः। स्वतवांश्च प्रघासी च सान्तपनश्च गृहमेधी च। क्रीडी च शाकीवोज्जेषी नमः॥ इदं स्वतवसे प्रघासिने सान्तपनाय गृहमेधिने क्रीडिने शाकिने उज्जेषिणे च न मम इति षष्ठपत्रे दत्त्वा, पुनस्तथैव उग्रश्चेति प्रजापतिर्ऋषिः साध्या वा मरुतो देवता गायत्री छन्दो मरुद्भ्यो बलिदाने विनियोगः। उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासहांश्चाभियुग्वा च विक्षिपः स्वाहा नमः ॥ इदमुग्राय भीमाय ध्वान्ताय धुनये सासहनेऽभियुग्वने विक्षिपाय च न ममेति सप्तमे पत्रे बलिं दत्त्वा, इन्द्रं दैवीरिति प्रजापतिर्ऋषिः साध्या वा मरुतो देवता यजुः जपे विनियोगः। इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो भवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्। एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु। इति स्वरपूर्वकं जपः। मरुद्भ्यो बलिंहरतीति विधेः सर्वत्र इदं मरुद्भ्य इति वा त्यागः। ततो ब्राह्मणभोजनम्। इदं च सूत-

क्रादिना मुख्यकालातिक्रमे प्राक् आश्विन्याः पौर्णमास्या यथासम्भवं कार्यमिति गङ्गाधरकारिकाकारादयः ।

इतीन्द्रयज्ञः समासः ।

अथाश्वयुजीकर्म ।

तत्र पारस्करः,

आश्वयुज्यां पृषातकाः । पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति । प्राशनान्ते दधिपृषातकमञ्जलिना जुहोति ऊनं मे पूर्यतां पूर्णं मे माव्यगात्स्वाहेति । दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन । मातृभिर्वत्सान्सꣳसृज्य ताꣳ रात्रिमाग्रहायणीं च । ततो ब्राह्मणभोजनमिति ।

आश्वयुज्यां पृषातकाः, भवन्तीति शेषः । आश्वयुजीशब्देन च आश्विनी पौर्णमासी अभिधीयते । पृषातकाः इति च कर्मनाम । एवं च आश्विन्यां पौर्णमास्यां पृषातका इतिसंज्ञकं कर्म भवतीत्यर्थः । पायसमैन्द्रं श्रपयित्वा दधिमधुघृतमिश्रं जुहोति । इन्द्रदेवत्यं पयसा संस्कृतं द्रव्यं श्रपणेन संसाध्य दधिमधुघृतमिश्रं कृत्वा वक्ष्यमाणदेवताभ्यो जुहोति । इन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति । इन्द्रायेत्यादिभिः पञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्रतिमन्त्रं पञ्चाहुतीर्जुहोति । प्राशनान्ते दधिपृषातकमञ्जलिना जुहोत्यूनं मे पूर्यतामिति । स्विष्टकृन्महाव्याहृत्यादिहोमीयसंस्रवप्राशनान्ते दधिमिश्रितं आज्यम् अञ्जलिना संयुताभ्यां प्रसृतिभ्यां जुहोति ऊनं मे पूर्यतामिति मन्त्रेण । पृषातकशब्देन दधिमिश्रितमाज्यमेवोच्यते ।

तथाऽभिधानचिन्तामणौ,

आज्ये तु दधिसंयुक्ते पृषदाज्यं पृषातकम् । इति ।

एवं च दधिप्रधानं पृषातकमित्यर्थः। अन्ये तु पृषदाज्यं सम्पाद्य पुनरपि दध्ना संयोज्य जुहोतीत्याहुः। अञ्जलिशब्देन संयुतप्रसृतिद्वयमेवोच्यते।

तथाच अमरसिंहे,

पाणिर्निकुब्जः प्रसृतिः तौ युतावञ्जलिः पुमान्। इति।

दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन। दधिमधुघृतमिश्रं पायसम् अमात्याः यजमानगृह्याः। गयः कृदरः इत्युपक्रम्य अमाशब्दो निघण्टौ गृहनामसु पठितः। एवं च अमा गृहं तत्र भवाः अमात्याः इति अमात्यशब्दस्य व्युत्पादनात्। ते पश्यन्ति आयात्विन्द्र इत्यनुवाकेन आयात्वष्टा इत्यध्येतृप्रसिद्धेनाष्टकण्डिकात्मकेन। मातृभिर्वत्सान् संसृज्य तां रात्रिम्। वत्सपदसमभिव्याहारात् मातृभिः गोभिः वत्सान् संसृज्य सम्मेल्य तां रात्रिम् अत्यन्तसंयोगे द्वितीयास्मरणात् तस्यां समस्तरात्रावित्यर्थः। ततो ब्राह्मणभोजनम्। ततः एकस्य ब्राह्मणस्य भोजनं कारयेदित्यर्थः।

### अथ प्रयोगः।

आश्विन्यां पौर्णमास्यां प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा आवसथ्याग्नेः पश्चात्पत्न्या सह उपविश्य देशकालादिकं सङ्कीर्त्य पृषातकाख्यं कर्माहं करिष्ये इति सङ्कल्पं कुर्यात्। ततः पद्धतिकारलिखनाद्देवताभिध्यानं करोति। तद्यथा, प्रजापतिमिन्द्रम् अग्निं सोमम् आज्येन, इन्द्रमिन्द्राणीमाश्विनौ आश्वयुजीं पौर्णमासीं दधिमधुघृतमिश्रेण पायसेन, अग्निं स्विष्टकृतं पायसशेषेण, भूरादिदेवताश्चाज्येन, अग्निं पृषदाज्येनाहं यक्ष्ये इति मनसा चिन्तयेत्। ततो ब्रह्मोपवेशनादिप्राशनान्ते विशेषः। प्रणयनपात्रे प्राञ्चमुदञ्चं वा सेतुं कृत्वा

एकस्मिन् प्रदेशे जलमपरस्मिन् प्रदेशे च दुग्धं निनीय पूर्ववत्प्रणयनं कुर्यात् । उपदेशातिदेशयोरभावात् न दुग्धस्य प्रणयनमित्यपि कश्चित् । पात्रासादनानन्तरं दधिमधुघृतान्युपकल्पयेत्। आज्यनिर्वापोत्तरं चरुपात्रे पोतकादिना प्रणीतं सर्वमपि दुग्धं प्रक्षिप्य तत्र तण्डुलावापं कृत्वा आज्याधिश्रयणकाले पूर्ववदधिश्रयणं कुर्यात् । उपयमनकुशादानात्पूर्वं पायसे दधिमधुघृतानि प्रक्षिपेत् । आज्यभागान्ते दधिमधुघृतमिश्रितेन पायसेन जुहोति इन्द्राय स्वाहेति । इदमिन्द्राय न ममेति त्यागः। पुनस्तेनैव इन्द्राण्यै स्वाहा इदमिन्द्राण्यै न मम । अश्विभ्यां स्वाहा इदमश्विभ्यां न मम । आश्वयुज्यै पौर्णमास्यै स्वाहा इदमाश्वयुज्यै पौर्णमास्यै न मम । शरदे स्वाहा इदं शरदे न मम । एवं हुत्वा त्यागं च कृत्वा तत एव पायसादवदाय अग्नये स्विष्टकृते स्वाहेति सौविष्टकृतं हुत्वा महाव्याहृतिहोमादिदक्षिणादानान्तं कुर्यात् । ततः स्थाल्याज्ये दधि प्रक्षिप्य पृषदाज्यं कृत्वा अञ्जलिना आदाय ऊनं म इत्यस्य गर्ग ऋषिः गायत्री छन्दः. अग्निर्देवता होमे विनियोगः इति स्मृत्वा, ऊनं मे पूर्यतां पूर्णं मे माव्यगात्स्वाहेति मन्त्रेण जुहोति । इदमग्नये न मम इति त्याग इति सम्प्रदायः ।

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

इति छन्दोगपरिशिष्टवचनात्प्रजापतिरेवात्र देवता । ततश्च इदं प्रजापतये न मम इति त्याग इति तु केचित् । ततो यजमानपुत्रपौत्रादयः आयात्विन्द्र इत्यादीनां सप्तानां वामदेवप्रजापत्यश्विसरस्वतीगर्गविश्वामित्रवसिष्ठा ऋषयः त्रिष्टुप्छन्दः अष्टमस्य बृहती छन्दः इन्द्रो देवता अवेक्षणे विनियोगः । इति

स्मृत्वा, आयात्विन्द्रो वस उपन इह स्तुतः सधमादस्तु शूरः। वावृधानस्ताविषीर्यस्य पूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात्। आन इन्द्रो दूरादान आसादभिष्टिकृदवसेयासदुग्रः। ओजिष्ठेभिर्नृपतिर्वज्रबाहुः सङ्गे समत्सुतुर्वणिः पृतन्यून्। आन इन्द्रो हरिभिर्यात्वच्छार्वाचीनो वसे राधसे च तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनुनो वाजसा तौ। त्रातारमिन्द्रमवितारमिन्द्रँ हवेहवे सुहवँ शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रँ स्वास्तिनो मघवा धात्विन्द्रः। इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः। बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम। तस्य वयँ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम। ससुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु। आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। मा त्वा केचिन्नियमन्विवन्नपाशिनोति धन्वेवताँ इहि। एवेदिन्द्रं वृषणं वज्रबाहुं वासिष्ठासो अभ्यर्चन्त्यर्कैः। स नस्तुतो वीरबद्धातु गोमद्यूयं पात स्वास्तिभिः सदा नः। इत्यनुवाकेन दधिमधुघृतमिश्रं हुतशेषं पायसं पश्यन्ति। ततो ब्राह्मणभोजनमिति।

## अथाग्रहायणीकर्म।

तत्र पारस्करः,

मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म। स्थालीपाकँ श्रपयित्वा श्रवणावदाज्याहुती हुत्वाऽपरा जुहोति। यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा। संवत्सरस्य प्रतिमा या ताँ रात्रिमुपास्महे। प्रजाँ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा। संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय कृणुते बृहन्नमः। तेषां वयँ सुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम

स्वाहा। ग्रीष्मो हेमन्त उत नो वसन्तः शिवा वर्षा अभया शरन्नः। तेषामृतूनाᳪ शतशारदानां निवात एषामभये वसेम स्वाहेति। स्थालीपाकस्य जुहोति, सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमन्ताय चेति। प्राशनान्ते सक्तुशेषᳪ शूर्पे न्युप्योपनिष्क्रमणप्रभृत्यामार्जनात्। मार्जनान्त उत्सृष्टो बलिरित्याह इति।

मार्गशीर्षी पौर्णमासी प्रसिद्धा तस्याम् आग्रहायणीसंज्ञकं कर्म कर्त्तव्यमिति शेषः। स्थालीपाकᳪ श्रपयित्वा श्रवणावदाज्याहुती हुत्वाऽपरा जुहोति। स्थालीपाकं चरुं श्रपयित्वा श्रवणाकर्मवदपश्वेतपदाजहीत्याहुतिद्वयं हुत्वा अपराः चतस्रः आहुतीः यां जना इत्यादिभिर्मन्त्रैर्जुहोति। स्थालीपाकस्य जुहोति सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमन्ताय चेति। सोमायेत्यादिभिः स्वाहान्तैर्मन्त्रैः स्थालीपाकस्य चरोर्जुहोति। प्राशनान्ते स्विष्टकृन्महाव्याहृत्यादिहोमीयसंस्रवप्राशनान्ते। सक्तुशेषं शूर्पे न्युप्य उपनिष्क्रमणप्रभृति आमार्जनात् श्रवणाकर्मवत्कुर्यात्। मार्जनान्ते उत्सृष्टो बलिरित्याह। मार्जनस्यावसाने उत्सृष्टो बलिरिति ब्रूयात्।

## अथ प्रयोगः।

तत्र आग्रहायण्यां पौर्णमास्यां प्रथमयोगे मातृपूजापूर्वकमाभ्युदयिकश्राद्धं कृत्वाऽग्निमपरेण सपत्नीक उपविश्य देशकालादिकं सङ्कीर्त्य आग्रहायणीकर्माहं करिष्य इति सङ्कल्पं कुर्यात्। ततः अनेकपद्धतिकारालिखनात् देवताभिध्यानं कुर्यात्। तद्यथा, प्रजापतिम् इन्द्रम् अग्निं सोमं श्वेतपदं श्वेतं वैदर्व्यं रात्रिं संवत्सरं परिवत्सरम् इदावत्सरम् इद्वत्सरं ग्रीष्मं हेमन्तं वसन्तं वर्षाः शरदं च आज्येन, सोमं मृगशिरसं मार्गशीर्षीं पौर्णमासीं हेमन्तं च स्थालीपाकेन, अग्निं वायुं सूर्यम् अग्नीव-

वरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणं प्रजापतिं च आज्येन, आग्नेयपाण्डुपार्थिवानाᳪंसर्पाणामधिपतिं श्वेतवायवान्तरिक्षाणाᳪं सर्पाणामधिपतिम् अभिभूः सौर्यदिव्यानाᳪं सर्पाणामधिपतिं च बलिभिः अस्मिन्नाग्रहायणीरूपे कर्मण्यहं यक्ष्ये इति चिन्तयेत् । ततो ब्रह्मोपवेशनादिप्राशनान्तं कुर्यात् । तत्र विशेषः । पात्रासादनोत्तरं शूर्पम् उदपात्रं दर्वीं कङ्कतत्रयम् अञ्जनम् अनुलेपनं स्रजः उल्का उल्काधारश्च एतानि उपकल्पयेत् । एतेषामप्यासादनप्रोक्षणे इति तु कश्चित् । तत आज्यभागानन्तरम् अपश्वेतपदाजहीत्याहुतिद्वयं श्रवणाकर्मवद्धुत्वा यां जना इत्यस्य आथर्वण ऋषिः अनुष्टुप्छन्दः रात्रिर्देवता होमे विनियोग इति स्मृत्वा, यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गलीः स्वाहेति जुहोति।इदं रात्र्यै न ममेति त्यागः।पुनः संवत्सरस्येत्यस्य पूर्ववदेव ऋष्यादिकं स्मृत्वा,संवत्सरस्य प्रतिमा या ताᳪं रात्रिमुपास्महे । प्रजाᳪं सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहेति जुहोति। इदं रात्र्यै न ममेति त्यागः। ततः संवत्सरायेत्यस्य शल्वायन ऋषिः त्रिष्टुप्छन्दः संवत्सरादयो देवताः होमे विनियोगः इति स्मृत्वा संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय कृणुते बृहन्नमः । तेषां वयꣳ सुमतौ यज्ञियानां ज्योग्जीता अहता स्याम स्वाहेति जुहोति ।इदं संवत्सराय परिवत्सरायेदावत्सराय इद्वत्सराय वत्सराय च न ममेति त्यागः।ततः ग्रीष्म इत्यस्य शल्वायन ऋषिः त्रिष्टुप्छन्दः ग्रीष्मादयो देवताः होमे विनियोगः इति स्मृत्वा, ग्रीष्मो हेमन्त उत नो वसन्तः शिवा वर्षा अभया शरन्नः। तेषामृतूनां शतशारदानां निवात एषामभये वसेम स्वाहेति जुहोति । इदं ग्रीष्माय हेमन्ताय वसन्ताय वर्षाभ्यः श-

रदे च न ममेति त्यागः । एताश्च आज्याहुतयः । ततः स्थालीपाकेन होमः । तद्यथा, सोमाय स्वाहा इदं सोमाय न मम । मृगशिरसे स्वाहा इदं मृगशिरसे न मम । मार्गशीर्ष्यै पौर्णमास्यै स्वाहा इदं मार्गशीर्ष्यै पौर्णमास्यै न मम । हेमन्ताय स्वाहा इदं हेमन्ताय न मम । ततः स्थालीपाकस्य उत्तरार्द्धादवदाय अग्नये स्विष्टकृते स्वाहेति जुहोति। इदमग्नये स्विष्टकृते न ममेति त्यागः । ततो महाव्याहृतिहोमादिप्राशनान्तं कुर्यात् । ततः सक्तुशेषं शूर्पे न्युप्य निष्क्रमणप्रभृतिमार्जनान्तं श्रवणाकर्मवत्कुर्यात् । ततः मार्जनान्ते उत्सृष्टो बलिरिति वदेत् । ततस्तां रात्रिं वत्सान् मातृभिः सह मेलयेत् ।

इत्याग्रहायणीकर्म ।

## अथ स्रस्तरारोहणम् ।

**तत्र पारस्करः**, पश्चादग्नेः स्रस्तरमास्तीर्याहतं च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति दक्षिणतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः । दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रꣳ शमीशाखासीतालोष्टाश्मनो निधायाग्निमीक्षमाणो जपति । अयमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः सुवीर्योऽयꣳ श्रेष्ठो दधातु नाविति । पश्चादग्नेः प्राञ्चमञ्जलिं करोति । दैवीं नावमिति तिसृभिः स्रस्तरमारोहन्ति । ब्रह्माणमामन्त्रयते ब्रह्मन् प्रत्यवरोहामेति । ब्रह्मानुज्ञाताः प्रत्यवरोहन्त्यायुः कीर्त्तिर्यशोबलमन्नाद्यं प्रजामिति । उपेता जपन्ति । सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः । शिवा नो वर्षाः सन्तु शरदः सन्तु नः शिवा इति । स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति । उपोत्तिष्ठन्त्युदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिरिति । एवं द्विरपरं ब्रह्मानुज्ञाताः ।

अधःशयीरंश्चतुरो मासान् यथेष्टं वेति ।

अस्यार्थः । यद्यप्यत्र आश्वयुज्यां पृषातकाः प्रौष्ठपद्यामिन्द्रयज्ञ इतिवत् न किञ्चिदभिधायोक्तम्, तथापि स्रस्तरारोहणस्य पृथक् पाकयज्ञमध्ये गणनात् आग्रहायणीकर्मान्ते पठितमपि कर्मान्तरमेव स्रस्तरारोहणम् । तच्च आग्रहायणीकर्माष्टकाकर्ममध्ये पठितत्वात् तदन्तराले काले एव कर्त्तुं युज्यते । अत एव गङ्गाधरः मार्गशीर्षपौर्णमास्या ऊर्ध्वम् अर्वागष्टम्याः शुभवासरे एतस्य कर्तव्यतामाह ।

रेणुदीक्षितोऽपि,

स्रस्तरारोहणं कुर्यात्पौर्णमास्या अनन्तरम् ।

अत्रैव च शुभे वारे अष्टकायाः पुरैव तु ॥ इति ।

तत्र च पश्चादग्नेः स्रस्तरमास्तीर्य । आवसथ्यस्याग्नेः पश्चात् स्रस्तरं तृणैः आस्तीर्य । अहतं च वासः । सकृत्प्रक्षालितं नवं च वासः । चकारात् आस्तीर्य । उत्तरसूत्रे वासोग्रहणात्पूर्वसूत्रस्थस्रस्तरपदं कटादिपरम् । आप्लुताः कृतस्नानाः अहतवाससः सकृत्प्रक्षालितनूतनवाससः सन्तः स्रस्तरं प्रत्यवरोहन्ति निविशन्ते । तत्प्रकारमाह । दक्षिणतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः । स्वामी गृहपतिः सर्वेषां दक्षिणतः । तदुत्तरतो जाया यजमानपत्नी यथाकनिष्ठम् । अन्येषां तु यो यस्मात्कनिष्ठः स तस्मादुत्तरो भवति । पुनरपि विशेषमाह । दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं शमीशाखासीतालोष्टाश्मनो निधायाग्निमीक्षमाणो जपत्ययमग्निरिति । गृहपतिः आदौ अग्नेर्दक्षिणतः ब्रह्माणम् उपवेश्य । होमाभावात् ब्रह्मोपवेशनमप्राप्तमत्राभिधीयते । उत्तरतः अग्नेरुत्तरतः उदपात्रं जलपूरितं किञ्चिद्भाजनम् । शमीशाखां सीतालोष्टं हलपद्धतिभवं

मृत्खण्डम् अश्मानं पाषाणं निधाय स्थापयित्वा अग्निम् ईक्षमाणः अवलोकयन् अयमग्निरिति मन्त्रं पठेत् । पश्चादग्नेः प्राञ्चमञ्जलिं करोति दैवीं नावमिति तिसृभिः । अग्नेः पश्चात् प्राञ्चं प्रागग्रम् अञ्जलिं करोति । नमस्कारार्थत्वात्पुटाञ्जलिं निदधाति दैवीं नावमिति तिसृभिः ऋग्भिः । स्रस्तरमारोहन्ति ब्राह्मणमामन्त्रयते ब्रह्मन् प्रत्यवरोहामेति । पूर्वोक्तं स्रस्तरम् आरोक्ष्यन् ब्राह्मणम् आमन्त्रयते पृच्छति स्वामी ब्रह्मन् प्रत्यवरोहामेति । बहुवचनं पत्न्याद्यपेक्षम् । पूर्वं ये आरोहणधर्मा उक्तास्तेषामयं कालः । ब्रह्मानुज्ञाताः प्रत्यवरोहन्त्यायुः कीर्तिर्यशो बलमन्नाद्यं प्रजामिति । प्रत्यवरोहध्वमिति यथोचितवाक्येन ब्रह्मणाऽनुज्ञाताः दत्ताज्ञाः प्रत्यवरोहन्ति स्रस्तरम् अधितिष्ठन्ति आयुः कीर्त्तिरितिमन्त्रेण । पुरुषाणां स्त्रीणां सर्वेषां मन्त्रपाठ इति हरिहरः । उपेता जपन्ति सुहेमन्त इति । उपेताः कृतोपनयनाः ये ते जपन्ति सुहेमन्त इति मन्त्रम् । अत्र उपेता इति विशेषोपादानात् अनुपनीतानां मन्त्रजपाभावः । पत्नीवर्जं सर्वस्त्रीणां च मन्त्राभाव इति गर्गपद्धतौ । स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति । स्योना पृथिवीत्यनेन मन्त्रेण दक्षिणपार्श्वैर्दक्षिणबाह्वधस्तात्प्रदेशैः । पार्श्वे इति सप्तम्यन्तपाठे तदधिकरणकं शयनम् । प्राक्शिरसः पूर्वस्यां दिशि शिरः कृत्वा शेरते स्वाम्यादयः । उपोत्तिष्ठन्त्युदायुषा स्वायुषेति । उप स्रस्तरसमीपे एवोत्तिष्ठन्ति किञ्चित् शयित्वा उत्तिष्ठन्ति । एवं द्विरपरं ब्रह्मानुज्ञाताः । एवमुक्तेन प्रकारेण वारद्वयं पुनः कुर्यात् । किंप्रभृति ब्रह्मानुज्ञाताः ब्रह्मणोऽनुज्ञाप्रभृतीत्यर्थः । अधः शयीरंश्चतुरो मासान् यथेष्टं वा । अत ऊर्द्ध्वं चतुरो मासान् पौषादिचैत्रान्तान्

अधः भूमौ शयीरन् ते सर्वेऽपि । यथेष्टं वा यथारुचि वा । मासमेकं द्व्यादि वा । इति सूत्रार्थः । अत्र गौणकालाभाव इति गङ्गाधरः ।

अथ प्रयोगः ।

मार्गशीर्षपौर्णमास्या ऊर्ध्वं प्रागष्टम्याः कस्मिंश्चित् शुभे दिने कृतनित्यक्रियः सपत्नीकः अद्येत्यादिदेशकालादिकीर्त्तनान्ते स्रस्तरारोहणमहं करिष्य इति सङ्कल्प्य मातृपूजाभ्युदायिके कुर्यात् । एतच्च आवसथ्यं स्थलान्तरे नीत्वा पञ्चभूसंस्कारपूर्वकं तत्र स्थापयित्वा कार्यम् । औपवसथ्यरात्रिमन्तरेण अग्निशालायां शयननिषेधादिति हरिहरः । अन्ये तु अग्नेः पश्चात् गृह्यशयनपर्याप्तस्थलाभावे एवान्यत्र गमनमाहुर्नान्यथा । यश्च शयननिषेधः स रागप्राप्तशयनस्य निषेधो न वैधस्येत्याहुः ।

रेणुककारिकापि,

निवेशनमलङ्कुर्याद्वास्वत्यभ्युदिते सति ।
स्नान्ति गृह्याः सपत्नीकाः सन्ति ये वृत्तिकृन्मताः ॥
अवकाशो न चेदग्नि पश्चादारोहणाय वै ।
अग्निं देशान्तरं नीत्वा तत्पश्चात् स्रस्तरास्तृतिः ॥ इति ।

ततोऽग्नेः पश्चात् कुशैरास्तरणं विधाय तदुपरि अहतवासस्तृणुयात् । स्रस्तरारोहणं करिष्ये, तत्र त्वं ब्रह्मा भवेति ब्रह्माणं वृत्वा अग्नेः दक्षिणतः उपवेश्य उत्तरतः उदपात्रं शमीशाखासीतालोष्ठम् अश्मानं च उदक्संस्थानि निधाय स्रस्तरस्य पश्चादुपविश्य अग्निमीक्षमाणो यजमानो जपति वक्ष्यमाणं मन्त्रम् । अयमग्निर्वीरतम इत्यस्याः प्रजापतिर्ऋषिः अग्निर्देवता अनुष्टुप् छन्दः जपे विनियोगः । अयमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः । सुवीर्योऽयꣳ श्रैष्ठ्ये दधातु नौ इति । ततोऽग्नेः पश्चात्

प्राञ्चमञ्जलिं करोति दैवीं नावमिति तिसृभिः । दैवीं नावमित्यस्याः प्रजापतिर्ऋषिः अग्निर्देवता सुनावमित्यस्या अश्विनावृषी नौर्देवता आनोमित्रावरुणेत्यस्याः सरस्वती ऋषिः मित्रावरुणौ देवते तिसृणामपि गायत्री छन्दः अञ्जलिकरणे विनियोगः । दैवीं नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये । सुनावमारुहेयमस्रवन्तीमनागसम् । शतारित्राꣳ स्वस्तये । आनोमित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू इति । ततो ब्रह्मन् प्रत्यवरोहामेति ब्रह्माणमामन्त्र्य प्रत्यवरोहध्वमिति ब्रह्मणा दत्ताज्ञाः सर्वे सुस्नाताः परिहिताहतवाससः प्रत्यवरोहन्ति । आयुः कीर्त्तिरित्यस्य गौतम ऋषिः अग्निर्देवता गायत्री छन्दः स्रस्तरारोहणे विनियोगः । आयुः कीर्त्तिर्यशो बलमन्नाद्यं प्रजामिति । ततः स्रस्तरमारुह्य कृतोपनीतास्ते जपन्ति । सुहेमन्त इत्यस्याश्वलायन ऋषिः हेमन्तादयः पञ्च देवताः पाङ्क्तिश्छन्दः जपे विनियोगः । सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः । शिवा नो वर्षाः सन्तु नः शिवा इति मन्त्रम् । ततस्ते सर्वेऽपि स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः स्वपन्ति। स्योना पृथिवीत्यस्य दध्यङ्ङाथर्वण ऋषिः गायत्री छन्दः पृथिवी देवता स्वापे विनियोगः । स्योना पृथिवि नो भवानृक्षरा निवेशनीति । ततः किञ्चित्सुप्त्वा उदायुषेतिमन्त्रेणोत्तिष्ठन्ति । उदायुषेति गौतम ऋषिः अग्निर्देवता गायत्री छन्दः उत्थाने विनियोगः । उदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिरिति मन्त्रेण । ततः स्रस्तरादुत्तीर्य ब्रह्मानुमन्त्रणप्रत्यवरोहणोपेतजपसंवेशनोत्थानानि वारद्वयमेवमेव कुर्युः । तत आरभ्य चतुरो मासान् अधः शयीरन् यथेष्टं वा। अन्यत्रानीतं चेत् पञ्चभूसंस्कारपूर्वं पुनः स्वस्थाने स्थापयेत् । इदं च

स्रस्तरारोहणम् अस्तमयानन्तरं कार्यम् इति गर्गपद्धतौ ।

इति स्रस्तरारोहणम् ।

अथाष्टकाकर्मोच्यते ।

तत्र पारस्करः, ऊर्द्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः । ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति । अपूपमांसशाकैर्यथासङ्ख्यम् । प्रथमाष्टका पक्षाष्टम्याम् । स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति । त्रिꣳशत्स्वसार उपयन्ति निष्कृतꣳ समानं केतुं प्रतिमुञ्चमानाः । ऋतूंस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा । ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । विपश्यन्ति पपशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा । एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः स्वाहा । अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामति मा प्रयुक्त स्वाहा । अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामति मा प्रयुक्त स्वाहा । पञ्च व्युष्टीरनु पञ्चदोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्द्ध्नीरधिलोकमेकꣳ स्वाहा । ऋतस्य गर्भः प्रथमा व्यूषिष्यपामेका महिमानं बिभर्त्ति । सूर्यस्यैका चरति निष्कृतेषु धर्मस्यैका सवितैकां नियच्छतु स्वाहा । या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳ स्वाहा । शुक्रऋषभा नभसा ज्योतिषागाद्विश्वरूपा शबली अग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजरउष आगाः स्वाहा । ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजा-

नाम्। एका सती बहुधोषो व्यौच्छत्साऽजीर्णा त्वं जरयासि सर्वमन्यत्स्वाहेति ॥ स्थालीपाकस्य जुहोति शान्ता पृथिवी शिवमन्तरिक्षꣳ शन्नो द्यौरभयं कृणोतु । शन्नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा ॥ आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम् । भूतं भविष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याꣳ स्वाहा ॥ विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहेति। अष्टकायै स्वाहेतीति ।

अस्यार्थः । ऊर्ध्वमाग्रहायण्याः । मार्गशीर्षपौर्णमास्यनन्तरम् । तिस्रः अष्टकाः । अष्टकाख्यानि त्रीणि कर्माणि भवन्ति । आसां चाभ्यासास्मरणात् सकृत्क्रियेति कर्कः । विशेषस्तु पाकयज्ञसंस्थाविचारे पूर्वमभिहितः । तत्र देवता आह । ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति । तत्र प्रथमा ऐन्द्री इन्द्रो देवता अस्या इत्यैन्द्री । इन्द्रदेवत्येत्यर्थः । तद्धितान्तनिर्देशात् । इन्द्राय स्वाहेति तदीयद्रव्येण होमः कार्यः । एवं द्वितीया वैश्वदेवी विश्वदेवदेवत्या । तत्र विश्वेभ्यो देवेभ्यः स्वाहेति तदीयद्रव्यहोमः । तृतीया प्राजापत्या प्रजापतिदेवत्या । तत्र प्रजापतये स्वाहेति होमः। पित्र्येति चतुर्थी पितृदेवत्या। तत्र पितृभ्यः स्वाहेति होमः । मध्या वर्षे च तुरीया शाकाष्टकेति वक्ष्यति । तत्र देवताकथनाभावात् इदं तत्रोत्कृष्यते। स्वतन्त्रो हि मुनिः कस्यचित् प्रसङ्गेन किञ्चिद्वदतीति देवताकथनप्रसङ्गेन अप्रतिज्ञाताया अपि चतुर्थ्या अष्टकाया देवताकथनं न दोषाय । इदानीं द्रव्याण्याह । अपूपमाꣳसशाकैर्यथासङ्ख्यम् । अपूपाः पोलिकाः । केषां चिन्मण्डकत्वेन प्रसिद्धाः ।

पूपोऽपूपः पोलिकास्तु पौलिकापौलियूपिकाः ।

इत्यभिधानचिन्तामणिः । अपूपश्च शाकश्च मांसं च तैः । यथासङ्ख्यं या यस्याः सङ्ख्या तामनतिक्रम्य । प्रथमाष्टकायां प्रथमं द्रव्यमपूपः द्वितीयाष्टकायां द्वितीयं मांसम् तृतीयाष्टकायां तृतीयं शाक इत्येवंप्रकारेण । तत्र मांसं गोमांसम् । मध्यमा गवेति वक्ष्यमाणत्वात् । प्रथमाष्टका पक्षाष्टम्याम् । सौरादिभेदेन मासानामनेकत्वादष्टम्योऽप्यनेका इति संशयच्छेदार्थमाह । प्रथमा आद्या अष्टका पक्षाष्टम्याम् । पक्षशब्देनात्र ऊर्ध्वमाग्रहायण्या इत्युक्तत्वात् स एव पक्षो गृह्यते । आग्रहायण्यूर्ध्वपक्षस्याष्टम्यामित्यर्थः ।

स्मृतिश्च, हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति ।

स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्रिꣳशत्स्वसार इत्यादि । स्थालीपाकं चरुं श्रपणेन निष्पाद्य आज्यभागौ आघारपूर्वकौ हुत्वा त्रिंशत्स्वसार इत्यादिभिर्मन्त्रैर्दशाज्याहुतीर्जुहोति । स्थालीपाकस्य जुहोति शान्ता पृथिवीति । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी। स्थालीपाकस्यावयवमादायादाय शान्ता पृथिवीत्यादिभिश्चतुर्भिर्मन्त्रैर्जुहोति चतस्र आहुतीः। अत्र यद्यप्यपूपहोमस्यावसरो नोक्तस्तथाप्यपूपहोमेन भवितव्यम् । अपूपमांसशाकैरिति पूर्वलिखितसूत्रेण अष्टकायाम् अपूपस्य साधनत्वात् ऐन्द्री वैश्वदेवीत्यादिना देवताया अप्युक्तत्वात् । केवलमवसरमवेक्षामहे। तत्र आज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीत्यादिभिर्विशेषवचनैरुक्तानां होमानां मध्ये निवेशासम्भवात्तदन्ते एव इन्द्राय स्वाहेत्यपूपेनैकाहुतिर्देयेति । एवं प्रत्यष्टकं ज्ञेयम् । इति सूत्रार्थः ।

## अथाष्टकाकर्मपद्धतिः ।

तत्र मार्गशीर्ष्या अनन्तरं या कृष्णाष्टमी तस्यां मातृपूजा आभ्युदयिकं चेति हरिहरादयः । अपरे तु—

नाष्टकासु भवेच्छ्राद्धम्—

इति वचनात् न श्राद्धमिच्छन्ति । तदा च मातृपूजामात्रम् । केचित्तु यत्रैवाभ्युदयिकं श्राद्धं तत्रैव मातृपूजनमित्याहुः । ततो देशकालादिकीर्त्तनान्ते अष्टकाकर्माहं करिष्य इति सङ्कल्पः । केचिन्मातृपूजनात्पूर्वं सङ्कल्पमिच्छन्ति । ततो वैकल्पिकावधारणम् । ततोऽनेकपद्धतिकारलिखनाद्देवताभिध्यानम् । तत्र प्रजापतिमिन्द्रमग्निं सोमं स्वसॄः रात्रिम् अष्टकाम् रात्रीः रात्रीः रात्रीः रात्रिं रात्रिं रात्रिं घृतेन, पृथिवीम् अन्तरिक्षं दिवं दिशः प्रदिशः आदिशः अहोरात्रे अपः मरीचीः धातारं समुद्रं ब्रह्माणं विश्वान् वसून् देवान् रुद्रान् आदित्यान् गोप्तॄन् मरुतः प्रजापतिं परमेष्ठिनमष्टकाम् एताः स्थालीपाकेन, इन्द्रम् अपूपेन, अग्निं स्विष्टकृतं स्थालीपाकशेषेण, अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणं प्रजापतिम् एता आज्येनाहं यक्ष्ये । ततो ब्रह्मोपवेशनाद्यावसथ्याग्नौ विशेषः । तण्डुलानन्तरम् आवसथ्याग्निपक्वसिद्धस्यैवापूपस्यासादनं प्रोक्षणकाले प्रोक्षणं च । केचित्तु नावसथ्याग्निपक्वस्य नियममाहुः । अपूपमात्रस्योपादानात् । ततः आज्यभागान्तं हुत्वा ऋष्यादि स्मरेत् । त्रिंशत्स्वसार इत्यादिमन्त्रजातस्य याज्ञवल्क्य ऋषिः लिङ्गोक्ता देवताः त्रिष्टुप् छन्दः अष्टम्या अनुष्टुप् छन्दः होमे विनियोगः । त्रिंशत्स्वसार उपयन्ति निष्कृतꣳ समानं योनिं प्रतिमुञ्चमानाः । ऋतूंस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः

स्वाहा। इदं स्वसृभ्यो न मम । १ । ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा॥ इदं रात्र्यै न मम।२।एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः स्वाहा ॥ इदमष्टकायै न मम।३। अनानुजामनुजां मामकर्त सत्यं वदन्त्यन्विच्छ एतत्। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त स्वाहा ॥ इदं रात्रीभ्यो न मम । ४ । अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त स्वाहा ॥ इदं रात्रीभ्यो न मम ।५। पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनुपञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकꣳ स्वाहा ॥ इदं रात्रीभ्यो न मम।६। ऋतस्य गर्भः प्रथमा व्यूषिष्यपामेका महिमानं बिभर्त्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छतु स्वाहा ॥ इदं रात्र्यै न मम।७। या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे।सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳ स्वाहा॥ इदं रात्र्यै न मम ।८। शुक्रऋषभा नभसा ज्योतिषागाद्विश्वरूपा शबली अग्निकेतुः । समानमर्थꣳ स्वपश्यमाना बिभ्रती जरामजरउष आगाः स्वाहा। इदं रात्र्यै न मम।९। ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्यौच्छत्साऽजीर्णा त्वं जरयासि सर्वमन्यत्स्वाहा ॥ इदं रात्र्यै न मम ।१०। ततः स्थालीपाकमभिघार्य स्रुवेणादाय चतस्र आहुतीर्जुहुयात् । शान्ता पृथिवी शिवमन्तरिक्षꣳ शं नो द्यौरभयं कृणोतु । शन्नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा ॥ इदं पृथिव्यै अन्तरिक्षाय दिवे दिग्भ्यः प्र-

दिग्भ्य आदिग्भ्यः अहोरात्राभ्यां न ममेति त्यागः । आपो मरीचीः परिपान्तु सर्वतो धाता समुद्र अपहन्तु पापम् । भूतं भविष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याꣳ स्वाहा। इदमद्भ्यो मरीचिभ्यो धात्रे समुद्राय ब्रह्मणे न मम । विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहा ॥ इदं विश्वेभ्य आदित्येभ्यो वसुभ्यो देवेभ्यो रुद्रेभ्यो गोप्तृभ्यो मरुद्भ्यः प्रजापतये परमेष्ठिने च न मम । ततः अष्टकायै स्वाहा इदमष्टकायै न मम । ततः अपूपमभिघार्य किञ्चित्स्विष्टकृदर्थं पात्रेऽवशेषयन् स्रुवेणावदाय जुहुयात् । इन्द्राय स्वाहा इदमिन्द्राय न मम। ततः स्थालीपाकापूपशेषाभ्यां स्विष्टकृत् । ततो व्याहृत्यादि हुत्वा शेषं समापयेत् ।

इत्यष्टकाकर्मपद्धतिः ।

ततः श्वोभूतेऽन्वष्टकाकर्म ।

तत्र पारस्करः, श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत् । स्त्रीभ्यश्चोपसेचनं च कर्षूषु सुरया तर्पणेन चाञ्जनानुलेपनꣳस्रजश्च । आचार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन् इति ।

श्वः अष्टकानामुत्तरेद्युः। अन्वष्टकासु चतसृणामप्यष्टकानाम् अपरेद्युः कर्म भवति। तत्र पार्श्वसक्थिसव्याभ्याम्। पार्श्वं च सक्थि च पार्श्वसक्थिनी ते च सव्ये ताभ्यां पार्श्वसक्थिसव्याभ्याम् परिवृते सर्वतः आच्छादिते गृहे।तच्चार्थात्परिमाणम्।चतुरस्रमुदग्द्वारमिति कारिकाकारः।पिण्डपितृयज्ञवत्। तत्र पिण्डपितृयज्ञ इत्यत्र यदुक्तं तत् भवतीत्यर्थः । विशेषमाह । स्त्रीभ्यश्च । अत्र स्त्रीभ्यः मातृपितृपितामहीप्रपितामहीभ्योऽपि ददाति । चकारः पिण्डपि-

तृयज्ञवदित्यनेन प्राप्तैः पितृपितामहप्रपितामहैः सह समुच्चयार्थः। अत्र सामान्योऽपि स्त्रीशब्दः पित्रादिसन्निधानात् मात्रादिपरोऽवसीयते। उपसेचनं च कर्षूषु सुरया तर्पणेन चाञ्जनानुलेपनं स्रजश्च। केवलं ताभ्यः पिण्डानेव दद्यादिति न। किन्तु उपसेचनं च कर्षूषु सुरया कुर्यात्। तर्पणेन च। तर्पयत्यनेनेति तर्पणं सक्तवः तैरपि। चकारात् उपसेचनं कुर्यात्। अञ्जनं सौवीराञ्जनं कज्जलं वा। अनुलेपनं चन्दनादि सुगन्धिद्रव्यम्। स्रजः पुष्पनिर्मिता मालाः। चकारात् दद्यात्। अत्र च स्त्रीपिण्डसमीपे कृतेषु गर्तेषु सुरया तर्पणेन चोपसेचनम्। अञ्जनादीनां तु स्त्रीपिण्डेष्वेव दानमिति कर्के स्पष्टम्। आचार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन्। आचार्य उपनयनपूर्वकं वेदाध्यापकः। अन्तेवासी नैष्ठिको ब्रह्मचारी। अनपत्याः ये पितृव्यादयः तेभ्यश्च यदि कामयेत्तदा दद्यान्न नियमः। हरिहरादयस्तु अनपत्येभ्य इति आचार्यान्तेवासिविशेषणमेव मन्यन्ते।

इति सूत्रार्थः।

अथ प्रयोगः।

तत्र सर्वत आच्छादिते आवसथ्याग्नौ कर्म। नित्यवैश्वदेवान्ते अपराह्णे सङ्कल्पादि पूर्वोक्तपिण्डपितृयज्ञवत् कर्म कुर्यात्। विशेषस्तु आसादने उलूखलमुशलाभावः। शूर्पस्य च व्रीहिस्थाने। क्रीतयोर्लब्धयोर्वा छागस्य पार्श्वसक्थ्नोर्मांसम् सुरा अञ्जनम् अनुलेपनम् स्रजः सूत्राणि च। मांसं च छित्वा श्लक्ष्णानि कृत्वा तेषां ग्रहणादि कार्यमिति वासुदेवः। कारिकाकारोऽपि ग्रहणमाह—

अवखण्ड्यासिना मांसं श्लक्ष्णं वह्नेस्तु पश्चिमम्।
एतत्स्थाल्यां तु गृह्णीयात् स्रुचि वा पुनरेत्य सः॥ इति।

हरिहरस्तु मांसस्य ग्रहणं नेच्छति केवलं छित्वा स्थाल्यां प्रक्षिप्य पचेदित्याह। मेक्षणप्राशनान्ते कृते दक्षिणाग्निमपरेण पूर्वेण वा लेखाद्वयकरणम् उभयत्राप्युल्मुकनिधानमिति हरिहरे स्पष्टम् वासुदेव्यां च। प्रथमरेखायां पित्रादिभ्योऽवनेजनं दत्त्वाऽमुकगोत्रे अस्मन्मातरमुकि देवि अवनेनिक्ष्व इति द्वितीयरेखाया मूले अवनेज्य तस्या एव मध्याग्रयोः गोत्रादि पितामहि अवनेनिक्ष्वेति प्रपितामहि अवनेनिक्ष्वेत्यवनेज्य सकृदाच्छिन्नस्तरणादि अमुकगोत्र पितरमुकशर्मन्नेतत्ते मांसं स्वधेति पित्रे दत्त्वा एवं पितामहप्रपितामहयोश्च दत्त्वा द्वितीयलेखायाम् अमुकगोत्रेऽस्मन्मातरमुकि देवि एतत्ते मांसं स्वधेति मात्रे दत्त्वा एवं पितामहीप्रपितामह्योश्चावनेजनस्थाने दत्त्वा इच्छया मात्रादिपिण्डसमीपे अवनेजनसकृदास्तरणपूर्वकम् अनपत्येभ्य आचार्यान्तेवासिभ्यः यथासम्भवं मांसपिण्डान् दद्यात्। चकारादन्येभ्योऽपि सपिण्डादिभ्यो दद्यादिति हरिहरः। स्त्रीपिण्डसान्निधानेऽवटत्रयखननम्। प्रादेशमात्रं खातम् चतुरङ्गुलं दीर्घता अङ्गुलं विपुलतेति गर्गः।

स्त्रीपिण्डसन्निधौ पिण्डसमं खात्वाऽवटत्रयम् ।
यथापूर्वं ततस्तासां सुराद्यैरभितर्पणम् ॥

इति रेणुः। अमुकगोत्रेऽमुकि देवि सुरां पिबस्वेत्येकत्रावटे सुरां प्रसिच्य तथैव पितामहीप्रपितामह्योरपि इतरयोरवटयोरासिच्य सक्तूनादायामुकगोत्रेऽमुकि तृप्यस्वेति मातृप्रभृतिभ्यः सक्तून् दत्त्वा तथैव गोत्राद्युच्चार्य अञ्जस्वेत्यञ्जनं दत्त्वा तथैवानुलिम्पस्वेत्यनुलेपनं दत्त्वा स्रजोऽपिनह्यस्वेति स्रजो दत्त्वाऽत्र पितर इति जपाद्युल्मुकप्रक्षेपान्तं कर्म कुर्यात्। ततोऽन्वष्टकाश्राद्धं कुर्यात्। इदं च मातरि विद्यमानायां न भवतीति गङ्गाधरः।

कारिकाकाररेणुश्च,

मातर्यविद्यमानायामान्वष्टक्यमिदं भवेत् । इति ।

अन्योऽपि विशेषस्तत्रैव ।

केचिल्लोकभयादत्र प्रत्यक्षां नाहरेत्सुराम् ।

किन्तु तत्सदृशं द्रव्यं गुडवार्यादिकं भवेत् ॥ इति ।

अत एव गर्गः सुराद्रव्यस्यैवासादनमाह—

काण्डहरीतकी गुडश्चेति ।

इत्यन्वष्टका ।

पौषीपौर्णमास्यनन्तरभाविन्यामष्टम्यां द्वितीयाष्टका ।

तत्र पारस्करः, ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येत्यपूपमांसशाकैर्यथासङ्ख्यमिति पूर्वलिखितसूत्रेणैव देवतायाः सामान्यतो मांसरूपद्रव्यस्य च लाभात्तद्विशेषाकाङ्क्षायामाह—

मध्यमा गवेति ।

वैश्वदेवी मध्यमाष्टका गोमांसेन निर्वर्त्तनीयेत्यर्थः । एवं चात्राष्टकाशब्दः द्रव्यदेवतासम्बन्धानुमितपशुहोमवाचकः । तत्र च दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् । तथा दर्विहोमाः पौर्णमासधर्माः जुहोत्यविशेषात् जुहूदर्शनाच्च तूष्णीमनर्थलुप्ता इत्यादि । तथा अग्नीषोमीयात्पशुष्वित्यादिन्यायमूलककात्यायनसूत्रैः प्रापितानां दर्शपूर्णमासधर्माणाम् अग्नीषोमीयधर्माणां च एष एव विधिर्यत्र क्वचिद्धोम इतिसूत्रेण शब्दत एव एतत्सूत्रस्थैत्रकारस्य प्रकारान्तरयोजनापक्षेऽपि प्राप्तानां प्रणयनादीनां प्रणीयेत्यादिना पुनर्विधानादर्थतो निराकरणात् पशुश्चेदाप्लाव्येत्यादिपारस्करसूत्रैः केषां चिद्धर्माणां प्रतिप्रसवाच्च कुशकण्डिकोक्तसर्वहोमसाधारणधर्मैः पशुश्चेदाप्लाव्येत्यादिना प्रतिप्रसूतधर्मैश्चायं पशुः कर्त्तव्य

इत्यवगम्यते । प्रतिप्रसूताश्च धर्माः परिव्ययणादयः ।

तथा च पारस्करसूत्रम्,

पशुश्चेदाप्लाव्याऽगामग्रेणाग्नीन्परीत्य पलाशशाखां निहन्ति। परिव्ययणोपाकरणनियोजनप्रोक्षणान्याम्नुता कुर्याद्यच्चान्यत् । परिपशव्ये हुत्वा तूष्णीमपराः पञ्च । वपोद्धरणं चाभिघारयेद्देवतां त्वादिशेत् उपाकरणनियोजनप्रोक्षणेषु । स्थालीपाके चैवम्। वपाꣳ हुत्वावदानान्यवद्यति । सर्वाणि त्रीणि पञ्च वा । स्थालीपाकमिश्राण्यवदानानि जुहोति । पश्वङ्गं दक्षिणेति ।

अस्यार्थः । पशुश्चेदाप्लाव्याऽगामग्रेणाग्नीन् परीत्य पलाशशाखां निहन्ति । चेत् यदा स्मार्तः पशुः क्रियते तदा तं पशुम् आप्लाव्य अगां गोपशुं वर्जयित्वा गोपशोश्चाप्लावनाभावः। अग्रेण पुरस्तात् अग्नीन् परीत्य प्रादक्षिण्येन गत्वा पलाशशाखां निहन्ति निखनति गर्ते आरोपयति । यूपकार्यत्वात् शाखायाः इदं निखननम् आज्यासादनोत्तरकाले कार्यम्। श्रौते तस्मिन्नेव काले दृष्टत्वात्। अत्राग्नीनिति बहुवचनं शूलगवपश्वाभिप्रायेण । परिव्ययणोपाकरणनियोजनप्रोक्षणान्याम्नुता कुर्यात् यच्चान्यत् । परिव्ययणं यथा श्रौते उक्तम्—

त्रिगुणा त्रिव्यामा कौशी रसना तया नाभिमात्रे त्रिवृतं परिव्ययतीति शाखाया वेष्टनम् ।

उपाकरणं तदपि तत्रैवोक्तम्—

उपावीरसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवानिति तृणेन पशोरुपस्पर्शनम् ।

नियोजनम् तदपि तत्र यथा दृष्टम्—

द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा शृङ्गमभिदक्षिणं बध्नातीति पशोः शाखायां बन्धनम् ।

प्रोक्षणं प्रोक्षणीभिरद्भिः पशोरासेचनम् । एतानि परिव्ययणोपाकरणनियोजनप्रोक्षणानि आवृता मन्त्ररहितक्रियामात्रेण कुर्यात् । न केवलमेतान्येव । किन्तु अन्यदपि । यत् पशुसंस्कारकं पशुसमञ्जनपर्यग्निकरणप्राणशोधनादिकं तदपि तथैव मन्त्ररहितं कुर्यात् । परिपशव्ये हुत्वा तूष्णीमपराः पञ्च । पशव्यं संज्ञपनं परि उभयतः संज्ञपनात् पूर्वं पश्चाच्च हूयेते इति परिपशव्ये स्वाहा देवेभ्यः देवेभ्यः स्वाहेत्याहुती ते हुत्वा तूष्णीं मन्त्रवर्जमपराः अन्याः पञ्च आज्याहुतीर्जुहोति ।वपोद्धरणं चाभिघारयेत् । पशोर्वपाया उद्धरणं यथोक्तं कृत्वा निष्काशनम् उक्तप्रकारेण तां वपाम् अभिघारयेत् अञ्ज्यात् अर्थात् घृतेन । देवतां त्वादिशेदुपाकरणनियोजनप्रोक्षणेषु । पूर्वोक्तेषु उपाकरणनियोजनप्रोक्षणेषु देवतां यस्यै देवतायै पशुः आलब्धो भवति तां देवताम् आदिशेत् उच्चरेत् । अमुष्मै त्वा उपाकरोमि अमुष्मै त्वा नियुनज्मि अमुष्मै त्वा जुष्टं प्रोक्षामीत्येवम् । स्थालीपाके चैवमिति । स्थालीपाके तद्दैवत्ये चरौ च एवं देवतामादिशेत् । एवमिति यथा उपाकरणादिषु । तत्र चरोरुपाकरणनियोजनाभावात् प्रोक्षणमात्रं गृह्यते । अमुष्मै त्वा जुष्टं प्रोक्षामीति तद्देवत्यतण्डुलप्रोक्षणं कर्तव्यमित्यर्थः ।वपार्ठ ञ्हुत्वाव दानान्यवद्यति सर्वाणि त्रीणि पञ्च वा।वपां च यथोक्तविधिना हुत्वा पशोः हृदयादीन्यवदानानि अवद्यति छिनत्ति।कियन्ति सर्वाणि । हृदयं जिह्वां क्रोडं सव्यसक्थि पूर्वनडकं पार्श्वे यकृत् वृक्कौ गुदमध्यं दक्षिणा श्रोणिरित्येकादश प्रधानार्थानि। दक्षिणसक्थि पूर्वनडकं गुदतृतीयापणिष्ठं सव्या श्रोणिरिति सौविष्टकृतानि । यद्वा हृदयादीनि त्रीणि अथ वा पञ्च अवद्यति। अत्र त्रीणि पञ्च वा यदावद्यति तदा अवशिष्टेभ्यः स्विष्टकृत्।यदा च एकादशावद्यति

तदाऽन्येभ्यः त्रिभ्यः स्विष्टकृत् । वपा॰ हुत्वावदानान्यवद्यतीति वदता पशुपुरोडाशो निरस्तः । स्थालीपाकमिश्राण्यवदानानि जुहोति । स्पष्टम् । पश्वङ्गं दक्षिणा । पशोर्यदङ्गं तदेव दक्षिणा । इति सूत्रार्थः ।

अत्र पशोरितिकर्तव्यतायाः श्रौतसूत्रसाध्यत्वात्तान्यपि व्याख्यायन्ते ।

बर्हिषि प्लक्षशाखाः स्तृणाति ।

प्लक्षशाखानां पशुसंस्कारत्वादत्राप्यास्तरणं कार्यम् । पलाशशाखां निहन्तीति विशेषवचनादवटस्य यथोक्तखननाभावः ।

तथा च रेणुः,

नैवात्रावटसंस्कारो न यूपस्य च संस्कृतिः ।
किन्तु रोपणमात्रं स्याद्विशेषवचनादिह ॥ इति ।

शाखाया उपकारकत्वात्परिव्ययणं कार्यम् । तच्च त्रिगुणेत्यादि पूर्वोक्तम् । शकलस्याभावादेवावगूहनाभावः । अन्ये तु शाखाया दार्ढ्यार्थं येन केनचित् शकलेनाप्यवगूहनं कार्यमित्याहुः परिव्ययणवत् ।

उपावीरसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवानिति ।

अत एव

कारिकाकारः,

तूष्णीं तृणमुदादाय पशुं तेन स्पृशेदिह ।
उपाकरोमीत्यन्तं स्यात्पूर्ववद्देवतापदम् ॥
अग्रेणौपासनान्तं तं पशुं प्रत्यङ्मुखं स्थितम् ।
शिरोदेशे स्पृशेदेतदुपाकरणमुच्यते ॥

इत्याह । देवतां त्वादिशेदुपाकरणनियोजनप्रोक्षणेष्विति सूत्राच्च देवतादेशमात्रपूर्वकमुपाकरणं भवति । नियोजनमप्याह—

कात्यायनः, द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्यत्वेति। देवस्यत्वेति यूप इति।

द्विगुणरशनया गुणद्वयनिर्मितया रशनया द्विव्यामया व्यामद्वयपरिमितया कौश्या कुशमय्या पाशं कृत्वा। हरिस्वामिलिखनात् नागपाशं कृत्वेत्यर्थः। अन्तरा शृङ्गयोरन्तराले। अभिदक्षिणम्। अभिदक्षिणं दक्षिणशृङ्गस्याभिमुखमित्यर्थः। बध्नाति प्रतिमुञ्चति। पाशं कृत्वा प्रतिमुञ्चत्यृतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति श्रुतेः। तत्र मन्त्रः— ऋतस्य त्वेति। देवस्य त्वेति यूपे। देवस्य त्वा सवितुरिति मन्त्रेण यूपे। बध्नातीत्यनुवर्त्तते। तथाच देवस्यत्वेति मन्त्रेण तस्य यूपे बन्धनं करोतीत्यर्थः। अथ बध्नातीत्यस्य प्रतिमुञ्चतीत्यर्थः पूर्वं कृत इति न बध्नातीत्यनुवृत्त्याऽत्र बन्धनलाभ इति चेत्, न। बध्नातीत्यस्य तत्रापि बन्धनमेवार्थः। बन्धनं च क्वचित्पाशप्रतिमोकः क्वचिदन्यदिति। तदनुवृत्त्या बन्धनरूपार्थलाभे विरोधाभावात्। एतच्च नियोजनं शाखाया उत्तरतो भवति। उत्तरत उपचारो यज्ञ इति कात्यायनसूत्रात्। दक्षिणेऽर्द्धशिरसि पाशेनाक्ष्णया प्रतिमुच्य धर्ता मानुष इति उत्तरतो यूपस्य नियुनक्तीत्यापस्तम्बसूत्राच्च। अत्र देवस्यत्वेति मन्त्रश्च उक्तसूत्रेण निवर्त्तते। देवतां त्वादिशेदिति सूत्राच्च देवतादेशपूर्वकं नियोजनं भवतीति। प्रोक्षणन्तु व्याख्यातमेव। एतच्च प्रोक्षणं ब्रह्मणोऽनुज्ञां गृहीत्वा कर्तव्यम्। अग्नीषोमीयपशौ तथैव दृष्टत्वात्। अनुज्ञा च सङ्केतादिनैव ग्राह्या। ब्रह्मन् हविः प्रोक्षिष्यामीत्यादीनां मन्त्रत्वेन पूर्वलिखितसूत्रेणैव निवर्तितत्वात्। अत्रापि पूर्वलिखितसूत्राद्देवतादेशो भवत्येव। यच्चान्यत्। यच्च अन्यत् तदपि मन्त्ररहितक्रियया निर्वर्त्तनीयमित्य-

र्थः। किमन्यदिति चेत्, पशुसंस्कारकम्। कथमेवमिति चेत्, प्रोक्षणादिसमभिव्याहारात् । सूत्रान्तरेष्वपि पशुसंस्कारकाणामेव पदार्थानां दर्शनात् ।

तथा च गोभिलगृह्यम्, यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टं प्रोक्षामीति उल्मुकेन परिहेरत्परिवाजपतिः काविरिति अपः पानाय दद्यात्पीतशेषमधस्तात्पशोरवासिञ्चेदात्तं देवेभ्यो हविरिति अथैनमुदगग्नेः संज्ञपयन्ति प्राक्शिरसमुदक्पादं देवदेवत्ये दक्षिणाशिरसं प्रत्यक्पादमपि नृदेवत्ये संज्ञप्तायां जुहुयाद्यत्पशुर्मायुमकृतेति पत्नी चोदकमादाय पशोः सर्वाणि स्रोतांसि प्रक्षालयेदग्रेणानाभि पवित्रे अन्तर्द्धायानुलोममकृत्वा वपामुद्धरन्ति ताꣳ॰ शाखाविशाखयोरवसज्याभ्युक्ष्य स्नापयेत्प्रच्युतितायां विशसथेति ब्रूयाद्यथा न प्रागग्नेर्भूमिꣳ शोणितं गच्छेत् तथा तामभिघार्योदगुद्रास्य प्रत्यभिघारयेत् स्थालीपाकावृता वपामवदाय स्विष्टकृदावृता वाष्टकायै जुहोति स्थालीपाकावृतान्यत् स्थालीपाकावृतान्यदिति ।

एवञ्च पशुसंस्कारकाणि आस्योपग्रहणादीनि सर्वाण्यपि भवन्ति। तत्रास्योपग्रहणम् अधस्तादुपोक्षणीः पशोः आस्ये मुखे उपगृह्णाति उपसमीपे स्थापयतीत्यर्थः । एतच्च स्थापनं पानार्थम्। अथोपगृह्णात्यपां पेरुरसीति प्रकृत्यैव तदेनमन्तरतो मेध्यं करोतीति श्रुतेः। अथोपगृह्णात्यग्निः पशुरासीदिति प्रकृत्य तर्पयित्वाऽश्वं पुनः संस्कृत्य प्रोक्षणीरितरान् पशून् प्रोक्षतीत्यश्वमेधप्रकरणीयश्रुतेश्च । गोभिलेन तु अत एव पयः पानाय दद्यादित्युक्तम् । अपो देवीरित्यधस्तादुपोक्षति। अपोदेवीरिति मन्त्रेण यथा अधस्तात् उदरहृदयादिप्रदेशम् उपोक्षति ।

श्रुतिरपि, अथाधस्तादुपोक्षत्यपोदेवीरितीति ।

तत उपयमनकुशादानादिपूर्वकम् उत्तराघारमाघार्य पशोः समञ्जनं कार्यम् । तदुक्तं पशौ—

कात्यायनेन, उत्तराघार्य पशुं पूर्वं समनक्ति ललाटांऽसश्रोणिषु सन्त इति प्रतिमन्त्रम् ।

उत्तराघार्य उत्तराघारं कृत्वा। पशुं पूर्वं समनक्ति।ध्रुवासमञ्जनात्पूर्वं पशुं सन्त इति प्रतिमन्त्रं समनक्ति। ललाटांऽसश्रोणिषु। ललाटे भाले अंसयोः स्कन्धयोः श्रोण्योः कट्योः ।

तथा च श्रुतिः, स ललाटे समनक्ति सन्ते प्राणो वातेन गच्छतामिति, समङ्गानि यजत्रैरित्यंऽसयोः, संयज्ञपतिराशिषेति श्रोण्योरिति ।

ततः असिमादाय स्रुवाग्रे अक्त्वा तेन पशोर्ललाटे उपस्पृशति ।

तदुक्तं तेनैव, दशेष्ट्वा प्रयाजानाह शासमाहरेति।स्वरुमादायोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति ।

दश प्रयाजानिष्ट्वा शासमाहरेति ब्रूयात् । आनीते च शासे शासं स्वरुं चादाय जुह्वग्रे अक्त्वा ताभ्यां शासस्वरुभ्यां पशोर्ललाटमुपस्पृशति । तत्र मन्त्रः—घृतेनाक्ताविति । अत्र च स्वरोरभावात् शासमेव स्रुवाग्रे अक्त्वा तेनैव पशोर्ललाटोपस्पर्शनं कार्यमिति सम्प्रदायः। शासस्वरुभ्यामुपस्पर्शनस्य पशुसंस्कारकत्वात्पशुसंस्कारानुरोधेन सौमिकचातुर्मास्येषु शुक्रामन्थिसम्मार्जनार्थलौकिकशकलवत् लौकिकं स्वरुमादायासिस्वरू स्रुवाग्रे अक्त्वा ताभ्यामुपस्पृशतीत्यन्ये । असिस्रुवाभ्यामुपस्पृशतीति कश्चित् । तद्विचारणीयम् । ततः पर्यग्निकरणम् । तत्प्रकारस्तु तेनैवोक्तः—

आहवनीयोल्मुकमादायाग्नीध्रः त्रिः समन्तं पर्येति पश्वा-

ज्यशामित्रदेशयूपचात्वालाहवनीयानाज्यपशुशामित्रान् वेति ।

आहवनीयोल्मुकमादाय आग्नीध्रः त्रिवारं सर्वतः प्रदक्षिणं पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान् पर्येति । अथवा आज्यपशुशामित्रान् पूर्ववदेव पर्येति । अत्र च शामित्रदेशचात्वालाहवनीयादीनामभावात् शाखाग्न्योश्च यूपाहवनीयस्थानीयत्वात् आवसथ्यस्योल्मुकं गृहीत्वा स्वयमेव पश्वाज्यशाखाग्नीनां सर्वतः वारत्रयं पर्येति । अथ वा आज्यपश्वोः सर्वतः वारत्रयं पर्येति । ततः तदुल्मुकम् अग्नौ प्रक्षिप्य पश्वाज्यशाखाग्नीनामाज्यपश्वोर्वा सर्वतः अप्रादाक्षिण्येन वारत्रयं प्रतिपर्येति ।

**तथाचोक्तं तत्रैव,** प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येतीति । ततः पशुं कण्ठे बध्वा शामिता उदीच्यां दिशि संज्ञपनार्थं नयति।

तथाचाग्नीषोमीये कर्कादिधृतश्रुतिः, शमितैनं कण्ठे बध्वा नयतीति ।

तं नीयमानं पशुं वपाश्रपणीभ्यामन्वारभते । तदुक्तं तत्र

**कात्यायनेन,** पुनरादायोदङ् प्रतिपद्यते । पशुश्चान्वक् प्रतिप्रस्थाताऽन्वारभत एवैनं वपाश्रपणीभ्यां काष्मर्यमयीभ्यां विशाखाविशाखाभ्यामिति ।

आग्नीध्रः शामित्रार्थं पुनः आहवनीयादुल्मुकमादायोदङ् प्रतिपद्यते उदङ्मुखः गच्छति । पशुश्चान्वक् । पशुः तम् आग्नीध्रम् अन्वक् अनु पश्चादञ्चतीत्यन्वक् आग्नीध्रपृष्ठतो गच्छतीत्यर्थः । प्रतिप्रस्थाता ऋत्विग्विशेषः । स एनं नीयमानं पशुम् अन्वारभते स्पृशति । वपाश्रपणीभ्यां वपा श्रप्यते आभ्यामिति वपाश्रपण्यौ ताभ्याम् । काष्मर्यमयीभ्यां श्रीपर्ण्यवयवभूताभ्याम् । विशाखाविशाखाभ्याम् । द्विशृङ्गैकशृङ्गाभ्यामिति काठके । द्विशूलैकशूलाभ्यामित्यापस्तम्बः । अतश्च द्विशूला मेध्याकारा त्रि-

शाखा, ऋज्वी शाखा अविशाखा ताभ्यामित्यर्थः। तत्परिमाणं यज्ञपार्श्वे उक्तम्—

स्फ्यशूर्पोपवेषाध्मानपि प्रणयनीयावधि वपाश्रपण्यौ कुर्यादरत्निमात्राणीति।

अत्र च एकाग्नय इति कात्यायनसूत्रेण शामित्रादेर्निराकरणात् ऋत्विगन्तरस्य चाभावात् अन्वारम्भस्य च पशुसंस्कारकत्वादुल्मुकमनुपादायैव नीयमानं पशुं स्वयमेव वपाश्रपणीभ्यामन्वारभते इति। तृणद्वयमादाय पशुं शिरसि उन्मुच्य कण्ठे धृत्वा वा पलाशशाखातः उन्मुच्य रशनया वामकरेण धृत्वा दक्षिणेन वपाश्रपणीभ्यामन्वारब्धं पशुमुदङ् नयतीति तु हारिहरः। ततः तृणद्वयादानं तयोः तृणयोर्मध्ये एकं तृणं पशुसंज्ञपनदेशे उदगग्रं वा प्रक्षिपति।

तदुक्तं तत्रैव, वेदितृणेऽध्वर्युरादायेति।

तथा, पश्चात्तृणमुपास्यति वर्षे वर्षीयसीति।

ततः तस्मिन् तृणे शमिता मुखसङ्ग्रहणेन रज्ज्वादिना कण्ठवेष्टनेन वा यथाशब्दं न करोति तथा पशुं प्रत्यक्शिरसं प्राक्शिरसं वा उदक्पादं पातयित्वा निहन्ति।

तथाचोक्तं तत्रैव, तस्मिन्नेनं निघ्नन्ति प्रत्यक्शिरसमुदक्पादं प्राक्शिरसं वा सङ्गृह्य मुखं तमवघ्नन्त्यवाश्यमानं वेष्केण वेति।

वेष्कः गलावेष्टकः।

पारस्करः, परिपशव्ये हुत्वा तूष्णीमपराः पञ्च।

जुहोतीति शेषः। परिपशव्ये इत्याहुत्योः संज्ञा। ते वा एते परिपशव्ये इत्याहुत्यादिश्रुतेः। एवं च परिपशव्ये इतिसंज्ञके आहुती हुत्वा तूष्णीमपराः पञ्चाहुतीर्जुहोतीत्यर्थः। तद्धोमप्रकारश्च कात्यायनेनोक्तः—

स्वाहा देवेभ्य इति जुहोति ।

स्वाहा देवेभ्य इति मन्त्रेणैकाम् आहुतिं जुहोतीत्यर्थः । एवंविधाहुतीनां च पूर्णाहुतिविकारत्वम् ।

तथा च क्रतुसङ्ख्यापरिशिष्टम्, कर्मणां प्रकृतिमनुक्रमिष्यामो यास्ताः प्रकृतयः पूर्णाहुतिराहुतीनामिति ।

एवं च पूर्णाहुतिधर्माः सर्वत्र एवंविधास्वाहुतिषु भवन्ति । ते धर्माः कात्यायनेनोक्ताः ।

तद्यथा, निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वान्वारब्ध एव९ सर्वत्रेति ।

अस्यार्थः । निरुप्याज्यम् । आज्यं पात्रान्तरादाज्यस्थाल्यां प्रक्षिप्य । गार्हपत्येऽधिश्रित्य । गार्हपत्यसंज्ञकस्याग्नेरुपरि ताम् आज्यस्थालीं निधाय । स्रुक्स्रुवं च सम्मृज्य । स्रुवं च स्रुचं च सम्मार्ष्टीतिश्रुतेः प्रथमतः स्रुवस्य सम्मार्गः ततोऽनन्तरं स्रुचः । सूत्रे स्वल्पाच्तरत्वात् स्रुचः पूर्वं निर्देशः । प्रतिप्रधानमङ्गावृत्तिरिति न्यायाच्च भेदेन सम्मार्गः । स च द्रव्यान्तरानुपदेशात् क्वचित्पाणिनेति विशेषविधानाच्च दर्भैरेव कार्यः । उद्वास्य। गार्हपत्यादाज्यस्थालीं गृहीत्वा उत्तरतः खराद्बहिर्भूमौ निधाय । उत्पूय। साग्राभ्यां दर्भाभ्यामाज्यस्थालीस्थमाज्यमुत्पूतं कृत्वा । अवेक्ष्य तस्याज्यस्यावेक्षणं कृत्वा । गृहीत्वा । आज्यं स्थाल्याः सकाशात्स्रुवेण गृहीत्वा । अन्वारब्धः । यजमानेन कृतस्पर्शः । एव९ सर्वत्रेति । यत्र यत्र अव्यक्ता जुहोतिनोदना यथा यूपाहुतिं जुहोतीत्यादि तत्र सर्वत्र एवम् अधिश्रयणादिकं कर्तव्यमित्यर्थः । इतोऽपि पूर्णाहुतिधर्माः परिपशव्याहुतौ भवन्तीत्यवगम्यत इति ।

प्रकृते च स्रुचः अभावात् स्रुवस्य च संस्कृतत्वादेतदुक्तरी-

त्या आज्यमात्रमावसथ्ये संस्कृत्य स्रुवेणैव समिदाधानपूर्वकं होमः कार्यः। समिदाधानपूर्वकत्वं चोक्तं पूर्णाहुतिप्रकृतिभूतप्रायश्चित्ताहुतिश्रुत्या, "गार्हपत्य आज्यमाधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यं गृहीत्वा समिधमुपसङ्गृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति" इति। यत्र यत्राहुतिसम्पत्तिस्तत्र तत्र समित्सम्पत्तिदर्शनादप्ययमर्थोऽवसीयते। यथा पञ्चाग्निविद्यायां तस्यादित्य एव समित् तस्य सम्वत्सर एव समित् तस्य पृथिव्येव समिदित्येवमादि।

अपरे तु एष एव विधिर्यत्र क्वचिद्धोम इत्यादिसूत्रैर्दर्शपूर्णमासादिधर्माणामिव पूर्णाहुतिधर्माणामपि निराकरणात्कुशकण्डिकोक्तेतिकर्तव्यतया च संस्कृतस्याज्यस्य विद्यमानत्वान्न परिपशव्याहुत्यर्थं पुनः पूर्णाहुतिवदाज्यसंस्कारः। किन्तु पूर्वसंस्कृतेनैवाज्येन तद्धोम इत्याहुः। द्वितीयपरिपशव्याहुतिमाह—

कात्यायनः, संज्ञप्तः पशुरिति प्रोक्ते शेतां नु मुहूर्तमित्याहासोमे। ततो देवेभ्यः स्वाहेति जुहोति। न वैते जुहुयात्। इति।

स्वाहा देवेभ्य इति प्रथमा, देवेभ्यः स्वाहेति च द्वितीया, एते उभे आहुती न वा जुहुयादित्यर्थः। प्रकृते च प्रैषादेर्निवर्तितत्वात् शमित्रा सङ्केतादिना संज्ञप्तः पशुरिति ज्ञापिते पूर्वाहुतिहोमावशिष्टाज्येन देवेभ्यः स्वाहेति जुहोति। यद्यपि श्रौते परिपशव्याहुत्योर्विकल्पस्तथापीह परिपशव्ये हुत्वा तूष्णीमपराः पञ्चेति नित्यवत्पाठान्नियम इति। तूष्णीमपराः पञ्च। अपराः पञ्चाहुतीः तूष्णीं जुहोति। तूष्णीमित्युक्तत्वाच्च प्रजापतिरेतासां देवतेति गम्यते। यत्तूष्णीं तत्प्राजापत्यम्। तथा, अनिरुक्तं प्राजापत्यमिति शाखान्तरीयश्रुतेः।

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

इति छन्दोगपरिशिष्टवचनादप्ययमर्थो लभ्यते । एवं च प्रजापतिमुद्दिश्य होमादिकं कार्यमिति । ततः पशोः बन्धनरज्जुं वपाश्रपणीभ्यामुत्तरस्यां दिशि क्वचित्प्रक्षिपति । तदुक्तं तत्रैव

**कात्यायनेन,**

वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति।

वपाश्रपणीभ्यां नियोजनीं चात्वाले विधिना सम्पादिते गर्त्ते प्रास्यति प्रक्षिपति माहिर्भूरिति मन्त्रेणेत्यर्थः। प्रकृते च चात्वालस्याभावात् तत्प्रासनस्य प्रतिपत्तिरूपसंस्कारत्वेनावश्यकत्वात् उत्तरत उपचारो वै यज्ञ इति श्रुतेश्च उतरस्यां दिशि यत्र कुत्रचित्तूष्णीं कर्त्तव्यमिति । ततः उपकल्पितोदपात्रहस्ता समानीता पत्नी पशोः मुखादिषु उदपात्रस्थमुदकं प्रत्येकं प्रक्षिपति । तदुक्तं तत्र—

**कात्यायनेन,**

पशोः प्राणान् शुन्धति पत्नी । मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान् स९ हृत्य बाचं ते शुन्धामीति प्रतिमन्त्रमिति ।

प्राणान् प्राणायतनानि । मेढ्रं प्रजननम् । शेषं प्रसिद्धमेव । प्रकृते मन्त्रस्य निवर्त्तितत्वात्तूष्णीमेव प्रत्येकं शोधनं भवति। न चाध्वर्य्वादीनामिव पत्न्या अपि नात्र कर्तृत्वम्, किन्तु स्वस्यैवेति वाच्यम् । पूर्वलिखितगोभिलसूत्रेऽत्र पत्न्या एव कर्त्तृत्वदर्शनात् "पत्नी चोदकमादाय सर्वाणि स्रोतांसि प्रक्षालयेत्" इति । ततः तदुदकशेषेण यजमानः पशोः शिरःप्रभृतीनि परिषिञ्चति ।

**तदुक्तं कात्यायनेन,** शेषेण यजमानश्च शिरः प्रभृत्यनुषिञ्चतो मनस्त इति शिरो यत्ते क्रूरमित्यङ्गानि शमहोभ्य इति

पश्चात्पशोर्निषिञ्चत इति ।

शेषेण पत्नीकृतशोधनावशिष्टेन। यजमानः चकाराद्ध्वर्युश्च। शिरःप्रभृति शिरःप्रभृत्यङ्गानि शिरोवाक्प्राणचक्षुःश्रोत्रनाभिपायुचरणानि अनुषिञ्चतः । मनस्त इति शिरः । मनस्त इति मन्त्रेण शिरः अनुषिञ्चतः । यत्ते क्रूरमित्यङ्गानि । यत्ते क्रूरमिति मन्त्रेण सर्वाण्यङ्गान्यनुषिञ्चतः । अन्येष्वङ्गेषु च लिङ्गादेव मन्त्रप्राप्तिरिति न सूत्रकृता मन्त्रविनियोग उक्त इति । शमहोभ्य इति पश्चात्पशोर्निषिञ्चतः । शमहोभ्य इति मन्त्रेण पशोः पश्चाद्भागे जघनप्रदेशे अवशिष्टं जलं निनयतः । निनयनस्य पशुसंस्कारत्वात्पशुशरीर एव पश्चाद्भागे निनयनमिति । प्रकृते च मन्त्रस्याध्वर्योश्चाभावाद्यजमानः स्वयमेव तूष्णीं शिरः प्रभृतीन्यङ्गान्यनुषिञ्चति इति ।

ततः पशुमुत्तानं कृत्वा तन्नाभ्यग्रे प्रागग्रं तृणं निधाय घृताक्तियाऽसिधारया सतृणां त्वचं तिर्यक् पाटयित्वा द्विधाभूततृणस्य मूलमादाय तन्मूलं निःसृतलोहितेनोभयतः अक्त्वा उत्तरतो निरस्य वपां निष्काशयति ।

तदुक्तं तत्र कात्यायनेन, उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध इति । स्वधित इति प्रज्ञातयाभिनिधाय छित्वाग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति । निरस्तमित्यपास्यतीति ।

प्रज्ञातया प्रकर्षेण ज्ञातया धारया । सा या ज्ञाताश्रिस्तयाऽभिनिदधाति सा हि यजुष्कृता मेध्येति श्रुतेः। अत्र च मन्त्रस्य निवर्तितत्वात्तूष्णीमेताः क्रिया भवन्ति। तृणाग्रस्य सव्यहस्तकरणं तु न भवति। तस्य स्तोकाहुत्यर्थसमिदाधानस्थानापन्नतृणाग्रप्रासनार्थत्वात्। प्रकृते च तदभावात्। समिदाधानस्थानापत्तिश्च–

श्रुतौ यथा, स एतत्तृणमध्वर्युराहवनीये प्रास्यति वायो वेः स्तोकानामिति स्तोकानाᳪ हैषा समिदिति ।

तृणमूललोहिताञ्जनप्रासने तु भवतः । लोहितप्रतिपादनार्थत्वेन संस्कारकत्वात् । एतद्द्वयं न भवतीत्यपि कश्चित् । ततः वपां निष्कास्य वपाश्रपण्यौ आदाय प्रोर्णौति ।

तदुक्तं तत्र कात्यायनेन, वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी इति ।

ततः उदरसंलग्नां वपां छेदनेन पृथक्कृत्य क्वचिदुत्तरदेशे प्रक्षालयेत् ।

तदुक्तं तेनैव,

परिवास्य चात्वालेऽवसिच्येति ।

प्रकृते च चात्वालस्याभावादुत्तरतः प्रक्षालनमिति । अत्र परिवासनानन्तरं वपामभिघारयेत् । तथा च पूर्वलिखितपारस्करसूत्रम्,

वपोद्धरणं चाभिघारयेदिति ।

वपोद्धरणं तस्या अभिघारणं च कुर्यादित्यर्थः । अत्र चातिदेशप्राप्ताभिघारणानुवादे आनर्थक्यादपूर्वमेवाभिघारणान्तरं विधीयते । तस्य च पाठक्रमेणैवानुष्ठानं समुचितमिति वपापरिवासनोत्तरमभिघारणं युक्तमेव ।

अत एव कारिकाकारः,

नाभिमग्रे तृणादि स्याद्वपाप्रोर्णवनान्तिकम् ।
मूलाञ्जननिरसनं केचिदाहुस्तृणस्य तु ॥
शेषं यथोदितं कुर्यान्नाग्रेणात्र प्रयोजनम् ।
परिवास्य वपोद्धारं कृत्वा तामभिघारयेत् ॥ इति ।

तत अग्नेरुत्तरतः स्थित्वा प्रतप्य शाखाग्न्योरन्तरेण हृत्वा

स्वयं शाखाया बहिर्गत्वा अग्नेर्दक्षिणतः स्थित्वा वपां श्रपयेत् ।

तदुक्तं तत्र कात्यायनेन, उत्तरतस्तिष्ठन् प्रतप्य वपामन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्येति ।

अत्र च प्रतिप्रस्थातुरभावात् शाखायाश्च यूपकार्यकारित्वात् स्वयमेव यथोक्तान् पदार्थान् करोति । ततः श्रप्यमाणां वपां स्रुवेणाभिघारयति । अथ पशोः सान्नाय्यविकारत्वात् सान्नाय्ये च परिक्षालनान्तं कृत्वा सायंदोहमाहृत्य प्रातर्दोहमाहृत्य प्रातर्दोहं श्रपयित्वाभिघार्योद्वास्योभावनक्तीति सूत्रेण शृतस्यैव पयसः अभिघारणमुक्तमिति वपाया अपि शृताया एवाभिघारणं समुचितं न श्रप्यमाणाया इति चेत्, न । वपां स्रुवेणाभिघारयत्यग्निराज्यस्येति, स्तोकेभ्योऽनुवाचयति शृतायां शृता प्रचरेत्याह प्रतिप्रस्थातेति पशुप्रकरणीयसूत्रात् श्रप्यमाणाया एवाभिघारणस्य लाभात् । ततो वपां प्रत्याहृत्य स्वासने उपविश्य स्रुवेणाज्यं गृहीत्वा वपायाः तूष्णीं प्राणदानं विधाय आज्यस्योत्तरत आसाद्यालभते । प्राणदानासादनालम्भानां सान्नाय्यधर्मत्वेनात्रातिदेशप्राप्तत्वात् संस्कारकत्वाच्च करणं न विरुद्धम् । ततः मध्यमाष्टकायां विशेषस्यैवोक्तत्वात्प्रथमाष्टकाधर्माः सर्वेऽपि मध्यमाष्टकायां भवन्तीति प्रथमाष्टकोक्तरीत्यैवाज्यभागाविष्ट्वा त्रिंशत्स्वसार इत्यादिभिर्दशाहुतीश्च हुत्वा चरुणा शान्तापृथिवीत्यादिभिश्चतस्रो जुहुयात् । ततो वपाहोमार्थमासादितमर्थपरिमाणस्रुवमुपादाय सव्यहस्ते कृत्वा स्रुवान्तरेण तदुपस्तीर्य तत्र हिरण्यशकलमवधाय सम्पूर्णामेव वपां गृहीत्वा तत्रावधाय तदुपरि हिरण्यशकलमवधाय द्विः प्रत्युपस्तीर्य दक्षिणामुखः सव्यं जान्वाच्य प्राचीनावीतिनैव वह वपां जातवेद इति मन्त्रेण जुहोति इदं पितृभ्यो न ममेति त्या-

गः । उपस्तरणादिप्रकारश्चोक्तस्तत्र—

कात्यायनेन,

वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहे न्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति । हिरण्यमवधाय द्विरभिघारणꣳ सोमे इति ।

नन्वत्र सूत्रे सामान्यतोऽवदानस्योक्तत्वात्साम्नाय्ये विकृतित्वेन प्राप्तस्य वपाया द्विरवदानस्य केन बाध इति चेत्, न । उपस्तृणीत आज्यं तत्पृथिव्यै रूपं करोति हिरण्यशकलमवदधाति तदग्ने रूपं करोति वपामवदधाति तदन्तरिक्षस्य रूपं करोति हिरण्यशकलमवदधाति तदादित्यस्य रूपं करोत्यथ च उपरिष्टादभिघारयति तद्दिवो रूपं करोति सा वा एषा पञ्चावत्ता वपा भवतीति श्रुतौ पञ्चावत्तत्वस्य श्रुतत्वाद्वपाया द्विरवदाने गृह्यमाणे तद्बाधः स्यादिति । जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाऽभिघारयत्येवं पञ्चावत्ता भवति चतुरवत्तिनोऽपि पञ्चावत्तैव स्यादित्यापस्तम्बसूत्रादप्ययमर्थोऽवसीयते । अथाप्यऽग्नीषोमीये "अथाज्यमुपस्तृणीतेऽथ हिरण्यशकलमवदधात्यथ वपामवद्यन्नाहाग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीत्यथ हिरण्यशकलमवदधात्यथोपरिष्टात् द्विराज्यस्याभिघारति" इति द्विरभिघारणस्य श्रुतत्वात्पञ्चावत्तत्वस्य च बाधितत्वेन अतिदेशप्राप्तं वपाया द्विरवदानं स्यादेव । तत्र च सिद्धे वपाया द्विरवदाने तद्विकृतिभूतप्रकृतपशौ सुतरां तत् भविष्यतीति चेत्, न । निरूढपशोर्वपावदानप्रकारमुक्त्वा द्विरभिघारणꣳ सोम इत्यनेनाग्नीषोमीये द्विरभिघारणं विशेष इति वदता कात्यायनेन विशेषान्तराभावस्य द्योतितत्वात् । असिना वपां सकृद-

वदाय द्विरभिघार्येति काठकसूत्रादप्ययमर्थोऽध्यवसेय इ।
अत एव वासुदेवदीक्षिताः स्रुवोपस्तरणं हिरण्यशकलावधा
वपाग्रहणं पुनर्हिरण्यशकलावधानं द्विरभिघारणमित्येव लिखि
तवन्तः । कारिकाकारस्तु वपाया द्विरवदानमूचे ।

अथ स्रुवमुपस्तीर्य हिरण्यशकलं ततः ।
द्विरवद्येद्वपां तत्र लेखास्वर्णमथोपरि ॥
द्विरुपस्तीर्य मन्त्रेण हुनेद्वह वपामिति ॥ इति ।

हरिहरोऽप्येवमाह। वह वपामिति मन्त्रश्च पारस्करेणैवोक्तः।

मध्यमा गवा । तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्य इतीति ।

एतस्य मन्त्रस्य च पितृदेवत्यत्वाद्धोमस्य पितृदेवत्यत्वे सिद्धे तत्र विपर्यस्य पित्र्येषु सकृद्दक्षिणा चेति परिभाषातः प्राचीनावीतित्वादिकं भवतीति । अत्र केचित् अङ्गानां प्रधानोपचारन्यायात्प्रधानस्य वपाहोमस्य प्राचीनावीतिना कर्त्तव्यत्वे तदङ्गानाम् उद्धरणश्रपणाभिघारणप्रभृतीनामपि प्राचीनावीतिनैव करणमित्याहुः । युक्तं चैतत् । ततः रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप इति कात्यायनपरिभाषातः यज्ञोपवीती भूत्वा उदकं स्पृशेत् । ततः प्रतिपत्तिरूपसंस्कारत्वाद्वपाश्रपण्योः प्रासनं भवति । तथा वपाश्रपण्योर्मध्ये या द्विशृङ्गा विशाखा तां प्रागग्रां कृत्वा इतरां च प्रत्यगग्रां कृत्वा एकदैव ते उभे अग्नौ प्रक्षिपति। तदुक्तं तत्र—

कात्यायनेन,

हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां स्वाहाकृते इति ।

प्रकृते च मन्त्रमात्रस्य निवृत्तिः। उक्तहेतोः ।मार्ज्जनपशुपु-

रोडाशादेश्च पशुसंस्कारकत्वाभावादकरणम् । ततः पशोरवदानानि गृह्णाति ।

तथाच पारस्करः, वपाᳪ हुत्वाऽवदानान्यवद्यति सर्वाणि त्रीणि पञ्च वेति ।

वपां हुत्वा अवदानानि श्रौतदृष्टरीत्या निष्काशयति । सर्वाणि त्रीणि पञ्च वेति विकल्पः । वपाᳪ हुत्वाऽवदानान्यवद्यतीत्युक्तत्वादपि पशुपुरोडाशादिकं न भवतीत्यवगम्यत इति । अवदानानि चोक्तानि कात्यायनेन,

अङ्गान्यवद्यत्यभञ्जन् । हृदयं जिह्वां क्रोडᳪ सव्यसक्थिपूर्वनडकं पार्श्वे यकृत् वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि । दक्षिणसक्थिपूर्वनडकं गुदतृतीयाणिष्ठᳪ सव्या श्रोणिरित्यौपभृतानि इति ।

हृदयम् आम्रसदृशं हृदयकमलम् । जिह्वा प्रसिद्धा । क्रोडं वक्षः । भुजान्तरमित्यर्थः । सव्यसक्थिपूर्वनडकम् । सव्यस्य सक्थ्नः सव्यस्य बाहोः प्रथमनडकम् अंसादधो वर्तमानम् । द्वे अपि पार्श्वे दक्षिणं सव्यं च । एकैकं त्रयोदशत्रयोदशवक्रास्थिसंयुक्तम् । यकृत् कालेयम् । वृक्कौ कुक्षिगोलकौ महदामलकतुल्यौ । गुदं पक्वाशयस्थानम् येन शकृन्निर्गच्छति, तन्मध्यम् तस्य विषमं त्रेधा विभक्तस्य मध्यमो भागः । दक्षिणा श्रोणिः । श्रोणिः कटी दक्षिणापरसक्थ्न उपरि वर्तमानो मांसलप्रदेशः । एतानि जौहवानि जुह्वामवदेयानि । दक्षिणसक्थिपूर्वनडकम् । दक्षिणस्य सक्थ्नः प्रदक्षिणस्य बाहोः पूर्वनडकं प्रथमनडकम् अंसादधो वर्त्तमानम् । गुदतृतीयाणिष्ठम् । गुदस्य विषमं त्रेधा विभक्तस्य यः तृतीयोऽणिष्ठो भागः । सव्या श्रोणिः । उत्तरापरसक्थ्न उपरिभवो मांसलप्रदेशः कटीशब्दवाच्यः ।

इति औपभृतानि उपभृत्यवदेयानि । अत्र सर्वाणि त्रीणि पञ्च वेत्युक्तत्वादेतानि सर्वाणि अवद्यति । अथ वा हृदयादीनि पञ्च वा अवद्यति । ततो हृदयं शूले प्रवृह्य अग्नौ श्रपयति । उखां च अग्नौ अधिश्रित्य तत्र जिह्वादीन्यवदानानि प्रक्षिपति । तदुक्तं तत्र--

कात्यायनेन,

शूले हृदयं प्रवृह्य शामित्रे श्रपयति पशुं चोखायामिति ।

पशुश्रपणार्थं चोखायां जलासेकः कार्यः । ततः त्रिः प्रच्युते पशौ शूलात् हृदयं निष्काश्य स्थालीस्थावदानोपरि निधाय स्रुवेण पृषदाज्यं गृहीत्वा हृदयमभिघार्य पुनराज्यस्थाल्या आज्यं गृहीत्वा स्थालीस्थान्यवदानान्यभिघार्य उद्वासयेत् । तदुक्तं तत्र–

कात्यायनेन,

शमितारꣳ शास्ति त्रिः प्रच्यावयतात्त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुताद्यत्त्वा पृच्छाच्छृतꣳ हविः शमिता३रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳहीति । त्रिः प्रच्युते हृदयं प्रवृह्योत्तमं करोति । शूलं चाभूमौ । जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति शृतꣳ हविः शमिता३रिति त्रिभिरभिक्रामम् । प्रोक्ते तद्देवानामित्याहोपांꣳशु । सन्ते मन इति हृदयमभिघार्य सर्वम् इति ।

पश्ववदानमभिघारयतीति शेषः । एतदभिघारणं च दर्शातिदेशाप्राप्तमिति स्थाल्याज्येनैव तूष्णीं भवति । पृषदाज्येनाभिघारणं च हृदयस्यैव । पार्थक्येन तदुपादानात् ।

अत एवाऽऽपस्तम्बः, शूलात् प्रवृह्य हृदयं कुम्भ्यामवधाय सन्ते मनसा मन इति पृषदाज्येन हृदयमभिघारयत्युत्तरतः परिक्रम्याज्येन पशुम् इत्याह ।

एतेन पृषदाज्येनैतदभिघारणं भवतीति परास्तम् ।

प्रकृते च कर्तुरेव पशुश्रपणकर्तृत्वामिति शमित्रनुशासनश्रुतप्रश्ने तद्देवानामिति प्रतिवचनानि न भवन्ति । शूलनिधानस्य च शूलावभृथार्थत्वात् प्रकृते च शूलावभृथाभावात्तन्निधानं च न भवति । जुह्वभावान्मन्त्रस्य निवर्त्तितत्वाच्च स्रुवेण तूष्णीमेवाभिघारणं भवतीति । तत उखातः अवदानान्युद्धृत्य पात्रान्तरे उदक्संस्थानि स्थापयित्वा स्थाल्याज्येनैव सर्वावदानपक्षे त्र्यङ्गवर्ज्जितानि पक्षान्तरे च सर्वाण्यवदानान्यनक्ति । अयं च पदार्थो दर्शातिदेशप्राप्तः संस्कारकत्वादनुष्ठीयते । दर्शे च कात्यायनादिभिः दधिपयसोः समञ्जनमुक्तम् ।

तद्यथा, सायंदोहमाहृत्य प्रातर्दोहꣳ श्रपयित्वाऽभिघार्योद्वास्योभावनक्तीति ।

ततः अवदानान्यसिं च शाखाग्न्योरन्तरेण नीत्वा आज्यस्य दक्षिणतः क्रमेण आसादयति । ततस्त्र्यङ्गवर्ज्जितानि क्रमेणैवालभते । तदुक्तं तत्र —

कात्यायनेन,

पश्वसी वपावद् धृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति इति ।

पशुः पश्ववदानानि । वपावत् अन्तरा यूपाग्न्योरित्यर्थः । दक्षिणत इत्यस्य, वेद्यामासादयतीति शेषः । प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति । प्रतिप्रस्थाता ऋत्विक् वेद्यां प्लक्षशाखासु निधाय प्रत्येकमवदानानि खण्डयतीत्यर्थः ।

श्रुतिश्च, तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति प्लक्षशाखा उत्तरबर्हिर्भवन्ति ता अध्यवद्यतीति ।

आसादनालम्भने दर्शातिदेशप्राप्ते एव संस्कारकत्वाक्रियेते।

दर्शे च कात्यायनः, प्रियेण धाम्नेति हवीꣳषि वेद्यां कृत्वा ध्रुवा असदन्निति सर्वाण्यालाभत इति ।

मन्त्रमात्रस्य च प्रकृते निवृत्तिः । आसादनालम्भनादिकं च प्रधानयागप्रयुक्तं न स्विष्टकृद्यागप्रयुक्तमिति पशौ पृथग्भूते अङ्गरूपे स्विष्टकृद्द्रव्ये न भवतीति प्रकृतेऽपि प्राणदानासादनादिकं किमपि त्र्यङ्गेषु न भवतीति बोध्यम् । ततः प्रधानहोमार्थमर्थपरिमाणस्रुवे स्रुवान्तरेणाज्यमुपस्तीर्य हिरण्यशकलमवधाय प्लक्षशाखासु हृदयादिभ्यः प्रत्येकमसिना द्विर्द्विरवदाय तस्मिन् स्रुवे प्रक्षिप्य स्थालीपाकमिश्राण्यवदानानि जुहोतीति पूर्वलिखितपारस्करसूत्राच्च स्थालीपाकादपि सकृदवदाय तत्रैव क्षिप्त्वा पुनर्हिरण्यशकलं तत्रावधाय सकृदभिघार्य विश्वेभ्यो देवेभ्यः स्वाहेति जुहोति इदं विश्वेभ्यो देवेभ्यो न ममेति त्यागः । उपस्तरणादिकं चोक्तं तत्र—

कात्यायनेन, जुहूपभृतोरुपस्तृणीते वसाहोमहवन्यां पात्र्यां च । मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः । अशेषे गुदतृतीये । वपावद्धिरण्यम् इति।

जुहूपभृतोः वसाहोमहवन्यां स्रुचि इडापात्र्यां च उपस्तीर्य मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति प्रतिप्रस्थात्रा उक्ते स्रुचोः जुहूपभृतोः अवद्यति प्रत्येकं हृदयादिभ्यः मध्यात्पूर्वार्द्धाच्च गृह्णाति । यथोक्तम् जौहवानां जुह्वामौपभृतानां चोपभृति । द्विर्द्विः जुह्वामुपभृति च द्विर्द्विरेव । अशेषे गुदतृतीये । गुदस्य विषमं त्रेधा विभक्तस्य यो मध्यमो भागः तम् अशेषमेव द्वेधा कृत्वाऽवद्यति । द्विवचनं भागाभिप्रायम् । गुदं त्रेधा करोति स्थविमोपयद्भ्यो मध्यं जुह्वां द्वेधा कृत्वाऽवद्यतीति श्रुतेः । वपावद्धिरण्य-

म् । उपस्तारानन्तरं प्रत्युपस्ताराच्च प्राक् हिरण्यमवद्धाति । प्रकृते जुहूपभृतोरभावान्मनोताप्रैषादेश्च मन्त्रत्वेन निराकरणात्स्रुवेणैव पूर्वलिखितरीत्या होमः कार्य इति । पुनः स्रुव एवोक्तरीत्योपस्तरणादिपूर्वकमङ्गादवदाय स्थालीपाकोत्तरार्द्धाच्चावदाय स्विष्टकृद्धोमः कार्य इति । असर्वावदानपक्षे तु विशेषः । प्रधानहोमार्थमवदानं गृहीत्वा हृदयादिषु क्षताभ्यङ्गं कुर्यात् । क्षताभ्यङ्गस्य स्विष्टकृदर्थशेषाप्यायकत्वात् । एतस्मिन् पक्षे च शेषादेव स्विष्टकृद्धोमस्य कर्त्तव्यत्वात् । तस्य शेषाप्यायकत्वं च श्रुतावुक्तम्—

तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति । स्विष्टकृत एव तत्पुनराप्याययत्ययातयामानि करोति । अथ यदा स्विष्टकृतेऽवद्यति न ततः पुनरभिघारयति नो हि ततः कांचन हविषोऽग्नावाहुतिर्ठं० होष्यन् भवतीति । अवत्तशेषेभ्य एव च स्विष्टकृद्ग्रहणमिति ।

तत आघारावाज्यभागौ । महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्चैतान्नित्यꣳ सर्वत्रेतिसूत्रान्महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीर्ब्रह्मणाऽन्वारब्धो जुहुयात् । ततः संस्रवं प्राश्य ब्रह्मणे पश्वङ्गं दक्षिणां दद्यात् ।

तथाच पूर्वलिखितपारस्करसूत्रम्, पश्वङ्ग दक्षिणेति ।

अत एव यच्चान्यादितिसूत्रेण प्रापितस्यापि शेषाङ्गप्रतिपत्तिरूपसंस्कारस्येडाप्राशित्रादेर्निवृत्तिः । अत एव च पूर्णपात्रवरयोरप्यत्र निवृत्तिः । ततः स्मृत्यन्तरबोधितपञ्चविंशतिब्राह्मणभोजनस्य हरिहरलिखनात् पञ्चविंशतिसङ्ख्याकान् ब्राह्मणान् भोजयेदिति ।

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।

इति स्मृतेः कलौ गोपशोर्निषिद्धत्वाच्चानिषिद्धेन छागादिनाऽयं पशुः कर्त्तव्यः। "नियते सामान्यतः प्रतिनिधिः स्यात्" इति एतासाम् अष्टकानां नित्यत्वात्प्रतिनिधिनापि कर्त्तव्या भवन्त्येव।

तथा च गोभिलः अष्टका उपक्रम्य, यद्यु वा अल्पसम्भारतमः स्यादपि पशुनैव कुर्वीतापि वा स्थालीपाकं कुर्वीतापि वा गोग्रासमाहरेत्—

इत्युक्त्वा,

न त्वेव न कुर्वीतेति।

निषिद्धश्च गोपशुः स्मृतिषु।

यथा,

देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः।
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च॥
समुद्रयानस्वीकारः कमण्डलुविधारणम्।
महाप्रस्थानगमनं गोपशुश्च सुराग्रहः॥
अग्निहोत्रहवन्याश्च लेहो लीढापरिग्रहः।
असवर्णासु कन्यासु विवाहो न द्विजातिषु॥
वृत्तस्वाध्यायसाक्षेपमघसङ्कोचनं तथा।
अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेवच॥
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्।
संसर्गदोषः पापेषु मधुपर्के पशोर्वधः॥
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।
शामित्रं चैव विप्राणां सोमविक्रयिता तथा॥
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ।
कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः॥ इति।

रेणुदीक्षिता अपि,

गोवधस्य निषिद्धत्वात् छागेनैव कलौ युगे ।
केचिद् ब्रुवन्ति न स्मार्ते पशूपाकरणाक्रिया ॥
प्राप्ते कलियुगे तत्र पायसेनेति के चन ।
चरुणा वा पशोः कर्मादेशेनैव समृद्धये ॥
केचिच्छागस्य मांसेन क्रीतेनेति ब्रुवन्ति हि ।
विचारणीयं विद्वद्भिस्तत्तदङ्गोपसंहृतौ ॥ इति ।

स एव,

अथ चेत्पायसेनेदं पायसस्त्विन्द्रयज्ञवत् ।
पक्षादिवच्चरुः कार्यश्चरुणा चेद्भवेदिदम् ॥ इति ।

पायसादिना क्रियमाणे गोपायसद्रव्यकगोयज्ञवत् यथासम्भवं प्रधानदेवताहोमादिरूपं कार्यमिति । चरुपक्षे अपरोऽपि विशेषः। चरौ श्रप्यमाणे मण्डस्योद्धरणं, तस्य वपास्थाने होमः। उपरि वपाकारं यच्चरोस्तरिकादि तस्य वा होम इति गर्गः ।

अस्य पशोः सव्यपार्श्वसक्थिभ्याम् अपरादिने अन्वष्टकाकर्म पूर्ववत् । सर्वावदानपक्षे तु क्रयादिना पार्श्वसक्थिनी सम्पाद्यान्वष्टकाकर्म कर्तव्यम् ।

अथ प्रयोगः ।

पौष्या ऊर्ध्वं कृष्णाष्टम्यां द्वितीयाष्टका । तत्र आदौ सङ्कल्पं विधाय मातॄणां पूजनं कुर्यात् ।

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।

इति कात्यायनेनाष्टकासु वृद्धिश्राद्धनिषेधात् वृद्धिश्राद्धं न भवति। कारिकाकारहरिहरप्रभृतयस्तु वृद्धिश्राद्धमपि भवतीत्युक्तवन्तः। ततो देवताभिध्यानम् । तत्र विशेषः । इन्द्रमपूपेनेत्यस्य स्थाने पितॄन् वपया। विश्वान् देवान् चरुयुक्तपश्वङ्गाव-

दानैः। पक्षे स्विष्टकृतं शेषेणेत्यस्य स्थाने चरूत्तरार्द्धयुक्तत्र्यङ्गावदानैः।शेषं प्रथमाष्टकावत्।ततः आवसथ्याग्नौ ब्रह्मोपवेशनम्, प्रणीताप्रणयनम्, परिस्तरणम्, पात्रासादनम् । तद्यथा, पवित्रच्छेदनानि, पवित्रे, प्रोक्षणीपात्रम्, आज्यस्थाली, चरुस्थालीद्वयम् संमार्जकुशाः, उपयमनकुशाः, समिधः, स्रुवः, आज्यम्, वपाश्रपण्यौ, अष्टकाचरुः, अर्थपरिमाणः स्रुवः, शूलम्, उखा, पाशुकचरुतण्डुलाश्चेति ।

अथोपकल्पनीयानि ।

प्लक्षशाखा, पलाशशाखा, त्रिगुणरशना, उपाकरणतृणम्, द्विगुणरशना, पशुः, उदकपूर्णस्थाली, असिः शमिता, हिरण्यशकलानि षट्, पृषदाज्यार्थं दधि चेति । ततः पवित्रकरणादि उखाप्रोक्षणान्तं कृत्वा विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति पाशुकचरुतण्डुलानां प्रोक्षणम् । आज्यनिर्वापानन्तरम् अष्टकाचरुपात्रे तण्डुलान् प्रक्षिप्य पाशुकचरुपात्रे तण्डुलान् कुर्यात् । तत आज्याधिश्रयणम्, तदुत्तरतः अष्टकाचरोरधिश्रयणम्, तदुत्तरतः पाशुकचरोरधिश्रयणम् स्वयमेव क्रमेण करोति । यौगपद्यस्याप्रामाणिकत्वात् । आज्याधिश्रयणं ब्रह्मणः । अष्टकाचरोरधिश्रयणं यजमानस्य। पाशुकचरोरधिश्रयणं च पत्न्याः। अन्यस्य वा कस्य चित् कृत्यं यौगपद्यानुरोधादिति केचित् । ततः पर्यग्निकरणादिप्रोक्षण्युत्पवनान्तं कुर्यात् । ततः पश्वङ्गानां बर्हिष्यासादनस्य दृष्टत्वादग्नेः पश्चादाज्याद्दक्षिणतः आरभ्य प्रागग्रान् कुशान् उदक्संस्थमास्तीर्य तत्कुशोपरि दक्षिणप्रदेशे प्लक्षशाखाम् आस्तीर्य प्रादक्षिण्येनाऽऽवसथ्यस्य पुरस्ताद्गत्वा कुण्डसंलग्नं शाखायाः पञ्चमांशपरिमितमवटं खात्वा तत्र पलाशशाखां निखाय त्रिगुणरशनामादाय तया रशनया

शाखाया नाभिपरिमितप्रदेशे प्रादक्षिण्येन त्रिर्वेष्टयित्वा अवशिष्टावुभौ प्रान्तौ परस्परं मिश्रीकृत्य अन्यतरस्यां रज्ज्वामितरस्या अन्तं प्रवेशयति। ततः एकं तृणमादाय विश्वेभ्यस्त्वा देवेभ्य उपाकरोमीति तेन तृणेन प्रत्यङ्मुखास्थितं पशुं स्पृशति। ततो द्विगुणरशनामादाय नागपाशं कृत्वा तत्पाशं पशोः दाक्षिणशृङ्गाभिमुखं प्रवेश्यान्तरा शृङ्गं बध्नाति। ततो विश्वेभ्यो देवेभ्यो नियुनज्मीति शाखायामुत्तरतो बध्नाति। ततः प्रोक्षणीरादाय सङ्केतादिना ब्रह्माणं पृष्ट्वा तथैव ब्रह्मणाऽनुज्ञातः विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्ष्य प्रोक्षणजलं पशोरास्यसमीपे नीत्वा किञ्चिज्जलं पाययित्वा शेषम् अधस्तात् हृदयादिप्रदेशे प्रक्षिपति। ततः स्वासने उपविश्य उपयमनान् कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य ब्रह्मणाऽन्वारब्ध आघारौ हुत्वा स्रुवाज्येन ललाटे अंसयोः श्रोण्योश्च पशुं समनक्ति। ततः असिमादाय तदन्यतरधारां स्रुवाग्रे अक्त्वा तेनासिना पशोर्ललाटे उपस्पृशति। ततः उल्मुकमादाय पश्वाज्यशाखाग्नीनाम् आज्यपश्वोर्वा सर्वतः प्रादक्षिण्येन वारत्रयं पर्येति। ततः तदुल्मुकम् अग्नौ प्रक्षिप्य पश्वाज्यशाखाग्नीनाम् आज्यपश्वोर्वा सर्वतः अप्रादक्षिण्येन वारत्रयं प्रतिपर्येति। ततः शमित्रा संज्ञपनार्थमुदीच्यां दिशि नीयमानं पशुं वपाश्रपणीभ्यामन्वारभते। ततः तृणद्वयमुपादाय तयोर्मध्ये एकं तृणं पशुसंज्ञपनदेशे उदगग्रं वा प्रक्षिपति। ततस्तस्मिन् तृणे शमिता मुखसङ्ग्राहणेन रज्ज्वादिना कण्ठवेष्टनेन वा यथा शब्दं न करोति तथा पातयित्वा प्रत्यक्शिरसं प्राक्शिरसं वा उदक्पादं घातयति। ततः संज्ञप्यमाने पशौ यजमानः निरुप्याज्यमधिश्रित्य उद्वास्य उत्पूय अवेक्ष्य स्रुवेणैव गृहीत्वा एकां

समिधं तिष्ठन्नभ्याधाय उपविश्य दक्षिणं जान्वाच्य स्वाहा देवेभ्य इति जुहोति । इदं देवेभ्यो न ममेति त्यागः । ततः सङ्केतादिना संज्ञप्तः पशुरिति शमित्रा ज्ञापिते तेनैवाज्येन देवेभ्यः स्वाहेति जुहोति ।इदं देवेभ्यो न ममेति त्यागः । ततः तेनैवाज्येन तूष्णीं पञ्चाहुतीः जुहोति । इदं प्रजापतये न ममेति सर्वासां त्यागः । ततः पशुबन्धनरज्जुं वपाश्रपणीभ्याम् उत्तरस्यां दिशि क्वचित्प्रक्षिपति । तत उपकल्पितोदपात्रहस्ता समानीता पत्नी तदुदपात्रोदकेन पशोर्दक्षिणोत्तरे नासिके दक्षिणोत्तरौ कर्णौ नाभिं मेढ्रं पायुं पादानेकीकृत्य क्रमेण शुन्धति । ततः तदुदकशेषेण यजमानः पशोः शिरो मुखं नासिके चक्षुषी कर्णौ सर्वाण्यङ्गानि अनुषिञ्चति । ततः तदुदकशेषं पशोः पश्चाद्भागे जघनप्रदेशे निनयति । ततः पशुमुत्तानं कृत्वा तन्नाभ्यग्रे पूर्वोपात्तं तृणं प्रागग्रं निधाय घृताङ्कितयाऽसिधारया सतृणां त्वचं तिर्यक् पाटयित्वा द्विधाभूततृणस्य मूलमादाय तन्मूलं निस्सृतलोहितेनोभयतः अक्त्वा उत्तरतः क्वचिन्निरस्य वपां निष्काशयेत् । ततो वपाश्रपण्यावादाय उदरसंलग्नया वपया आच्छादयति । ततः छेदनेन वपामुदरात्पृथक्कृत्य क्वचिदुत्तरदेशे प्रक्षालयति । ततो वपां स्रुवेणाभिघारयेत् । ततोऽग्नेरुत्तरतः स्थित्वा वपां प्रतप्य शाखाग्न्योरन्तरेण हृत्वा स्वयं शाखाया बहिर्गत्वा अग्नेर्दक्षिणतः स्थित्वा श्रपयेत् । ततः श्रप्यमाणां वपां स्रुवेणाभिघारयेत् । ततो वपां प्रत्याहृत्य स्वासने उपविश्य स्रुवेणाऽऽज्यं गृहीत्वा वपायां तूष्णीं प्राणदानं विधाय आज्यस्योत्तरत आसाद्यालभते । तत आज्यभागाविष्ट्वा प्रथमाष्टकावत् त्रिंशत्स्वसार इत्यादिभिर्दशाहुतीश्च हुत्वा अष्टकाचरुणा शान्ता पृथिवीत्यादि-

भिश्वतस्रो जुहुयात्। ततो वपाहोमार्थमर्थपरिमाणस्रुवमुपादाय सव्यहस्ते कृत्वा स्रुवान्तरेण तदुपस्तीर्य तत्र हिरण्यशकलमवधायासिना सम्पूर्णमेव वपां गृहीत्वा तत्रावधाय तदुपरि हिरण्यशकलमवधाय द्विः प्रत्युपस्तीर्य दक्षिणामुखः सव्यं जान्वाच्य प्राचीनावीती वह "वपामित्यस्यादित्य ऋषिः त्रिष्टुप्छन्दः पितरो देवता होमे विनियोग" इति स्मृत्वा, "वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान् पराके मेदसः कुल्या उपतान्स्रवन्तु सत्या एषामाशिषः सन्नमन्ताꣳ स्वाहा" इति जुहोति। इदं पितृभ्यो न ममेति त्यागः। वपोद्धरणमारभ्य होमपर्यन्तं सर्वमपि प्राचीनावीतिना कार्यमित्यपि केचित्। ततो यज्ञोपवीती भूत्वा उदकमुपस्पृश्य वपाश्रपण्योर्मध्ये या द्विशृङ्गा विशाखा तां प्रागग्रां कृत्वा इतरां च प्रत्यगग्रां कृत्वा एकदैव ते उभे अग्नौ प्रक्षिपति। अथ पशोरवदानानि गृह्णाति। तत्र सर्वावदानपक्षे हृदयं जिह्वा क्रोडं सव्यबाहुपूर्वनडकं पार्श्वे यकृत् वृक्कौ गुदमध्यं दक्षिणा श्रोणिरित्येकादश प्रधानार्थानि। दक्षिणबाहुपूर्वनडकं गुदतृतीयाणिष्ठं सव्या श्रोणिरिति त्रीणि सौविष्टकृतानि। त्र्यवदानपक्षे हृदयं जिह्वा क्रोडमिति त्रीणि। पञ्चावदानपक्षे हृदयं जिह्वा क्रोडं सव्यबाहुपूर्वनडकं पार्श्वम् इति पञ्च। ततोऽवदानानि त्रिः प्रक्षाल्य हृदयं शूले प्रतृद्य शामित्रे श्रपयति। उखां चाग्नावधिश्रित्य तत्र किञ्चिदुदकमासिच्यावदानानि प्रक्षिपति। ततः त्रिः प्रच्युते पशौ शूलात् हृदयं निष्काश्य उखास्थावदानोपरि निधाय स्रुवेण पृषदाज्यमादाय हृदयमभिघार्य स्थाल्याज्येन सर्वपशुमभिघारति। अथोखामुद्वास्यावदानान्युखाया निष्काश्य कस्मिंश्चित् महति पात्रे हृदयादिक्रमेण उदक्संस्थानि निधाय स्रुवे-

णाज्यं गृहीत्वा हृदयादीनां त्र्यङ्गवर्जितानां यथाक्रमं तूष्णीमेव प्राणदानं कृत्वा शाखाग्न्योरन्तरालमार्गेणाहृत्य हृदयादिक्रमेण प्लक्षशाखासु उदक्संस्थानि निधाय त्र्यङ्गवर्जितान्यालभते। ततः प्रधानहोमार्थं स्रुवे उपस्तीर्य हिरण्यखण्डं निधाय हृदयादिभ्यः सकाशात् यथाक्रमं द्विर्द्विरवदाय स्रुवे प्रक्षिप्य स्थालीपाकाच्च सकृदेवावदाय तत्रैव क्षिप्त्वा तदुपरि हिरण्यशकलं निधाय सकृदेव प्रत्युपस्तीर्य विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात्। इदं विश्वेभ्यो देवेभ्यो न ममेति त्यागं विधाय स्विष्टकृदर्थं स्रुवे उपस्तीर्य हिरण्यखण्डं निधाय त्र्यङ्गेभ्यो दक्षिणसक्थ्यादिभ्योऽपि द्विर्द्विरवदाय स्रुवे प्रक्षिप्य चरुद्वयादपि सकृत् अवदाय स्रुवे क्षिप्त्वा तदुपरि हिरण्यखण्डं निधाय द्विरभिघार्य अग्नये स्विष्टकृते स्वाहेति जुहुयात्। इदमग्नये स्विष्टकृते न ममेति त्यागः। अत्र हृदयाद्यसर्वावदानग्रहणपक्षे प्रधानावदानशेषेभ्य एव स्विष्टकृद्धोमो भवतीति विशेषः। ततो महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीः ब्रह्मान्वारब्धो हुत्वा हुतशेषं प्राश्य पशोरवशिष्टान्यङ्गान्येव ब्रह्मणे दक्षिणां दद्यात्। ततः स्मृत्यन्तरोक्तान् पञ्चविंशतिब्राह्मणान् भोजयेत् इति हरिहरः। वासुदेवकारिकाकारादयस्तु नेदं लिखितवन्तः। ततो द्वितीयदिने नवम्याम् अन्वष्टकाकर्म। तत्र पूर्वदिननियुक्तपशोः सव्यपार्श्वसक्थिभ्यां पूर्वोक्तान्वष्टकावत् सर्वं कर्म कर्त्तव्यम्। सर्वावदानपक्षे क्रमेण पार्श्वसक्थ्नोरानयनम्। ततो माघ्या ऊर्ध्वं कृष्णाष्टम्यां तृतीया अष्टका सा प्राजापत्या। अभिध्याने इन्द्रस्थाने प्रजापतिं ध्यायेत्। तत्र सिद्ध एव कालशाक आसाद्यते प्रोक्ष्यते च। यस्मिन् काले प्रथमाष्टकायामपूपहोमस्तत्र काले मनसा प्रजापतये स्वाहेति कालशाकं जुहुयात्।

शेषं समानं प्रथमाष्टकयेति । कालशाकाभावे अवश्यकर्त्तव्यत्वात् वास्तुकेनापि कार्या । ततोऽपरेद्युः पूर्ववदन्वष्टकाकर्म। ततो भाद्रपद्या ऊर्ध्वं कृष्णाष्टम्यां चतुर्थी अष्टका। सा शाकेन कार्या प्रजापतिदेवत्या । तत्र प्रथमाष्टकावत् सर्वं कर्म भवति। एतावान् विशेषः। आसादने चरुस्थालीद्वयम् । तण्डुलानन्तरं कालशाकमासादयेत् । कालशाकसम्बन्धि सर्वं कर्म प्राचीनावीतिना दक्षिणामुखेन च कार्यम् । अत एतत्कृत्वोदकस्पर्शनं कार्यम्। अन्यत् यज्ञोपवीतिनेति । अपूपहोमस्थाने पितृभ्यः स्वाहेत्येकामाहुतिं जुहुयात्। अत्र सर्वास्वष्टकासु आदौ अपूपादिभिराहुतिः तदनन्तरं तत्र तत्रोक्तस्थालीपाकैरिति गर्गः। अत्र चतुर्थ्यामष्टकायामपि सिद्ध एव शाक आसाद्यत इति तु युक्तम्। अत्रापि श्वोऽन्वष्टका पूर्ववत्।

### अथ शूलगवाख्यं कर्मोच्यते।

एतस्य च नित्यत्वं पाकयज्ञकथनप्रसङ्गे कल्पतरुधृतदेवलवचनेन पाकयज्ञत्वादेव पूर्वमुक्तम् । काम्यत्वं चास्य पारस्करसूत्रात्।

**तथा च पारस्करः**, शूलगवः स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्य इति।

स्वर्गकामस्य पशुकामस्य पुत्रकामस्य धनकामस्य यशस्कामस्य भवति। सकृत् कृतेऽपि वचनसामर्थ्यात् सर्वेऽपि कामाः सम्पद्यन्त एवेति अनन्तः । अत्र च स्वर्गादिकामानां पर्यायेण सिद्धिः। न हि युगपत् स्वर्गादिकामानामुत्पत्तिसम्भव इति कर्कः। इति कर्त्तव्यतां च—

**स एवाह**, औपासनमरण्यꣳ हृत्वा वितानꣳ साधयित्वा रौद्रं पशुमालभेत साण्डम् । गौर्वा शब्दात्

वपाꣳ श्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाꣳ स्थालीपाकमिश्राण्यवदानानि जुहोत्यग्नये रुद्राय शर्वाय पशुपतये उग्रायाशनये भवाय महादेवायेशानायेति च । वनस्पतिस्विष्टकृदन्ते व्याघारणम् । व्याघारणान्ते पत्नीः संयाजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति । लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो बलिꣳ हरति यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र पश्चात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्राधस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नम इति । ऊवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनति । अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां वाऽनुवाकाभ्याम् । नैतस्य पशोर्ग्रामꣳ हरति । एतेनैव गोयज्ञो व्याख्यातः । पायसेनानर्थलुप्तः। तस्य तुल्यवया गौर्दक्षिणेति ।

औपासनमरण्यꣳ हृत्वेति । उपासनासाधनभूतम् औपासनमावसथ्याग्निम् अरण्यं वनं प्रति हृत्वा तत्र वितानं त्रेताग्निविन्यासं साधयित्वा गार्हपत्याहवनीयदक्षिणाग्नीन् साधयित्वेत्यर्थः । तत्र रौद्रं रुद्रदेवत्यं पशुं छागम् । सामान्यतोऽपि श्रुतः पशुशब्दः अग्नीषोमीयप्रकृतित्वात् छागपरो बोध्यः। आलभेत देवतोद्देशेन त्यजेदित्यर्थः । कीदृशं छागम् साण्डम् अण्डाभ्यां युक्तम् अक्लीबमित्यर्थः । एवं पूर्वपक्षिते स्वमतेन पशुं विशेषयति "गौर्वा शब्दात्" इति । वाशब्दोऽवधारणे । स पशुः गौरेव भवति । कुतः शूलगव इति शब्दात् । इयमा-

त्या तदैवानुगतार्था भवति यद्ययं पशुः गौः स्यात् । तस्मात् गौरेव । वपां श्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाᳬ स्थालीपाकमिश्राण्यवदानानि जुहोति । वपां स्थालीपाकं चरुं हृदयादीन्यवदानानि च सहैव श्रपयित्वा । पशौ शामित्रेऽवदानश्रपणं दृष्टं वपाश्रपणं चाहवनीय इति तदत्र माभूदिति सहश्रपणार्थं पुनर्वचनम् । तत्र रुद्राय वपाम् । अन्तरिक्षाय वसाम् । अत्र श्रपयतीत्यस्यानुवृत्तावपि श्रपणस्योक्तत्वात्तन्निष्प्रयोजनमिति नानुषज्यते । अतः जुहोतीत्यध्याह्रियते अपेक्षितत्वात् । एवं च यथोक्तकाले रुद्राय स्वाहेति वपाहोमः अन्तरिक्षाय स्वाहेति वसाहोमश्च । किञ्च स्थालीपाकमिश्राण्यवदानानि जुहोति । यदाऽवदानानि जुहोति तदा स्थालीपाकेन सह संयोज्य जुहोति । अवदानानि च हृदयादीनि पूर्वोक्तानि । अग्नये रुद्राय शर्वाय पशुपतये उग्रायाशनये भवाय महादेवायेशानायेति नवभिर्मन्त्रैर्नवकृत्वोऽवदानानि जुहोति । नवकृत्वोऽपि स्थालीपाकेन मिश्रीकृत्य जुहोतीत्यर्थः । वनस्पतिस्विष्टकृदन्ते व्याघारणम् । वनस्पतिः स्विष्टकृतः प्राक् क्रियमाणः पृषदाज्यसाधनको होमः । स्विष्टकृत् प्रसिद्धः । स्विष्टकृदन्त इत्येव सिद्धे वनस्पतिग्रहणं तद्धोमप्राप्त्यर्थम् । व्याघारणं दिग्व्याघारणम् । क्वचिद्दिग्व्याघारणमित्येव पाठः । सोऽपि दिग्देवत्यः होमशेषवसासाधनकस्तथैव तत्र दृष्टत्वात् । व्याघारणान्ते पत्नीः संयाजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति । दिग्व्याघारणस्यान्ते अवसाने पत्नीः इन्द्राण्यादीः संयाजयन्ति । द्रव्यस्यानुक्तत्वात् जाघन्यैव । पशौ तथैव दृष्टत्वात् । इन्द्राण्या इत्यादिभिः पञ्चभिर्मन्त्रैः स्वाहाशब्दान्तैः । लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो बलिᳬ हरति । आग-

न्तूनामन्ते निवेश इत्युक्तत्वात् । सर्वहोमान्ते संस्रवं प्राश्य प्रस्तु-
तत्वात्तस्यैव लोहितं रक्तम् । पलाशानाम् इमानि पालाशानि तेषु
कूर्चेषु आसनेषु रुद्राय देवतायै सेनाभ्यश्च । सेना अपि रुद्रस्यै-
व । यास्ते रुद्र पुरस्तात्सेना इत्यादिमन्त्रलिङ्गात् । ताभ्यश्च ब-
लिम् उपहारं हरति ददाति यास्ते रुद्रेत्यादिभिः षड्भिर्मन्त्रैः ।
अर्थादेकैकस्मिन् कूर्चे एकैकेन मन्त्रेण । ऊवध्यं लोहितलिप्त-
मग्नौ प्रास्यत्यधो वा निखनति । ऊवध्यं पुरीषस्थानं पाटीति
प्रसिद्धम् । लोहितेन रुधिरेण लिप्तं संसृष्टम् अग्नौ आहवनीये
प्रक्षिपति अधो वा भूमौ वा निखनति । गर्तं कृत्वा तत्र निद-
धातीत्यर्थः । अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमा-
भ्यां वाऽनुवाकाभ्याम् । वातम् अनुगतम् अनुवातं वाताभि-
मुखं पशुं यागेभ्योऽवशिष्टं पशुशरीरम् अवस्थाप्य निधाय रुद्रैः
नमस्त इत्यध्यायपरिपठितैः उपतिष्ठते । नमस्त इति समस्ते-
नाध्यायेनोपतिष्ठते इत्यर्थः । पक्षान्तरमाह ।प्रथमोत्तमाभ्यां वा-
ऽनुवाकाभ्याम् । अनुवाक ऋक्सङ्घोऽध्येतृप्रसिद्धः । नमस्त
इत्यादिषोडशऋगात्मकः प्रथमः । द्रापे अन्धस इत्यादिविंशति-
ऋगात्मक उत्तमः । नैतस्य पशोर्ग्रामं॰ हरन्ति । एतस्य रुद्रदै-
वतस्य पशोः यागावशिष्टं मांसं ग्रामं प्रति न हरन्ति न नय-
न्ति । एतेनैव गोयज्ञो व्याख्यातः । एवं शूलगवमुक्त्वा एत-
स्य विधिं गोयज्ञेऽतिदिशति । एतेन शूलगवेन शूलगवोक्तवि-
धिना गोयज्ञनामकः कर्मविशेषः व्याख्यातः कथितः । परं तु
पायसेनानर्थलुप्तः । पयसा साधितः चरुः पायसः परमान्नमि-
तियावत् ।तेन कार्यः न पशुनेत्यर्थः।पशुः पयसा कथं सिध्येदि-
त्याह—अनर्थलुप्तः । न अर्थेन प्रयोजनेन लुप्तः । एवं चात्र पाय-
सेन यावानर्थः कर्तुं शक्यते तावान् कर्त्तव्यः । स चार्थः केव-

लः शूलगवप्रधानदेवताभ्यो होमरूपः। एवं चात्र पायसेन शूलगवप्रधानदेवताभ्यो होममात्रेणैव गोयज्ञो भवतीति तात्पर्यम्। तस्य तुल्यवया गौर्दक्षिणेति। तस्य शूलगवसाधनस्य पशोः यावत् द्विसांवत्सारिकत्रिसांवत्सरिकादिवयः तावत् वयो यस्य स तुल्यवयाः तावद्वार्षिक इत्यर्थः। स दक्षिणा। गोयज्ञे तु पशोरेवाभावात् कुतस्तरां तस्य तुल्यवया इति पूर्णपात्रादिकमेव दक्षिणा भवतीति केचिदाहुः। अपरे औचित्यात्तथा कल्पयन्ति। इति सूत्रार्थः।

## अथ प्रयोगः।

स तु हरिहरादिलिखितरीत्यैव लिख्यते। स्वर्गपशुपुत्रधनयशआयुःकामानां शूलगवपशुबन्धो विहितः। तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा औपासनाग्निमादायारण्यं गच्छेत्। तत्र शुचौ देशे गार्हपत्यायतनं सप्तविंशत्यङ्गुलैः मण्डलं वृत्तं विधाय तन्मध्यनिखातशङ्कोः अष्टौ एकादश द्वादश वा स्वकीयानि पदानि प्राचीं गत्वा तदन्ते शङ्कुं निखाय तयोः शङ्कोः उभयतःपाशां रज्जुं प्रसार्याहवनीयायतनं रचयेत्।

यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत्।
आगमार्द्धे च शङ्कुः स्यात्तदर्द्धे च निरञ्छनम्॥

इति शुल्ववचनानुसारेण। अत्रायं रचनाप्रकारः। पूर्वस्माच्छङ्कोः द्वादशाङ्गुष्ठपर्वपरिमितं देशं पूर्वतः पश्चिमतश्च परित्यज्य तत्र शङ्कुद्वयं निखाय चतुर्विंशत्यङ्गुलां रज्जुं परिमाय तावतीमेव अधिकां गृहीत्वा उभयतः पाशौ कृत्वा रज्जोरागमार्द्धे शङ्कुस्थानं सूत्रादिनाऽङ्कयित्वा अपरागमार्द्धे निरञ्छनम् आकर्षणसूत्रगुणमोप्य पूर्वार्द्धापरार्द्धान्तयोः शङ्कोः तस्या रज्ज्वाः पाशद्वयं निक्षिप्य निरञ्छनेन गुणेन दक्षिणत आकृष्य शङ्कु-

स्थाने शङ्कुं निखनेत् । ततस्तामेव रज्जुम् उत्तरतो नीत्वा तथैवाऽऽकृष्य शङ्कुस्थाने अपरं शङ्कुं निखनेत् । अथ रज्ज्वाः पाशौ परिवर्त्य पूर्ववत् निरञ्छनगुणेन दक्षिणत आकृष्य शङ्कुस्थाने शङ्कुं निखाय पुनस्तामेव रज्जुम् उत्तरतो नीत्वा तथैवाऽऽकृष्य शङ्कुस्थाने शङ्कुं निखन्यात् । एवं चतुरस्रं चतुर्विंशत्यङ्गुलायामविस्तारमाहवनीयायतनं सम्पद्यते । ततो गार्हपत्याहवनीयान्तरालसंमितां रज्जुं षड्गुणां सप्तगुणां वा विधाय षष्ठमंशं सप्तमं वा तत्राधिकं निक्षिप्य प्रसार्य त्रिगुणीकृत्य अपरवितृतीये शङ्कुस्थानार्थम् अङ्कयित्वा गार्हपत्याहवनीयमध्यगतयोः शङ्कोः पाशौ प्रतिमुच्य गार्हपत्यायतनाद्दक्षिणत आकृष्य अपरवितृतीयाङ्के शङ्कुं निखाय तस्मिन् शङ्कौ अन्यरज्जुपाशं प्रतिमुच्य षोडशाङ्गुलानि परिमाय वृत्तं मण्डलं विरचय्य तन्मध्यमशङ्कोश्चत्वार्यङ्गुलान्युत्तरतः परित्यज्य तत्र पूर्वापरायतां मण्डलसंमितां रज्जुं निपात्य रेखामुल्लिखेत् । एवं धनुषाकृति दक्षिणाग्न्यायतनं सम्पद्यते । अथ तामेव रज्जुं परिवर्त्य आहवनीयादुत्तरतः वितृतीयेनाकृष्य वितृतीयस्थाने उत्करं कुर्यात् । एवं वितानं साधयित्वा तेषु पञ्चभूसंस्कान् कृत्वा गार्हपत्यायतने औपासनाग्निं स्थापयित्वा मृन्मयेन पात्रेण गार्हपत्यैकदेशमादाय आहवनीयायतने आहवनीयं प्रणयेत् । तत एवमेव गार्हपत्याद्दक्षिणाग्निखरे दक्षिणाग्निम् । आहवनीयस्य दक्षिणतो ब्रह्मासनमास्तीर्य शूलगवेन रौद्रेण पशुना अहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेति ब्राह्मणं प्रार्थ्य भवामीति तेनोक्त आसने तमुपवेश्य उत्तरतः प्रणीताः प्रणीय पवित्रच्छेदनानि पवित्रे प्रोक्षणीपात्रं वज्रः अन्तर्धानतृणं च इत्येतानि पञ्च आसादयति । ततो रज्जुं शङ्कुं शम्याम् अभ्रिं पुरीषाहरणम् उदकम् सिक-

ताः आच्छादनवस्त्रम् इत्यष्टौ उपकल्पयेत् । ततः पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य वज्रमन्तर्धानतृणं च प्रोक्ष्य प्रोक्षणीर्निधाय वज्रमादाय वेदिं मिमीते स्फ्येन । आहवनीयस्य दक्षिणतः प्राचीं त्र्यरत्निं पश्चिमतः चतुररत्निम् उत्तरतस्त्र्यरत्निं पूर्वतश्च त्र्यरत्निम् इत्येवं परिमितां वेदिं त्रिभिः कुशैः परिसमुह्य उत्तरतो वज्रेणोत्करं परिलिख्य तदन्तिके वज्रं निधाय तदुपरि वेदितृणं कृत्वा सतृणं वज्रमादाय दक्षिणहस्तेन सव्ये पाणावाधाय दक्षिणेनाऽऽलभ्य तेन वज्रेण पृथिवीम् आत्मानं वाऽसंस्पृशन् वेद्यामुदगग्रं तृणं निधाय तदुपरि तेन प्रहृत्य तदग्रेण पुरीषमादाय वेदिं प्रेक्ष्य पुरीषमुत्करे कृत्वा पुनस्तथैव प्रहृत्य पुरीषमादाय वेदिं प्रेक्ष्य पुरीषमुत्करे वारद्वयं करोति । पुरीषकरणान्ते दक्षिणोत्तराभ्यां पाणिभ्यां उत्करेऽभिन्यासं करोति । ततस्तृतीयं प्रहरणादि । तथैव चतुर्थं कृत्वा ब्रह्मन् पूर्वं परिग्रहं परिग्रहीष्यामीत्यामन्त्रितेन ब्रह्मणा परिगृहाणेत्यनुज्ञातः स्फ्येन वेदिं दक्षिणतः प्राचीं परिगृह्य पश्चिमत उदीचीम् उत्तरतः प्राचीं परिगृह्णाति । अथ वेद्यां प्राचीस्तिस्रो लेखा उल्लिख्य अनामिकाङ्गुष्ठाभ्यां दक्षिणप्रभृतिभ्यो लेखाभ्यः पृथक् पृथक् पुरीषमादायोत्करे प्रक्षिप्य क्रमेण लेखाः संमृशति । तत्रैते वेदिमानादिपदार्थाः स्वकर्तृकाः मन्त्ररहिताश्च, ऋत्विगन्तराभावात् समाम्नायाभावाच्च । अथाहवनीयस्य पुरस्तात् उत्तरवेदिस्थाने पञ्चभूसंस्कारान् कृत्वा पूर्वार्द्धे शङ्कुं निधाय द्वात्रिंशदङ्गुलां शम्यामादाय चतुरस्राम् उत्तरवेदिं शम्यामात्रीं मिमीते । ततस्तथैव शम्यया उत्तरवेदे उत्तरतश्चात्वालं मिमीते । तद्यथा, पुरस्तादुदीचीं शम्यां निपात्य स्फ्येन तावतीं लेखामुल्लिख्य तथैव दक्षिणतः प्राचीं प-

श्चिमत उदीचीमुत्तरतः प्राचीं शम्यां निपात्य लेखामुल्लिखेत् । एवं चतुरस्रं शम्याप्रमाणं चात्वालं सम्पद्यते । ततश्चात्वालमध्ये स्फ्याग्रेण प्रहृत्य पुरीषमादाय उत्तरवेदौ शङ्कुसमीपे प्रक्षिप्य अभिन्यासं विधाय पुनरेवं द्विरपरं प्रहृत्य पुरीषादानोत्तरवेदिपुरीषप्रक्षेपाभिन्यासान् कृत्वा चतुर्थवेलायाम् अभ्रया चात्वालं खात्वा यावता पुरीषेण शम्यामात्री उत्तरवेदिः ऊर्ध्वा पूर्यते तावत्पुरीषं पुरीषाहरणेन चात्वालादादाय प्रक्षिपेत् । एवमुत्तरवेदिं रचयित्वा मध्ये प्रादेशमात्रीं चतुरस्रां नाभिं कृत्वा प्रोक्षणीभिः प्रोक्ष्य सिकतामुपकीर्य वाससाऽऽच्छादयति । अथ गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वा आज्यप्रोक्षण्या आहवनीये सोपयमनीकाधिश्रृते इध्मस्थाग्निमुद्यम्य उत्तरवेदिसमीपं गत्वा पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्चोत्तरवेदिं प्रोक्षणीभिः प्रोक्ष्य प्रोक्षणीशेषमुत्तरवेदेः आग्नेयकोणसमीपे बहिर्वेदि निनीय पञ्चगृहीतेनाज्येन नाभिं व्याघारयति कोणे हिरण्यं पश्यन् । यथा-पूर्वं दक्षिणस्यां स्रक्त्याम् आघार्योत्तरापरस्याम् ततो दक्षिणापरस्यां ततः पूर्वोत्तरस्यां मध्ये चाभिघार्य शेषमाज्यं स्रुव उद्यम्योर्ध्वमुत्क्षिपति । ततो नाभिं पैतुदारवैः परिधिभिः परिदधाति । तद्यथा, प्रथमम् उदगग्रेण पश्चिमतः अनन्तरं प्रागग्रेण दक्षिणतः ततः प्रागग्रेणोत्तरतः । ततो नाभिमध्ये गुग्गुलसुगन्धितेजनं वृष्णेस्तुकाः शीर्षण्याः अभावेऽन्या निदधाति । तदुपरि उपयमनीगतमग्निं स्थापयति । उपयमनीं च तत्समीपे निवपति चात्वाले वा । प्रणीयमानमग्निं ब्रह्मानुगच्छति । ततो यजमानः प्रणीताः उत्तरवेदेः उत्तरेण कुशासने प्रणीयाहवनीयं परिस्तीर्य गार्हपत्यं च पात्राण्यासादयति । आज्यस्थाली,

संमार्गकुशाः, सन्नहनावच्छादनानि, परिधयः, उपयमनकुशाः, समिधः, स्रुवः, आज्यम्, वपाश्रपण्यौ, चरुस्थाली, शूलम्, उखा, तण्डुलाः, दक्षिणार्थं तुल्यवयाः गौश्चेति। उपकल्पनीयान्युपकल्पयति । बर्हिः, प्लक्षशाखाः, त्रिगुणरशना, उपाकरणतृणम्, द्विगुणरशना, गोपशुः, असिः, पात्रेजनी, दधि, हिरण्यशकलानि षट् , पलाशपत्राणि चेति । तत आसादनक्रमेण पात्राणि प्रोक्षति । रुद्राय त्वा जुष्टं प्रोक्षामीति तण्डुलान् प्रोक्षति । आज्यस्थाल्यामाज्यं निरुप्य गार्हपत्येऽधिश्रित्य पर्यग्नि कुर्यात् । ततो वेदिं मध्यसङ्गृहीतामभ्र्या खात्वा ब्रह्मन्नुत्तरं परिग्रहं ग्रहीष्यामीति ब्रह्माणमामन्त्र्य परिगृहाणेति ब्रह्मानुज्ञातः पूर्ववत् स्फयेन दक्षिणपश्चिमोत्तरतो वेदिं परिगृह्यानुमार्ष्टि । आहवनीयमपरेण प्रोक्षणीरासाद्य प्रणीतोदकेन पाणी अवनिज्य प्रणीतानां पश्चिमतः प्रागग्रं स्फ्यं निधाय तदुपरि इध्माबर्हिषी आसादयति । ततः स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्य प्रोक्षणीनामपरेण कृत्वा उत्पूयावेक्ष्य प्रोक्षणीरुत्पूय वेदिं प्रोक्ष्य बर्हिश्च प्रोक्ष्य प्रोक्षण्येकदेशेन बर्हिर्मूलानि सिक्त्वा बर्हिर्विस्रंस्य सन्नहनं च विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधाय सन्नहनावच्छादनैरवच्छाद्य वेदिं स्तृणाति । तद्यथा, बर्हिःपूलकं त्रिधा विभज्य प्रथमं भागं दक्षिणेनोत्थाप्याङ्के कृत्वा द्वितीयं भागं दक्षिणेनोत्थाप्याङ्के कृत्वा तृतीयं भागं दक्षिणेनोत्थापितं सव्येन सङ्गृह्याङ्कस्थितं प्रथमं भागं दक्षिणेनादाय वेद्यां स्तृणाति उदक्संस्थम् । तथैव द्वितीयभागं गृहीत्वा अङ्के कृत्वा सव्यास्थितं दक्षिणेनादाय अङ्कगतं सव्येन सङ्गृह्य पूर्वस्तृतबर्हिर्मूलानि द्वितीयबर्हिर्भागाग्रैराच्छादयन् स्तृत्वा तृतीयभागमादाय स्फ्यो-

पग्रहेण तथैव स्तृणाति पश्चादपवर्गम् । तत उपरि प्लक्षशाखाः स्तृणाति । अथाहवनीयं कल्पयति । ततो मध्यमदक्षिणोत्तरा-न् परिधीन् आहवनीये परिधाय आहवनीयमवेक्ष्य अग्रेणा-हवनीयं परीत्य पलाशशाखां निखनति । तां त्रिगुणरशनया त्रिः परिव्ययति । तत्र शकलमुपगूहति । रुद्राय त्वोपाक-रोमीति उपाकरणतृणेन पशुमुपाकरोति । ततो द्विगुणरशनया-ऽन्तरा शृङ्गे पशुं बध्वा रुद्राय नियुनज्मीति शाखायां नियु-नक्ति । अथ रुद्राय त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षणीभिः प्रोक्ष्य शेषमास्ये उपगृह्य अधस्तादुपोक्षति । तत उपय-मनकुशानादाय समिधोऽभ्याधाय प्रोक्षणीभिः पर्युक्ष्य पूर्वा-घारमाघार्य उत्तराघारान्ते स्रुवाग्रेण ललाटांसश्रोणिषु पशुं समनक्ति । ततः स्रुवाग्राक्ताभ्यां स्वर्वसिभ्यां पशोर्ललाटमुपस्पृ-शति । स्वरुमवगुह्य असिम् एकतः घृतेनाभ्यज्य निदध्यात् । अथाहवनीयस्योत्तरतः स्फ्येन शामित्राय परिलिख्य आहव-नीयस्योल्मुकेन पश्वाज्यशामित्रदेशशाखाचात्वालाहवनीयान् पर्यग्नि कुर्यात् त्रिः । पुनरुल्मुकमाहवनीये प्रक्षिप्य तावत्प्रति-गच्छेत् । पुनराहवनीयादुल्मुकमादाय पशुं कण्ठे बध्वा व-पाश्रपणीभ्यामन्वारभ्य उदग्गच्छेत् । तत्र वेदितृणद्वयमादाय शामित्रे उल्मुकं निधाय शामित्रस्य पश्चात् एकं तृणमास्तीर्य तत्र पशुं प्राक्शिरसम् प्रत्यक्शिरसं वा उदक्पादं निपात्य अवाश्यमानं मुखं सङ्गृह्य तमनेन शामित्रेण संज्ञपयति । सत्य-न्यस्मिन् पुरुषे शमितरि यजमान आहवनीयं प्रत्येत्य पूर्णा-हुतिवदाज्यं संस्कृत्य स्वाहा देवेभ्य इत्येकामाहुतिम् आ-हवनीये हुत्वा संज्ञप्ते पशौ देवेभ्यः स्वाहेति तेनैवाज्येन हुत्वा तूष्णीमपराः पञ्च जुहोति । अथ वपाश्रपणीभ्यां नियो-

जनीं चात्वाले प्रास्य पान्नेजनीभिः पशोः प्राणशोधनं स्वयमेव करोति । यथा, मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं संहृत्य पादान् एकैकं पान्नेजनीजलेन स्पृशति । शेषेण शिरः प्रभृति कर्णपर्यन्तं पुनस्तथैवाप्याय्य ततोऽङ्गानि निषिच्य शेषं पशोः पश्चाद्भागे निषिञ्चेत् । तत उत्तानं पशुं कृत्वा नाभ्यग्रे तृणं निधाय घृताभ्यक्तयाऽसिधारयाऽभिनिधाय सतृणां त्वचं छित्त्वा तृणमूलम् उभयतो लोहितेनाक्त्वा तृणं भूमौ निरस्य तदुपरि स्वयं पादौ कृत्वा पुनरागत्योपविश्य वपामुत्खिद्य वपाश्रपणीभ्यां प्रोर्णूय छित्त्वाऽऽज्येनाभिघार्य प्रक्षाल्य पशुं विशास्ति । हृदयादीनि सर्वाणि त्रीणि पञ्च वा यथाकाममवदानान्यवदाय जाघनीं चावदाय श्वभ्रे ऊवध्यमवधाय लोहितं चावधाय चरौ तण्डुलानोप्य वपां शामित्रे प्रतप्य उत्तरतः स्थित्वा आहवनीये च प्रतप्य शाखाग्न्योरन्तरेणाहृत्य दक्षिणतः स्थित्वा वपामभिघारयति । स्रुवेणाज्येनाभिघारयन् श्रपयति । गार्हपत्ये स्थालीपाकम्, शामित्रे हृदयादीनि प्रतृद्य । तत्र हृदयं शूले । चरुं पर्यग्नि कृत्वा वपामभिघारयति । अथ त्रिः प्रच्युते हृदयमुपरि कृत्वा पृषदाज्येन हृयमभिघार्य इतराण्यवदानान्याज्येन सर्वाणि च त्र्यङ्गवर्जमभिघार्य स्थालीपाकमुद्वास्य अनन्तरमुखां च वपाया अङ्गानां च प्राणदानं कृत्वा वपादीनि क्रमेणाऽऽसाद्य अङ्गानि शाखाग्न्योरन्तरेणाहृत्य वेद्यामासाद्य वपामवदाय अङ्गानि चालभ्य ब्रह्मणाऽन्वारब्ध आज्यभागौ हुत्वा वपाहोमार्थं स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय वपां गृहीत्वा पुनर्हिरण्यशकलं दत्त्वा द्विरभिघार्य रुद्राय स्वाहेति वपां जुहोति । वपाश्रपण्यौ चाग्नौ प्रास्यति । तत उखातो वसां गृहीत्वा अन्तरिक्षाय

स्वाहेति जुहुयात् । अथावदानहोमार्थं स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय हृदयाद्यङ्गेभ्यः प्रत्येकं द्विर्द्विरवदाय स्रुवे क्षिप्त्वा स्थालीपाकाच्च सकृदवदाय क्षिप्त्वा उपरि हिरण्यशकलं दत्त्वा सकृदभिघार्य, असर्वाणि चेत् क्षताभ्यङ्गं कृत्वा अग्नये स्वाहेति जुहोति । एवं पुनः स्रुवे उपस्तरणहिरण्यशकलावधानद्विर्द्विरवदानग्रहणसकृत्स्थालीपाकावदानहिरण्यशकलावधानाभिघारणानि कृत्वा अग्नये रुद्राय शर्वाय पशुपतये उग्राय अशनये भवाय महादेवाय ईशानायेत्येतैर्नाममन्त्रैः स्वाहाकारान्तैः एकैकस्मै जुहोति। एवं नव प्रधानहोमाः सम्पद्यन्ते। ततः पृषदाज्येन वनस्पतये स्वाहेति होमं विधाय स्विष्टकृद्धोमार्थं स्रुवमुपस्तीर्य हिरण्यशकलं दत्त्वा सर्वावदानपक्षे त्र्यङ्गेभ्यो द्विर्द्विरवदाय असर्वावदानपक्षे तेभ्य एव प्रधानार्थेभ्यो द्विर्द्विरवदाय सकृच्चरोरवदाय हिरण्यशकलमवधाय द्विरभिघार्य अग्नये स्विष्टकृते स्वाहेत्यग्नेरुत्तरप्रदेशे जुहुयात् । ततः स्रुवेण वसां गृहीत्वा आहवनीयस्य पुरस्तात्, दिशः स्वाहा इदं दिग्भ्यः। दक्षिणतः, प्रादिशः स्वाहा इदं प्रादिग्भ्यः। पश्चिमतः, आदिशः स्वाहा इदमादिग्भ्यः। उत्तरतः, विदिशः स्वाहा इदं विदिग्भ्यः। मध्यतः, उद्दिशः स्वाहा इदमुद्दिग्भ्यः । ततः जाघनीं गृहीत्वा गार्हपत्यं प्रत्येत्य जाघन्याः स्रुवेणावदायावदाय, इन्द्राण्यै स्वाहा इदमिन्द्राण्यै, रुद्राण्यै स्वाहा इदं रुद्राण्यै, शर्वाण्यै स्वाहा इदं शर्वाण्यै, भवान्यै स्वाहा इदं भवान्यै, अग्नये गृहपतये स्वाहा इदमग्नये गृहपतये एताः पञ्च पत्नीसंयाजाहुतीर्जुहुयात् । ततः आहवनीये महाव्याहृत्यादिप्राजापत्यहोमान्ते संस्रवप्राशनानन्तरं शूलगवपशुना तुल्यवयसं वृषं ब्रह्मणे दक्षिणां दद्यात् । ततः पलाशपत्रेषु षट्सु प्राक्संस्थेषु उदक्संस्थेषु वा पशुलोहितेन,

यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। इदं रुद्राय सेनाभ्यः इति सर्वबलिषु त्यागाः। एवम्, यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। इदं रुद्राय सेनाभ्यः। एवम्, यास्ते रुद्र पश्चात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। इदं रुद्राय सेनाभ्यः। यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। इदं रुद्राय सेनाभ्यः। यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। इदं रुद्राय सेनाभ्यः। यास्ते रुद्राऽधस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। इदं रुद्राय सेनाभ्यः। ऊवध्यस्य लोहितलिप्तस्याग्नौ प्रक्षेपणमधोनिखननं वा कृत्वा अनुवातं पशुमवस्थाप्य रुद्राध्यायेन नमस्त इत्यादिना अस्य प्रथमोत्तमाभ्यां वाऽनुवाकाभ्यां रुद्रानुपस्थाय उदकमुपस्पृशेत्। एतस्य पशोर्मांसं ग्रामं नानयेत्।

इति समाप्तः शूलगवः।

## अथ गोयज्ञपद्धतिः।

तत्र विहितमातृपूजाभ्युदयिकः स्वर्गपशुपुत्रधनयशआयुषां फलानामन्यतमकामः औपासनमरण्यं नीत्वा तत्र परिसमूहनादिभिः संस्कृतायां भूमौ स्थापयेत्। ततो ब्रह्मोपवेशनादिप्राशनान्ते विशेषः। सक्षीरं प्रणयनं कृत्वा पायसं श्रपयित्वा आज्यभागाविष्ट्वा शूलगवदेवताभ्यः अग्निरुद्रशर्वपशुपत्युग्राशनिभवमहादेवेशानेभ्यः स्वाहाकारान्तैर्नामभिश्चतुर्थ्यन्तैर्नवभिर्मन्त्रैः पायसेन प्रत्येकं जुहुयात्। ततः पायसादेव स्विष्टकृते हुत्वा महाव्याहृत्यादिप्राजापत्यहोमान्ते संस्रवं प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दद्यात्।

इति गोयज्ञपद्धतिः।

अथ उक्तेष्वेव कर्मसु नैमित्तिकानि उच्यन्ते।

तत्राकरणे च सर्वत्र प्रायश्चित्तं हुत्वा तस्य करणम् । तत्र पदार्था द्विविधा आरादुपकारकाः सन्निपत्योपकारकाश्च । तत्रारादुपकारकाणामाघाराज्यभागप्रभृतीनामकरणे प्रायश्चित्तं हुत्वा कर्मसमाप्तेः प्राक् तेषां करणम् । अकाले च कृते तस्य क्रमानुग्रहार्थं पुनरावृत्तिर्न भवति ।

तदुक्तं कठसूत्रे, प्राक् कालात्कृतं कर्म नावर्तयेदन्तरितं प्राक् समापनात्कुर्यात् इति ।

मानवसूत्रे च, कर्मान्तरितं कुर्यात् । संस्कारान्तरे प्रायश्चित्तमेव जुहुयाद्द्रव्यावृत्तौ सह मन्त्रमावर्तयेत्तूष्णीं वेति ।

तथा, देवतावदानमन्त्रकर्मविपर्यासेऽनाम्नातप्रायश्चित्तायां वाऽऽपदि त्वं नः–स त्वन्नो–अयाश्चाग्न इत्येताभिर्जुहुयात् व्याहृतिभिश्च । काले वाचं विसृज्य वैष्णवीं निगद्य पुनर्यच्छेदिति । प्रायश्चित्तं चात्र स्मार्त्ते सर्वत्र अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं चेत्येव ।

एतद्व्याख्यानं तु पूर्वं कृतमेव । पिण्डापितृयज्ञादौ प्रायश्चित्ते सञ्जाते प्रायश्चित्तहोमः प्राचीनावीतिनैव कार्यः । सन्निपत्योपकारकस्य द्रव्यसंस्काररूपस्याकरणे प्रायश्चित्तं कृत्वा संस्कार्यद्रव्यस्य मुख्योपयोगात् प्राक् करणम् । तत ऊर्द्ध्वं तु लोप एव । अकरणनिबन्धनं प्रायश्चित्तमात्रं भवति ।

तदुक्तं निदानसूत्रे, अङ्गमपरिसमाप्ते प्रधाने क्रियते परिसमाप्ते तु न कर्त्तव्यं तदुपकारार्थत्वात् द्रव्यसंस्काररूपमुपयुक्ते द्रव्ये लुप्यते तदर्थत्वादन्तरितं प्रायश्चित्तं हूयते संस्कारलोपात्संस्थिते प्रधाने यदङ्गं लुप्तं तस्याप्यर्थ इति ।

तत्र ब्रह्मवरणविस्मृतौ ब्रह्मवरणम् आसमाप्तेः । अत्र योऽवधिरुच्यते तस्मात्प्राक् प्रायश्चित्तं हुत्वा तस्य विस्मृतस्य क-

रणम्। एवं सर्वत्र ज्ञेयम् । प्रणयनं प्राक् स्रुवाभ्युक्षणात्। परिस्तरणं प्रागन्त्यहोमात् । पात्रासादनं प्राक् तत्तत्पात्रप्रयोजनात्। पवित्रकरणं प्राक् द्वितीयप्रोक्षण्युत्पवनात् । प्रोक्षणीसंस्कार आपर्युक्षणात्।प्रणीताप्रोक्षणीस्कन्दने प्रायश्चित्तमात्रम्। नाशे तु पुनरुत्पत्तिः । पात्राणां प्रोक्षणम् आ तत्तत्पात्रप्रयोजनात् । आज्यनिर्वापः प्रागन्त्याऽऽज्यकार्यात्। अधिश्रपणं च पर्यग्निकरणं च स्रुवस्य प्रतपनसंमार्जनाभ्युक्षणानि च तस्य आ अन्त्यकार्यात्। आज्योद्वासनमोत्पवनात् । ईक्षणम् आ अन्त्यहोमात्। द्वितीयप्रोक्षण्युत्पवनमापर्युक्षणात्। उपयमनकुशादानं प्रागन्त्यकार्यात्। समिदाधानम् आऽन्त्यहोमात्। पर्युक्षणं च मन्त्रवर्जम् आघारादिहोमे कृते त्यागे च कृते पुनर्मन्त्रानुरोधार्थं नावर्तते। मन्त्रस्याङ्गत्वात् । त्यागे अकृते तु आवर्त्तत एव ॥ त्यागस्य होमस्वरूपत्वात् । एवं सर्वत्र सुधिया बोध्यम्। एवमग्निपरिचरणं कुर्वन्तौ पत्नीयजमानावग्निं परित्यज्य ग्रामसीमामतीत्य एकरात्रं चेद्वसतस्तदा पुनराधानं प्रायश्चित्तं भवति। तत्र पूर्वोऽग्निर्लौकिको भवति । संस्कारैर्लुप्तो भवतीत्यर्थः। तत्र प्रातः पुनराधानं यथोक्तं कृत्वा होमलोपे सायम्प्रातर्होमावपि तन्त्रेण कुर्यात् । बहुहोमलोपे तु बहून् होमान् कुर्यादिति हरिहरः। अत्रानेकार्थसङ्ग्राहका मण्डन–रेणु–हरिहर–देवयाज्ञिकादिधृताः श्लोकाः।

अग्नावनुगते यस्य होमकालद्वयं व्रजेत्।
उभयोर्विप्रवासे वा लौकिकोऽग्निर्विधीयते ॥
अनो विना समारूढ ऊर्ध्वं शम्यापरासनात् ।
हृतोऽग्निर्लौकिको ज्ञेयः श्रुतौ सर्वत्र दर्शनात् ॥
कुरुक्षेत्रादितीर्थानां गमने देशविप्लवे ।

समारोपं विनैवाग्नीन्नोद्वहेयुर्विपश्चितः ॥
आरोप्याग्नीनरण्योः स्वानुदवस्येत्सहाग्निभिः ।
दृष्टोऽग्निर्यदि नश्येत मथ्यमानो हुताशनः ॥
ग्रामात्सीमान्तरं गच्छेत्प्रत्यक्षो हव्यवाहनः ।
अहुतो वत्सरं गच्छत्युदकेन शमं गतः ।
शिक्येनोद्वाहयेदग्नीन पुनराधानमर्हति ।
अग्निहोत्रेण रहितः पन्थानं शतयोजनम् ।
आहिताग्निः प्रयायाच्चेदग्निहोत्रं विनश्यति ॥
अब्दं स्वयमजुह्वद्यो हावयेद्दत्विगादिना ।
तस्य स्यात्पुनराधेयं पवित्रेष्टिरथापि वा ॥

एतस्मिन्निमित्ते प्राजापत्यब्रह्मकूर्चयोरन्यतरप्रायश्चित्ताचरणादूर्ध्वं पत्न्याश्च पादकृच्छ्राचरणात्पुनर्विवाहवदाधानमिति हरिहरः । अनाहिताग्नेः इष्टिस्थाने चरुः ।

विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥
अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः ।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते ॥
ज्येष्ठा चेद्बहुभार्यस्यातिचारेण प्रगच्छति ।
पुनराधानमत्रैक इच्छन्ति न तु गौतमः ॥
दाहयित्वाऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम् ।
पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः ॥
दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥

अत्र हरिहरः । एकपत्नीकस्य पत्नीमरणे कृतविवाहस्य चतुर्थीकर्मानन्तरमाधानम् । अनेकपत्नीकस्यैकस्याः पत्न्याः मरणे

अरणिपात्रैः सहाऽऽवसथ्येन तां दाहयित्वा आशौचान्ते पुनराधानम्। तथा तत्रैव, यदि यजमानः प्रजार्थी कामार्थी वा उद्वहेत्तदा अन्ये अरणी सम्पाद्य प्रातर्होमं विधाय दिवा विवाहं कृत्वा आचतुर्थीकर्मणो होमं त्यक्त्वा तदन्ते अतिक्रान्तहोमद्रव्यं दत्त्वा पञ्चमेऽहनि पुनराधानमित्येकः पक्षः। प्रातर्होमं कृत्वा दिवा विवाहं सम्पाद्य सद्यश्चतुर्थीकर्म च कृत्वा तद्दिन एवाऽऽवसथ्याधानमिति द्वितीयः पक्षः। अत्र पक्षद्वयेपि पूर्वयोररण्योः स्फोटितयोरावसथ्ये दहनम् अन्यारण्योराधानम्। पात्राणि तु तान्येव। अन्योऽपि विशेषस्तत्रैव। यत्तु—

छन्दोगपरिशिष्टे,

सदारो यः पुनर्दारान् कथञ्चित्कारणान्तरात्।
कर्त्तुमिच्छति यः साग्निः क्व होमोऽस्य विधीयते॥
स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन।
न ह्याहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयते॥

इति पुनराधानाभावप्रतिपादनं तच्छन्दोगविषयमिति लिखनम्। तन्न, छन्दोगानामेवेदमित्यत्र ज्ञापकाभावात्। न चेदं वाच्यम्, छन्दोगपरिशिष्टे पठितत्वाच्छन्दोगानामिति। तथासति पवित्रलक्षणादयो बहवः पदार्थाश्छन्दोगैकविषया एव भवेयुरिति। वस्तुतस्तु नात्र पुनराधानाभावप्रतिपादकं किञ्चिदीक्षामहे विवाहसम्बन्धिहोमस्तत्रैव कर्तव्य इत्येतावन्मात्रमुच्यते। श्रौतदेवयाज्ञिकस्तु जीवन्त्यामपि ज्येष्ठायां द्वितीयस्त्रीपरिणयने कृते उत्सर्गेष्ट्याग्नीनुत्सृज्यान्यया सह पुनरादध्यादिति स्मृतिचन्द्रिकायामित्याह।

उपघातः क्रियालोप उपेक्षा च प्रमादतः।
चतुर्विधमिदं प्रोक्तं पुनराधानकारणम्॥

प्रसिद्धः कर्मणां लोप उपघातोऽन्त्यजादिना ।
उपेक्षणं प्रवासादि प्रमादोऽग्नेरधारणम् ॥
स्पृष्टोऽग्निर्यदि चाण्डालैरुदक्यादिभिरेव च ।
उपघातेषु सर्वेषु पुनस्त्वेति समिन्धनम् ॥

समिन्धनं तु पुनस्त्वेति मन्त्रेण समिद्धस्याप्यग्नेः पुनरिन्धनप्रक्षेपेण प्रदीप्ततरकरणम् ।

यजमानश्च पत्नी च उभौ प्रवसितौ यदि ।
आ होमान्न निवर्तेते पुनराधानमर्हति ॥
यदोभावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः ।
होमकालमतिक्रम्य तदा नश्यन्ति वह्नयः ॥
विनाग्निभिर्यदा पत्नी नदीमम्बुधिगामिनीम् ।
अतिक्रामेत्तदाग्नीनां विनाशः स्यादिति श्रुतिः ॥
पत्न्यन्तरेऽथ वा पत्यौ हुताशनसमीपगे ।
तदा पत्नी यथाकाममतिक्रामेन्नदीमपि ॥
पत्नी सीमामतिक्रान्ता यजमानो गृहे यदि ।
आ होमाद्यदि नागच्छेत्पुनराधानमर्हति ॥
एकाकिनी यदा पत्नी वह्नीनादाय गच्छति ।
तत्र नाशोऽपरे त्वाहुर्भयाद्याने न दुष्यति ॥

अत्र अग्निगतं बहुत्वमविवक्षितं न्यायस्य तुल्यत्वादिति ।

रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ।
प्रवसन्नाग्निमान् विप्रः पुनराधानमर्हति ॥
बह्वीनामपि चैकस्यामुदक्यायां तु न व्रजेत् ।
एकादशे चतुर्थेऽह्नि गन्तुमिच्छेन्निमित्ततः ॥
नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि ।
न विना च निमित्तेन क्रीडाद्यर्थं न तु व्रजेत् ॥

नदीसन्तरणेऽग्नीनां सीमातिक्रमणे तथा ।
सर्वत्राद्यन्तसीम्नोर्वा स्वामिस्पृष्टाः स्युरग्नयः ॥
प्रत्यक्षमरणिद्वारं वाऽन्यथाग्निविनाशनम् ।
तत्र नान्वारभेदग्निं पुनराधिरुदाहृता ॥

अत्र च पुनराधिस्थले पुनराधानमेव । पुनराधेः स्मार्ते अनुक्तत्वात् पुनराधानेनाप्यग्निनिष्पादनस्य कर्तुं शक्यत्वात् ।

आत्मारोपणपक्षे तु नान्वारम्भणमिष्यते ।
न क्वाप्यारम्भणं केचिल्लौगाक्ष्यादिनिबन्धनात् ॥
उदक्या चेद्भवेत्पत्नी प्रसूता प्रवसत्यपि ।
अन्वारम्भविकल्पत्वात्पुनराधिर्न तन्मतात् ॥
ज्येष्ठाऽन्वारभते वह्निं बहुभार्यस्य नेतराः ।
न रुच्यैकाकिनी पत्नी प्रयायादग्निभिः सह ॥
राष्ट्रभ्रंशादिसम्प्राप्तावुचितं यानमीदृशम् ।
अन्यथा हि प्रवसति वह्नयो लौकिका इति ॥
अत्रापि बहुत्वमविवक्षितं न्यायस्य तुल्यत्वात् ।
राष्ट्रभ्रंशादिगमने प्राप्ते देशे मनस्वतीम् ।
जुहुयाच्चतुरात्तेन स्मार्तेऽग्नौ सर्वसंज्ञितम् ॥
सायम्प्रातर्हुवेत्सर्वमेवं स्याद्गमनेऽन्वहम् ।
यस्त्वग्न्याधेयमात्मार्थे कृतवान्मृतभार्यकः ॥
पत्नीविरहितो वह्नीन् यथाकामं स निर्हरेत् ।
होमद्वयात्यये दर्शपूर्णमासात्यये तथा ॥
पुनरेवाग्निमादध्यादिति भार्गवशासनम् ।
पचनाग्नौ पचेदन्नं सूतके मृतकेऽपि वा ॥
अपक्त्वा तु वसेद्रात्रिं पुनराधानमर्हति ।
बहुधा विहृतो ह्यग्निरावसथ्यात्कथञ्चन ।

यावदेकोऽपि तिष्ठेत तावदन्यो न मथ्यते ॥
वैश्वदेवात्तथा होमात्प्राक् ज्ञेयं नैव मन्थनम् ।
एकेनान्तरितो वह्निरावसथ्यस्तु मथ्यते ॥
आवसथ्यात्तु कर्मार्थं योऽग्निरुद्ध्रियते क्वचित् ।
पूर्वेण योजयित्वा तं तस्मिन्होमो विधीयते ॥

चतुर्विंशतिमते,

प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात् ।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥
तमग्निं पुनराहृत्य शालाग्नावेव निक्षिपेत् ।
ततोऽस्मिन् वैश्वदेवादिकर्म कुर्यादतन्द्रितः ॥

बह्वृचकारिकायाम्,

नित्यपाकाय शालाग्नेरेकदेशस्य कार्यतः ।
पाकार्थमुल्मुकं हृत्वा तत्र पक्त्वा महानसे ॥
वैश्वदेवोऽग्न्यगारे स्यात्पाकार्थोऽग्निश्च लौकिकः ।
भूरिपाको भवेद्यत्र श्राद्धादावुत्सवेषु च ॥
कृतेऽपि वैश्वदेवेऽथ लौकिको नैव कार्यतः ।
होमेनान्तरितं केचिदाहुः सर्वत्र लौकिकम् ॥
न तत्समञ्जसं तेषामुपयद्धोमदर्शनात् ।
समासं चोल्मुकस्याहुरग्न्यगारे महानसात् ॥
पाकान्ते वैश्वदेवात्प्राक् नैतदप्युपपद्यते ।
आहृतेऽप्युल्मुके पाकः शामित्रे दृश्यते पशौ ॥
वचनादाहृतिः सा तु लौकिकस्त्वपवर्गतः ।
दीपको धूपकश्चैव तापार्थं यश्च नीयते ॥
सर्वे ते लौकिका ज्ञेयास्तावन्मात्रापवर्गतः ।
अरण्योर्नष्टयोर्वापि क्षीणयोर्दग्धयोस्तथा ॥

आहृत्याऽन्ये समारोप्य पुनस्तत्रैव निर्मथेत् ।
अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्वयोः ॥
न तावत्पुनराधानमन्यारण्योर्विधीयते ।
पूर्वैव योनिः पूर्वाङ्गत्पुनराधानकर्मणि ॥
एकाकिनी यदा पत्नी कदाचित् ग्राममाव्रजेत् ।
होमकालेऽभिसम्प्राप्ता न सा दोषेण युज्यते ॥
अथ तत्रैव निवसेत् ग्रामं गत्वा प्रमादतः ।
लौकिकोऽग्निः स विज्ञेय इत्येषा नैगमी श्रुतिः ॥
भार्यायां प्रोषितायां चेदुदेत्यर्कोऽस्तमेति वा ।
तत्र स्यात्पुनराधेयमन्ये प्राहुरिहान्यथा ॥
पत्न्याः प्रवासविषये पुनराधेरुदाहृतः ।
वाक्यैर्मनीषिभिः प्रोक्तैरेकभार्यस्य सेष्यते ॥
बहुभार्यस्य चेज्ज्येष्ठा प्रवसेत्पुनराहितिः ।
ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्यन्या यथारुचि ॥
यजमानेन सहिता यद्वा ता एव केवलाः ।
एकस्यामप्यतिष्ठन्त्यामग्निहोत्रसमीपतः ॥
पतिस्तिष्ठति चेदत्र नाशो नेत्यपरे जगुः ।
यदि सीमामतिक्रम्य रात्रौ तत्रैव वत्स्यति ॥
अगृहस्य प्रयाणं यत् प्रवास उच्यते बुधैः ।
यत्तु नारायणेनोक्तं ग्रामात्स्वाग्निसमान्वितात् ॥
गत्वा ग्रामान्तरे वासः प्रवासोऽयमितीदृशः ।
ग्रामान्तरे नगर्यां वा पल्ल्यां वाऽन्यत्र वा क्वचित् ॥
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम् ।
प्रवसेद्धनसम्पत्त्यै न तीर्थाय कदाचन ॥
इति कूर्मपुराणोक्तं तथा बौधायनेन च ।

सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि मानवः ॥
पुराणवचनात्साग्नेः प्रवासोऽस्तीति केचन ।
न कुर्युरग्न्युपस्थानं प्रवत्स्यन्त्योऽपि योषितः ॥
त्यागाच्च प्रोषिताः कुर्युरश्नन्त्येव सधर्मकम् ।
आगतोपास्थितिं चापि स्त्रीणां नेच्छान्ति सूरयः ॥
सगृहस्य प्रयाणं यत्तत्पत्न्यग्निसमन्वितम् ।
क्लिष्टश्चेत्तत्प्रवृत्त्यर्थमनसा सह गच्छति ॥
अनस्यारोपयेदग्नींस्तत्पात्राण्यपि तत्र च ।
स्वाङ्गेन वा नयेदग्निं कात्यायनमतादपि ॥
नयेद्वा ब्राह्मणस्त्वन्यो जवेन सह गच्छति ।
प्रत्यक्षेण नयन्नग्निमुच्छ्वासश्चेद्विनश्यति ॥
यदि वानुच्छ्वसन् गत्वा निधायोच्छ्वस्य तं पुनः ।
हरेदनुच्छ्वसन्नेव नश्येन्निर्हरणेऽनलः ॥
शकटेनातिदूरं वा हरेदेवं यथारुचि ।
स्वाङ्गेनैवाथ वा शम्या परासात्प्राङ्नयेच्छ्वसन् ॥
कर्मार्थं हरणेऽग्नीनां नानुच्छ्वासादि चोद्यते ।
कात्यायनमतात्केचिच्छ्वसन्तोऽप्यतिदूरतः ॥
प्रत्यक्षेण नयन्त्यग्नीन् शकटेन विनापि तु ।
आधानावसरे जाते यद्याधातुरुपद्रवः ॥
अन्वाद्धिर्नाम सा प्रोक्ता तत्र स्यात्पुनराहितिः ।
उद्वातेऽग्नौ विहारात्प्राक् मथ्यमानेऽप्यजन्मनि ॥
लोकाग्न्यादावनिक्षिप्तेऽभ्युदयेऽस्तमयेऽपि वा ।
विनष्टे हेतुनानेन जातवेदा विनश्यति ॥
विहारोत्तरकालं वा नष्टौ पूर्वापरानलौ ।
शेषं पूर्वोदितं सर्वं तत्राप्यग्निर्विनश्यति ॥

कालाल्पत्वे त्वनिर्मथ्य लोकाग्न्यादि क्षिपेद्यदि ।
उदयास्तमयात्पूर्वं कर्कोऽग्नानाशमिच्छति ॥
लोकाग्न्यादावलब्धेऽपि पुरार्कास्तमयोदयात् ।
मन्थनारम्भमात्रेण नाशो वृद्धैर्निवारितः ॥
उभयोर्नाशविज्ञानादूर्ध्वमर्कोऽस्तमेति चेत् ।
कर्कोऽग्निनाशमाचष्टे पश्चात् ज्ञातेऽपि नेच्छति ॥
एकयोनित्वपक्षे तु सर्वाग्न्यनुगमो यदि ।
उदयास्तमये तत्र नाशमेकेन तूभयोः ॥
अथ चेदुभयोर्घातेऽभ्युदयास्तमयात्पुरा ।
परोऽग्निरेको जातश्चेत्तावतापि न नश्यति ॥
तदनुत्पत्तिमात्रेण स्यादग्न्याधिर्न पूर्वयोः ।
मन्त्रं विना समारूढोऽरण्योरात्मनि वा यदि ॥
तत्र ज्वलनशान्तौ स्यादसमारूढशान्तिवत् ।
आरूढोऽपि यथाशास्त्रमवरूढो न शास्त्रतः ॥
तृतीये होमकालेऽथ सम्प्राप्ते पुनराहितिः ।
यदा तु लौकिकाग्न्यादिर्निधाय हवनं तदा ॥
हुतेऽपि लौकिकाग्न्यादौ मथ्यमानोऽप्यनन्तरम् ।
द्वितीयाद्वा तृतीयाद्वा होमकालात्पुरा यदि ॥
अग्निर्न जायते तत्र पुनराधेयमाचरेत् ।
हुतेषु पक्षहोमेषु पक्षत्रयमनन्तरम् ॥
कर्तव्यं पुनराधेयं मथ्यमानो हुताशनः ।
दृष्टमात्रोऽनुगच्छेच्चेत् तत्र तस्य विनाशनम् ॥
शतशोऽनुगमे चान्ये पुनर्निर्मथ्य जप्यते ।
नष्टे मथितमात्रे वा समारोपयजुर्जपेत् ॥
पुनर्निर्मथ्य जप्तव्यं यजुस्तूपावरोहणम् ।

जलेन हेतुना वह्निरुपशान्तो यदा भवेत् ॥
कर्त्तव्यं पुनराधेयं यज्ञपार्श्वे निरूपितम् ।
तदेव पुनराधेयमग्नावनुगते सति ॥
असमाधाय चेत्स्वामी समिामुल्लङ्घ्य गच्छति ।
शूकररासभकाकशृगालैः कुक्कुरकुक्कुटमर्कटशूद्रैः ।
अन्त्यजपातकिभिः कुणपैर्वा सूतिकयापि रजस्वलया वा ॥
रेतोमूत्रपुरीषैर्वा पूयाश्रुश्लेष्मशोणितैः ।
दुष्टास्थिमांसमज्जाभिरन्यैर्वापि जुगुप्सितैः ॥
आरोपितारणिस्पर्शे कृतेऽग्नेः स्पर्शनेऽपि वा ।
आत्मारूढेषु मज्जेद्वा वदेद्वा पतितादिभिः ॥
अथ वा योषितं गच्छेदनृतौ काममोहितः ।
वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् ॥
तत्रारणिगते वह्नौ नष्टे स्यात्पुनराहितिः ।
इतरेषु निमित्तेषु अग्न्याधेयं प्रचक्षते ॥
यद्वा सर्वोपघातेषु पुनस्त्वोतिसमिन्धनम् ।
द्रव्यस्थाग्न्युपघातेषु द्रव्यशुद्धिः समिन्धने ॥
आरोपितारणी चोभे एका वा यदि नश्यति ।
तत्राग्न्याधेयमिच्छन्ति पुनराधेयमेव वा ॥
इत्यनारोपितारण्योः क्षये ग्राह्ये नवे पुनः ।
तदलाभे यदोद्वायात्तदा स्यात्पुनराहितिः ॥
शूद्रोदक्यान्त्यकाकैश्च पतितामेध्यरासभैः ।
अनारूढारणिस्पर्शे ते विहायान्ययोर्ग्रहः ॥
भवतं नः समेत्यप्सु मज्जयेद् दूषितारणी ।
एकारण्येव दुष्टा चेत्तामेवाप्सु निमज्जयेत् ॥
तत्रान्यारणिलाभात्प्राक् उद्वाते पुनराहितिः ।

काष्ठशुद्ध्या विशोध्ये वा त्यजेद्दोषेऽतिसन्तते ।
नष्टायामरणौ यावदग्निस्तिष्ठति वेश्मनि ॥
तावद्धोमादिकं तत्र तन्नाशे पुनराहरेत् ।
प्रागादित्योदयाद्धोमं सङ्कल्प्य न जुहोति चेत् ॥
अग्न्याधिः पुनराधिर्वा नोभयं स्वाम्यसन्निधौ ।
नाशापहारावग्नीनां यद्वाऽऽरूढारणेर्यदा ॥
कुर्याच्च पुनराधेयमिति बौधायनोऽब्रवीत् ।
अत्रैतेषु निमित्तेषु नष्टानां पुनराहितिः ॥
स्थितानुत्सृज्य चान्येषु पुनराधानमिष्यते ।
अग्निहोत्रं च नित्येष्टिः पितृयज्ञ इति त्रयम् ॥
कर्तव्यं प्रोषिते पत्यौ नान्यत्स्वामिक्रियान्वितम् ।
नैमित्तिकास्तु जातेष्टिगृहदाहेष्टिपूर्विकाः ॥
स्वाम्यागमनपर्यन्तमुत्कृष्टव्या ह्यशेषतः ।
अग्न्याधेयादिकं प्राप्तमुभयानुगमादिना ॥
स्वाम्यागमनपर्यन्तमुत्कृष्टव्यमसंशयम् ।
मथित्वा पावकं सर्वं प्रायश्चित्तं विधाय च ॥
मित्रायेत्यादिभिर्हुत्वा द्वादशानुगमाहुतीः ।
अग्निहोत्रं यथाकालं नित्येष्टिं च समाचरेत् ॥
आस्वाम्यागमनात्तिष्ठेदागत्याथादधीत सः ।
एवं केशवसिद्धान्तात्प्रोषितस्याग्निषु क्रियाम् ॥
अवश्यम्भाविनीमुक्त्वाऽधुना वक्ष्ये मतान्तरम् ।
काम्याः क्रिया न कर्त्तव्याः स्वामिनि प्रोषिते सति ॥
नित्यनैमित्तिकी कार्या प्रवसत्यपि भर्त्तरि ।
तत्रापि नैव कर्त्तव्याः क्रियाः सोत्तरवेदिकाः ॥
आधानपुनराधाने न स्तः पत्यौ प्रवासिनि ।

उभयानुगमादौ तु प्राप्तेऽन्याधेयतः पुरा ॥
न किञ्चिदग्निहोत्रादि कर्त्तव्यमिह दर्शने ।
रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ॥
नित्यं नैमित्तिकं कुर्यात्काम्यकर्म न किञ्चन ।
आधानं पुनराधानं पशुः सौत्रामणी तथा ॥
चातुर्मास्यानि सोमश्च तथैवाग्रयणक्रिया ।
अकाम्यत्वेऽपि नैतेषां सूतकादावनुष्ठितिः ॥
प्रक्रान्तेष्वपि चैतेषु सूतकादिसमुद्भवे ।
कर्त्तव्यान्येव चैतानि वारितान्यप्यशेषतः ॥
जातोऽपि वा विना भस्मस्पर्शजातजपं विना ।
प्रायश्चित्तं विना काष्ठमन्थने चोदितं विना ॥
लौकिकः स्यादतो लुप्तादारभ्याऽऽवर्त्तयेत्पुनः ।
यदि नावर्त्तयेद्वह्नौ तादृश्येव जुहोति च ॥
हूयमानेऽपि लुप्येत होमकालाष्टकात्परम् ।
भस्मस्पर्शं विनाप्येके लौकिकत्वं न मन्वते ॥
होमाष्टकाधिके लुप्ते धृतोऽप्यग्निर्विनश्यति ।
अतोऽल्पहोमलोपेऽपि यद्युद्वापे विनश्यति ॥
आधानपुनराधाने विकल्पेनात्र चोदिते ।
लुप्ते होमद्वये प्राह लौगाक्षिरनलाहितिम् ॥
ज्वलत्स्वग्निषु कर्त्तव्या तन्तुमत्येव केवला ।
आपद्यग्निषु दीप्यत्सु मासार्द्धं चेन्न हूयते ॥
सर्वहोमानतिक्रान्तान् पक्षान्ते पक्षहोमवत् ।
समस्य जुहुयात्पश्चादिष्टिस्तन्तुमती भवेत् ॥
न तत्र पुनराधेयमिति कौषीतकिश्रुतेः ।
वत्सरं वत्सरार्धं वा होमलोपे मतान्तरम् ॥

आपत्काले न नश्यन्ति दीप्यन्ते चेद्धुताशनाः ।
पञ्च कार्याः पुरोडाशा होमे लुप्तेऽर्धवत्सरम् ॥
पथिकृत्प्रथमो ज्ञेयः पावकः शुचिरेव च ।
व्रतपतिस्तन्तुमांश्चाग्नेर्देवताया गुणाः क्रमात् ॥
सप्त कुर्यात्पुरोडाशान् होमे लुप्ते तु वत्सरम् ।
पवमानः पावकश्च शुचिः पथिकृदित्यपि ॥
वैश्वानरो व्रतपतिस्तन्तुमानिति सप्तभिः ।
विशेषितो ऽग्निरेव स्याद्देवताऽत्र यथाक्रमम् ॥
एकारम्भपरार्द्धान्तविच्छेदेष्वविशेषतः ।
मनस्वतीं व्रतयुतां नाधानमनले सति ॥
इयमापत्सु घोरासु मिलितासूपयोक्ष्यते ।
द्वादशाहाहुतिच्छेदे कुर्युरन्ये मनस्वतीम् ॥
अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः ।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते ॥
एकारण्यां विनष्टायामस्ति चेदितरारणिः ।
तां छित्वा मन्थनं प्रोक्तं भाष्ये बौधायनीयके ॥
अरणी मन्थनाशक्ते तन्तुभिर्मन्थनेन वा ।
स्यातां चेदरणी नूत्ने ग्राह्ये शास्त्रोक्तलक्षणे ॥
श्वोभूतेऽनुष्ठिते दर्शे तस्मिन् जीर्णारणिद्वयम् ।
शकलीकृत्य पाश्चात्ये वह्नौ निक्षिप्य दीपयेत् ॥
ततो दक्षिणहस्तेन नूतनामुत्तरारणिम् ।
गृहीत्वा सव्यहस्तेन गृह्णीयादधरारणिम् ॥
ते उभे अरणी तत्र दीप्तेऽग्नौ धारयन् जपेत् ।
उद्बुध्यस्वाग्न इत्येतदयन्ते योनिरित्यपि ॥
उद्बुध्यस्वाग्ने प्रविश स्वयोनिमन्यां देवयज्यायै वोढवे

जातवेदः। अरण्योररणी अनुसङ्क्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेति प्रथमो मन्त्रः।

मन्थनस्याहृता सम्यङ्मथित्वाग्निं विहृत्य च।
विलाप्योत्पूय दर्भाभ्यां स्रुच्यादाय चतुर्घृतम्॥
जुहोत्याहवनीयेऽग्नौ मनस्वत्या घृतं तथा।
इष्टिं तन्तुमतीं कुर्याच्छरावं दक्षिणां ददेत्॥
वृत्तं प्रादेशमात्रं तु शरावं निगमोदितम्।
इत्यनारोपितारण्योः क्षये ग्राह्ये नवे पुनः॥
तदलाभे यदोद्वायात्तदा स्यात्पुनराहितिः।
कामे निमित्तयोगे वा पुनराधेयमिष्यते॥
निमित्तेषु यथायोगमाधानमपि वा भवेत्।
तत्र येषु निमित्तेषु शृङ्गग्राहिकया विधिः॥
तत्रैव पुनराधेयमन्यथाऽऽधानमिष्यते।
अन्यत्राप्यपरे प्राहुः पुनराधिर्विकल्पतः॥
यद्वित्तं जीवनायालं क्षुद्रं वास्यैकवत्सरम्।
तन्नाशे पुत्रमर्त्यायां ज्ञातीनामवरोधने।
अङ्गनाशेऽङ्गनानाशे पुनराधानमिष्यते॥

प्रायश्चित्तहोमेतिकर्त्तव्यता यथा, यदा प्रायश्चित्तं पतति तदा निरुप्याज्यमग्नावधिश्रित्य स्रुवं कुशैः संमृज्य आज्यमग्नेः सकाशादुद्वास्य कुशपत्राभ्यामुत्पूय अवेक्ष्य स्रुवेणाज्यमादाय अग्नौ तिष्ठन् समिधमाधायोपविश्य दक्षिणं जान्वाच्य भूः स्वाहेति हुत्वा पुनरप्यादायादाय भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति च हुत्वा पूर्ववत्त्यागं कृत्वा तत्र चतुर्थहोमस्य इदं प्रजापतय इति त्यागं कृत्वा त्वन्नः—सत्त्वन्नः—अयाश्चाग्ने—येतेश-तम्—उदुत्तममित्यादिभिश्च हुत्वा यथासम्भवं कर्म कुर्यात् इति

हरिहरः । अपरे तु पूर्णाहुतिवदाज्यसंस्कारं नेच्छन्ति । स्मार्ते एष एव विधिः । यत्र क्वचिद्धोम इत्यनेन सर्वहोमेष्वेतेषामेव धर्माणामभ्युपगमात् । ते चात्र धर्माः ब्रह्मासनास्तरणप्रभृतयः । अत्र संस्रवस्थापनप्राशनपूर्णपात्रदानानि च भवन्ति पाकयज्ञत्वाविशेषात् । अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चितं प्राजापत्यꣳ स्विष्टकृच्चैतन्नित्यꣳ सर्वत्रेतिसूत्रबोधितमपि आघारादिकं न भवति । एतत्सूत्रस्य गृह्योक्तकर्ममात्रविषयत्वात् । अविज्ञातप्रायश्चित्तस्य च गृह्योक्तत्वाभावात् । एष एव विधिर्यत्र क्वचिद्धोम इत्यत्र क्वचिच्छब्दोपनिबन्धाद्ब्रह्मासनास्तरणादयो भवन्त्येव । भाष्यकारस्याप्ययमेवाशयः, येन "क्वचिच्छब्दश्च गृह्याग्निव्यतिरेकेणापि यथाऽयं विधिः स्यादित्येवमर्थम्" इत्युक्तवान् । गृह्यान्तरेष्वपि प्रायश्चित्तहोमार्थत्वेन व्याहृतिहोममात्रदर्शनादप्ययमर्थोऽवसीयत इति । तन्त्रान्तःपातिनैमित्तिके तु न पार्थक्येन पुनर्ब्रह्मासनास्तरणप्रभृतयः । किन्तु तस्मिन्नेव तन्त्रे संस्कृतस्रुवाज्यादेर्विद्यमानत्वात्तेनैव होमः । यस्तु श्रौते पुनराज्यसंस्कारः सः अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेणेति ज्ञापकादिति ।

इति पाकयज्ञसंस्थाः ॥

प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे ।<br>
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये ॥<br>
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मितः ।<br>
संस्कारप्रकरप्रकाश उदितः पूर्त्तिं समभ्यागमत् ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरी-

नीराजितचरणकमल—

श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज—

चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर—
श्रीमन्महाराजाधिराजश्रीवीरसिंहदेवोद्योजित—
श्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु—
सकलविद्यापारावारपारीणजगद्दारिद्र्यमहागजपारीन्द्र—
विद्वज्जनजीवातु—
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधाननिबन्धे

संस्कारप्रकाशः समाप्तः ।

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 139, 140, 141, 172 & 203.

# वीरमीत्रोदयः ।

संस्कारप्रकाशस्योत्तरार्धं विवाहादि समाप्तिपर्यन्तम्

महामहोपाध्यायश्रीमित्रमिश्रविरचितम् ।

पर्वतीयनित्यानन्दपन्तकृतः सापिण्ड्यदीपकश्च ।

द्वयमपि पर्वतीयनित्यानन्दपन्तेन संशोधितम् ।

## VÎRAMITRODAYA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MIS'RA.

SAPINDYADIPAKA

by

Parvatiya Nityananda Pant.

EDITED BY

Parvatiya Nityânanda Pant.

*PUBLISHED & SOLD BY THE SECRETARY;*

CHOWKHAMBA SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:— OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*

BENARES.

1913.

श्रीगणेशाय नमः ॥

सद्गुरवे नमः ॥

# सापिण्ड्यदीपकः ।

सर्वस्फूर्तिविधातारं सर्वविघ्नविनाशनम् ।
सर्वाभीष्टप्रदातारं सद्गुरुं प्रणमाम्यहम् ॥
पर्वतीयेन पन्तेन नित्यानन्देन धीमता ।
क्रियते बालबोधार्थमेष सापिण्ड्यदीपकः ॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्—

इति याज्ञवल्क्यवचनेन विवाहे सपिण्डाया निषेधो गम्यते। तत्र सापिण्ड्यमेकशरीरावयवान्वयित्वरूपं विज्ञानेश्वरादिभिरुक्तम् । एकशरीरावयवान्वयित्वं च परम्परया अतिप्रसक्तं स्यात् । अतस्तदवधिं याज्ञवल्क्य आह—

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । इति ।

अत्र मातृतः पितृतः इति षष्ठ्यन्तात्सार्वविभक्तिकस्तसिः । संताने निवर्तते इति च शेषः । पञ्चमत्वसप्तमत्वयोः अवध्याकाङ्क्षायां संतानमूलभूतः स्वो वा अवधित्वेनान्वेति । तथा च मातृसंताने मूलपुरुषात् स्वस्माद्वा पञ्चमादूर्ध्वं सापिण्ड्यं निवर्तते, पितृसन्ताने च ततः सप्तमादूर्ध्वं निवर्तते इति वाक्या-

र्थः। योगार्थस्य उत्तरत्र संभवेऽपि रूढ्याश्रयणान्न तत्र सपिण्ड-शब्दप्रवृत्तिरिति भावः। मूलपुरुषात् षष्ठः मातृसन्ताने मूलपुरुषस्य सपिण्डो न भवति। तुल्यन्यायात् षष्ठस्य मातृसन्ताने मूलपुरुषोऽपि सपिण्डो न भवति। एवं पितृसंताने मूलपुरुषात् अष्टमः तस्य सापिण्डो न भवति मूलपुरुषश्च अष्टमस्य सापिण्डो न भवति इति सिद्धम्।

वधूवरयोश्च सापिण्ड्यं मूलपुरुषद्वारकम्। तमनन्तर्भाव्य तयोः परस्परं सापिण्ड्यसम्बन्धस्य वक्तुमशक्यत्वात्। मूलपुरुषे वध्वा वरस्य वा सापिण्ड्ये निवृत्ते तद्द्वारकं सापिण्ड्यं शाखान्तरीये तदपत्ये निवर्ततएव। यथा अष्टमस्य मूलपुरुषे सापिण्ड्ये निवृत्ते शाखान्तरीये तदपत्ये अष्टमस्य सापिण्ड्यं निवर्तते। अत एव "मूलपुरुषादष्टमः मूलपुरुषदौहित्रीमुद्वहेत्" इति गौतमीयवृत्तौ हरदत्त आह। तुल्यन्यायात् मूलपुरुषदौहित्रोऽपि मूलपुरुषादष्टमीमुद्वोढुमर्हति। मूलपुरुषसापिण्ड्यस्यैव अष्टम्यां निवृत्तौ शाखान्तरीयतदपत्यसापिण्ड्यस्य सुतरां निवृत्तेः। मातृसन्ताने तु षष्ठस्य मूलपुरुषे सापिण्ड्यनिवृत्तौ शाखान्तरीये तदपत्ये तन्निवृत्तिः सुलभा। अतः षष्ठो द्वितीयादिकां द्वितीयादिको वा षष्ठीमुद्वहेत्॥

ननु पितृसन्ताने द्वितीयादेः सप्तमपर्यन्तस्य सापिण्ड्यस्य मूलपुरुषे सत्त्वात् तत्संततिस्थत्वाच्च षष्ठ्यादेः कथमुद्वाहः। पूर्वोक्तमूलपुरुषदौहित्रोऽपि कथमष्टमीमुद्वहेत्, तस्या अपि सपिण्डसन्ततिस्थत्वात्। किञ्च मातृसन्ताने षष्ठो द्वितीयादिकां, पितृसन्तानेऽष्टमो दौहित्र्यादिकां च नोद्वोढुमर्हति। वरस्य कन्यासपिण्डसन्ततिस्थत्वात्, तस्यापि "एभिरेव गुणैर्युक्तः" इति वचनेन कन्याऽसापिण्डत्वापेक्षणात्। इति चेत्,

अत्रोच्यते । सपिण्डसन्ततिस्थत्वं न विवाहनिषेधप्रयोजकम् । वचने असपिण्डामित्येतावन्मात्रश्रवणेन सपिण्डत्वस्यैवोद्देश्यतावच्छेदकत्वप्रतीत्या तस्यैव तत्प्रयोजकत्वात् । स्वसपिण्डमूलपुरुषसन्ततिस्थत्वमेव कन्यायां वरस्य साण्ड्यिमिति तु न युक्तिसहम् । कन्यायां मूलपुरुषसापिण्ड्ये निवृत्ते तदपरशाखीयसापिण्ड्यानुवृत्तेर्वक्तुमशक्यत्वात् । कन्याया मूलपुपुरुषे सापिण्ड्यस्य निवृत्तौ वरस्य कन्यासपिण्डसन्ततिस्थत्वाभावेन तत्र कन्यासापिण्ड्यस्य निवृत्त्या 'अस्या असपिण्डो ऽयम्' इति व्यवहारे 'इयमस्य सपिण्डा' इति व्यवहारस्य सर्वथा ऽनुचितत्वात् । स्वपितुः मूलपुरुषात् अष्टमे सोदके नायं पितुः मूलपुरुषस्य सपिण्ड इति व्यवहृते स्वसापिण्ड्यस्य ममायं सपिण्ड इति व्यवहारस्य च दशाहाशौचप्रयोजकस्यापत्तेश्च । तस्मात् मातृसन्ताने मूलपुरुषस्य पञ्चमादूर्ध्वत्वे तद्द्वारकं वरकन्ययोः सापिण्ड्यमेकतो निवृत्तं चेदुभयतो निवर्तते, पितृसन्ताने च सप्तमादूर्ध्वत्वे ।

मातृद्वारकञ्च सापिण्ड्यं मूलपुरुषात् पञ्चमीपुत्रयोर्निवृत्तं चेत् मण्डूकप्लुतेः नोत्तरत्रानुवर्तते । मानाभावात् । ननु उत्तरयोः सापिण्ड्यस्य पितृद्वारकत्वात् तस्य सप्तमपर्यन्तानुवृत्तेरुक्तिरेव मानमिति चेन्न । असमानालिङ्गकत्वेन पञ्चमान्मातृत इत्यनन्वयात् मातुः संताने पञ्चमादूर्ध्वत्वे निवृत्तिरित्येतावन्मात्रार्थस्यैव प्रतीत्या पितृतः सप्तमादूर्ध्वमित्यस्य च समानगोत्रे चारितार्थ्यात् मण्डूकानुवृत्तिबोधने ऽसामर्थ्यात् ।

"सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी"

इति शङ्खवचनेन एकगोत्रे एव साप्तपौरुष्याः सपिण्डताया

१ स्वपितुः मूलपुरुषादिति पदद्वयं समानाधिकरणम् ।

बोधनेन लाघवेन मूलैक्यस्य न्याय्यत्वेन तथैव कल्पयितुमुचितत्वात् । पितुरुद्वहनीयां पितृद्वारैव सम्बन्धिनीं पुत्रो नोद्वहेदित्यस्य अत्यन्तानुचितत्वाच्च ।

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥

इति सङ्ग्रहवाक्ये मातृशब्दो न जननीमात्रवाचकोऽपितु—
"तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।

इत्येता मातरः पूज्याः" इत्यादौ पितामह्यादिष्वपि मातृशब्दप्रयोगात् पितामह्यादिसाधारणः । तथाच मातरि कूटस्थात् पञ्चम्यां पितामह्यां चतुर्थ्यां प्रपितामह्यां तृतीयायां वृद्धप्रपितामह्यां द्वितीयायामपि कूटस्थसापिण्ड्यं निवर्तते इति तदर्थः । अतो न कश्चिद्विरोधः । एवं च मध्ये यत्र स्त्रीव्यक्तेर्न प्रवेशस्तत्रैव कूटस्थेन साप्तपौरुषं सापिण्ड्यमिति एकगोत्रे एव तत्फलितम् । अत एव—

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।

इति शङ्खवचनं पूर्वोक्तं सङ्गच्छते । वधूवरयोस्तु परस्परं सापिण्ड्यस्य मूलपुरुषद्वारकत्वादन्यतरस्य मूलपुरुषेण सापिण्ड्ये निवृत्ते तयोः परस्परं सापिण्ड्यं निवर्तते एवेति पूर्वोक्तं न विस्मर्तव्यम् । यद्यपि एकगोत्रे सगोत्रत्वादेव विवाहनिषेधः सिद्ध इति एकगोत्रे साप्तपौरुषसापिण्ड्यकथनस्य विवाहनिषेधोपयोगो न स्पष्टं प्रतिभासते तथापि दूरदर्शिनां हृदये "मूलपुरुषात् षष्ठः सप्तमश्च मूलपुरुषसगोत्रः मूलपुरुषात् तृतीयादिकां पञ्चमीपर्यन्तां मूलपुरुषाभिन्नगोत्रां नोद्वहेत्, मूलपुरुषात् तृतीयादिः पञ्चमपर्यन्तो मूलपुरुषभिन्नगोत्रः मूलपुरुषात् षष्ठीं सप्तमीं च मूलपुरुषसगोत्रां नोद्वहेत्" इत्युपयोगः

स्फुरत्येव । उभयत्र मूलपुरुषेण सह सापिण्ड्यस्यैकतोऽप्यनिवृत्तेरुभयतो निवृत्तेर्वक्तुमशक्यत्वात् । मूलपुरुषेण सह साप्तपौरुषसापिण्ड्यानङ्गीकारे तु न पूर्वोक्तस्थलेषु विवाहनिषेधः सिध्येत् ।

आशौचे तु स्पष्ट एवोपयोगः । एवं द्विजेतरेष्वपि, तेषां गोत्राभावेन सगोत्रत्वप्रयुक्तनिषेधाभावात् इत्यपि कश्चित् ॥

वधूवरयोः मूलपुरुषेण सापिण्ड्यनिरूपिका माता ऽपि चेत् तयोः स मातृसम्बन्धः, पितैव चेत् पितृसम्बन्धः । भिन्नगोत्रे तु मातुरवश्यं मध्ये प्रवेशात् मातृसम्बन्ध एव तयोर्वक्तव्यः, एकगोत्रे एव तु पितृसम्बन्धः । मूलपुरुषस्य वरेण पितृसम्बन्धित्वेऽपि मूलपुरुषभिन्नगोत्रायाः कन्याया मूलपुरुषेण मातृसम्बन्धित्वात् मातृसम्बन्धित्वमेव । एवं कन्यया मूलपुरुषस्य पितृसम्बन्धित्वेऽपि मूलपुरुषभिन्नगोत्रस्य तेन सह मातृसम्बन्धित्वान्मातृसम्बन्धित्वमेव ।

वरस्य मूलपुरुषेण पितृसापिण्ड्येऽनिवृत्ते तेनैव कन्यायाः मातृसापिण्ड्येऽनिवृत्ते, वरस्य मूलपुरुषेण मातृसापिण्ड्येऽनिवृत्ते तेनैव कन्यायाः पितृसापिण्ड्येऽनिवृत्ते च एकतो ऽपि निवृत्तेरभावान्न तत्र विवाहः । एवं च स्वसापिण्डमूलपुरुषसपिण्डात्वपेव कन्यायां स्वसापिण्ड्यं विवाहनिषेधप्रयोजकम् ।

चतुर्थीमुद्वहेत् कन्यां चतुर्थः पञ्चमो वरः ।
पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम्—

इति पराशरवचने चतुर्थीमुद्वहेदित्यत्र षष्ठादिरिति शेषः । चतुर्थः पञ्चमो वा वरः षष्ठीमुद्वहेदित्यन्वयः । तथाच षष्ठादिर्वरः चतुर्थीमित्यस्योपलक्षणतया द्वितीयादिकामुद्वहेत् । चतुर्थः पञ्चमो वेत्यस्याप्युपलक्षणतया द्वितीयादिः षष्ठ्यादिकामुद्वहेत् ।

पञ्चमः पञ्चमीम् इत्यनयोरपि उपलक्षणतया पञ्चमपर्यन्तः पञ्चमीपर्यन्तां नोद्वहेत् इति वाक्यार्थः । इत्थं च आञ्जस्येन असपिण्डामुद्वहेदिति वचनेनैकवाक्यत्वसंभवे पराशरवचनस्य निर्मूलत्वकल्पनं दत्तकाद्यनुप्रवेशेन लापनं चानुचितमेव । स्पष्टं चैतत् सर्वं मिताक्षराव्याख्यायां बालंभट्टकृतायां, नागेशभट्टकृते सापिण्ड्यनिर्णये, सापिण्ड्यकल्पलतायां च । “ शिष्टाचारानुगृहीतश्चायमर्थः ” इत्येवं संमानितश्चायमर्थो गुरुचरणैः—

( महामहोपाध्यायगङ्गाधरशास्त्रिभिः ) ।

अत एव “उद्वोढुः पितरौ” इत्यादिप्राचीनोक्तवर्ज्यकन्यासंकलनं परित्यज्य हरदत्तनागेशभट्टादिसंमतरीत्या वर्ज्यकन्याः संकलय्य कोष्ठकेषु संबन्धप्रदर्शनपूर्वकं स्थापिताः प्रतिपत्तिसौकर्यार्थम् । यद्यपि कासांचित् सगोत्रत्वेनापि निषेधः सिध्यति तथापि सपिण्डत्वस्यापि निषेधप्रयोजकरूपस्य तत्र सद्भावात्तदाक्रान्तानां सर्वासां परिगणय्य प्रदर्शनं कृतमिति न वैयर्थ्यमुद्भावनीयम् । विरुद्धसबन्धात्वादिना निषिद्धाः पितृव्यपत्नीस्वस्रादयस्तु न सपिण्डत्वाक्रान्ता इति न ता अत्र प्रदर्शिता इति त न्यूनत्वशङ्कावकाशः ।

संकलिताश्च कन्याः २८९ । तत्र ३६ कन्याः सगोत्रत्वात् सपिण्डत्वाच्च उद्वाहे निषिद्धाः, अवशिष्टाः २५३ पुनः सपिण्डत्वेनैवेति संक्षेपः । शम् । सं० १९७० आषाढ कृष्ण १३ बुधे

इति पर्वतीयनित्यानन्दपन्तकृतः सापिण्ड्यदीपकः ।

| | | | |
|---|---|---|---|
| मू०<br>पितामहीपिता पितामही<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पितामहीपिता पितामहमाता<br>पितामही पितामह<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहीपिता पितामहीमाता<br>पितामही पितामही<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहीपिता पितामहीपिता<br>पितामही पितामही<br>पिता पिता<br>कन्या वरः |
| मू०<br>मातामहीपिता पितामही<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मातामहीपिता पितामहमाता<br>मातामही पितामह<br>माता पिता<br>कन्या वरः | मू०<br>मातामहीपिता पितामहीमाता<br>मातामही पितामही<br>माता पिता<br>कन्या वरः | मू०<br>मातामहीपिता पितामहीपिता<br>मातामही पितामही<br>माता पिता<br>कन्या वरः |
| मू०<br>पितामहमाता पितामही<br>पितामह पिता<br>पिता वरः<br>कन्या | मू०<br>पितामहमाता पितामहमाता<br>पितामह पितामह<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहमाता पितामहीमाता<br>पितामह पितामही<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहमाता पितामहीपिता<br>पितामह पितामही<br>पिता पिता<br>कन्या वरः |
| मू०<br>पितामहीमाता पितामही<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पितामहीमाता पितामहमाता<br>पितामही पितामह<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहीमाता पितामहीमाता<br>पितामही पितामही<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहीमाता पितामहीपिता<br>पितामही पितामही<br>पिता पिता<br>कन्या वरः |

| | | | |
|---|---|---|---|
| मू०<br>मातामह — पितामही<br>माता — पिता<br>कन्या — वरः | मू०<br>मातामह — पितामहमाता<br>माता — पितामह<br>कन्या — पिता<br>वरः | मू०<br>मातामह — पितामहीमाता<br>माता — पितामही<br>कन्या — पिता<br>वरः | मू०<br>मातामह — पितामहीपिता<br>माता — पितामही<br>कन्या — पिता<br>वरः |
| मू०<br>पितामही — पितामही<br>पिता — पिता<br>कन्या — वरः | मू०<br>पितामही — पितामहमाता<br>पिता — पितामह<br>कन्या — पिता<br>वरः | मू०<br>पितामही — पितामहीमाता<br>पिता — पितामही<br>कन्या — पिता<br>वरः | मू०<br>पितामही — पितामहीपिता<br>पिता — पितामही<br>कन्या — पिता<br>वरः |
| मू०<br>मातामही — पितामही<br>माता — पिता<br>कन्या — वरः | मू०<br>मातामही — पितामहमाता<br>माता — पितामह<br>कन्या — पिता<br>वरः | मू०<br>मातामही — पितामहीमाता<br>माता — पितामही<br>कन्या — पिता<br>वरः | मू०<br>मातामही — पितामहीपिता<br>माता — पितामही<br>कन्या — पिता<br>वरः |
| मू०<br>प्रमातामह — पितामही<br>मातामह — पिता<br>माता — वरः<br>कन्या | मू०<br>प्रमातामह — पितामहमाता<br>मातामह — पितामह<br>माता — पिता<br>कन्या — वरः | मू०<br>प्रमातामह — पितामहीमाता<br>मातामह — पितामही<br>माता — पिता<br>कन्या — वरः | मू०<br>प्रमातामह — पितामहीपिता<br>मातामह — पितामही<br>माता — पिता<br>कन्या — वरः |

| | | | | | |
|---|---|---|---|---|---|
| मू०<br>मातामहीमाता वरः<br>मातामही<br>माता<br>कन्या | मू०<br>मातामहीमा. पिता<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मा.महीमा. पितामह<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मा.महीमा. प्रपिताम.<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मा.महीमा. वृ.प्रपिता<br>मातामही प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मा.महीमा. वृद्धतरप्रपि.<br>मातामही वृ.प्रपितामः<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>मातामहमाता वरः<br>मातामह<br>माता<br>कन्या | मू०<br>मातामह.मा. पिता<br>मातामह वरः<br>माता<br>कन्या | मू०<br>मातामह.मा. पितामह<br>मातामह पिता<br>माता वरः<br>कन्या | मू०<br>मा.म.मा. प्रपिताम.<br>मातामह पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मा.म.मा. वृ. प्रपिता.<br>मातामह प्रपितामहः<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मा.म.मा. वृ.तरप्रपि.म.<br>मातामह वृ.प्रपितामहः<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |

| | | | |
|---|---|---|---|
| मू०<br>माता पितामही<br>कन्या पिता<br>वरः | मू०<br>माता पितामहमाता<br>कन्या पितामह<br>पिता<br>वरः | मू०<br>माता पितामहीमाता<br>कन्या पितामही<br>पिता<br>वरः | मू०<br>माता पितामहीपिता<br>कन्या पितामही<br>पिता<br>वरः |

५

| | | | | | |
|---|---|---|---|---|---|
| मू०<br>मातामहीपिता वरः<br>मातामही<br>माता<br>कन्या | मू०<br>मातामहीपि. पिता<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मातामहीपि· पिताम.<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मातामहीपि. प्रपिता.<br>मातामही पितामह<br>माता पिता<br>कन्या वरः | मू०<br>मातामहीपि· वृद्धप्र.<br>मातामही प्रपितामह<br>माता पितामह<br>कन्या पिता<br>वरः | मू०<br>मातामहीपि. वृद्धतरप्र.<br>मातामही वृद्धप्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहमाता वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>पिताम.मा. पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>पिताम.मा. पितामहः<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>पिताम.मा. प्रपिताम.<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पिताम.मा. वृद्धप्रपि.<br>पितामहः प्रपिताम.<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पिताम.मा. वृद्धतरप्रपि.<br>पितामहः वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहीमाता वरः<br>पितामही<br>पिता<br>कन्या | मू०<br>पिताम.मा. पिता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पिताम.मा. पितामह<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पिताम.मा. प्रपिताम.<br>पितामही पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पिताम.मा. वृद्धप्रपि.<br>पितामही प्रपिताम.<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पिताम.मा. वृद्धतरप्रपि.<br>पितामही वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| मू०<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामही प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामही वृ.प्रपिता.<br>माता प्रपितामह<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>मातामही,वृ.तरप्रपिता.<br>माता वृद्धप्रपिताम.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>प्रमातामहः वरः<br>मातामहः<br>माता<br>कन्या | मू०<br>प्रमातामहः पिता<br>मातामहः वरः<br>माता<br>कन्या | मू०<br>प्रमातामहः पितामह<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>प्रमातामहः प्रपिताम.<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>प्रमातामहः वृद्धप्रपि.<br>मातामहः प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>प्रमाताम. वृद्धतरप्रपि.<br>मातामहः वृद्धप्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहीपिता वरः<br>पितामही<br>पिता<br>कन्या | मू०<br>पितामहीपि. पिता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामहीपि.पितामह<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पितामहीपि. प्रपिता.<br>पितामही पितामह<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहीपि. वृद्धप्र.<br>पितामही प्रपितामह<br>पिता पितामह<br>कन्या पिता<br>वरः | मू०<br>पितामहीपि. वृद्धतरप्र.<br>पितामही वृद्धप्रपिता.:<br>पिता प्रपितामहः<br>कन्या पितामह<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| ३ मू०<br>माता वरः<br>कन्या | मू०<br>माता पिता<br>कन्या वरः | मू०<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>माता वृ.प्रपिताम.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः | मू०<br>माता वृद्धतरप्रपि.<br>कन्या वृ. प्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>मातामहः वरः<br>माता<br>कन्या | मू०<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामः. प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामः. वृ.प्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>मातामः. वृद्धतरप्रपि.<br>माता वृ. प्रपिता.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पितामही पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पितामही प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पितामही वृ.प्रपिता.<br>पिता प्रपिताम.<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>पितामही वृ. तरप्रपि.<br>पिता वृद्धप्रपिता.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| मू०<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>प्रपितामहः पितामहः<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>प्रपितामहः प्रपिताम.<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>प्रपितामहः वृद्धप्रपि.<br>पितामहः प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>प्रपितामहः वृद्धतरप्रपि.<br>पितामहः वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>वृद्धप्रपिता. वरः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपिता. पिता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपिता. पितामह<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपिता. प्रपिता.<br>प्रपितामहः पितामह<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>वृद्धप्रपिता. वृद्धप्रपि.<br>प्रपितामहः प्रपिता.<br>पितामहः पितामह<br>पिता पिता<br>कन्या वरः | मू०<br>वृद्धप्रपिता. वृद्धतरप्रपि.<br>प्रपितामहः वृद्धप्रपिता.<br>पितामहः प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः |
| मू०<br>वृद्धतरप्र. वरः<br>वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. पिता<br>वृद्धप्रपिता. वरः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. पितामह<br>वृद्धप्रपिता. पिता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. प्रपितामह<br>वृद्धप्रपिता. पिताम.<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. वृ. प्रपिता.<br>वृद्धप्रपिता. प्रपिताम.<br>प्रपितामह पितामह<br>पितामह पिता<br>पिता वरः<br>कन्या | मू०<br>वृद्धतरप्र. वृद्धतरप्रपि.<br>वृद्धप्रपिता. वृद्धप्रपिता.<br>प्रपितामहः प्रपितामहः<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः |

| | | | | | |
|---|---|---|---|---|---|
| १ मूलपुरुषः<br>कन्या — वरः | मूलपुरुषः<br>कन्या — पिता<br>वरः | मूलपुरुषः<br>कन्या — पितामहः<br>पिता<br>वरः | मूलपुरुषः<br>कन्या — प्रपितामहः<br>पितामहः<br>पिता<br>वरः | मूलपुरुषः<br>कन्या — वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः | मूलपुरुषः<br>कन्या — वृद्धतरप्रपिता.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>पिता — वरः<br>कन्या | मू०<br>पिता — पिता<br>कन्या — वरः | मू०<br>पिता — पितामहः<br>कन्या — पिता<br>वरः | मू०<br>पिता — प्रपितामहः<br>कन्या — पितामहः<br>पिता<br>वरः | मू०<br>पिता — वृद्धप्रपिता.<br>कन्या — प्रपितामहः<br>पितामहः<br>पिता<br>वरः | मू०<br>पिता — वृद्धतरप्रपि.<br>कन्या — वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहः — वरः<br>पिता<br>कन्या | मू०<br>पितामहः — पिता<br>पिता — वरः<br>कन्या | मू०<br>पितामहः — पितामहः<br>पिता — पिता<br>कन्या — वरः | मू०<br>पितामहः — प्रपितामहः<br>पिता — पितामहः<br>कन्या — पिता<br>वरः | मू०<br>पितामहः — वृद्धप्रपि.<br>पिता — प्रपितामहः<br>कन्या — पितामहः<br>पिता<br>वरः | मू०<br>पितामहः — वृद्धतरप्रपि.<br>पिता — वृद्धप्रपिता.<br>कन्या — प्रपितामहः<br>पितामहः<br>पिता<br>वरः |

| | | | |
|---|---|---|---|
| ९ मू०<br>मातामहीमाता पितामही<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मातामहीमाता पितामहमाता<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामहीमाता पितामहीमाता<br>मातामही पितामही<br>माता पिता<br>कन्या वरः | मू०<br>मातामहीमाता पितामहीपिता<br>मातामही पितामही<br>माता पिता<br>कन्या वरः |
| मू०<br>मातामहमाता पितामही<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>मातामहतामा पितामहमाता<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामहमाता पितामहीमाता<br>मातामहः पितामही<br>माता पिता<br>कन्या वरः | मू०<br>मातामहमाता पितामहीपिता<br>मातामहः पितामही<br>माता पिता<br>कन्या वरः |
| मू०<br>कन्या पितामही<br>पिता<br>वरः | मू०<br>कन्या पितामहमाता<br>पितामहः<br>पिता<br>वरः | मू०<br>कन्या पितामहीमाता<br>पितामही<br>पिता<br>वरः | मू०<br>कन्या पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| मू०<br>पिता पितामही<br>कन्या पिता<br>वरः | मू०<br>पिता पितामहमाता<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>पिता पितामहीमाता<br>कन्या पितामही<br>पिता<br>वरः | मू०<br>पिता पितामहीपिता<br>कन्या पितामही<br>पिता<br>वरः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १०<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामही<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामही<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामही<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |

११

| | | | |
|---|---|---|---|
| मू०<br>वृद्धतरप्रपि. पितामही<br>वृद्धप्रपितामहः पिता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपि. पितामहमाता<br>वृद्धप्रपितामहः पितामहः<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपि. पितामहीमाता<br>वृद्धप्रपितामहः पितामही<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपि. पितामहीपिता<br>वृद्धप्रपितामहः पितामही<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या |
| मू०<br>कन्या माता<br>वरः | मू०<br>कन्या मातामहः<br>माता<br>वरः | मू०<br>कन्या मातामही<br>माता<br>वरः | मू०<br>कन्या प्रमातामहः<br>मातामहः<br>माता<br>वरः |
| मू०<br>कन्या मातामहीपिता<br>मातामही<br>माता<br>वरः | मू०<br>कन्या मातामहमाता<br>मातामहः<br>माता<br>वरः | मू०<br>कन्या मातामहीमाता<br>मातामही<br>माता<br>वरः | |

| | | | |
|---|---|---|---|
| मू०<br>पिता माता<br>कन्या वरः | मू०<br>पिता मातामहः<br>कन्या माता<br>वरः | मू०<br>पिता मातामही<br>कन्या माता<br>वरः | मू०<br>पिता प्रमातामहः<br>कन्या मातामहः<br>माता<br>वरः |
| मू०<br>पिता मातामहीपिता<br>कन्या मातामही<br>माता<br>वरः | मू०<br>पिता मातामहमाता<br>कन्या मातामहः<br>माता<br>वरः | मू०<br>पिता मातामहीमाता<br>कन्या मातामही<br>माता<br>वरः | |
| मू०<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | मू०<br>पितामहः प्रमातामहः<br>पिता मातामहः<br>कन्या माता<br>वरः |
| मू०<br>पितामहः मातामहीपिता<br>पिता मातामही<br>कन्या माता<br>वरः | मू०<br>पितामहः मातामहमाता<br>पिता मातामहः<br>कन्या माता<br>वरः | मू०<br>पितामहः मातामहीमाता<br>पिता मातामही<br>कन्या माता<br>वरः | |

| | | | |
|---|---|---|---|
| १३ मू०<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>प्रपितामहः मातामहः<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>प्रपितामहः मातामही<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>प्रपितामहः प्रमातामहः<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः |
| मू०<br>प्रपितामहः मातामहीपिता<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | मू०<br>प्रपितामहः मातामहमाता<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>प्रपितामहः मातामहीमाता<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | |
| मू०<br>वृद्धप्रपितामहः माता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपितामहः मातामहः<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपितामहः मातामही<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपितामहः प्रमातामहः<br>प्रपितामहः मातामहः<br>पितामहः माता<br>पिता वरः<br>कन्या |
| मू०<br>वृ.प्रपितामहः मातामहीपिता<br>प्रपितामहः मातामही<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>वृ. प्रपितामहः मातामहमाता<br>प्रपितामहः मातामहः<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>वृ.प्रपितामहः मातामहीमाता<br>प्रपितामहः मातामही<br>पितामहः माता<br>पिता वरः<br>कन्या | |

| | | | |
|---|---|---|---|
| मू०<br>वृद्धतरप्रपितामहः माता<br>वृद्धप्रपितामहः वरः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपितामहः मातामहः<br>वृद्धप्रपितामहः माता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपि. मातामही<br>वृद्धप्रपितामहः माता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपि. प्रमातामहः<br>वृद्धप्रपितामहः मातमहाः<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या |
| मू०<br>वृद्धतरप्रपि. मातामहीपिता<br>वृद्धप्रपितामहः मातामही<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपिताम. मातामहमाता<br>वृद्धप्रपितामहः मातामहः<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्रपिताम. मातामहीमा.<br>वृद्धप्रपितामहः मातामही<br>प्रपितामहः माता<br>पितामहः वरः<br>पिता<br>कन्या | |
| मू०<br>माता माता<br>कन्या वरः | मू०<br>माता मातामहः<br>कन्या माता<br>वरः | मू०<br>माता मातामही<br>कन्या माता<br>वरः | मू०<br>माता प्रमातामहः<br>कन्या मातामहः<br>माता<br>वरः |

| | | | |
|---|---|---|---|
| १५ मू०<br>माता मातामहमाता<br>कन्या मातामहः<br>माता<br>वरः | मू०<br>माता मातामहीपिता<br>कन्या मातामही<br>माता<br>वरः | मू०<br>माता मातामहीमाता<br>कन्या मातामही<br>माता<br>वरः | |
| मू०<br>मातामहः माता<br>माता वरः<br>कन्या | मू०<br>मातामहः मातामहः<br>माता माता<br>कन्या वरः | मू०<br>मातामहः मातामही<br>माता माता<br>कन्या वरः | मू०<br>मातामहः प्रमातामहः<br>माता मातामहः<br>कन्या माता<br>वरः |
| मू०<br>मातामहः मातामहमाता<br>माता मातामहः<br>कन्या माता<br>वरः | मू०<br>मातामहः मातामहीपिता<br>माता मातामही<br>कन्या माता<br>वरः | मू०<br>मातामहः मातामहीमाता<br>माता मातामही<br>कन्या माता<br>वरः | |
| मू०<br>पितामही माता<br>पिता वरः<br>[illegible] | मू०<br>पितामही मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>पितामही मातामही<br>पिता माता<br>कन्या वरः | मू०<br>पितामही प्रमातामहः<br>पिता मातामहः<br>कन्या माता<br>वरः |

| | | | |
|---|---|---|---|
| माता<br>वरः | कन्या — माता<br>वरः | कन्या — माता<br>वरः | |
| मू०<br>मातामही — माता<br>माता — वरः<br>कन्या | मू०<br>मातामही — मातामहः<br>माता — माता<br>कन्या — वरः | मू०<br>मातामही — मातामही<br>माता — माता<br>कन्या — वरः | मू०<br>मातामही — प्रमातामहः<br>माता — मातामहः<br>कन्या — माता<br>वरः |
| मू०<br>मातामही — मातामहमाता<br>माता — मातामहः<br>कन्या — माता<br>वरः | मू०<br>मातामही — मातामहीपिता<br>माता — मातामही<br>कन्या — माता<br>वरः | मू०<br>मातामही — मातामहीमाता<br>माता — मातामही<br>कन्या — माता<br>वरः | |
| मू०<br>प्रमातामहः — माता<br>मातामहः — वरः<br>माता<br>कन्या | मू०<br>प्रमातामहः — मातामहः<br>मातामहः — माता<br>माता — वरः<br>कन्या | मू०<br>प्रमातामहः — मातामही<br>मातामहः — माता<br>माता — वरः<br>कन्या | मू०<br>प्रमातामहः — प्रमातामहः<br>मातामहः — मातामहः<br>माता — माता<br>कन्या — वरः |

| | | | |
|---|---|---|---|
| मू०<br>प्रमातामहः मातामहमाता<br>मातामहः मातामहः<br>माता माता<br>कन्या वरः | मू०<br>प्रमातामहः मातामहीपिता<br>मातामहः मातामही<br>माता माता<br>कन्या वरः | मू०<br>प्रमातामहः मातामहीमाता<br>मातामहः मातामही<br>माता माता<br>कन्या वरः | |
| मू०<br>पितामहीपिता माता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामहीपिता मातामहः<br>पितामही माता<br>पिता वरः<br>कन्या | मू०<br>पितामहीपिता मातामही<br>पितामही माता<br>पिता वरः<br>कन्या | मू०<br>पितामहीपिता प्रमातामहः<br>पितामही मातामहः<br>पिता माता<br>कन्या वरः |
| मू०<br>पितामहीपिता मातामहमा.<br>पितामही मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>पितामहीपिता मातामहीपिता<br>पितामही मातामही<br>पिता माता<br>कन्या वरः | मू०<br>पितामहीपिता मातामहीमाता<br>पितामही मातामही<br>पिता माता<br>कन्या वरः | |
| मू०<br>मातामहीपिता माता<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मातामहीपिता मातामहः<br>मातामही माता<br>माता वरः<br>कन्या | मू०<br>मातामहीपिता मातामही<br>मातामही माता<br>माता वरः<br>कन्या | मू०<br>मातामहीपिता प्रमातामहः<br>मातामही मातामहः<br>माता माता<br>कन्या वरः |

| | | | |
|---|---|---|---|
| मू०<br>मातामहीपिता मातामहमा.<br>मातामही मातामहः<br>माता माता<br>कन्या वरः | मू०<br>मातामहीपिता मातामहीपिता<br>मातामही मातामही<br>माता माता<br>कन्या वरः | मू०<br>मातामहीपिता मातामहीमाता<br>मातामही मातामही<br>माता माता<br>कन्या वरः | |
| मू०<br>पितामहमाता माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>पितामहमाता मातामहः<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>पितामहमाता मातामही<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>पितामहमाता प्रमातामहः<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः |
| मू०<br>पितामहमाता मातामहमा.<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>पितामहमाता मातामहीपिता<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | मू०<br>पितामहमाता मातामहीमाता<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | |
| मू०<br>पितामहीमाता माता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामहीमाता मातामहः<br>पितामही माता<br>पिता वरः<br>कन्या | मू०<br>पितामहीमाता मातामही<br>पितामही माता<br>पिता वरः<br>कन्या | मू०<br>पितामहीमाता प्रमातामहः<br>पितामही मातामहः<br>पिता माता<br>कन्या वरः |

| | | | |
|---|---|---|---|
| १९ मू०<br>पितामहीमाता मातामहमा.<br>पितामही मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>पितामहीमाता मातामहीपिता<br>पितामही मातामही<br>पिता माता<br>कन्या। वरः | मू०<br>पितामहीमाता मातामहीमाता<br>पितामही मातामही<br>पिता माता<br>कन्या वरः | |
| मू०<br>मातामहीमाता माता<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मातामहीमाता मातामहः<br>मातामही माता<br>माता वरः<br>कन्या | मू०<br>मातामहीमाता मातामही<br>मातामही माता<br>माता वरः<br>कन्या | मू०<br>मातामहीमाता प्रमातामहः<br>मातामही मातामहः<br>माता माता<br>कन्या वरः |
| मू०<br>मातामहीमाता मातामहमा.<br>मातामही मातामहः<br>माता माता<br>कन्या वरः | मू०<br>मातामहीमाता मातामहीपिता<br>मातामही मातामही<br>माता माता<br>कन्या वरः | मू०<br>मातामहीमाता मातामहीमाता<br>मातामही मातामही<br>माता माता<br>कन्या वरः | |
| मू०<br>मातामहमाता माता<br>मातामहः वरः<br>माता<br>कन्या | मू०<br>मातामहमाता मातामहः<br>मातामहः माता<br>माता वरः<br>कन्या | मू०<br>मातामहमाता मातामही<br>मातामहः माता<br>माता वरः<br>कन्या | मू०<br>मातामहमाता प्रमातामहः<br>मातामहः मातामह<br>माता<br>कन्या |

| | | | | | |
|---|---|---|---|---|---|
| २० | मू० | | मू० | | मू० |
| मातामहमाता | मातामहमा. | मातामहमाता | मातामहीपिता | मातामहमाता | मातामहीमाता |
| मातामहः | मातामहः | मातामहः | मातामही | मातामहः | मातामही |
| माता | माता | माता | माता | माता | माता |
| कन्या | वरः | कन्या | वरः | कन्या | वरः |